श्रीदयानन्दमहाविद्यालय-संस्कृतग्रन्थमाला

सा च

श्रीदयानन्दब्राह्ममहाविद्यालयाचार्यपदप्रतिष्ठितपूर्वेण श्रीदयानन्द-
महाविद्यालयीयानुसंधानविभागस्य श्रीविश्वेश्वरा-
ऽऽनन्द-वैदिक-शोधसंस्थानस्य च संचालकेन

सता

# विश्वबन्धु-शास्त्रिणा

बहुभिर्विद्वद्भिः संगत्य
संपादिता

---

अयं च तस्यां

ग्रन्थः २०-तमः

लाभपुरे

२००३ वि.



# The D. A.-V. College Sanskrit Series

EDITED

*in conjunction with other scholars*

by

Vishva-Bandhu Shastri, M. A., M. O. L.

Director, D. A.-V. College Research Department
and the Vishveshvarananda Vedic Research Institute,
formerly, Principal, Dayānanda Brāhma Mahāvidyālaya.

## Volume Twenty

The D. A.-V. College Sanskrit Series, No. 20.

# RĀMĀYANA

OF

# VĀLMĪKI

( in its North-Western Recension )

---

## UTTARA-KĀṆḌA

---

*Critically edited for the first time from original manuscripts*

BY

VISHVA-BANDHU SHASTRI

*with the assistance of*

PITAMBARA-DATTA SHASTRI

---

LAHORE
1947.

श्री दयानन्दमहाविद्यालय-संस्कृतग्रन्थमाला, सं. ४

अप्रकाशितचरं

पश्चिमोत्तरशाखीयम्

# वाल्मीकीय-रामायणम्

तत्र चैतद्

## उत्तर-काण्डम्

विश्वबन्धु-शास्त्रिणा

पीताम्बरदत्त-शास्त्रिणः

साहाय्यकेन

नानादर्शपुस्तकाधारेण संशोध्य
संपादितम्

लाभपुरे

२००३ वि.

## FOREWORD

Out of the ten manuscripts, namely, अ, च, भ$_1$, भ$_2$, रा$_1$, ब, प्र, ळ$_1$, ळ$_2$, and ल$_3$ utilised in this edition of the text of Uttara-Kāṇḍa of Vālmīki's Rāmāyaṇa in its North-Western recension, the seven, namely, अ, च, भ$_1$, रा$_1$, ब, प्र, ळ$_1$ and ल$_3$ have already been introduced in presenting the text-editions of the previous Kāṇḍas, the last-named ल$_3$, having been noted there as ळ$_2$. The remaining ones, namely भ$_2$ and ल$_2$ (as noted in the present volume) having not been used in any of the previous volumes, may be briefly noticed here :—

I. भ$_2$—1. Lalchand Library, D.A -V. College, Lahore, No. 3037; 2. Folios 121 (No.4 missing), $11\frac{3}{4}'' \times 5\frac{1}{4}''$ ; 3. Up to f. 103, 10, but thereafter 15 or 16 lines per page, up to f. 103, 45, but thereafter 56-60 syllables per line, 3890 Granthas in all; 4. Old, Indian paper; 5. Up to f. 103, old Devanāgarī script of c. 1500 A. D., thereafter Devanāgarī script of c. 1750 A. D. (the colophon being dated B. S. 1825), in the former case, (*a*) very little difference between च and व, (*b*) अ, *mātrā* of ऋ, भ and र as in old South-Indian Devanāgrī, (*c*) *visarga* looking like the numeral 8; 6. Correct; 7. Marginal double lines in black ink; 8. Top-signatures रा. उ ; 9. Ślokas not numbered, Sarga-ends red-marked, but not numbered except the last one numbered 106; 10. Hails from Bharatpur; 11. Begins श्री गणेशायनमः, ॐ नमो भगवते श्रीरामचन्द्राय, जयति रघुवंशतिलकः कौशल्याहृदयानन्दनो रामः। दशवदननिधनकारी दाशरथिः पुण्डरीकाक्षः॥ ; 12. Colophon given in the concluding portion of the Critical Apparatus.

II. ळ$_2$—1. Lal Chand Library, D. A.-V.College, Lahore, No. 6161 ; 2, Folios 88 (No. 1 missing), $13\frac{3}{4}'' \times 7\frac{1}{2}''$; 3. 15 or 16 lines per page, 42 syllables per line, 3480 Granthas in all ; 4. Indian paper; 5. Kashmir Devanāgarī script; 6. Good hand, fairly correct, yellow-pigmented corrections ; 7. No marginal lines ; 8. Top-signatures. रा, उ, कां. 9. Ślokas not numbered, Sarga-ends red-marked, but irregularly numbered, the last Sarga being 101 ; 10. Hails from Lahore ; 11. Colophon given at the end of the Critical Apparatus.

The details of the editorial technique followed in this volume as in the previous ones has been explained in the Introduction to the Sundara-Kāṇḍa volume and

need not be repeated here. It is, however, to be mentioned that owing to the continuity of paper-scarcity, it has been necessary to stick to the same method of excluding orthographic aberrations and syntactical mislections from the Critical Apparatus and to have the same measure of page-printing and typographical compactness as in the Yuddha-Kāṇḍa volume, with the result that the text-materials which ordinarily would have covered over 650 pages have been printed on 356 pages. Main assistance in the production of this volume has been rendered by Shri Pitambara Datta Shastri. Shri Shiva Prasad Shastri and Shri Ratna Chandra Shastri ; Shri Bhim Deva Shastri and Shri Amar Nath Shastri have helped in making the press-copy and in correcting the proofs I am grateful to these gentlemen for this co-operation. I also very much appreciate the help rendered by the Vishveshvarananda Vedic Research Institute Press in the matter of procuring paper of proper quality for this volume and seeing to its printing in a satisfactory manner.

The first copy from manuscript for this edition of the Rāmāyaṇa text was commenced in January, 1922. My predecessor in office, Shri Bhagavad Datta had already published the first two volumes when I assumed the charge of the D A.-V College Research Department effective from the beginning of 1935. The remaining five volumes have been done during the years that have followed. Very much heartening as it is, indeed, to me and to my colleagues to witness the end of this task with the publication of this seventh volume, our sincere thanks are due to the D. A.-V. College authorities who by taking a keen and, what is more, sustained interest in the progress of this great cultural project of universal importance and financing it to the best of their resources during the past quarter of a century have contributed in no small measure to its successful conclusion.

रामो जयतु मर्यादा-स्थापको नर-नायकः ।
आदि-कविश्च वाल्मीकिः साहित्यामृत-पायकः ॥ १ ॥
जयतु भारतं वर्षं भारती-तिलकायितम् ।
सामाजिक-यशः-कारि-सदादर्श-प्रवर्तकम् ॥ २ ॥

Lahore, **Vishva-Bandhu Shastri.**
January 23, 1947.

प्राऽऽप्त-राज्यस्य रामस्य राक्षसानां वधे कृते ।
१] आ-जग्मुर् मुनयः सर्वे राघवं प्रति-नन्दितुम् ॥१[1]॥ [१
अ-सितोऽथ[2] यव-क्रीतो रैभ्यश् च्यवन एव च ।
२] कण्वो मेधाऽतिथेः पुत्रः पूर्वस्यां दिशि सं-स्थिताः ॥२॥ [२
स्वस्त्य्-आत्रेयश् च भग-वान् मुचुश्[3] च[3] प्र-मुचुस् तथा ।
३] आ-जग्मुस् ते सहाऽगस्त्या ये श्रिता[4] दक्षिणां दिशम् ॥३॥ [३
ऋष्य-शृङ्गश्[5] च कपिलो[5] धौम्यश् चैव महान् ऋषिः ।
४] अभि-जग्मुर् महाऽऽत्मानः प्रतीच्यां[6] दिशि[7] सं-स्थिताः[7] ॥४॥ [४
कश्यपोऽत्रिर् वसिष्ठश् च विश्वा-मित्रोऽथ गौतमः ।
५] जमद्-अग्निर् भरद्-वाजस् ते च सप्तर्षयोऽगमन् ॥५॥ [५
६उ] प्राऽऽप्य ते तु महाऽऽत्मानो राघवस्य नि-वेशनम् ।
७पू] वि-ष्ठिताः[8] प्रतिहाराऽथं[9] हुताऽशन-सम-प्रभाः ॥६॥ [६पू
प्रती-हारस्[9] ततस् तूर्णम् अगस्त्य-वचनाद् इदम् ।
९] समीपं राघवस्याऽथ प्र-विवेश महाऽऽत्मनः ॥७॥ [८
दृष्ट्वा स रामं सहसा पूर्ण-चन्द्र-सम-प्रभम् ।
१०] अगस्त्यं कथयामास सम्प्राऽऽप्तम् ऋषिभिः सह ॥८॥ [९उ
श्रुत्वा प्राऽऽप्तान्[10] मुनींस्[10] तांस् तु बाल-सूर्य-सम-प्रभान् ।
११] तदोवाच नृपो[11] द्वाः-स्थं[11] प्र-वेशय यथा-सुखम् ॥९॥ [१०
पूजिता विधि-वत् सर्वे नाना-रत्न-विभूषिताः ।
१२] दृष्ट्वा प्राऽऽप्तान् मुनींस्[12] तांस् तु प्रत्युत्थाय कृताऽञ्जलिः ।
रामोऽभि-वाद्य प्र-गमन् आसनेषु न्य्-अवेशयत् ॥१०॥ [११
१३] ते तु काञ्चन-चित्रेषु[13] स्व्-आस्तीर्णेषु महत्सु च ।
कुशोत्तरेष्व् अथाऽऽसीना आसनेष्व् ऋषि-पुङ्गवाः[14] ॥११॥

---

१. अत आरभ्य ल$_{2}$-१५-शश्लोकं यावन्नास्ति । २. अ रा$_{1}$ ल$_{1}$ ल$_{3}$ ब-वसिष्ठोथ । भ$_{1}$-औसिजोथ । प्र-औश्निजोथ । ३. च भ$_{1}$ भ$_{2}$ प्र-मुमुचुः । ४. च भ$_{1}$ भ$_{2}$-स्थिता । ५. अ-°ङ्गः कपिलो रैभ्यो । च भ$_{2}$-ऋथकः कापिलो रैभ्यो । ६. भ$_{1}$ भ$_{2}$ ल$_{3}$ ब प्र-प्रतीचीं । ७. ल$_{3}$ ब प्र-दिशि(शि)माश्रिताः । ८. च भ$_{1}$ भ$_{2}$ ल$_{3}$ ब प्र-धिष्ठिताः । ९. च भ$_{2}$-प्रतिहा° । १०. अ भ$_{2}$-°न् ऋषींस् । भ$_{1}$-विप्रान् मु° । ११. अ रा$_{1}$ ल$_{1}$-महाराजः । ल$_{3}$ ब प्र-यथायोग्यं । १२. अ-ऋषींस् । १३. ल$_{3}$-°नसर्वेषु । १४. अ-ऋषिसत्तमाः ॥

१४] पाद्यम् आ-चमनीयं च दत्त्वाऽर्घं[1] च प्रयत्न-तः । [१२
रामेण कुशलं पृष्टाः शिष्टा अत्रि-पुरो-गमाः[2] ।
१५] महर्षयो वेद-विद्[3] इदं[3] वचनम् अब्रुवन् ॥१२॥ [१३
कुशलं नो महा-बाहो[4] सर्वेषां रघु-नन्दन ।
१६] त्वां तु दृष्ट्वा कुशलिनं पश्यामो हत-शात्रवम् ॥१३॥ [१४
नि-हतोऽरिः[5] स ते राम रावणो राक्षसेश्वरः ।
१७] स-धनुस्[6] त्वं[6] हि लोकांस् त्रीन् वि-जयेर्[7] नाऽत्र सं-शयः ।१४[8]। [१६
१८उ] दिष्ट्या च देव त्वाम् अद्य पश्यामः सह भार्यया ।
लक्ष्मणेन च[9] धर्माऽऽत्मन् भ्रात्रा तु हित-कारिणा । [१७
१९] हनू-मता च स-हितं पश्यामोऽद्य वयं नृप ॥१५॥ [१८
दिष्ट्या प्र-हस्तो वि-कटो विरूपाऽक्षो महोदरः ।
२०] अ-कम्पनश् च दुर्-धर्षो नि-हतास् ते निशा-चराः ॥१६॥ [१९
यस्य प्र-माणाद् वि-पुलं प्र-माणं नेह विद्यते ।
२१] दिष्ट्या स सम्-अरे राम कुम्भ-कर्णस् त्वया[10] हतः[10] ॥१७॥ [२०
दिष्ट्या त्वं राक्षसेन्द्रेण द्वन्द्व-युद्धम् उपा-गतः ।
२२] देवतानाम् अ-वध्येन वि-जयं प्राऽऽप्तवान् असि ॥१८॥ [२५
शक्यं[11] तच् च महा-बाहो रावणस्य[12] नि-बर्हणम्[12] । [२६पू
२३] द्वन्द्व-युद्धम् अनुप्राऽऽप्तो दिष्ट्या ते रावणिर् हतः ॥[13]१९[14]॥ [२७उ
कुम्भो नि-कुम्भश् च तथा जम्बु-माली घटोदरः । [२२पू
२५] कुर्वन्तः[15] कदनं घोरं[15] वीरा[16] युद्धे नि-पातिताः ॥२०॥ [२४पू
अन्तक-प्रतिमौ चाऽपि देवाऽन्तक-नराऽन्तकौ । [२१पू
२६] अन्तक-प्रतिमैर् बाणैर् दिष्ट्या युधि नि-पातितौ ॥२१॥ [२४उ

---

१. अ ल$_1$ ब–°र्घ्यं । २. अ च भ$_1$ भ$_2$ रा$_1$ ल$_3$ ब प्र-ऋषिपु° । ३. रा$_1$–°दस्त्विदं । ४. भ$_1$–महाराज । ५. च भ$_2$–नहि भारः । ६. अ–साधु त्वं तु । ल$_1$ ब–साधु तु त्वं । ल$_3$ प्र–साधु तं त्वं । ७. रा$_1$–°यी । ८. अतः परमधिकः पाठः—रा$_1$ भ$_2$–दिष्ट्या तु निहतो राम रावणः पुत्रपौत्रवान् । ९. अ–तु । १०. ल$_2$ ल$_3$ ब प्र–तथा गतः । ११. भ$_1$–सद्यं । १२. ल$_3$–कालस्येवाभिधावतः । १३. ल$_3$–नास्ति । १४. अतः परमधिकः पाठः—अ ल$_3$–वर्जे—दिष्ट्या तस्य महाबाहो कालस्येवाभिधावतः । वधात्ते राक्षसेशस्य कृतमश्रुप्रमार्जनम् ॥ दिष्ट्यातिकायो बलवान् यज्ञकोपश्च राक्षसः । युद्धोन्मत्ताश्च मत्ताश्च कालांतकयमांतकौ ॥ १५. अ–सर्वान्तकदनं कृत्वा । १६. च भ$_1$ भ$_2$ ल$_1$ ल$_3$ ब प्र–वीर ॥

एते चाऽन्ये च बहवो राक्षसा[1] नायकोत्तमाः ।
२७] दिष्ट्या हतास् त्वया वीर रघूणां कुल-वर्धन ॥२२॥ [३१
वि-स्मयस् त्व् एष नः सौम्य सं-श्रुत्येन्द्र-जितं हतम् । [३०
२८] अ-वध्यं सर्व-भूतानां महा-माया-धरं[2] युधि[3] ॥२३॥ [२९उ
दत्त्वा पुण्याम् इमां वीर सौम्याम् अभय-दक्षिणाम् ।
३०] दिष्ट्या वर्धसि[4] काकुत्स्थ जयेनाऽमित-विक्रम ॥२४॥ [३२
श्रुत्वा तेषां तु वचनं मुनीनां भाविताऽऽत्मनाम् ।
३१] वि-स्मयं परमं गत्वा रामः प्राञ्जलिर् अब्रवीत् ॥२५॥ [३३
महा-बलं कुम्भ-कर्णं रावणं च[5] निशा-चरम् ।
३२] अति-क्रम्य महा-वीर्यौ प्र-शशंसाऽथ रावणिम् ॥[6]२६॥ [३४
की-दृशः किं-प्रभावो वा किं-बलः किं-पराक्रमः ।
३३] केन वा कारणेनैष[7] रावणाद् अति-रिच्यते[8] ॥२७॥ [३७
शक्यं यदि मया श्रोतुं न खल्व् आ-ज्ञापयाम्य् अहम् ।
३४] यदि गुह्यं न चैतद्[9] वः श्रोतुम् इच्छामि तत्त्व-तः ॥२८॥ [३८
कथं शक्रो जितस् तेन कथं लब्ध-वरश् च सः ।
३५] कथं[10] चाऽस्मै वरो दत्तो बालायैव महाऽऽत्मने ॥२९॥ [३९
वं-२] एतत् तु वचनं श्रुत्वा राघवस्य महाऽऽत्मनः । [दा-२
१] कुम्भ-योनिर् महा-तेजा वाक्यम् एतद् उवाच ह ॥३०॥ [१
शृणु राम यथा-वृत्तं तस्य तेजो बलं महत् ।
२] जघान च रिपून् युद्धे यथाऽवध्यश्[11] च शत्रुभिः ॥३१॥ [२
अहं तु रावणस्येह[12] कुलं जन्म च राघव ।
३] वर-प्रदानं च तथा कथयिष्यामि तच् छृणु ॥३२॥ [३
पुरा कृत-युगे राम प्रजापति-सम-प्रभः ।
४] पुलस्त्यो नाम विप्रर्षिः साक्षाद् इव पिता-महः ॥३३॥ [४
अनु-कीर्त्या गुणास् तस्य धर्म-तः शील-तस् तथा ।
५] प्रजा-पतेः पुत्र इति शक्यं ज्ञातुम् अतो मम ॥३४॥ [५

---

१. अ ल$_1$ ल$_2$–रक्षसां । २. ब–°रो । ३. ल$_1$ ल$_3$ ब प्र–भुवि । ४. च भ$_2$–वर्धस्व । ५. च–रजनीचरं । ल$_1$–भावितात्मनाम् । ६. अतः परमधिकः पाठः—अ च भ$_1$ रा$_1$ ल$_1$ ल$_2$ ल$_3$ ब–महोदरं प्रहस्तं च विरूपाक्षं च राक्षसम् । कस्मादेतानतिक्रम्य प्रशशंसाथ रावणिम् । ७. च रा$_1$–कारणेन वै । ८. च भ$_1$ भ$_2$ रा$_1$ ब–ऽयति° । ९. भ$_1$–चैवैतच् । १०. ल$_3$ ब प्र–किंतु । ११. च रा$_1$–यथाऽजेयश् । १२. च भ$_1$ भ$_2$–°स्येदं ॥

स तु धर्म-प्रसङ्गेन मेरोः पार्श्वे महा-गिरेः ।
६] तृणाङ्गेर् आ-श्रमं[1] गत्वा न्य् अवसन् मुनि-पुङ्गवः ॥३५॥ [७
कुर्वतस् तस्य हि तपः स्वाध्याय-निरताऽऽत्मनः ।
७] अथ गत्वाऽऽश्रम-पदं वि-घ्नं कन्याः स्म कुर्वते ॥३६॥ [८
ततः पन्नग-कन्याश् च राजर्षि-तनयास् तथा ।
८] क्रीडन्त्योऽप्सरसश् चैव तं[2] देशम्[2] उप-पेदिरे ॥३७॥ [९
नित्य-शस् तास् तु सं-गम्य तत्र क्रीडन्ति कन्यकाः । [१०उ
९] देशस्य रमणीय-त्वात् पुलस्त्यो यत्र स द्वि-जः ॥३८॥ [११पू
अथ क्रुद्धो महा-तेजा व्या-जहार महान् ऋषिः ।
११] या मे दर्शनम् आ-गच्छेत् सा गर्भं धारयेद् इति ॥३९॥ [१२
तास् तु सर्वास् ततः[3] श्रुत्वा[3] तस्य वाक्यं महाऽऽत्मनः ।
१२] ब्रह्म-शाप-भयाद् भीता न तं देशं सिषेविरे[4] ॥४०॥ [१३
तृण-बिन्दोश् च राजर्षेर् दुहिता न तदाऽशृणोत् । [१४
१३] गत्वाऽऽश्रमपद-द्वारि सा चचार सु-निर्भया ॥४१॥ [१५पू
एतस्मिन्न् एव काले तु प्राजापत्यो महान् ऋषिः ।
१४] स्वाध्यायम् अकरोत् तत्र तपसा द्योतित-प्रभः ॥४२॥ [१६
तं तु वेद-ध्वनिं श्रुत्वा दृष्ट्वैव च तपो-धनम् ।
१५] अभवत् पाण्डु-देहा सा सु-व्यञ्जित-शरीर-जा ॥४३॥ [१७
बभूव च[5] समुद्-विग्ना दृष्ट्वा[6] तद् रूपम् आत्मनः ।
१६] इदं मे किं त्व् इति ज्ञात्वा[6] पितुर् गत्वाऽग्र-तस् तदा[7] ॥४४॥ [१८
तां तु दृष्ट्वा तथा-भूतां तृण-बिन्दुर् अथाऽब्रवीत् ।
१७] किं त्वम् एवं त्व् अ-सदृशं धारयस्य् आत्मनो वपुः ॥[8]४५॥ [१९
साऽथ कृत्वाऽञ्जलिं दीना कन्योवाच तपो-धनम् ।
१८] न जाने कारणं तात येन मे रूपम् ईदृशम् ॥४६[8]॥ [२०
किं तु पूर्वं[9] गताऽस्म्य् एका महर्षेर् भाविताऽऽत्मनः ।
१९] पुलस्त्यस्याऽऽश्रमं दिव्यम् अन्व्-एष्टुं स्व-सखी-जनम् ॥४७॥ [२१
न च पश्याम्य् अहं तत्र कां-चिद् अभ्या-गतां सखीम् ।[9]
२०] रूपस्याऽथ[10] विपर्य्-आसम् अपश्यं[11] वै[11] तथा-विधम् ॥४८॥ [२२

---

१. अ-°मे । २. च भ$_2$ रा$_1$-वर्जं—तां दिशं । ३ च भ$_2$ रा$_1$ ल$_1$ ल$_2$ प्र-प्रतिश्रुत्वा । ल$_3$ ब-प्रतिश्रुत्य । ४. अ रा$_1$ ल$_1$ ल$_2$ ल$_3$ ब प्र-निषे° । ५. अ रा$_1$ ल$_1$ ल$_2$-सा । ६. ब ल$_3$ प्र-नास्ति । ७. अ ल$_2$-वर्जं-तथा । ८. च-नास्ति । ९. ल$_3$ ब-नास्ति । १०. च भ$_2$-वर्जं-°स्याऽपि । ११. अ रा$_1$ ल$_2$-इममेवं ॥

तृण-बिन्दुस् तु तपसा राजर्षिर् द्योतित-प्रभः ।
२१] ध्यानं विवेश तच् चाऽपि सोऽपश्यन् मुनि-कर्म तत् ॥४९॥ [२३
स तु वि-ज्ञाय तं शापं महर्षेर् भाविताऽऽत्मनः ।
२२] तनया-सहितो गत्वा पुलस्त्यम् इदम् अब्रवीत् ॥५०॥ [२४
भग-वंस् तनया मह्यं[1]? गुणैः स्वैर् एव भूषिता ।
२३] भिक्षां प्रति-गृहाणेमां महर्षे स्वयम् उद्यताम्[2] ॥५१॥ [२५
तपश्-चर्या-प्रसक्तस्य शम्यमानेन्द्रियस्य[3] च ।
२४] शुश्रूषण-परा नित्यं भविष्यति न सं-शयः ॥५२॥ [२६
एवं ब्रुवाणं तं वाक्यं राजर्षिं धार्मिकं तदा ।
२५] प्रति-गृह्याऽब्रवीत् कन्यां बाढम् इत्य् एव स द्वि-जः ॥५३॥ [२७
स च दत्त्वा ततः कन्यां स्वम् आश्रम-पदं ययौ[4] ।[5]
२६] साऽपि तत्राऽवसत् साध्वी तोषयन्ती पतिं गुणैः ॥५४॥ [२८
२७उ] प्रीतः स तु महा-तेजा वाक्यम् एतद् उवाच ह । [२९उ
परि-तुष्टोऽस्मि भद्रं ते गुणानां सं-पदा भृशम् ॥५५॥
२८] तुष्टोऽहं ते ददाम्य् अद्य पुत्रम् आत्म-समं गुणैः ।
उभयोर् वंश-कर्तारं पौलस्त्यम् इति वि-श्रुतम् ॥५६॥ [३०
२९] यस्मात् तु वि-श्रुतो वेदस् त्वयेहाऽभ्यसतो[6] मम ।
तस्मात् स वि-श्रवा नाम भविष्यति महा-यशाः ॥५७॥ [३१
३०] एवम् उक्ता तु सा कन्या भर्त्रा राजीव-लोचना ।
अ-चिरेणैव कालेनाऽसूत वि-श्रवसं सुतम् ॥५८॥
३१] स तु लोक-त्रये ख्यातः[7] शौच-धर्म-समन्वितः ।[8] [३२
३२उ] पितेव तपसा युक्तो वि-श्रवा मुनि-पुङ्गवः ॥५९॥ [३३उ

इत्यार्षे रामायणे[9] उत्तर-काण्डे वि-श्रवस उत्पत्तिर् नाम

प्रथमः सर्गः ॥ १ ॥

---

१. ल$_3$ ब प्र-सर्वं । पाठः ? =म इयं>मेयं ? २. च-उच्यतां । भ$_2$ रा$_1$ ल$_2$-उद्यतां । ३. ब-वजं-शाम्य° । ४. प्र-मुनिः । ५. अतः परमधिकः पाठः—प्र-तृणबिंदुर्महाभागस्तमामन्त्र्य तदा ययौ । ६. अ रा$_1$ ल$_1$ ल$_2$-°ह वसतो । ल$_3$ ब प्र-°हाध्या- सतो । ७. अ रा$_1$ ल$_1$ ल$_2$ ल$_3$ ब-जातः । भ$_1$ प्र-ज्ञातः । ८. अतः परमधिकः पाठः—प्र-प्रीतिमान् समदर्शी च व्रताचाररुचिस्तथा । ९. रा$_1$-श्रीरा° ॥

अथ पुत्रः पुलस्त्यस्य वि-श्रवा मुनि-पुङ्गवः ।
१] अ-चिरेणैव कालेन पितेव तपसि स्थितः ॥ १ ॥ [१
N] मति-मान् सम-दर्शी[1] च व्रताऽऽचार-युतः[2] सदा ।[3] [N
सत्य-वाञ् छील-वान् दक्षः स्वाध्याय-निरतः शुचिः ।
२] सर्व-भावेष्व् अ-सक्तोऽभून् नित्यं धर्म-परायणः ॥ २ ॥ [२
ज्ञात्वा[4] तु तस्य तद् वृत्तं भरद्-वाजो[5] महान् ऋषिः ।
३] ददौ वि-श्रवसे भार्यां स्वां सुतां देव-वर्णिनीम् ॥[6] ३ ॥ [३
प्रति-गृह्य तु धर्मेण भरद्वाज-सुतां[7] तदा । [४पू
४] मुदा परमया युक्तो वि-श्रवा मुनि-पुङ्गवः ॥ ४ ॥
स तस्यां शील-सम्पन्नं सुतं[8] तु[8] परमाऽद्भुतम् ।
५] जनयामास धर्म-ज्ञं सर्वैर् एव गुणैर् युतम् ॥ ५ ॥ [५
तस्मिञ् जाते सु-संहृष्टो बभूव स पिता-महः । [६
६] नाम चाऽस्याऽकरोत् प्रीतः सार्धं देवर्षिभिस्[9] तदा ॥ ६ ॥ [७उ
यस्माद् वि-श्रवसोऽपत्यं[10] सादृश्याद् वि-श्रवा इति ।
७] तस्माद् वैश्रवणो नाम भविष्यत्य् एष वि-श्रुतः ॥ ७ ॥ [८
स तु वैश्रवणस् तत्र तपोवन-गतस् तदा ।
८] अवर्धताऽऽहुति-हुतो महा-तेजा यथाऽनलः ॥ ८ ॥ [९
तस्याऽऽश्रमपद-स्थस्य बुद्धिर् जज्ञे महाऽऽत्मनः ।
९] चरिष्ये नि-यतो धर्मं धर्मो हि परमा गतिः ॥ ९ ॥ [१०
स तु वर्ष-सहस्राणि तपस् तप्त्वा महा-वने । [११पू
१०] पूर्णे वर्षसहस्राऽन्ते तां तां वृत्तिम् अवर्तयत् ॥१०॥
जलाऽऽशी मारुताऽऽहारो निर्-आहारस् तथैव च ।
११] एवं वर्ष-सहस्राणि जग्मुस् तस्यैक-वर्ष-वत्[11] ॥[12] ११॥ [१२

---

१. ल$_3$ ब प्र–सद्दशात्मा । २. ल$_3$ ब प्र–सदाचार° । ३. भ$_1$–नास्ति । ४. अ रा$_1$ ल$_1$ ल$_2$–श्रुत्वा । ५. च ब-वर्जं–भार° । ६ अत आरभ्य भ$_2$–३०-शश्लोकं यावन्नास्ति । ७. ल$_3$ ब प्र–वर्जं–भा° । ८. च भ$_1$–अत्यंतं । ९. अ रा$_1$ ल$_1$ ल$_2$ ल$_3$–च ऋषि° । ब प्र–सर्वर्षि° । १०. अ रा$_1$ ल$_1$ ल$_2$ ल$_3$–°सो नाम्ना । ब प्र–°सः संज्ञः । ११. च प्र–तान्येक° । १२ अ ल$_2$–नास्ति ॥

ततः प्रीतो महा-तेजाः सेन्द्रैः सुर-गणैः सह ।[1]
१२] गत्वा तस्याऽऽश्रम-पदं ब्रह्मेदं वाक्यम् अब्रवीत् ॥१२॥ [१३
परि-तुष्टोऽस्मि ते[2] वत्स कर्मणाऽनेन[3] सु-व्रत ।
१३] वरं वरय भद्रं ते वराऽर्हस् त्वं हि मे मतः ॥१३॥ [१४
अथाऽब्रवीद् वैश्रवणः पिता-महम् उप-स्थितम् ।
१४] भग-वंल् लोक-पालोऽहम् इच्छेयं वित्त-रक्षणम् ॥१४॥ [१५
ततोऽब्रवीद् वैश्रवणं परि-तुष्टेन चेतसा ।
१५] ब्रह्मा सह सुरैः सर्वैर् बाढम् इत्य् एव[4] हृष्ट-वत्[4] ॥१५॥ [१६
अहं हि लोक-पालानां चतुर्थं स्रष्टुम् उद्-यतः । [१७
१६] यमेन्द्रवरुणानां हि पदं तच् च तवेप्सितम्[5] ॥१६॥
शक्रं[6] निर्-गच्छ[6] धर्म-ज्ञ धनैश्वर्यम् अवाऽऽप्नुहि ।
१७] शक्राऽम्बुप-यमानां हि चतुर्थस् त्वं भविष्यसि ॥१७॥ [१८
एतत् तु पुष्पकं नाम वि-मानं सूर्य-सन्निभम् ।
१८] प्रति-गृह्णीष्व यानाऽर्थं[7] त्रि-दशैः सम-तां व्रज ॥१८॥ [१९
स्वस्ति तेऽस्तु गमिष्यामः सर्व एव यथाऽऽगतम् ।
१९] कृत-कृत्या वयं तात तुभ्यं दत्त्वा वर-द्वयम् ॥१९॥ [२०
२०उ] गतेषु ब्रह्म-पूर्वेषु देवेष्व् अथ नभस्-तलम् ।
धनेशः प्राऽऽह पितरं वि-नयात् प्र-णतो वचः ॥२०॥ [२२
२१] भग-वंल् लब्धवान् अस्मि वरं कमलयोनि-तः ।
नि-वासं तु न मे देवो वि-दधे स प्रजा-पतिः ॥२१॥ [२३
२२] तत् पश्य भग-वन् कं-चिद् देशं वासाय नः प्र-भो ।
न च पीडा भवेद् यत्र प्राणिनो यस्य कस्य-चित् ॥२२॥ [२४
२३] एवम् उक्तस् तु पुत्रेण[8] वि-श्रवा मुनि-पुङ्गवः ।
२४पू] वचनं प्राऽऽह धर्म-ज्ञः श्रूयताम् इति सत्-तमः[8] ॥२३॥ [२५
२५उ] लङ्का नाम पुरी रम्या निर्-मिता विश्व-कर्मणा । [२६उ
राक्षसानां नि-वासाऽर्थं[9] यथेन्द्रस्याऽमरा-वती ॥[10]२४॥
२६] तत्र त्वं वस भद्रं ते रंस्यसे वाऽपि नित्य-शः । [२७
रमणीया पुरी सा हि रुक्म-वैडूर्य-तोरणा ॥२५[11]॥ [२८उ

---

१. अ ल₂—नास्ति। २. ब—भो। ३. च—°णा तेन। ४. अ रा₁ ल₂—एवमब्रवीत्। ५. भ₁—तथे°। ६. च—शंकरं गच्छ। ७. ब प्र—सर्वार्थं। ८. अ ल₂ ब—विप्रेण। ९. च भ₁—वर्जं—°म। १०. च भ₁—वर्जं—नास्ति। ११. च भ₁ ल₃ ब प्र—वर्जं—नास्ति॥

२७] राक्षसैः सा तु सं-त्यक्ता पुरा[1] विष्णु-भयाऽर्दितैः[1] ।
२८पू] शून्या रक्षो-गणैर् हीना रसातल-तलं गतैः ॥२६॥ [२९
स त्वं तत्र नि-वासाय रोचयस्व मतिं स्वयम् । [३०उ
२९] निर्-दोषस् तत्र ते वासो न च बाधाऽस्ति कस्य-चित् ॥२७॥ [३१
एतच् छ्रुत्वा तु धर्माऽऽत्मा[2] धर्मिष्ठं[2] वचनं पितुः ।
३०] नि-वेशयामास तदा लङ्कां पर्वत-मूर्धनि ॥२८॥
नैर्ऋतानां सहस्रैः सा[3] बहुभिर् मुदितैस् तथा । [३२
३१] अ-चिरेणैव कालेन सं-पूर्णा तस्य शासनात् ॥२९॥ [३३
स तु तत्राऽवसत् प्रीतो धर्माऽऽत्मा नैर्ऋतर्षभः ।
३२] समुद्र-परिधानायां[4] लङ्कायां विश्रवः-सुतः ॥३०॥ [३४
लोक-पालस्[5] तु स तदा पुष्पकेन(?ण) धनेश्वरः ।
३३] अभ्य्-अगच्छद् विनीताऽऽत्मा पितरं मातरं[6] च ह[6] ॥३१॥ [३५
स देव-गन्धर्व-गणैर् अभि-ष्टुतो[7]
गभस्तिभिः सूर्य इवौजसा वृतः ।
पितुः समीपं प्र-यतो ययौ तदा
३४] सदाऽप्सरो-नृत्य-विभूषिताऽऽलयः ॥३२॥ [३६

इत्यार्षे रामायण उत्तर-काण्डे वैश्रवणोत्पत्तिर् नाम
द्वितीयः सर्गः ॥ २ ॥

---

## [ वं-४ ]= [ तृतीयः सर्गः ] =[ दा-४ ]

श्रुत्वाऽगस्त्येरितं वाक्यं राघवो विस्मयाऽन्वितः । [१पू
१] लङ्केति पूर्वम् अप्य् आसीद् राक्षसानाम् इतीऽव हि ॥१॥ [N
ततः शिरः[8] कम्पयित्वा त्रिरग्नि-सम-विग्रहम्[9] ।
२] अगस्त्यं स[10] मुहुर् दृष्ट्वा स्मयमानोऽभ्य्-अभाषत ॥२॥ [२
भग-वन् पूर्वम् अप्य् एषां[11] लङ्काऽऽसीत् पिशिताऽऽशिनाम् ।
३] इत्य् एवं वचनं श्रुत्वा वि-स्मयो जनितो मम ॥३॥ [३

१. ल$_3$ ब प्र-देवैरिवामरावती । २. भ$_1$-धर्मिष्ठं विश्रवा । ३. च-तु । ४. च-°रिखातायां । ५. च भ$_1$-काले काले । ल$_3$ ब प्र-एककाल । ६. अ भ$_1$ भ$_2$-वर्ज-°रं स ह । च-स्त्वं यक्षराट् ह । ७. भ$_1$-अभिद्रुतः । ८. च-लोकं । ९. च-निशम्य सम° । भ$_2$-वर्ज-°हः । १०. अ रा$_1$ ल$_1$ ल$_2$ प्र-च । ११. भ$_1$ भ$_2$-एषा ॥

पुलस्त्य-वंशात् सं-भूता राक्षसा इति नः[1] श्रुतम् ।
४] इदानीम् अपि चाऽन्येषां सं-भवस् त्वद्-उदीरितः[2] ॥४॥ [४
रावणात् कुम्भ-कर्णाच् च प्र-हस्ताद् वि-कटाद् अपि ।
५] रावणस्य[3] तु पुत्रेभ्यः[4] किं तु ते बलवत्-तराः ॥५॥ [५
क एषां पूर्व-जो[5] ब्रह्मन् किं-नामाऽथ बलोत्कटः ।
६] अ-परे चाऽपि[6] किं-वीर्या विष्णुना घातिताः कथम् ॥६॥ [६
एतद् विस्तर-तः सर्वं कथयस्व[7] ममाऽन्-अघ[7] ।
७] कौतूहल-कृतं[8] सर्वं त्वं[9] तु वेत्सि यथैव तत्[9] ॥[10]७॥ [७
राघवस्य वचः श्रुत्वा संस्काराऽलङ्कृतं तु[11] तत्[11] ।
८] ईषद् वि-स्मयमानो हि स मुनिः प्राऽऽह राघवम् ॥८॥ [८
प्रजा-पतिः पुरा[12] सृष्ट्वा प्र-भुः सलिल-सम्भवाः(?वान्)[13] ।
९] गोपायन्[14] सर्व-सत्त्वांस् तान् अभवत्[15] पद्म-सम्भवः ॥९॥ [९
ते गत्वा देव कर्तारं विनीत-वद् उप-स्थिताः ।
१०] किं कुर्म इत्य् अभाषन्त क्षुत्-पिपासा-भयाऽर्दिताः ॥१०॥ [१०
प्रजा-पतिस् तु तान् आह सर्वान् सम्प्र-हसन्न् इव ।
११] अम्भांस्य् एतानि यत्नेन रक्षध्वम् इति मान-दाः[16] ॥[17]११॥ [११
रक्षामो मेनिरे के-चित्[18] क्षणुमेति[19] तथाऽपरे ।
१२] क्षणुमेति[20] च तैर् उक्तस् ततस् तान् आह भूत-कृत् ॥१२॥ [१४
उक्तं यैस्[21] तु[21] क्षणुमेति[22] ते वै यक्षा भवन्तु वः ।
१३] रक्षामेति च यैर् उक्तं राक्षसास् ते भवन्तु वः ॥[23]१३॥ [१५

---

१. ल$_3$ ब प्र-मे । २. भ$_1$-तदुदी° । ल$_3$-°रितं । ३. अ रा$_1$ ल$_1$ ल$_2$-°णः स । ४. अ रा$_1$ ल$_1$ ल$_2$ल$_3$ ब प्र-पूर्वेभ्यः । ५. अ रा$_1$ भ$_2$ ल$_1$ ल$_2$ ल$_3$ ब प्र-पूर्वतो । ६. अ च रा$_1$ भ$_2$-वापि । ७. ल$_3$ ब प्र-श्रोतुमिच्छामि तत्त्वतः । ८. च रा$_1$ भ$_2$ ल$_1$ ल$_2$-°तं । ९. च भ$_1$ भ$_2$ प्र-तुष्ट भानुर्यथा तमः । १०. ल$_3$ ब-नास्ति । ११. च भ$_2$-च तत् । भ$_1$-ततः । १२. अ रा$_1$ ल$_2$-प्रजाः । १३. भ$_2$-वर्जं-°वः । १४. च ब-°यत् । १५. अ ल$_2$-विरिंचिः । च भ$_2$-अब्रवीत् । १६. भ$_2$-वर्जे-मानसाः । १७. अतः परमधिकः पाठः—च भ$_1$ भ$_2$ प्र-इत्युक्तास्ते क्षुधाविष्टा अंभांस्यादातुमुद्यताः । अंभांस्येतानि रक्षाम उक्तवंतस्तथापरे ॥ ज्ञात्वा प्रजापतिस्तेषां महाधात्वर्थसंयुतम् । १८. ल$_3$ ब प्र-वर्जे-तत्र । १९. अ रा$_1$ भ$_2$ ल$_1$ ल$_2$-क्षुणुमेति । च भ$_1$-क्षुणुमोऽन्ये । २०. अ रा$_1$ भ$_1$ ल$_1$ ब-क्षु° । च भ$_2$-क्षणु° । २१. च-यैर्वा । भ$_1$-यैर्हि । ल$_3$ ब प्र-यैश्च । २२. अ रा$_1$ भ$_2$ ल$_1$ ल$_2$ ल$_3$ ब-क्षु° । च-शृणु° । २३. अतः परमधिकः पाठः—प्र-यक्षेति यक्षणे धातुस्तथा रक्षस्तु पालने । यक्षणाद्यक्ष

तत्र प्र-हेतिर् हेतिश् च भ्रातरौ राक्षसर्षभौ[1] ।
१४] मधु-कैटभ-सङ्काशौ बभूवतुर् अरिं-दमौ ॥१४॥ [१६
प्र-हेतिर् धार्मिकस् तत्र न दारान् अभ्य्-अकाङ्क्षत ।
१५] हेतिर् दार-क्रियाऽर्थं तु यत्नं परमम् आ-स्थितः ॥१५॥ [१७
स काल-भगिनीं(?नी-) पुत्रीं भयां नाम भयाऽऽवहाम् ।
१६] उदाऽवहद्[2] अमेयाऽऽत्मा स्वयम् एव महा-मतिः ॥१६॥ [१८
स तस्यां जनयामास हेती राक्षस-पुङ्गवः ।
१७] पुत्रं पुत्र-वतां श्रेष्ठं विद्युत्-केशम् इति श्रुतिः ॥१७॥ [१९
विद्युत्-केशो हेति-पुत्रः प्रदीप्ताऽग्नि-सम-प्रभः ।
१८] प्राऽवर्धत[3] महा-तेजास् तोय-मध्य इवाऽम्बु-जम्(?जः) ॥१८॥ [२०
यदा तु यौवनं भद्रम् अनुप्राऽऽप्तो निशा-चरः ।
१९] तदा दार-क्रियां तस्य कर्तुं चिन्तयते स्म[4] सः[5] ॥१९॥ [२१
सन्ध्या-दुहितरं सोऽथ[6] सन्ध्या-तुल्यां प्रभाव-तः ।
२०] वरयामास पुत्राय हेती राक्षस-पुङ्गवः ॥२०॥ [२२
अवश्यम् एव दातव्या परस्यैवेति सन्ध्यया ।
२१] चिन्तयित्वा तु[7] दत्ता सा विद्युत्-केशाय राघव ॥२१॥ [२३
सन्ध्यायास् तनयां लब्ध्वा विद्युत्-केशो निशा-चरः ।
२२] रमते स्म तया सार्धं पौलोम्या मघ-वान् इव ॥२२॥ [२४
केन-चित् त्व् अथ कालेन राम शालकटङ्कटा[8] ।
२३] विद्युत्-केशाद् गर्भम् आप[9] मेघस् तोयम् इवाऽर्णवात् ॥२३॥ [२५
ततः सा राक्षसी गर्भं तदा[10] ह्य् अनल-सप्रभम्[10] ।
२४] प्र-सूता मन्दरं गत्वा गङ्गा गर्भम् इवाऽग्नि-जम्[11] ॥२४॥ [२६
तम् उत्-सृज्य तु सा गर्भं विद्युत्केश-रताऽर्थिनी ।
२५] रमते पतिना सार्धं वि-सृज्य सुतम् आत्मनः ॥२५॥ [२७

---

इत्युक्तस्तथा रक्षस्तु पालनात् ॥ च-आगतस्तत्र देवशस्तांश्च पप्रच्छ किं कृतम् । भवंतः के तु विख्याताः किमर्थं ह्यत्र आसते । उक्तं येर्हि कृणुमेति भवंतु तत्र किन्नराः ॥ १. च ल$_3$ ब प्र-°सावुभौ । २. अ ल$_2$ ल$_3$-भार्यां । ३. भ$_1$ ल$_3$ ब प्र-तदव°। रा$_1$ ल$_1$ ल$_2$-तदा° । ४. च भ$_1$ भ$_2$-व्यव° । ५ ल$_1$-वर्जं-तदा । ६. भ$_1$-सोऽपि ७. ल$_3$ ब प्र-त्वर्जं-च । ८. अ-शालालुकण्टका । ९. अ रा$_1$ ल$_1$ ल$_2$ ल$_3$ ब प्र-भासाद्य । १०. अ-दधाराग्निरिवारणें । च भ$_1$ भ$_2$—र(?व)-नगर्भसमप्रभं । ११. च भ$_2$-वर्जं-°ग्निना ॥

तयोत्-सृष्टः स तु शिशुः शिशुर् दिवस-कृद् यथा ।
२६] पाणिम् आस्ये समा-धाय रुरोद घन-राड् इव ॥२६॥ [२८
अथोपरिष्टाद् गच्छन् वै वृषभ-स्थो हरः प्र-भुः । [२९पू
२७] अपश्यद् उमया सार्धं यथा-वद् राक्षसाऽऽत्मजम् ॥२७॥
कारुण्य-भावात् पार्वत्या भवस् त्रिपुर-हाऽर्थितः ।[1] [३०
२८] तं[2] राक्षसाऽऽत्मजं[2] चक्रे मातुर् एव समं तदा ॥२८॥
अ-मरं चैव तं कृत्वा[3] महा-देवोऽक्षयोऽव्ययः । [३१
२९] पुरम् आकाश-गं प्राऽदाद् उमायाः प्रिय-काम्यया ॥२९॥
उमया च वरो दत्तो राक्षसानां नृपाऽऽत्मज[4] । [३२
सद्यः प्र-लब्धिर् गर्भस्य प्र-सूतिः[5] सद्य एव च ।
३०] सद्य एव च गर्भस्य[5] वयो भवतु मातृ-जम् ॥३०॥ [३३
ततः सु-केशो वर-दान-गर्वितः
श्रियं[6] प्र-भोः प्राऽऽप्य हरस्य पार्श्व-तः ।
चचार[7] सर्वत्र महा-मतिः ख-गः[8]
३१] ख-गां[9] पुरीं प्राऽऽप्य यथा पुरं-दरः ॥३१॥ [३४

इत्यार्षे रामायण उत्तर-काण्डे सुकेश-वरदानं[10] नाम
तृतीयः सर्गः ॥ ३ ॥

---

## [ वं-५ ]= [ चतुर्थः सर्गः ] =[ दा-५ ]

सु-केशं धार्मिकं ज्ञात्वा[11] वर-लब्धं च राक्षसम् ।
१] ग्राम-णीर्[12] नाम गन्धर्वो विश्वावसु-सम-प्रभः ॥ १ ॥ [१
तस्य देव-वती नाम द्वितीया श्रीर् इवाऽऽत्म-जा ।
२] सु-केशाय सु-धर्मेण[13] ददौ दक्षः[14] श्रियं[14] यथा ॥ २ ॥ [२
वरदान-कृतैश्वर्यं[15] सा तं प्राऽऽप्य प्रियं[16] पतिम् ।
३] आसीद् देव-वती तुष्टा स्वर्गं प्राऽऽप्येव दुर्-गतिः[17] ॥ ३ ॥ [३

---

१. ल$_2$-नास्ति । २. अ-प्रीतः सममरं । ३. अ ल$_2$-दृष्ट्वा । ४. अ ल$_2$-°जं । ५. ल$_3$ ब-नास्ति । ६. अ-प्रियं । ७. अ ल$_2$-चकार । ८. ब ल$_3$-खे । प्र-खं । ९. ल$_1$-खगः । १०. ल$_3$ प्र-°दानो । ११. च-गत्वा । १२. अ ल$_2$-°णिर् । १३. ल$_3$ ब-स्वध° । १४. रा$_1$-रक्षःश्रि° । १५. अ ल$_2$-°कृतं सर्वं । १६. च-वर्जं-प्रिया । १७. ल$_3$ ब-दुर्मतिः ॥

स तया सह सं-सक्तो[1] रराज रजनी-चरः ।
४] अञ्जनाद् अभिनिष्-क्रान्तः करेण्वेव महा-गजः ॥ ४ ॥ [४
देव-वत्यां सु-केशस् तु जनयामास राघव । [५
५] त्रींस् त्रिनेत्र-समान् पुत्रान् महा-वीर्यान्[2] स[2] राक्षसः ।
सु-मालिनं माल्य-वन्तं मालिनं च महा-बलम् ॥ ५ ॥ [६
६] त्रयो लोका इवाऽत्य्-अर्थं गतास् त्रय इवाऽग्नयः ।
त्रयो मन्त्रा इवाऽत्य्-उग्रा वातास् त्रय इवोद्-धताः[3] ॥ ६ ॥ [७
७] त्रयः सु-केशस्य सुतास् त्रेताऽग्नि-सम-वर्चसः ।
वि-वृद्धिम् आऽगमंस्[4] ते तु व्या-धयः प्र-बला इव ॥ ७ ॥ [८
८] वर-प्राऽऽप्तं ततस् ते तु ज्ञात्वैश्वर्यं पितुर् महत् ।
तपस् तप्तुं गता मेरुं भ्रातरः कृत-निश्चयाः ॥ ८ ॥ [९
९] प्र-गृह्य नि-यमांस् तस्थू राक्षसा नृप-सत्तम ।
चेरुस् तत्र तपो घोरं सर्व-भूत-भय-प्रदम् ॥ ९ ॥ [१०
१०] सत्याऽऽर्जवदमोद्भूतः स तु तेषां तपो-बलः ।
निर्-दहत्य् एव लोकांस् त्रीन् स-देवाऽसुर-मानवान् ॥१०॥ [११
११] ततोऽभ्य्-अयाच्[5] चतुर्-वक्त्रो विमान-वरम् आ-स्थितः ।
सुकेश-पुत्रान् आ-मन्त्र्य वर-दोऽस्मीऽत्य् अभाषत ॥११॥ [१२
१२] ब्रह्माणं वर-दं ज्ञात्वा दृष्ट्वा सं-मन्त्र्य राक्षसाः ।
ऊचुः प्राऽञ्जलयः सर्वे वेपमाना द्रुमा इव ॥१२॥ [१३
१३] तपसाऽऽराधितो देव यद्य्[6] आ-दिशसि[6] नो वरम् ।
अ-जेयाः स्याम शत्रूणां तथा[7] वै[7] दीर्घ-जीविनः ।
१४] परस्पर-हिते युक्ता भूयास्म प्र-भविष्णवः ॥१३॥ [१४
एवं भविष्यतीऽत्य् उक्त्वा सुकेश-तनयान् प्रति ।
१५] प्र-ययौ ब्रह्म-लोकाय ब्रह्मा ब्राह्मण-वत्सलः ॥१४॥ [१५
वरं लब्ध्वा[8] ततः सर्वे राम रात्रि-चरास् तथा ।
१६] सुराऽसुरान् प्र-धावन्तो वर-दानात् सु-निर्भयाः ॥१५॥ [१६
तैर् व(?बा)ध्यमानास् त्रि-दशाः सर्षिसङ्घाः स-चारणाः[9] ।
१७] त्रातारं नाऽध्य्-अगच्छन्त[10] निरय-स्था यथा नराः ॥१६॥ [१७

---

१. ल$_{3}$ ब-संयुक्तो । २. च भ$_{1}$ भ$_{2}$ ल$_{3}$ ब प्र-जनयामास । ३. अ रा$_{1}$ ल$_{1}$ ल$_{2}$ ल$_{3}$-इवोद्यताः । ४. च भ$_{1}$ भ$_{2}$-भग° । ५. भ$_{1}$-°भ्येत्य । ६. ल$_{3}$ ब प्र-यथादि° । ७. ल$_{1}$-तथैव । ८. ल$_{3}$ ब प्र-दत्त्वा ॥ ९. अ ल$_{2}$ ब-सुदारुणाः । १०. प्र-नाधिगच्छंति ॥

अथ ते विश्व-कर्माणं शिल्पिनां[1] वरम् अ-व्ययम् ।
१८] आ-गत्योचुः सु-संहृष्टा राक्षसा राज-सत्तम ॥१७॥ [१८
ओजस् तेजो बलं लब्धा[2] महत्-त्वम् आत्म-तेजसा ।
१९] गृह-कर्ता भवान् नित्यं देवानां हृदयेप्सितः ॥१८॥ [१९
अस्माकम् अपि तावत् त्वं गृहं कुरु महा-मते ।
२०] हिम-वन्तं समा-श्रित्य मेरु-मन्दरम् एव च ।
महेश्वर-गृह-प्रख्यं गृहं नः क्रियताम् इति ॥१९॥ [२०
२१] विश्व-कर्मा ततस् तेषां राक्षसानां महा-भुजः ।
नि-वासं का(?क)र(?थ)यामास देवानाम् इव तां पुरीम् ।२०। [२१
२२] दक्षिणस्योदधेस् तीरे त्रि-कूटो नाम पर्वतः ।
त्रि-कूट इव सह्योऽन्यो द्वितीयो[3] बुद्धि-सत्तम[3] ॥२१॥ [२२
२३] शिखरे तस्य शैलस्य मध्यमेऽम्बुद-सन्निभे ।
शकुनैर् अपि दुष्-प्राऽऽपा दुर्-गमा[4] वै[4] चतुर्-दिशम् । [२३
२४] त्रिंशद्-योजन-विस्तीर्णा स्वर्ण-प्राकार-तोरणा ॥२२॥
मया लङ्केति नगरी शक्राऽऽज्ञया विनिर्-मिता । [२४
२५] तस्यां वमत दुर्-धर्षाः पुर्यां राक्षस-पुङ्गवाः ॥२३॥ [२५
अमरा-वतीम् इवाऽऽसाद्य[5] सेन्द्रा इव दिवौकसः ।
२६] लङ्का-दुर्गं[6] समा-साद्य राक्षसैर् बहुभिर् वृतम्[6] ।
दुर्-धर्षा[7] वै[7] भविष्यध्वं[8] शत्रूणां शत्रु-सूदनाः ॥२४॥ [२६
२७] विश्वकर्म-वचः श्रुत्वा ततस् ते राम राक्षसाः ।
सहस्राऽनुचरा गत्वा लङ्कां राक्षस-पुङ्गवाः ॥२५॥ [२७
२८] दृढ-प्राकार-परिखां स्वर्णैर् गृह-शतैर् वृताम् ।
२९पू] लङ्काम् अवाऽऽप्य हृष्टा वै वि-हरन्ति निशा-चराः ॥[9]२६॥ [२८
नर्म-दा नाम गन्धर्वी[10] नाना-धर्म-समाहिता । [२९उ
३०] कन्या बभूवुस् तिस्रोऽस्या[11] ह्री-श्री-कीर्ति-समन्विताः ॥२७॥

---

१. अ-°नं । २. ल$_1$ ल$_2$ ल$_3$ ब-लब्ध्वा । ३. ल$_3$ ब-°यश्चाद्रिसत्तमः । ४. च भ$_1$ भ$_2$-टंकछिन्ना । ल$_1$ ल$_2$-त्रुटितः पाठः । ल$_3$ ब-लंका छन्ना । प्र-सर्वा छिन्नं । ५. अ भ$_2$ ल$_2$-समासाद्य । ६. प्र-वृता । ७. ल$_3$ ब-दुष्प्रधर्षा । ८. च भ$_2$-वर्जे-°ष्यंति । ९. अतः परमधिकः पाठः—च भ$_1$ भ$_2$-एतस्मिन्नेव काले तु यथाकामं च राघव । १०. अ भ$_2$ ल$_2$-वर्जे-गा° । ११. ल$_2$ ल$_3$ ब प्र-सुश्रोणी ॥

ज्येष्ठ-क्रमेण सा तेषां राक्षसानाम्[1] अ-राक्षसी[2] । [३०
३१] कन्यास् ताः प्र-ददौ हृष्टा पूर्ण-चन्द्र-निभाऽऽनना: ॥२८॥
त्रयाणां राक्षसेन्द्राणां तिस्रो गन्धर्व-कन्यकाः । [३१
३२] मात्रा दत्ता महा-भाग[3] न-क्षत्रे भग-दैवते ॥२९॥
कृत-दारास् तु ते राम सुकेश-तनयाः प्र-भो ।
३३] क्रीडन्ति सह भार्याभिर् अप्सरोभिर् इवाऽमराः ॥३०॥ [३२
तत्र माल्य-वतो भार्या सुन्दरी नाम सुन्दरी ।
३४] तस्यां सं-जनयामास यान्य् अपत्यानि वच्मि ते ॥३१॥ [३३
वज्र-मुष्टिर् विरूपाऽक्षो दुर्-मुखश् चैव राक्षसः ।
३५] सुप्त-घ्नो यज्ञ-कोपश् च मद-मत्तस् तथैव च ।
अनु तस्याऽभवत् कन्या सुन्दर्यां[3] ना(?रा)म[4] सुन्दरी[4] ॥३२॥ [३४
३६] सु-मालिनोऽथ भार्याऽऽसीत् पूर्ण-चन्द्र-निभाऽऽनना ।
नाम्ना केतु-मती नाम प्राणेभ्योऽपि गरीयसी ॥३३॥ [३५
३७] सु-माली जनयामास भार्यायां रघु-नन्दन । [३६पू
N] रूप-यौवन-शालिन्यां यान्य अपत्यानि राक्षसः । [N
केतु-मत्याम् अतो[5] राजंस तान्नि(?नि) बोधाऽनुपूर्व-शः[6] ॥३४॥[३६उ
३८] प्र-हस्तोऽकम्पनश्[7] चैव वि-कटः करटा-मुखः ।
धूम्राऽक्षः कम्पनो दण्डः सु-पार्श्वः सु-महाबलः[8] ॥३५॥ [३७
३९] सं-ह्रादी प्र-घसश्[9] चैव भास-कर्णश् च राक्षसः ।
पुष्पोत्कटा च राका[10] च कैकसी च शुचि-स्मिता ।
४०] कुम्भी-नसी च कन्यास् ता बलिनश् च सु-मालिनः ॥३६॥ [३८
मालिनो वसु-धा नाम गन्धर्वी[11] रूप-शालिनी ।
४१] भार्याऽऽसीत् पद्म-पत्राऽक्षी स्व्-अक्षी यक्षी-समा[12] शुभा[12] ।३७।[३९
माली[13] च ह्य् अनु-जस् तस्यां जनयामास यानि तु ।
४२] अपत्यानि महा-बाहो वदतः शृणु तानि मे[14] ॥३८॥ [४०
अ-नलश् च नलश् चैव हरः सं-पातिर् एव च ।
४३] एते विभीषणाऽमात्या बलिनो हि[15] निशा-चराः ॥३९॥ [४१

---

१. अ ल$_{1}$-नर्मदा नाम रा° । २. प्र-°गा । ३. ल$_{1}$-वर्जं-सुंदरी । ४. च-मातृवार्तका ? । ५. ल$_{3}$ ब-ततो । ६. अ-°नुपर्वशः । ७. अ ल$_{1}$ ल$_{2}$-°स्तः कोप° । ८. च-च म° । ९. अ रा$_{1}$ ल$_{1}$-प्रसभश् । १०. भ$_{2}$-वर्जं-काका । ११. ल$_{2}$ ल$_{3}$ ब प्र-गंधर्वा । १२. अ-°समाश्रिता । रा$_{1}$-°माकुला । १३. ल$_{3}$-माला । १४. ब प्र-तु । १५. ल$_{3}$ ब प्र-च ॥

निशा-चरा जातिगुणोपपन्ना
  निशा-चरैः पुत्र-शतैश् च युक्ताः ।
सुरान् सहेन्द्रांश् च मुनींश् च सिद्धान्
44] सर्वे ह्य् अबाधन्त सदा प्र-वृत्ताः ॥४०॥ [४२
जगद् द्रवन्तोऽनिल-वद्[1] दुरा-सदाः[2]
  बलेन मृत्युं शत-शः समा-स्थिताः ।
श्रमं न जग्मुर् वर-दान-गर्विताः
४५] क्रतु-क्रियाणां प्रशमं-कराः सदा ॥४१॥ [४३

इत्यार्षे रामायण उत्तर-काण्डे राक्षसोत्पत्तिर्[3] नाम
चतुर्थः सर्गः ॥ ४ ॥

---

[ वं–६ ]= [ पञ्चमः सर्गः ] =[ दा–६ ]

तैर् व(?बा)ध्यमाना देवाश् च मुनयश् चारणैः सह ।
१] भयाऽऽर्ताः शरणं जग्मुर् देव-देवं महेश्वरम् ॥१॥ [१
ते समेत्य[4] तु[5] कामाऽरिं त्रिपुराऽरिं त्रि-लोचनम् ।
२] ऊचुः प्राऽञ्जलयः सर्वे गन्धर्वाः किं-नरैः सह ॥२॥ [३
सुकेश-पुत्रैर् भग-वन् पितामह-वराऽन्वितैः ।
३] प्रजाऽध्यक्ष[5] प्र-जाः सर्वा बाध्यन्ते[6] रिपु-बाधिभिः[6] ॥३॥ [४
शरण्या अ-शरण्याश् चाऽऽश्रम-स्था वन-वासिनः ।
४] स्वर्गाद् च च्याविताः शक्रः स्वर्गे क्रीडन्ति देव-वत्[7] ॥४॥ [५
अहं विष्णुर् अहं रुद्रो ब्रह्माऽहं देव-राड् अहम् ।
५] यमोऽहं वरुणश् चाऽहं चन्द्रोऽहं भास्-करोऽप्य्[8] अहम् ॥५॥ [६
इति माली सु-माली च माल्य-वांश् चैव राक्षसाः[9] ।
६] भाषन्ते समरोद्धर्षा ये च तेषां पुरः-सराः ॥६॥ [७
ततो देव भयाऽऽर्तानाम् अ-भयं दातुम् अर्हसि ।
७] अ-शिवं वपुर् आ-स्थाय जहि दैवत-कण्टकान् ॥७॥ [८

---

१. प्र-°न्तोऽनलवद् । २. अ रा$_{1}$ ल$_{2}$-°सदो । ३. ल$_{1}$-वर्जे-राक्षसवरप्रदानं । ४ ल$_{1}$-°त्याशु । ५. च-प्रबाध्यंते । रा$_{1}$ ब ल$_{3}$-प्राधक्ष्यंत । ६. ल$_{1}$-नास्ति । ब प्र-वनानीव वनाग्निभिः । ७. च भ$_{2}$-स्वार्गेवत् । भ$_{1}$-शक्रवत् । ८. अ रा$_{1}$ ल$_{1}$ ल$_{2}$-खेचरोऽप्य् । च भ$_{1}$ भ$_{2}$-रविरप्य् । ९. अ रा$_{1}$ ल$_{1}$ ल$_{2}$ ल$_{3}$ ब-°सः ॥

इत्य्-उक्तो दैवतैर् देवः कपर्दी नील-लोहितः ।
८] सु-केशं प्रति साऽऽक्षेपः प्राऽऽह देव-गणान्[1] प्र-भुः ॥८॥ [९
अहं तान् न हनिष्यामि मम वध्या न ते सुराः ।
९] किं तु मन्त्रं प्र-दास्यामि यस् तु[2] तान् नि-हनिष्यति[3] ॥९॥ [१०
एवम् एव समुद्-योगं पुरस्-कृत्य सुरर्षयः ।
१०] गच्छन्तु शरणं विष्णुं स हनिष्यति राक्षसान्[4] ॥१०॥ [११
ततस् ते जय-शब्देन प्रति-नन्द्य[5] महेश्वरम् ।
११] विष्णोः समीपम् अगमन् निशाचर-भयाऽर्दिताः ॥११॥ [१२
शङ्ख-चक्र-धरं ते[6] तु प्र-णम्य बहु मान्य च ।
१२] ऊचुः सम्भ्रान्त-वद् वाक्यं रजनीचर-पीडिताः ॥१२॥ [१३
सुकेश-तनयैर् देव त्रिभिस् त्रेताऽग्नि-सन्निभैः ।
१३] आ-क्रम्य वर-दानेन कर्माण्य् अप-हतानि नः[7] ॥१३॥ [१४
लङ्का नाम पुरी रम्या त्रिकूट-शिरसि[8] स्थिता ।
१४] तत्र स्थिताः प्र-बाधन्ते ते सर्वान् क्षणदा-चराः ॥१४॥ [१५
त्वं तु तस्मात् प्रियाऽर्थं[9] नो जहि तान् मधु-सूदन । [१६पू
१५] चक्र-कृत्ताऽऽस्य-कमलान् नि-वेदय यमाय वै ॥१५॥
भयेष्व्[10] अभय-दोऽस्माकं नाऽन्योऽस्ति भवता समः । [१७
१६] यातु चेदं भयं घोरं नी-हारम् इव भास्-करात् ॥१६॥ [१८उ
इत्य्-उक्तो[11] दैवत-गणैर् देव-देवो जनाऽर्दनः ।
१७] अ-भयं[12] भय-दोऽरीणां दत्त्वा देवान् उवाच ह ॥१७॥ [१९
१८पू] सु-केशं राक्षसं जाने ईशान-वर-दर्पितम् ।[13] [२०पू
१९उ] तस्य पुत्रान् हनिष्यामि लङ्कायाम् अपि सं-स्थितान्[14] ॥१८॥ [२१उ
इत्य् उक्तास् तेऽमराः सर्वे विष्णुना प्र-भविष्णुना ।
२०] यथाऽऽवासं ययुर् हृष्टाः प्र-शंसन्तो जनाऽर्दनम् ॥१९॥ [२२
वि-बुधानां समुद्-योगं माल्य-वान् स निशा-चरः ।
२१] श्रुत्वा तु भ्रातरौ ज्येष्ठ इदं वचनम् अब्रवीत् ॥२०॥ [२३

---

१. अ च भ$_1$ ल$_1$-दैव° । २. अ रा$_1$ ल$_1$ ल$_2$ ब-यथा । ३. रा$_1$ ल$_1$-°व्यथ । ४. अ रा$_1$ ल$_1$ ल$_2$-दानवान् । ५. च भ$_1$ भ$_2$-वर्जं-प्रतिवंद्य । ६. च भ$_2$-तं । ७. च भ$_2$-वर्जं-च । ८. अ-°शिखरे । ९. अ भ$_1$ ल$_1$ ल$_2$ ब प्र-°र्थे । १०. ल$_3$ ब प्र-लोकेष्व् । ११. च भ$_1$ भ$_2$-°क्ते । १२. ल$_3$ ब प्र-आश्रयं । १३. अतः परमधिकः पाठः—प्र-तांश्चास्य तनयाञ्जाने येषां ज्येष्ठः स माल्यवान् । तानहं समतिक्रांतमर्यादान्राक्षसाधिपान् ॥ १४. ल$_3$ ब प्र-दर्पितान् ॥

अ-मरा ऋषयश् चैव[1] सं-हृत्य किल शं-करम् ।
२२] अस्मद्-वधं परीऽऽप्सन्त इदम् ऊचुः सुरा हरम् ॥२१॥ [२४
N] भय-भीतास् तु[2] ते सर्व एवम् ऊचुर् महेश्वरम् । [N
सुकेश-तनया देव वर-दान-बलोद्धताः ।
२३] बाधन्तेऽस्मान् समुद्-युक्ता घोर-रूपाः पदे पदे ॥२२॥ [२५
राक्षसैर् अभि-भूताः स्मो न शक्नुम उमा-पते ।
२४] स्वेषु वेश्मस्व् अपि स्थातुं भयात् तेषां दुर्-आत्मनाम् ॥२३॥ [२६
त्वम् अस्माकं हिताऽर्थाय जहि तान् वै त्रि-लोचन ।
२५] भारं त्वं हुं-कृतेनैव दह[3] प्रदहतां-वर[3] ॥२४॥ [२७
इत्य् एवं त्रि-दशैर् उक्तो नि-शम्य[4] शत्रु-सूदनः[4] ।
२६] शिरः करेण धुन्वान इदं वचनम् अब्रवीत् ॥२५॥ [२८
अ-वध्या मम ते देवाः सुकेश-तनया रणे ।
२७] मन्त्रं तु वः प्र-दास्यामि यस् तान् वै नि-हनिष्यति ॥२६॥ [२९
यः स चक्र-गदा-पाणिः पीत-वासा[5] जनाऽर्दनः ।
२८] हनिष्यति स तान् युद्धे शरणं तं प्र-पद्यत ॥२७॥ [३०
हराद् अवाऽऽप्य ते कामं कामाऽरिम् अभि-वाद्य[6] च ।
२९] नारायणाऽऽलयं प्राऽऽप्ताः सर्वाऽर्थस् तैर् नि-वेदितः ॥२८॥ [३१
ते[7] तु[7] नारायणेनोक्ता देवा इन्द्र-पुरो-गमाः ।
३०] सुराऽरींस्[8] तान् हनिष्यामि[8] सुरा भवत वि-ज्वराः ॥२९॥ [३२
सुराणां भीत-भीतानाम् अस्म(?स्मा)त्-तो(?त्तु) राक्षसर्षभाः ।
३१] प्रति-ज्ञातो वधोऽस्माकं तच्[9] चिन्तयत[9] सं-गताः ॥३०॥ [३३
३२पू] हिरण्य-कशिपोर् मृत्योर्[10] अन्येषां च सुर-द्विषाम् । [३४पू
३७पू] दुःखं नारायणो जेतुं यो नो हन्तुम् अभीऽऽप्सति ॥[12]३१॥ [३९पू
३२उ] न-मुचिः काल-नेमिश्[11] च प्र-ह्लादोऽसुर-सत्तमः ।[13] [३४उ
अ-सुरा दानवेन्द्राश् च सत्त्व-वन्तो महा-बलाः ॥३२॥

१. भ$_1$-सर्वे । २. अ रा$_1$ ल$_1$ ल$_2$-सुराः । ३. ल$_3$ प्र-देव प्रहरतां° । ४. भ$_2$-°म्यांधकसू° । ५. अ रा$_1$ ल$_2$-°सो । ६. अ रा$_1$ ल$_1$ ल$_2$ ब-अभिवंद्य । ७. प्र-ततो । ८. च-मसुरान्निह° । ९. ल$_1$-तत्त्वं नयत । १०. अ ल$_2$-वर्ज-मृत्युर् । ११. प्र-वर्ज-नास्ति । १२. ख ल$_1$ प्र-वर्ज-°मी । १३. अतः परमधिकः पाठः—प्र-राधेयो बर्हिपाणी च लोकपालो ह्यधार्मिकः । यमकार्जुनहार्दिक्याः शुम्भश्चैव निशुम्भजः ॥

३४] सर्वे सम्-अरम् आ-साद्य न श्रूयन्ते परा-जिताः । [३६
३५पू] सर्वैः क्रतु-शतैर् इष्टं सर्वे मायाविनस् तथा ॥३३॥ [३७पू
नारायणेन नि-हताः शत-शोऽथ सहस्र-शः ।
३६] एतज् ज्ञात्वा तु सर्वं[1] वै समा-गन्तुम्[2] इहाऽर्हथ ॥३४॥ [३८
एतन् माल्य-वता प्रोक्तं धार्मिकेण यशस्विना ।
N] सर्वं क्षमा-वता युक्तं दीर्घम् आयुर् अवाऽऽप्यते ॥३५॥ [N
४१उ] विष्णोर् दोषश् च नाऽस्त्य् अत्र कारणे राक्षसेश्वरौ ।
४२पू] अस्माकम् इह दोषेण विष्णोः प्र-चलितं मनः ॥३६॥ [४३
३७उ] माली चैव[3] सु-माली च श्रुत्वा माल्य-वतो वचः ।
ऊचतुर् भ्रातरं ज्येष्ठं धर्म-ज्ञं बलवत्-तरम्[4] ॥३७॥ [३९उ
३८] अधीतं दत्तम् इष्टं च ऐश्वर्यं चाऽनु-पालितम् ।
आयुर् निर्-आमयं प्राऽऽप्तं स्व-धर्मः प्राऽऽपितश् च नः ॥३८॥[४०
३९] देव-सागरम् अ-क्षोभ्य शस्त्रौघैः[5] प्रवि-गाह्य ता(?त)म्[6] ।
जह्यन्तां संत्रासाऽऽलापा[7] न नो[8] मृत्यु-कृतं भयम् ॥३९॥ [४१
४०] इन्द्राऽऽदींस् त्रि-दशान् वाऽपि[9] त्व् अथवाऽपि पिता-महम् ।
४१पू] नाऽस्माकं प्र-मुखे स्थातुं शक्ष्यन्ति त्वं बिभेषि किम् ॥४०॥ [४२
४३उ] एव सं-मन्त्र्य बलिनः सर्वे सैन्य-समाश्रिताः । [४५उ
N] उद्-योगं घोषयित्वा तु सर्वे नैर्ऋत-पुङ्गवाः ।
युद्धाय निर्-ययुः क्रुद्धा जम्भ-वृत्र-बलास् त्रयः ॥४१॥ [४६
४४] स्यन्दनैर् वारणैर्[10] भीमैर्[11] हयैश् च हरि-सन्निभैः ।
खरैर् गोभिस् तथोष्ट्रैश् च शिशु-मारैर् भुज-गमैः ॥४२॥ [४८
४५] मकरैः कच्छ-पैर् मीनैर् विहं-गैर् गरुडोपमैः ।
४६पू] सिंहैर्[12] व्याघ्रैर्[12] वराहैश्[12] च[13] शम्बरैः शर-भैर् अपि ॥४३॥ [४९
४८उ] रथौघैर् उह्यमानाश् च शत-शोऽथ सहस्र-शः ।
४९पू] लङ्कायां[14] राक्षसास् तूर्णं देव-लोक-जिगीषवः[15] ॥४४॥ [५२पू

---

१. च $ल_3$ ब-मर्व । २. अ $रा_1$ $ल_1$ $ल_2$ ब-समायातुं । ३. च-चापि । ४. च $रा_1$ $भ_2$ $ल_1$-°त्तरौ । ५. च $भ_1$ $भ_2$-वर्जं-°घं । ६. $भ_1$-वर्जं-प्रतिगृह्य° । ७ अ $रा_1$ $ल_1$ $ल_2$-जप्यंतां सत आलापान् । $भ_2$-जप्यंतां शात्रवान्भीमान् । ८. च-च । ९. ब-वर्जं-वाथ । १०. च $भ_1$ $भ_2$-वर्जं-चरणैर् । ११. $भ_1$ $भ_2$-वर्जं-हेमैर् । १२. च $भ_1$ $भ_2$ ब प्र-सिंहव्या° । १३. च $भ_1$ $भ_2$-वर्जं-च हरिणैः । १४. च $भ_1$ $भ_2$-प्रयाता । १५. अ $ल_2$-देवदेवं जि° ॥

४६उ] त्यक्त्वा लङ्कां ततः सर्वे राक्षसा बल-गर्विताः ।
स्वर्गं प्रति सुरान् जेतुं प्र-याता देव-शत्रवः ॥४५॥ [५०
४७] लङ्कायां पर्य्-अयं दृष्ट्वा यानि लङ्काऽऽलयान्य् अथ[1] ।
N] भूतानि भय-दर्शीनि वि-मनस्कानि सर्व-शः ॥४६॥ [५१
४९उ] भौमांस् ततोऽन्तरिक्ष-स्थान् काले ज्ञात्वा भयाऽऽवहान् ।
उत्-पातान् राक्षसेन्द्राणाम् अ-भावायोत्थितान् द्रुतम्[2] ॥४७॥[५३उ
५०] अस्थीनि मेघा वर्षन्ति शोणितं चोष्णम् एव च ।
वेलां सम्-उद्रा व्युत्-क्रान्ताश् चलन्ते[3] वाऽचलोत्तमाः[3] ॥४८॥ [५४
५१] अट्ट-हासान् वि-मुञ्चन्ति घन-नाद-समांस् तथा । [५५पू
सं-पतन्त्य्[4] अपि भूतानि क्रोशन्ति[5] च यथा-क्रमम् ॥४९॥
५२] गृध्र-चक्रं महच् चाऽत्र प्रज्वालोद्गारिभिर् मुखैः । [५६
५३पू] रक्षो-बलस्योपरिष्टाद् भ्रमते काल-चक्र-वत् ॥५०॥ [५७पू
अ-गणयन्तो महोत्पातांस् ते रात्रि-चर-सत्तमाः ।
५५] यान्त्य् एव न नि-वर्तन्ते मृत्यु-पाश-वशं-गताः ॥५१॥ [५८
५३उ] कपोता रक्त-पादाश् च शारिका वि-द्रुता ययुः ।
काका वाशन्ति तत्रैव विडालाश् च द्वि-पादकाः[6] । [५७उ
५४] वाशन्ते च शिवास् तत्र दारुणा[7] घोर-दर्शनाः ॥५२॥ [५५उ
माल्य-वांश च सु-माली च माली च रजनी-चराः ।
५६] पुरः-सरा राक्षसानां ज्वलिताः पावका इव ॥५३॥ [५९
माल्य-वन्तं तु ते सर्वे माल्य-वन्तम् इवाऽचलम् ।
५७] निशा-चराः सं-श्रयन्ते[8] धातारम् इव देहिनः ॥५४॥ [६०
तद् बलं राक्षसेन्द्राणां महाऽभ्र-घन-नादितम् ।
५८] जयेप्सया देव-लोकं ययौ मालि-वशे स्थितम् ॥५५॥ [६१
राक्षसानां समुद्-योगं तं तु नारायणः प्र-भुः ।
५९] देव-दूताद् उप-श्रुत्य ततो युद्धे मनो दधे[9] ॥५६॥ [६२

स देव-सिद्ध-द्विज-सङ्घ-जुष्टो
गन्धर्व-विद्याधर-पूग-गीतः ।
विनिर्-ययौ चक्र-गदाऽसि-पाणिः
६२] सुराऽरि-नाशाय हरिः प्र-हृष्टः ॥५७॥ [६७

---

१. ल$_3$ ब प्र-°न्त्यपि । २. भ$_1$-हि वै । ३. भ$_2$-भिक्षु-बलवंतो बलोत्तमाः । ४. अ रा$_1$ ल$_1$ ल$_2$ कंपयंत्य् । ब ल$_3$ प्र-प्रपतंत्य् । ५. ल$_3$ ब प्र-क्रंदयंत्यपि । ६. भ$_1$ ल$_3$ ब प्र-°दपाः । ७. च-वर्जं-°णं । ८. ब प्र-वर्जं-संश्रियंन्ते । ९. च-दधौ ।

सुपर्ण-पक्षाऽनिल-धूत-वस्त्रं
सिताऽऽतपत्रं[1] प्रविकीर्ण-शस्त्रम् ।
चचाल तद् राक्षस-राज-सैन्यं
६३] दृष्ट्वा हरिं साऽम्बु-पयोद-नीलम् ॥५८॥ [६८
ततः शितैः[2] शोणित-मांस-भूषितैर्
युगाऽन्त-वैश्वानर-तुल्य-विग्रहैः ।
निशा-चराः सम्परि-वार्य माधवं
६४] वराऽऽयुधैर् निर्-बिभिदुः सहस्र-शः ॥५९॥ [६९

इत्यार्षे रामायण उत्तर-काण्डे राक्षस-निर्याणं नाम
पञ्चमः सर्गः ॥ ५ ॥

---

[ वं-७ ]= [ षष्ठः सर्गः ] =[ दा-७ ]

तं[3] तु नारायणं देवं गर्जन्तं[4] राक्षसा मुदा ।
१] आर्दयन्न्[5] अस्त्र-वर्षेण वर्षेणाऽद्रिम्[6] इवाऽम्बु-दाः ॥[7] १ ॥ [१
श्यामाऽवदातस् तैर्[8] विष्णुर् नीलैः[8] रात्रि-चरैस् तदा[9] ।
२] वृत्तोऽञ्जनो गिरिर् इव वर्षमाणैः पयो-धरैः ॥ २ ॥ [२
शल-भा इव केदारं पतं-गा[10] इव पावकम्[10] ।
३] यथाऽमृत-घटं जीवा मकरा[11] इव चाऽर्णवम् ॥ ३ ॥ [३
तथा रक्षो-धनुर्-मुक्ता वज्राऽनिल-मनो-जवाः ।
४] हरिं विशन्ति स्म शरास्[12] तं लोका इव पर्य्-अये[12] ॥ ४ ॥ [४
स्यन्दनैः स्यन्दन-गता गजैश् च गज-संश्रिताः ।
५] अश्वाऽऽरूढास्[13] तथाऽश्वैश् च पादाताश् चाऽपरे[14] स्थिताः ।५।[५
राक्षसेन्द्रा गिरि-निभं[15] शर-शक्त्य्-ऋष्टि-तोमरैः ।
६] निर्-उच्छ्वासं हरिं चक्रुः प्राणाऽऽयामो यथा द्वि-जम् ॥६॥ [६
निशा-चरैर् अर्द्यमानो मीनैर् इव महा-तिमिः ।
७] जघानाऽऽपत्य[16] वेगेन राक्षसान् स महा-रणे[17] ॥ ७ ॥ [७

---

१. च- वर्जे-शता° । २. भ$_2$-शतैः । ३. च भ$_1$ भ$_2$-ते । ४. भ$_1$-गर्जतो । ५. भ$_1$ ल$_1$-अर्द° । ६. भ$_2$-नास्ति । ७. च-नास्ति । ८. अ रा$_1$ ल$_1$ ल$_2$-कालै । ९. अ रा$_1$ प्र-तथा । १०. भ$_2$-नास्ति । ११. अ ल$_2$ ल$_3$ ब प्र-सूकरा । १२. भ$_2$-नास्ति । १३. प्र-अश्वगतास्त । १४. प्र-वर्जे-चांबरे । १५. च भ$_1$-°भाः । भ$_2$-त्रुटितः पाठः । १६. अ-मिजघान स । च भ$_1$-शार्ङ्ग भानस्य । १७. च भ$_1$ भ$_2$-महाहवे ॥

शरैः पूर्णाऽऽयतोत्सृष्टैर् वज्र-वेगैर् मनो-जवैः ।
८] बिभेद तिल-शो विष्णुः शत-शोऽथ सहस्र-शः ॥ ८ ॥ [८
तद् बाण-वर्षं वि-द्राव्य वर्षं वायुर् इवोत्थितः ।
९] पाञ्चजन्यं महा-शङ्खं प्र-दध्मौ पुरुषोत्तमः ॥ ९ ॥ [९
सोऽम्बु-जो हरिणाऽऽध्मातः सर्व-प्राणेन[1] शङ्ख-राट्[2] ।
१०] रराज(?स) भीम-निर्ह्रादो युगाऽन्ते जल-दो यथा ॥१०॥ [१०
शङ्ख-राज-रवः[2] सोऽत्र[2] त्रासयामास राक्षसान् ।
११] सिंह-राजो महाऽरण्ये स-मदान् इव कुञ्जरान् ॥११॥ [११
गन्तुं नाऽशक्नुवन्त(?न्-अ)श्व(?श्वा[3]) वि-मदाः कुञ्जराः कृताः ।
१२] स्यन्दनानि च मुख्यानि नाऽस्यन्दन्त यथा पुरा ॥[4]१२॥ [१२
शार्ङ्ग-चाप-विसृष्टा ये वज्र-तुल्याऽऽननाः शराः ।
१३] शरीराणि विनिर्-भिद्य स-पुङ्खा विविशुः क्षितिम् ॥१३॥ [१३
भिद्यमानाः शरैश् चाऽन्ये नारायण-धनुश्-च्युतैः[5] ।
१४] अपतन् राक्षसाः शैला वज्रि-वज्राऽऽहता यथा ॥१४॥ [१४
व्रणानि वर-नागानां विष्णु-बाण-कृतानि[6] तु ।
१५] असृक् क्षरन्ति धाराभिस् तूर्णं रसम् इवाऽचलाः ॥१५॥ [१५
शङ्ख-राज-रवश् चाऽपि शार्ङ्ग-चाप-रवस् तथा ।
१६] ग्रसन्ति वैष्णवा बाणास् तेषां ध्वज-वपूंषि च ॥१६॥ [१६
सूर्याद् इव करा घोरा वार्य्-ओघाः सागराद् इव ।
१८] पर्वताद् इव नागेन्द्रा धारौघा इव चाऽम्बु-दात् ॥१७॥ [१८
तथा गाढ-विनिर्मुक्ताः शार्ङ्गान्[7] नारायणेरिताः ।
१९] निर्-धावन्तश्[8] च ते[8] तूर्णं शत-शोऽथ सहस्र-शः ॥१८॥ [१९
शर-भेण यथा सिंहाः सिंहेन द्वि-रदा यथा ।
२०] द्वि-रदेन यथा व्या-घ्रा व्या-घ्रेण द्वीपिनो यथा ॥१९॥ [२०
द्वीपिना च यथा श्वानः शुना मार्जार-का यथा[9] ।
२१] मार्जारेण यथा सर्पाः सर्पेण च यथोन्दुराः ॥२०॥ [२१
तथा ते राक्षसा युद्धे विष्णुना प्र-भविष्णुना ।
२२] द्राव्यन्ते द्राविताश् चैव शायिताश् च मही-तले ॥२१॥ [२२

---

१. अ ल$_1$–°प्राणविदारणः । २. अ भ$_1$ स$_2$–°वश्चात्र । ल$_1$ ब प्र–°ञ्शस्वने-नाथ । ३. ब प्र–न शक्नुवंस्तश्च । ४. प्र–वर्जं–माहित । ५. अ भ$_2$ भ$_2$ ब–च्युतैः । ६. ल$_3$ ब–°हतानि । ७. ल$_1$–शार्ङ्गे । ८. ल$_3$ ब प्र–निर्ययुश्च शरास् । ९. ल$_1$–वर्जं–इव ॥

राक्षसानां सहस्राणि नि-हत्य मधु-सूदनः ।
२३] वारि-जं ध्मापयामास तोय-दं सुर-राड् इव ॥२२॥ [२३
नारायण-शर-ग्रस्तं[1] शङ्ख-नाद-सुविह्वलम् ।
२४] लङ्काम् अभि-मुखं चाऽऽशु प्र-भग्नं रक्षसां बलम् ॥२३॥ [२४
प्र-भग्ने राक्षस-बले नारायण-शराऽऽहते ।
२५] सु-माली शर-जालेन चकार[2] वि-वशं[2] हरिम् ॥२४[3]॥ [२५
स तु तं छादयामास नी-हारम् इव भास्-करम् ।[3]
२६] राक्षसाः सत्त्व-सम्पन्नाः पुनर् धैर्यं[4] समा-दधुः ॥२५॥ [२६
अथ तेनैव रोषेण स्व-बाहु-बल-दर्पितः[5] ।
२७] महा-नादं प्र-कुर्वाणा राक्षसान् जीवयन्न् इव ॥२६॥ [२७
उत्-क्षिप्य लम्बाऽऽभरणं करं करम् इव द्वि-पः ।
२८] ररास[6] राक्षसो हर्षात् स-तडित् तोय-दो यथा ॥२७॥ [२८
अथ नानद्यतस् तस्य शिरो ज्वलित-कुण्डलम् ।
२९] यन्तुश्[7] चिच्छेद तस्याऽश्वा[7] उद्-भ्रान्ता युधि रक्षसः[8] ॥२८॥ [२९
उद्-भ्रान्तैर् भ्रामितः सोऽश्वैः सु-माली राक्षसेश्वरः ।
३०] इन्द्रियाऽश्वैर् इवोद्-भ्रान्तैर्[9] धृति-हीनो[10] यथा नरः ॥२९॥ [३०
३१पू] द्रुतैः[11] सु-माली[12] तुर-गैः प्र-गृह्य तुर-गांस् तदा ।
३२उ] माली चाऽभ्य्-आर्दयद् युद्धे जनाऽर्दनम् अथेषुभिः ॥३०॥ [३१
मालि-चाप-च्युता बाणाः कार्तस्वर-विभूषिताः ।
३३] विविशुर् हरिम् आ-साद्य क्रौञ्चं पत्र-रथा इव ॥३१॥ [३२
अर्द्यमानः शरैः सोऽथ मालि-मुक्तैः सहस्र-शः ।
३४] क्षोभ्यते[13] न रणे विष्णुर् यतेन्द्रिय[14] इवेन्द्रियैः ॥३२॥ [३३
मौर्वी-स्वनं[15] ततः कृत्वा[16] भग-वान् भूत-भावनः ।
३५] मालिनं प्रति बाणौघान् वि-ससर्ज गदा-धरः ॥[17]३३॥ [३४

---

१. ल$_1$–शरैर्नारायणग्रस्तं । २. अ ल$_1$ ल$_2$–°राविवरं । भ$_2$–°विबलं । ३. च–नास्ति । ४. भ$_1$–युद्धं । ५. ल$_3$ ब प्र–सुबाहु° । ६. च रा$_1$ भ$_1$ भ$_2$ ल$_1$–रराज । ७. अ रा$_1$ ल$_1$ ल$_2$–विष्णुश् चि° । ल$_3$ ब प्र–तच्चिच्छेद ततश्चाश्वा । ८. च ल$_1$ ल$_2$ ब प्र–राक्षसः । ९. अ रा$_1$ ल$_1$–°भ्रांतो । १०. च ल$_3$–वृत्ति-हीनो । भ$_1$ भ$_2$–भूति° । ११. अ रा$_1$ ल$_1$ ल$_2$ ल$_3$ ब प्र–हतः । १२. भ$_1$ ल$_1$ ल$_3$ ब प्र–°लिस । १३. ल$_3$ ब प्र–क्षुभ्यते । १४. च भ$_2$–जितें° । १५. ल$_3$ ब प्र–मौर्व्याः स्वनं । १६. ल$_3$ ब प्र–श्रुत्वा । १७. अ–नास्ति ।

मालिनो देहम् आ-साद्य वज्र-विद्युत्-प्रभाः शराः ।
३६] पिबन्ति रुधिरं भित्त्वा देवा इव पुराऽमृतम् ॥३४[1]॥ [३५
मालिनं वि-मुखं कृत्वा मालि-मौलिं हरिर् बलात् ।
३७] शरान्[2] ध्वजं च चापं च वाजिनश् च न्य्-अपातयत् ॥[3]३५॥ [३६
वि-रथस् तु तदा माली गदाम् आ-दाय वीर्य-वान् ।
३८] शुशुभे स गदा-पाणिः केसरीऽत्र महा-वने ॥३६[3]॥ [३७
वि-चिक्षेप गदां गुर्वीम् उद्-भ्राम्य त्रि-धिना बली ।
३९] शिरस्य अभ्याऽहं[4] तं(?स्तं)[4] क्रुद्धो वज्रेणेव महा-गिरिम् ।३७।[३८
गदयाऽभि-हतस् तेन मालिना गरुडो भृशम् ।
४०] रणात् पराङ्-मुखं देवं कृतवान् वेदनाऽऽतुरः[5] ॥३८॥ [३९
पराङ्-मुखे[6] कृते[7] देवे[8] मालिना गरुडेन च ।
४१] शुश्रुवे[8] राक्षस-रवं[9] सिंहानाम् इव गर्जितम् ॥३९॥ [४०
गर्जतां[10] रक्षसां[10] नादं श्रुत्वा हरि-हयाऽनुजः ।                [४१पू
४२] पराङ्-मुखोऽपि चिक्षेप चक्रं मालि-जिघांसया ॥४०॥ [४२
तत्[11] सूर्य-मण्डलाऽऽकारं युगाऽन्ताऽग्नि-सम-प्रभम् ।
४३] काल-चक्र-निभं चक्रं व्य्-अहरत् तस्य तच् छिरः ॥४१॥ [४३
तच् छिरो राक्षसेन्द्रस्य चक्रोत्कृत्तं तु राघव ।
४४] पपात रुधिरोद्गारि पुरा वृत्र-शिरो यथा ॥४२॥ [४४
ततः सुर-गणैर् हृष्टैः सर्व-प्राण-समीरिताः ।
४५] सिंह-नाद-रवा[12] मुक्ताः साधु-वादन-वादिभिः ॥४३॥ [४५
सु-माली मालिनं दृष्ट्वा नि-हतं माल्य-वांस् तथा ।
४६] बभूवतुः शोक-सन्तप्तौ लङ्कां चैवाऽभ्य्-अधावताम् ॥[13]४४॥[४६
गरुडस् तु समा-श्वस्तश् चिरेणाऽचिर-काल-कृत्[14] ।[13]
४७] राक्षसान् द्रावयामास पक्ष-वातेन कोपितः ॥४५॥ [४७

---

१. $ल_3$-नास्ति । २. च प्र $भ_2$-शरैर् । ३. अ $रा_1$ $ल_1$ $ल_2$ $ल_3$ ब-नास्ति । ४. अ $ल_2$-अभ्यहनत् । $ल_1$-°हनत् । ५. $भ_1$-°तुरं । ६ च-°खो । $भ_2$ $ल_2$-°खौ । ७. च $भ_2$-कृतो देवो । ८. $भ_2$ $ल_1$-वर्जे-शुशुभे । ९. अ $ल_2$-°सवरं । १०. च $भ_1$-रक्षसां रवतां । ११. च $भ_2$-वर्जं यत । १२. $ल_3$ ब प्र-°नादास्ततो । १३. च-नास्ति । १४. $ल_2$-वर्जे-°ण चि° ॥

नारायणोऽपीऽपु-वरैर् वि-चित्रैर्
४८पू] वि-दारयामास धनुः-प्रमुक्तैः । [५०पू
४८उ'] नक्तं-चरान् मुक्त-विधूत-केशान् [५०उ'
N] विध्वस्त-चापाऽसि-निकृत्त-बाणान् ॥४६॥ [N
प्रविद्ध-पत्रं प्रतिविद्ध-शस्त्रं
शरैः सम्-अन्ताद् अति-भिन्न-देहम् ।
विनिःसृताऽसृग्-भय-लोल-नेत्रं
४९] बलं तद् उन्मत्त-निभं बभूव ॥४७॥ [५१
सिंहाऽर्दितानाम् इव कुञ्जराणां
५०पू] चक्राऽर्दितानां हि निशा-चराणाम् ।
दुःखेन लब्धो[1] वि-जयो[1] हि देवैर्
N] युद्धे स्थितानां हि वराऽन्वितानाम् ॥४८॥ [५२
सं-साद्यमाना[2] हरि-बाण-जालैः
स्व-बाण-जालानि समुत्-सृजन्तः ।
धावन्ति नक्तं-चर-काल-मेघा
५१] वायु-प्रणुन्ना इव काल-मेघाः ॥४९॥ [५३
चक्र-प्रहारैर् विनिकृत्त-देहाः
संचूर्णिताऽङ्गाश् च गदा-प्रहारैः ।
असि-प्रहारैश् च द्वि-धा वि-भक्ताः
५२] पतन्ति शैला इव राक्षसेन्द्राः ॥५०॥ [५४
चक्र-विच्छिन्न-शिरसो गदा-संचूर्णितोरसः ।
५३] लाङ्गलैर्[3] दारित-ग्रीवा[3] मुसलैर् भिन्न-मस्तकाः ॥५१॥ [४८
असिभिर् बहुभिश् छिन्नाः शर-सम्भिन्न-वक्षसः ।
५४] नि-पतन्त्य् अम्बरात् तूर्णं राक्षसाः सागराऽम्भसि ॥५२॥ [४९
तदाऽम्बरं विगलित-हार-कुण्डलैर्
निशा-चरैर् नीलबलाहकोपमैः[4] ।
नि-पात्यमानैर् ददृशुर्(?शे)निर्-अन्तरं
५५] नि-पात्यमानैर् इव नील-पर्वतैः ॥५३॥ [५५

इत्यार्षे रामायण उत्तर-काण्डे राक्षस-भङ्गो नाम षष्ठः सर्गः ॥ ६ ॥

---

१. ल$_1$–वर्जे–लब्धं विजयं । २. भ$_2$–संपाद्य° । ३. प्र–पाटित° । ४. च–नाभिरसो गदासंचूर्णितोरसः । ल$_3$ ब प्र–असितव° ॥

हन्यमाने बले तस्मिन् पद्म-नाभेन पृष्ठ-तः।
१] माल्य-वान् सन्नि-वृत्तोऽभूद् वेलाऽति-ग इवाऽर्णवः ॥ १ ॥ [१
संरक्त-नयनः कोपाच् चलन्-मौलिर् निशा-चरः।
२] पद्म-नाभम् इदं प्राऽऽह वचनं परुषं तदा ॥ २ ॥ [२
नारायण न जानीषे क्षत्र-धर्मं सनातनम्।
३] अ-युद्धमनसो यस्माद् भग्नान् हंसि यथेतरः ॥ ३ ॥ [३
पराङ्मुख-वधं नाम यः करोति सुरेश्वर।
४] न हन्ता लभते स्वर्गं कृत-पुण्योऽपि नः श्रुतम् ॥ ४ ॥ [४
युद्ध-श्रद्धाऽथवा तेऽस्ति शङ्ख-चक्र-गदा-धर।
५] अयं स्थितोऽहं देवेश बलं दर्शय नः पुरः ॥ ५ ॥ [५
६उ] उवाच राक्षसेन्द्रं तं दैवतेन्द्राऽनुजो बली। [६उ
भवद्भ्यो भय-भीतानां देवतानां मयाऽभयम्।
७] राक्षसोच्छेदनं दत्तं तद् एतद् अनु-पाल्यते ॥ ६ ॥ [७
प्राणैर् अपि प्रियं कार्यं देवतानां मया सदा।
८] सोऽहं वोऽद्य हनिष्यामि रसा-तल-गतान् अपि ॥ ७ ॥ [८
एवं ब्रुवाणं विष्णुं तु रक्ताऽम्बु-रुह-लोचनम्।
९] शक्त्या बिभेद सं-क्रुद्धो राक्षसेन्द्रो ररास ह ॥ ८ ॥ [९
माल्यवद्-भुज-निर्मुक्ता शक्तिर् घण्टा-कृत-स्वना।
१०] हरेर् उरसि सं-लग्ना मेघस्येव शत-ह्रदा ॥ ९ ॥ [१०
ततस् ताम् एव निष्-कृष्य शक्तिं शक्ति-धरः प्रियः।
११] माल्य-वन्तं समुद्-दिश्य चिक्षेपाऽम्बुरुहेक्षणः ॥१०॥ [११
स्कन्द-सृष्टेव सा शक्तिर् गोविन्द-कर-नोदिता।
१२] काङ्क्षन्ती राक्षसं याति महोल्केवाऽञ्जनाऽचलम् ॥११॥ [१२
सा तस्योरसि वि-स्तीर्णे हार-भार-समन्विते।
१३] अपतद् राक्षसेन्द्रस्य गिरेः कुञ्जं इवाऽशनिः ॥१२॥ [१३

---

१. च $भ_2$–यत्नतः। $भ_1$–परंतप। ब–सत्तम। २. $भ_1$ $ल_3$ ब प्र–महाभ°। ३. च–°सोत्साद°। ४. $ल_1$–नास्ति। ५. $भ_1$ $भ_2$–वर्जं–निष्क्रम्य। ६. $भ_1$–स्कंदास्सृ°। $ल_3$ ब प्र–धातृस्°। ७. $भ_2$–°मर्पिते। ८. $भ_2$–भिन्नाः–कूट। टि. दा=कूट॥

तया भिन्न-तनु-त्राणः प्र-विष्टोऽविरलं[1] तमः ।
१४] माल्य-वान् मुहुर् आ-श्वस्तो यथा राम जलोक्षितः ॥१३॥ [१४
ततः कार्ष्णायसं शूलं किङ्किणी-शत-भूषितम् ।
१५] प्र-गृह्याऽभ्य्-अहनद्[2] देवं स्तनयोर् अन्तरे दृढम् ॥१४॥ [१५
तथैव तु रणे सक्तो मुष्टिना सोऽरुणाऽनुजम् ।
१६] विनि-क्षिप्य धनुर्-मात्रम् अप-क्रान्तो निशा-चरः[3] ॥१५॥ [१६
ततोऽम्बरे महा-शब्दः[4] साधु साध्व् इति चोत्थितः ।
१७] हत्वा[5] च[5] राक्षसो विष्णुं गरुडं यद्[6] अताडयत्[6] ॥१६॥ [१७
वैनतेयस् ततः क्रुद्धः पक्ष-वातेन राक्षसम् ।
१८] उवाह बल-वान् वीरः शुष्क-पर्ण-चयं[7] यथा ॥१७॥ [१८
द्वि-जस्य[8] पक्ष-वातेन यदा[9] क्षिप्तो[9] निशा-चरः ।
१९] प्र-ययौ स तदा लङ्कां स्व-बलेन समा-वृतः ॥१८॥ [१९
पक्ष-वात-भयाद् भीतो माल्य-वान् स निशा-चरः ।
२०] स्व-बलेन समा-विष्टो ययौ लङ्कां श्रि(?ह्रि)याऽऽवृतः[10] ॥१९॥ [२०
एवं ते राक्षसा राम हरिणा हरिणेक्षण ।
२१] बहु-शः सं-युगे भग्ना हत-प्रवर-नायकाः ॥२०॥ [२१
अ-शक्नुवन्तस् ते योद्धुं विष्णुं प्रति बलाऽन्विताः ।
२२] त्यक्त्वा लङ्कां गता वस्तुं पातालं तु स-योषितः ॥२१॥ [२२
सुमाली(?लि)-कुलम् आ-साद्य राक्षसा[11] रघु-नन्दन ।
२३] स्थिताः[12] प्रख्यात-वीर्या ये[12] वंशे शालकटङ्कटे ॥२२॥ [२३
ये वै ते राक्षसा राम एते शालकटङ्कटाः । [N
२४] ये त्वया नि-हतास् ते वै पौलस्त्या नाम राक्षसाः ॥२३॥
सु-माली माल्य-वान् माली ये च तेषां पुरः-सराः ।
२५] सर्वे ह्य् एते महा-भाग[13] रावणाद् बलवत्-तराः ॥२४॥ [२४
न चाऽन्यो रक्षसां हन्ता सुरेष्व् अपि पुरं-जय[14] ।
२६] ऋते नारायणाद् देवाच् छङ्ख-चक्र-गदा-धरात् ॥२५॥ [२५

---

१. ल$_3$ ब प्र-°विपुलं । २. भ$_2$-°आह° । ३ ल$_1$-महासुरः । ४. रा$_1$ ल$_1$ ब प्र-महाच्छब्दः । ५. अ रा$_1$ ल$_1$ ल$_2$-स हत्वा । ६ च-पदाता° । ७. च-शुष्कं पर्णं च । ८. अ ल$_2$-द्विजेन । ९. ल$_2$-यथाक्षि° । १०. अ ल$_2$-समावृतः । प्र-रयान्वितः । ११. च-वर्जं-°सो । १२. च भ$_1$ भ$_2$-स्थितः प्रख्यातवीर्याश्चो । १३. ल$_1$ प्र-वर्जं-°भागा । १४. भ$_1$ ब प्र-वर्जं-°यः ॥

भवान् नारायणो नाम शङ्ख-चक्र-गदा-धरः ।
२७] राक्षसान् हन्तुम् उत्-पन्नो ह्य् अ-जेयश् च वर-प्रदः ॥२६॥ [२६
नष्ट-धर्म-व्यवस्थाता[1] काले काले प्रजा-करः ।
२८] नित्योदितो दस्यु-वधे शरणाऽऽगत-वत्सलः ॥२७[2]॥ [२७

इत्यार्षे रामायण उत्तर-काण्डे राक्षस-प्रवासो नाम
सप्तमः सर्गः ॥ ७ ॥

---

## [ वं-६ ]=　　[ अष्टमः सर्गः ]　　=[ दा-६ ]

कस्य-चित् त्व् अथ कालस्य सु-माली[3] नाम राक्षसः ।
१] रसा-तलान् मर्त्य-लोकं चचार[4] पिशिताऽशनः ॥ १ ॥ [१
नील-जीमूत-सङ्काशस् तप्त-काञ्चन-कुण्डलः ।
२] कन्यां गृहीत्वा तनयां पद्म-हीनाम् इव श्रियम् ॥ २ ॥ [२
३उ] सोऽपश्यद् वित्त-दं देवं पुष्पकेण महौजसम् । [३उ
४पू] गच्छन्तं पितरं द्रष्टुं पुलस्त्य-तनयं द्वि-जम् ॥ ३ ॥ [४पू
६उ] सोऽथ राक्षस-शार्दूलः पाक-शासन-विक्रमः । [N
उवाच तनयां तत्र कैकसीं नाम नाम-तः ॥ ४ ॥ [६उ
७] पुत्रिके[5] दान-कालस् ते यौवनं चाऽति-वर्तते ।
प्रत्या-ख्यातैश् च भीरु[6] त्वं[6] न वरैः प्रति-गृह्यसे ॥ ५ ॥ [७
९] त्वं च सर्व-गुणोपेता श्रीः स-पद्मेव पुत्रिके ।
८पू] त्वत्-कृते च वयं सर्वे यन्त्रिता धर्म-बुद्धयः ॥[7] ६ ॥
कन्या-पितृ-त्वं दुःखं हि सर्वेषां मान-काङ्क्षिणाम् ।[8] [८
१०] न[9] ज्ञायते वरः पुत्रि कन्यायै[9] चारु-दर्शने ॥ ७ ॥ [९
मातुः कुलं पितृ-कुलं यत्र चैव प्र-दीयते ।
११] कुल-त्रयं सदा कन्या कृत्वा तिष्ठति सं-शये ॥ ८ ॥ [१०

---

१ अ रा$_1$ ल$_1$ ल$_2$ ल$_3$ प्र-नष्टे धर्मेप्यवस्थाता । २ अतः परमधिकः पाठः—च भ$_1$ भ$_2$-एषा मया तव नराधिप राक्षसानामुत्पत्तिरद्य कथिता सकला यथावत् । भूयो निबोध रघुसत्तम रावणस्य जन्मप्रभावमतुलं खलु तस्य सर्वम् ॥ चिरात्सुमाली व्यचरद्रसातले स राक्षसो विष्णुभयार्दितस्तदा । पुत्रैश्च पौत्रैश्च समन्वितो बली ततश्च लंकामविशद्धनेश्वरः ॥ ३. ल$_1$-वर्जं-माल्यवान् । ४. अ च-चचाल । ५. प्र-नास्ति । ६. अ ल$_1$ ल$_2$ पुत्रि वै । ७. च भ$_1$-नीचैश्च । ८. च-नास्ति । ९. च-नास्ति । भ$_1$-सुवरः पुत्रि कन्यायै दर्शय । भ$_2$-वर्जं-°ते वरं पु° ॥

सा त्वं मुनि-वरं पुत्रि प्रजापति-कुलोद्वहम्[1] ।
१२] गच्छ वि-श्रवसं पुत्रि[1] पौलस्त्यं वरय स्वयम् । [११
ईदृशास् ते भविष्यन्ति पुत्राः पौत्रा महौजसः ॥९॥
१३] श्रिया परमया जुष्टो[2] यादृशोऽसौ धनेश्वरः । [१२
१४उ] गत्वाऽऽश्रम-पदं तिष्ठ वि-श्रवा यत्र तप्यते ॥१०॥ [१३उ
एतस्मिन्न् अन्तरे राम पुलस्त्य-तनयो द्वि-जः ।
१५] अग्नि-होत्रम् उपाऽतिष्ठच्[3] चतुर्थ इव पावकः ॥११॥ [१४
अ-विचिन्त्य तु सा कालं दारुणं पितृ-गौरवात् ।
१६] उप-सृत्याऽग्र-तस् तस्य कन्यकाऽधो-मुखी स्थिता ॥१२॥ [१५पू
स तु तां वीक्ष्य सु-श्रोणीं पूर्ण-चन्द्र-निभाऽऽननाम् ।
१७] अब्रवीत् परमोदारो दीप्यमान इवौजसा ॥१३॥ [१६
भद्रे कस्याऽसि दुहिता कुतो वा त्वम् इहाऽऽगता ।
१८] किं कार्यं कस्य वा हेतोस् तत्त्व-तो ब्रूहि तच् छुभे ॥१४॥ [१७
१९पू] एवम् उक्ता च सा कन्या कृताञ्जलिर् अथाऽब्रवीत् ।
२०उ] आत्म-प्रभावेण मुने ज्ञातुम् अर्हसि मे मतम् ॥१५॥ [१८
१९उ] किं तु विद्धि हि मां ब्रह्मन् शासनात् पितुर् आ-गताम् ।
२०पू] कैकसीं नाम नामो(म्नो)क्तां[4] श्रुतां पुष्पोत्कटेति[5] च ॥१६॥ [१९
स तु गत्वा मुनिर् ध्यानं वाक्यम् एतद् उवाच ह ।
२१] वि-ज्ञातं ते मया भद्रे कारण यन् मनो-गतम् ॥१७॥ [२०
२२उ] दारुणायां तु वेलायां यस्मान्[6] मां त्वम्[7] उप-स्थिता[7] । [२१उ
शृणु तस्मात् सुतो भद्रे यादृशस् ते भविष्यति ॥१८॥
२३] दारुणो दारुणाऽऽचारो दारुणाऽभिजन-प्रियः । [२२
साक्षाद् दारुण-कर्मा च न चिरात् प्र-सविष्यति ॥१९॥
२४] साऽपि तद् वचनं श्रुत्वा प्रणि-पत्याऽब्रवीद् वचः । [२३
२५पू] भग-वन्[8] नेदृशः[8] पुत्रस् त्वत्-तोऽर्हो ब्रह्म-योनि-जः ॥२०॥ [२४पू
ततोऽब्रवीन् मुनिस् तां तु पश्चिमोऽयं(?पि) तवाऽऽत्मजः[9] ।
२७] मम वंशाऽनुरूपोऽसौ[10] धर्माऽऽत्मा[10] च भविष्यति ॥२१॥ [२६

---

१. प्र–नास्ति । २. अ च रा$_1$ भ$_1$ भ$_2$ ल$_1$ ल$_2$–जुष्टा । ३. रा$_1$ ब प्र–°तिष्ठंश् । ४. ल$_3$ ब प्र–नाम्ना च । ५. च भ$_1$ भ$_2$–भिन्नाः–पुण्योत्क° । ६. अ रा$_1$ ल$_1$ ल$_2$–त्वं यन् । ७. अ रा$_1$ ल$_1$ ल$_2$–समुप° । ८. च भ$_1$ भ$_2$–वर्ज– °वर्षीद° । ९. अ च भ$_1$ रा$_1$ ल$_1$ ल$_2$–तवानुजः । १०. अ ल$_2$–वत्मांनु° । च भ$_1$ भ$_2$ ल$_3$ ब प्र–°प. स सद्धर्मा ॥

एवम् उक्ता तु सा कन्या राम कालेन केन-चित् ।
२८] जनयामास बीभत्सं[1] रक्षो-रूपं[2] सु-दारुणम् ॥२२॥ [२७
दश-शीर्षं महा-दंष्ट्रं नीलाऽञ्जन-चयोपमम् ।
२९] लम्बोदरं विंश-भुजं महाऽऽस्यं दीप्त-लोचनम् ॥२३॥ [२८
तस्मिञ् जातेऽथ भवने स-ज्वाल-कवलाः शिवाः ।
३०] क्रव्याऽदाश् चाऽप-सव्यानि मण्डलानि[3] प्र-चक्रिरे ॥२४॥ [२९
ववृषू(?वर्षू) रुधिरं तत्र मेघाश् च खर-निःस्वनाः ।
३१] न दीप्यते च खे[4] सूर्यो महोल्काश् च प्र-पेदिरे ॥२५॥ [३०
पृथिवी प्र-चकम्पे[5] च[6] ववुर् वाताः सु-दारुणाः ।
३२] अ-क्षोभ्यः क्षुभितश् चाऽपि सम्-उद्रः सरितां पतिः ॥२६॥ [३१
अथ नामाऽकरोत् तस्य पितामह-समः पिता ।
३३] दश-ग्रीवः प्र-सूतोऽयं दश-ग्रीवो भवत्व् इति ॥२७॥ [३२
तस्य त्व् अन्-अन्तरं जातः कुम्भ-कर्णो महा-बलः ।
३४] प्र-माणात् तस्य वैपुल्यात् सदृशो वा(?ना)ऽप्य्[7] अदृश्यत।[8]२८॥ [३३
ततः शूर्प-णखा नाम सं-जज्ञे विकृताऽऽनना ।
३५] वि-भीषणश् च धर्माऽऽत्मा कैकस्याः पश्चिमः सुतः ॥[9]२९॥ [३४
तौ तु तत्र महाऽरण्ये ववृधाते महौजसौ ।
३७] कुम्भकर्ण-दशग्रीवौ लोकोद्वेग-करौ सदा ॥३०॥ [३७
कुम्भ-कर्णः प्र-मत्तश् च महर्षीन् धर्म-संश्रितान् ।
३८] भू-लोकम्[10] इत्य सम्पुष्टो[11] भक्षयन् वि-चचार ह ॥३१॥ [३८
वि-भीषणश् च धर्माऽऽत्मा नित्यं धर्म-पथे[12] स्थितः ।
३९] स्वाध्यायो नियताऽऽहार उवास नियतेन्द्रियः ॥३२॥ [३९
अथ वित्तेश्वरो देवस् तेन कालेन केन चित्[13] ।
४०] अगमत् पितरं द्रष्टुं पुष्पकेण महौजसम् ॥३३॥ [४०

१. अ ल$_2$–°त्सुं । २. अ रा$_1$ ल$_1$ ल$_2$–रजोरूपं । ३. च भ$_2$–भिक्षा.–प्रव्यथानि । ४. भ$_1$ भ$_2$–वै । ५. अ भ$_1$ ल$_1$ ल$_2$ ल$_3$ ब प्र–च चकंपे । ६. ल$_3$ ब प्र–ऽथ । ल$_1$–वै । ७. भ$_1$–वाऽथ न दृश्यते । ८. अतः परमधिकः पाठः—भ$_1$–प्रमाणात्तस्य विपुलः प्रमाणं नेह विद्यते ॥ ९. अतः परमधिकः पाठः—च भ$_2$–चरोर्विभागकाले तु विश्रवान्नमयाचत । तत्प्राशनाद्बभूवाथ धर्मात्मा राघवप्रियः ॥ तदन्नं पतितं किंचिद्यत्तिरयौ ते अभक्षताम् । ततो द्वे त्रिजटा जाता सरमा जानकीप्रिया ॥ १०. अ च भ$_2$ रा$_1$ ल$_3$ प्र–भूर° । ११. च भ$_2$ ल$_1$–संतुष्टो । १२. च भ$_1$ भ$_2$ रा$_1$ ल$_1$–°पथि । १३. अ रा$_1$ ल$_1$ ल$_2$ ल$_3$–कस्यचित् ॥

तं दृष्ट्वा कैकसी तत्र ज्वलन्तम् इव तेजसा ।
४१] आ-गम्य[1] राक्षसी बुद्ध्वा[2] दश-ग्रीवम् उवाच ह ॥३४॥ [४१
पुत्र वैश्रवणं पश्य[3] भ्रातरं तेजसा वृतम् ।
४२] भ्रातृ-भावे समे चाऽपि पश्याऽऽत्मानं त्वम् ईदृशम् ॥३५॥ [४२
दश-ग्रीव तथा यत्नं कुरुष्वाऽमित-विक्रम[4] ।
४३] यथा त्वम् अपि मे पुत्र भव वैश्रवणोपमः ॥३६॥ [४३
मातुस् तद् वचनं श्रुत्वा दश-ग्रीवः प्रताप-वान् ।
४४] अ-मर्षम् अ-तुलं लेभे प्रति-ज्ञां सोऽकरोत् तदा ॥३७॥ [४४
सत्यं ते प्रति-जानामि भ्रात्रा तुल्योऽधिकोऽपि वा ।
४५] भविष्याम्य् ओजसा चैव सं-तापं त्यज मद्-गतम् ॥३८[5]॥ [४५
ततः क्रोधेन तेनैव दश-ग्रीवः सहाऽनु-जः ।
४६] चिकीर्षुर् दुष्-करं कर्म तपसे धृत-मानसः ॥३९॥ [४६
प्राऽऽप्स्यामि तपसा कामम् इति बुद्ध्या[6] व्यव-स्य च ।
४७] आऽगच्छद्[7] अर्थ-सिद्ध्य्-अर्थं गो-कर्णस्याऽऽश्रमं शुभम् ।४०।[४७

इत्यार्षे रामायण उत्तर-काण्डे रावणाऽऽदि-जन्म
नामाऽष्टमः सर्गः ॥ ८ ॥

---

## [ वं–१० ]= [ नवमः सर्गः ] =[ दा–१० ]

अथाऽब्रवीद् राघवस् तं गत्वाऽऽश्रमम् अन्-उत्तमम् ।
१] कीदृशं तु[8] तदा[8] ब्रह्मंस् तपोऽकुर्वन् निशा-चराः ॥ १ ॥ [१
अगस्त्यस् त्व् अब्रवीद् रामं तत्र प्रणय-मानसम् ।
२] तांस् तान् धर्म-विधींस् तात भ्रातरस् ते समा-श्रिताः[9] ॥ २ ॥ [२
कुम्भ-कर्णस् तदाऽत्य्-अर्थं सत्य-धर्म-परायणः ।
३] अतप्यद् ग्रीष्म-काले तु सोऽग्निभिः सूर्य-सन्निभैः ॥ ३ ॥ [३
मेघाऽम्बु-सिक्तो वर्षासु वीराऽऽसनम् असेवत ।
४] नित्यं च शैशिरे काले जल-मध्य-प्रतिश्रयः ॥ ४ ॥ [४

---

१. अ रा$_1$ ल$_1$–अगमद् । २. भ$_2$ रा$_1$ ल$_1$ ल$_2$ ब प्र–बुद्ध्या । ३. अ ल$_2$–तत्र । ४. च–°तत्तेजसा । ५. च भ$_1$ भ$_2$–वर्जं–नास्ति । ६. ल$_3$ ब–वर्जं–कृत्वा । ७. च भ$_1$ भ$_2$–अग° । ८. ल$_1$–स ततो । ९. अ च रा$_1$ ल$_1$–समावृताः । ब–समागताः । ल$_2$ ल$_3$ प्र–समाहिताः ॥

एवं वर्ष-सहस्राणि दश तस्य तथाऽत्य्-अगुः ।
५] धर्म-सत्याऽभिरक्तः[1] स[1] तपस् तेपे महोत्कटम् ॥ ५ ॥ [५
वि-भीषणश् च धर्माऽऽत्मा नित्यं धर्म-रतः शुचिः ।
६] पञ्च-वर्ष-सहस्राणि पादेनैकेन[2] तस्थिवान्[2] ॥[3] ६ ॥ [६
दिव्यं वर्ष-सहस्रं तु निर्-आहारो दशाऽऽननः ।
१०] पूर्णे वर्ष-सहस्रे च शीर्षम् अग्नौ जुहाव सः ॥ ७ ॥ [१०
एवं वर्ष-सहस्राणि नव तस्याऽति-चक्रमुः ।
११] शिरांसि नव चैवाऽस्य प्राऽविशन्त हुताऽशनम् ॥ ८ ॥ [११
अथ वर्ष-सहस्रे तु दशमे[4] दशमं[5] शिरः ।
१२] छेत्तु-कामः[6] स[6] धर्माऽऽत्मा प्राऽऽप्तश् चाऽथ प्रजा-पतिः ॥९॥ [१२
पिता-महस् तु सु-प्रीतः सार्धं[5] देवैर् उदार-धीः ।
१३] वत्स वत्स दश-ग्रीव प्रीतोऽस्मीऽत्य् अभाषत ॥१०॥ [१३
शीघ्रं वरय धर्म-ज्ञ वरो यस् तेऽभि-काङ्क्षितः ।
१४] कं ते कामं करोम्य् अद्य न वृथा ते परि-श्रमः ॥११॥ [१४
ततोऽब्रवीद् दश-ग्रीवः प्र-हृष्टेनाऽन्तर्-आत्मना ।
१५] प्र-णम्य शिरसा देवं हर्ष-गद्गदया गिरा ॥१२॥ [१५
भग-वन् प्राणिनां नित्यं नाऽन्यत्र मरणाद् भयम् ।
१६] नास्ति मृत्यु-समः शत्रुर् अमर-त्वं ततो वृणे ॥१३॥ [१६
सुपर्ण-नाग-यक्षाणां दैत्य-दानव-रक्षसाम् ।
१९] अ-वध्यः स्यां प्रजाऽध्यक्ष देवतानां च शाश्वतम्[7] ॥१४॥ [१९
न हि चिन्ता ममाऽन्येषु प्राणिषु प्र-पितामह ।
२०] तृण-भूता हि ते सर्वे प्राणिनो मानुषाऽऽदयः ॥१५॥ [२०
एवम् उक्तस् तु धर्माऽऽत्मा दश-ग्रीवेण रक्षसा ।
२१] उवाच वचनं राम सह देवैः पिता-महः ॥[8] १६॥ [२१
भविष्यत्य् एवम् एवैतत् तव राक्षस-पुङ्गव ।
२२] शृणु चाऽपि वचो भूयः प्रीतस्येह शुभं मम ॥१७॥ [२२

---

१. अ-°भिसंरक्तस् । २. अ रा$_1$ ल$_1$ ल$_2$ ल$_3$ ब-नास्ति । ३. अतः परमधिकः पाठः—च भ$_1$ भ$_2$ प्र-पपात पुष्पवर्षं च क्षुत्तृष्णा नैव वर्तते । तस्थावूर्ध्वशिरोबाहुः स्वाध्यायासक्तचेतसा ॥ एवं विभीषणस्यापि शतानि नियतात्मनः । दशवर्षसहस्राणि स्वर्गस्थस्येव नंदतः ॥ ४. अ-जुहुता । ५. भ$_1$-नास्ति । ६. अ च रा$_1$ ल$_2$-°मस्य । ७. च भ$_1$ भ$_2$-°त । ८. अतः परमधिकः पाठः—भ$_1$-तृणभूता हि ते सर्वे नरवानरजातयः ॥

हुतानि यानि शीर्षाणि पूर्वम् अग्नौ त्वयाऽन्-अघ ।
२३] पुनस् तानि भविष्यन्ति तथैव तव राक्षस ॥१८[1]॥ [२३
वि-दधामि च ते सौम्य रूपम् अन्यत् सु-दुर्लभम् । [२४
२४] छन्द-तो वि-ग्रहीऽदानीं रूपम् अन्यद् यदीऽच्छसि ॥१९[2]॥ [२५पू
एवं पितामहोक्तस्य दश-ग्रीवस्य रक्षसः ।[2]
२५] अग्नौ[3] हुतानि शीर्षाणि यानि तान्य् उत्थितानि वै ॥२०[4]॥ [२६
एवम् उक्त्वा तु तं राम दश-ग्रीवं प्रजा-पतिः[5] ।
२६] वि-भीषणम् उवाचेदं वाक्यं लोक-पितामहः ॥२१॥ [२७
वि-भीषण त्वया वत्स धर्म-संहित-बुद्धिना ।
२७] सं-तोषितोऽस्मि धर्म-ज्ञ वरं वरय सु-व्रत ॥२२॥ [२८
वि-भीषणस् तु[6] धर्माऽऽत्मा प्राऽञ्जलिर् वाक्यम् अब्रवीत् ।
२८] वृतः[7] सर्वैर्[8] गुणैर्[8] नित्यं चन्द्रमा रश्मिभिर् यथा ॥२३॥ [२९
भग-वन्[9] कृतम् एतावद् यन् मे लोकेश्वरः स्वयम् ।
२९] प्रीतोऽसि[10] यदि[10] दातव्यो वरो मे शृणु सर्व-तः ॥२४॥ [३०
यथा जायेत मे बुद्धिस् तेषु[11] तेष्व् आ-श्रमेष्व् इह ।
३१] सा सा भवतु धर्मिष्ठा तन्[12] (?तं) नाऽ(?तं[12])धर्मं भजेत वा ।२५। [३२
एष मे परमोदारो वरः परम-को मतः ।
३२] न हि धर्माऽभिरक्तानां किं-चिल् लोकेऽस्ति[13] दुर्-लभम् ॥२६॥[३३
अथ प्रजा-पतिः प्रीतो वि-भीषणम् उवाच ह ।
३३] धर्मिष्ठस् त्वं सदा वत्स तथा चैतद् भविष्यति ॥२७॥ [३४
तस्माद्[14] राक्षस-योनौ ते जातस्य हि निशा-चर[15] ।
३४] नाऽधर्मे रमते बुद्धिर् अमर-त्वं ददामि ते ॥२८॥ [३५
कुम्भ-कर्णाय तु वरं प्र-यच्छन्तम् अरिं-दम ।
३६] प्रजा-पतिं सुराः सर्वे वाक्यं प्राऽञ्जलयोऽब्रुवन् ॥२९॥ [३६
न[16] देव[16] कुम्भ-कर्णाय प्र-दातव्यो वरस् त्वया ।
३७] जानासि हि यथा लोकांस् त्रासयिष्यति राक्षसः ॥३०॥ [३७

---

१. रा$_1$-नास्ति । २. च भ$_1$ भ$_2$ प्र-वर्जं-नास्ति । ३. अ-वह्नौ । ४. रा$_1$-नास्ति । ५. अ ल$_2$-तपस्थितं । ६. अ ल$_2$ प्र-स । ७. च-ततः । ८. अ प्र-सर्वगुणैर् । ९. अ-किमन्यत् । ल$_3$ ब प्र-तावच्च । १०. अ च भ$_1$ भ$_2$ रा$_1$ ल$_1$ ल$_2$-प्रीतो यदि तु । ब-प्रीतोऽस्ति यदि । ११. अ ल$_2$-तथा । रा$_1$-तेषां । १२. भ$_1$ भ$_2$-तत्तद् । १३. अ-लोकेऽस्तु । १४. च-यस्माद् । १५. अ च-°रः । १६. च भ$_1$ प्र-तदेव ॥

नन्दनेऽप्सरसः सर्वा महेन्द्राऽनुचरा दश ।
३८] अनेन भक्षिता ब्रह्मन् ऋषयो मानुषास् तथा ॥३१॥ [३८
तच् छापो वर-(?रो)नामाऽस्मै दीयताम् अमर-प्रभो ।
३९] लोकानां स्वस्ति चैव स्याद् भवेद् अस्य च सन्-नतिः ॥३२॥ [४०
एवम् उक्तः सुरैर् ब्रह्माऽचिन्तयत् पद्म-सम्भवः । [४१पू
४०] देवीं सरस्वतीं चैव पद्माऽक्षीं पद्म-मालिनीम् ॥३३॥ [N
त्रैलोक्ये सर्व-भूतानां जिह्वा बुद्धिर् धृतिः स्मृतिः । [N
४१] चिन्तिता चोप-तस्थे सा पार्श्वे हृष्टा सरस्वती ॥३४॥ [४१उ
साऽञ्जलिः सा तु पार्श्व-स्था प्राऽऽह देवी सरस्वती ।
४२] इयम् अस्म्य् आ-गता देव किं कार्यं करवाण्य् अहम् ॥३५[1]॥ [४२
प्रजा-पतिस् तु सम्प्राऽऽप्तां प्राऽऽह देवीं सरस्वतीम् ।[2]
४३] वाणी त्वं राक्षसेन्द्रस्य भव या देवतेप्सिता[3] ॥३६॥ [४३
४४पू] तथेत्य् उक्त्वा[4] प्र-विष्टा सा प्रजा-पतिर् अथाऽब्रवीत् ।
कुम्भ-कर्ण महा-बाहो वरं वरय राक्षस ॥[5]३७॥ [४४
४५] कुम्भ-कर्णस् तु तच् छ्रुत्वा वाक्यं वाक्यम् उवाच ह ।
स्वप्तुं युग-सहस्राणि देव-देव मयेप्सितम् । [४५
४६] षण् मासान् हि स्वपे[6] देव दिनम् एकं तु भोजनम् ॥३८॥ [N
एवम् अस्त्व् इति चैवोक्ते प्र-हृष्टास् ते[7] वनौकसः ।
४७] देवी[7] सरस्वती[7] चैवम् उक्त्वा तं प्र-जहौ ततः ॥३९॥ [४६
कुम्भ-कर्णस् तु दुष्टाऽऽत्मा चिन्तयामास दुःखितः ।
४९] की-दृशं किम् इदं वाक्यं ममाऽद्य वदनाच् च्युतम् । [४८
५०पू] अन्-अभिप्रेत-पूर्वं हि सं-मोहाद् एव भाषितम् ॥४०॥
एवं लब्ध-वरास् ते तु भ्रातरो दीप्त-तेजसः ।
५२] श्लेष्मातक-वनं नाम तत्र सर्वेऽवसंश् चिरम् ॥४१॥ [४९

इत्यार्षे रामायण उत्तर-काण्डे रावणाऽऽदि-वर-प्रदानं नाम
नवमः सर्गः ॥ ९ ॥

---

१. अ-वर्जं-नास्ति । २. भ$_1$-दैव° । ३. अ च भ$_1$-उक्ता । ४. ल$_3$ व प्र-नास्ति । ५. अ रा$_1$ ल$_2$ प्र-स्वयं । ६. ल$_3$ प्र-वर्जं-तु । ७. भ$_1$ ल$_1$ ल$_2$ ल$_3$ व प्र-देवीं सरस्वतीं ॥

सु-माली[1] वर-लब्धांस् तु ज्ञात्वा तान् वै निशा-चरान् ।
१] उद्-अतिष्ठद् भयं त्यक्त्वा साऽनुजः स रसा-तलात् ॥ १ ॥ [१
मारीचश् च प्र-हस्तश् च विरूपाऽक्ष-महोदरौ ।
२] उद्-अतिष्ठन् महा-राज सचिवास् तस्य रक्षसः ॥ २ ॥ [२
सु-माली[2] स तु तैः सर्वैर् वृतो राक्षस-पुङ्गवः ।
३] अभि-गम्य दश-ग्रीवं परि-ष्वज्येदम् अब्रवीत् ॥ ३ ॥ [३
दिष्ट्या ते पुत्र सं-वृत्तश् चिन्तितोऽयं मनो-रथः ।
४] यत्[3] त्वं त्रि-भुवन-श्रेष्ठं लब्धवान् वरम् ईदृशम् ॥ ४ ॥ [४
यत्-कृते च वयं लङ्कां त्यक्त्वा याता रसा-तलम् ।
५] उद्-धृतं[4] नो महा-बाहो महद् विष्णु-कृतं भयम् ॥ ५ ॥ [५
अ-सकृत् तेन भग्ना हि परि-त्यज्य स्वम् आ-लयम् ।
६] वि-द्रुताः सहसा सर्वे प्र-विष्टाः स्मो रसा-तलम् ॥ ६ ॥ [६
अस्मदीया च लङ्केयं नगरी राक्षसोषिता[5] ।
७] नि-वेशिता[6] सम्प्रति या धनाऽध्यक्षेण धी-मता ॥ ७ ॥ [७
यदि नामाऽत्र शक्यं स्यात् साम्ना वस्तुं त्वयाऽनू-अघ ।
८] तरसा वा महा-बाहो प्रत्या-नेतुं कृतं[7] भयम्(?वेत्) ॥ ८ ॥ [८
त्वं च लङ्केश्वरस् तात भविष्यसि न सं-शयः ।
९] सर्वेषां त्वं प्र-भुश् चैव भविष्यसि महा-बलः ॥ ९ ॥ [९
अथाऽब्रवीद् दश-ग्रीवो माता-महम् उप-स्थितम् ।
१०] वित्तेशो गुरुर् अस्माकं नाऽर्हस्य् एवं प्र-भाषितुम् ॥१०॥ [१०
इत्य् एवम् उक्तः स तदा सु-माली रावणेन हि ।
११] नोवाच किं-चित् तत्रैव नि-वसच् च सुहृद्-वृतः ॥११[8]॥ [११
केन-चित् त्व् अथ कालेन वसन्तं तत्र रावणम् ।
१२] प्र-हस्तः प्र-श्रितं[9] वाक्यम् इदं राक्षसम् अब्रवीत् ॥१२॥ [१२
दश-ग्रीव महा-बाहो नाऽर्हस् त्वं वाक्यम् ईदृशम् ।
१४] सौभ्रात्रं नास्ति शूराणां शृणु भूयो वचश् च मे ॥१३॥ [१३

---

१. ल$_1$-माल्यवान् । २. ल$_1$-माल्यवान् । ३. च-यस् । ४. भ$_1$ भ$_2$-तद्धृतं । ५. अ ल$_2$-°सोचिता । ६. च भ$_1$ भ$_2$ ल$_1$ ल$_3$ ब प्र-निषेविता । ७. च भ$_2$-द्रुतं । ८. प्र-वर्ज-नास्ति । ९. अ भ$_1$ रा$_1$ ल$_1$ ल$_2$ प्र-प्रथितं । च भ$_2$ ब-प्रसृतं ॥

अ-दितिश् च दितिश् चैव द्वे भगिन्यौ बभूवतुः ।
१५] भार्ये परम-रूपिण्यौ कश्यपस्य महाऽऽत्मनः ॥१४॥ [१४
अदित्यां जज्ञिरे देवास् तस्यां त्रिभुवनेश्वराः ।
१६] दितिस् त्व् अजनयद् दैत्यान् कश्यपस्याऽऽत्म-सम्भवान् ।१५।[१५
दैत्यानां किल धर्म-ज्ञ भूर् इयं स-वनाऽर्णवा ।
१७] आसीत् स-पर्वत-वना तेऽभवन् प्र-भविष्णवः ॥१६॥ [१६
नि-हत्य तांस् तु सम्-अरे विष्णुना[1] प्र-भविष्णुना[2] ।
१८] देवतानां वशं नीतं त्रैलोक्यम् इदम् अ-व्ययम् ॥[3]१७॥[१७
नैतद् एको भवान् अद्य करिष्यति विपर्य्-अयम् ।
२०] सुराऽसुरैर् आ-चरितं कुरुष्वैतद् वचो मम ॥१८॥ [१८
एवम् उक्तो दश-ग्रीवः प्र-हस्तेन दुर्-आत्मना[3] ।
२१] चिन्तयित्वा मुहूर्तं तु बाढम् इत्य् एव सोऽब्रवीत् ॥१९॥ [१९
स[4] तु[5] तेनैव हर्षेण तस्मिन्न् अहनि वीर्य-वान् ।
२२] वनाद्[6] गतो दश-ग्रीवः सह तैः क्षणदा-चरैः ॥२०॥ [२०
त्रि-कूट-स्थः स तु तदा दश-ग्रीवो निशा-चरः ।[7]
२३] प्रेषयामास दौत्येन प्र-हस्तं वाक्य-कोविदम् ॥२१॥ [२१
प्र-हस्त शीघ्रं गत्वा तं ब्रूहि नैर्ऋत-पुङ्गव ।
२४] वचनान् मम वित्तेशं साम-पूर्वम् इदं वचः ॥२२॥ [२२
२५पू] इयं लङ्का पुरी राजन् राक्षसानां महाऽऽत्मनाम् ।[8]
त्वया नि-वेशिता यत् तु तन् न युक्तम् इदं कृतम् ॥२३॥ [२३
२७] तद् भवान् यदि साम्नैतां दद्याद् अतुल-विक्रमः[9] ।
कृता भवेन् मम प्रीतिर् धर्मश् चैवाऽनु-पालितः ॥२४॥ [२४
२८] स गत्वा तस्य वचनात् प्र-हस्तो[10] विनि-वर्त्य च[11] । [२५पू
३०पू] दश-ग्रीवम् उवाचेदं वाक्यं वाक्य-विदां वरः ॥२५॥ [४५पू

---

१. अ-देवा राज्यमवाप्नुवन् । २. अ-नास्ति । अतः परमधिकः पाठः—प्र-यथा वैरमपर्यंतं गरुडस्योरगैः सह । भ्रातृभिः संप्रसंसक्तं संहारो यस्य नाऽभवत् ॥ ३. च-महात्मना । ४. अ रा$_1$ ल$_1$ ल$_2$-ततस् । ५. च भ$_1$ भ$_2$-वनं । ६. ल$_3$ ब-नास्ति । ७. अतः परमधिकः पाठः—प्र-निवासो देव विहितः सर्वलोकपरिश्रुतः । किंचित्कारणमुद्दिश्य त्यक्तासीद्राक्षसैरियम् ॥ ते पुनः कालसमये स्वं निवासमुपागताः । ८. ख भ$_2$-°मं । ९. ब-प्राह तं तदनंतरं ।

३३उ] दश-ग्रीव महा-बाहो वाक्यम् उक्तवतो मम । [३६पू
३४पू] पिता तव महा-योगी वि-श्रवाः कुपितः प्र-भुः ॥२६॥ [३५पू
निर्-भत्स्य तेन चाऽप्य उक्तो ध्वंसिष्यति[1] मुहुर् मुहुः । [३७पू
३६] प्राऽञ्जलिं धन-दं प्राऽऽह मम पुत्र वचः शृणु ॥२७॥ [३५उ
वर-दानात् तु सं-मूढो मान्याऽमान्यं स राक्षसः ।
३७] न वेत्ति मम शापाच् च प्र-कृतिं दारुणां[2] गतः[3] ॥२८॥ [३८
तद् आ-गच्छ महा-बाहो कैलासं धरणी-धरम्[4] ।
३८] नि-वेशय निकेताऽर्थं त्यज लङ्कां महा-भुज ॥२९॥ [३९
तत्र मन्दाकिनी रम्या[5] नदीनां प्र-वरा नदी ।
३९] काञ्चनैः सूर्य-सङ्काशैः पङ्क-जैर् उप-शोभिता ॥३०॥ [४०
४१उ] न ते क्षमं तेन[6] पुत्र[6] वैरं धन-द रक्षसा ।
जानीषे यथा तेन लब्धः परम-को वरः ॥३१॥ [४२
४२] एवम् उक्त्वा गृहीत्वा च पिता तव धनेश्वरम् ।
४६उ] स-दार-पुत्रं साऽमात्यं स-वाहन-धनं गतः ॥३२॥ [४३
शून्या सा नगरी लङ्का त्रिंशद्-योजनम् आ-यता ।
४८] प्र-विश्य तां सहाऽमात्यः स्व-धर्मं[8] तत्र पालय ॥३३॥ [४६
एवम् उक्तः प्र-हस्तेन दश-ग्रीवो निशा-चरः ।
४९] प्र-विवेश पुरीं लङ्कां भ्रातृभिः सहितोऽन्-अघ ॥३४॥ [४७

स चाऽभि-षिक्तः क्षणदा-चरैस् तदा
नि-वेशयामास पुरीं दशाऽऽननः ।
निकाम-पूर्णा च बभूव सा पुरी
५०] निशा-चरैर् नीलबलाहकोपमैः ॥३५॥ [४९

धनेश्वरस् त्व् अथ पितृ-वाक्य-नोदितो
न्य्-अवेशयत् स्वयम् अचलोत्तमे पुरम्[9] ।
स्व्-अलङ्कृतैर् भवन-वरैर्[10] वि-भूषितम्[11]
५१] पुरं-दरः स्व-पुरम् इवाऽमरावतीम् ॥३६॥ [५०

इत्यार्षे रामायण उत्तर-काण्डे[12] रावणाऽभिषेको[12] नाम
दशमः सर्गः ॥ १० ॥

---

१. भ$_2$–ध्वंसस्वेति । २. अ भ$_1$ भ$_2$ ल$_2$–°णं । ३. अ ल$_2$–वचः । ४. भ$_2$–°णीतलं । ५. ल$_1$ ब–पुण्या । ६. प्र–नः पुत्राणां । ७. प्र–भ्रातृभिः सहितोऽनघः । ८. प्र–नास्ति । ९. ल$_1$ ल$_2$ ब प्र–पुरीं । १०. ल$_1$–वर्ज–भुव° । ११. ल$_1$ ल$_2$ ब–°तां । १२. च–°ण्डे आभ्युदयिकपर्वणि राव° ॥

राक्षसेन्द्रोऽभि-षिक्तस् तु भ्रातृभिः सहितस् तदा ।
१] ततः प्र-दानं राक्षस्या भगिन्याः सोऽभ्य्-अरोचयत् ॥ १ ॥ [१
स्वसारं राक्षसेन्द्राय काल-खञ्जाय राक्षसः ।
२] ददौ शूर्प-णखां[1] राजा[1] विद्युज्-जिह्वाय नाम-तः ॥ २ ॥ [२
अथ दत्त्वा स्वसारं तु मृगयां पर्य्-अटन् नृपः ।
३] अपश्यत् स मयं नाम वने तात दितेः सुतम् ॥ ३ ॥ [३
कन्या-सहायं तं दृष्ट्वा दश-ग्रीवो निशा-चरः[2] ।
४] अपृच्छत् को भवान् अत्र निर्-मनुष्य-मृगे[3] वने ॥ ४ ॥ [४
५पू] मयस् तथाऽब्रवीद् राम पृच्छमानं निशा-चरम् । [५पू
N] कुले महति चोत्-पन्नं ब्रह्मणोऽव्यक्त-जन्मनः ॥ ५ ॥ [N
N] तपसा द्योतमानं तु दिति-जो राक्षसेश्वरम् । [N
५उ] श्रूयतां सर्वम् आ-ख्यास्ये यथा-वृत्तम् इदं मम ॥ ६ ॥ [५उ
हेमा नामाऽप्सरा तात श्रुत-पूर्वा त्वया यदि ।
६] दैवतैर्[4] मम दत्ता सा पौलोमीऽव पुरं-दरे[5] ॥ ७ ॥ [६
तस्यां सक्त-मनास् तात दश वर्ष-शतान्य् अहम् ।
७] सा च दैवत-कार्येण चतुर्दश[6] समा गता ॥ ८ ॥ [७
तस्याः कृते हेमाया हैम्याः प्रासाद-पङ्क्तयः ।
८] वज्र-वैडूर्य-विकचा[7] निर्-मिता मायया मया[8] ॥ ९ ॥ [८
तत्राऽहम् अ-रतिं विन्दंस् तया हीनः सु-दुःखितः ।
९] भवनात् स्वाद् अरण्यं[9] हि दुहित्रा प्र-स्थितः सह ॥१०[10]॥ [९
सेयं ममाऽऽत्म-जा हैमी तस्याः कुक्षौ वि-वर्धिता ।
१०] भर्तारम् अस्या दुहितुः प्राऽऽप्तवान् अस्मि मार्गितुम् ॥११॥ [१०
कन्या-पितृ-त्वं दुःखाय नराणां मान-काङ्क्षिणाम् ।
११] द्वे कुले सं-शये[11] कृत्वा नित्यं कन्या प्र-दीयते[12] ॥१२॥ [११
पुत्र-द्वयं ममाऽप्य् अस्यां भार्यायां सम्-अजायत ।
१२] मायावी प्रथमस् तत्र दुन्दुभिस् तद्-अनन्तरम् ॥१३॥ [१२

---

१. च-°णखा नाम । २. अ $ल_2$-दशाननः । ३. $ल_2$-°ष्ये मृग । ४. $रा_1$ $ल_2$-वर्जे-दे° । ५. टि° <पुरन्दर- । ६. $ल_1$-मां त्यक्त्वैव दिवं गता । ७. $ल_3$ ब प्र-रत्नवै° । ८. अ $रा_1$ $ल_2$ $ल_3$-मम । ९. अ च ब $ल_1$ $ल_2$ $ल_3$ प्र-°ण्ये । १०. $रा_1$-नास्ति । ११. $भ_2$ ब-°यं । १२. $भ_2$-प्रसूयते ।

एतत् ते सर्वम् आ-ख्यातं याथातथ्येन[1] पृच्छतः ।
१३] त्वाम् इदानीं कथं तात जानीयां को भवान् इति ॥१४॥ [१३
एवम् उक्तो राक्षसेन्द्रो वि-नीत इदम् अब्रवीत् ।
१४] पौलस्त्यस्याऽथ[2] पुत्रोऽहं[2] दश-ग्रीवेति[3] नाम-तः ॥१५॥ [१४
ब्रह्मर्षेस् तं सुतं मत्वा मयो दैत्याऽधिपस् ततः ।
१६] प्र-दानं दुहितुस् तस्या रोचयामास तस्य हि ॥१६॥ [१५
करेण तु करं तस्य गृहीत्वा समव-स्थितम् ।
१७] प्र-हसन्न् इव दैत्येन्द्रो राक्षसेन्द्रम् अथाऽब्रवीत् ॥१७॥ [१६
इयं ममाऽऽत्म-जा राजन् हेमायाऽप्सरसः[4] सुता ।
१८] कन्या मन्दोदरी नाम पत्न्य्-अर्थं प्रति-गृह्यताम् ॥१८॥[5] [१७
बाढम् इत्य् एव तं राम दश-ग्रीवोऽब्रवीद् वचः ।
१९] प्र-ज्वाल्य तत्र चैवाऽग्निं नि-वृत्तः[6] पाणि-संग्रहः ॥१९॥ [१८
न हि तस्य मयो राजन् शापं जानाति दुर् -मतेः ।
२०] विदित्वा तस्य सा दत्ता तेन पैतामहं कुलम् ॥२०॥ [१९
अ-मोघां च ततः शक्तिं प्र-ददौ परमाऽद्भुताम् ।
२१] परेण तपसा लब्धां जघ्निवाँल् लक्ष्मणं यया ॥२१॥ [२०
एवं स कृत-दारो वै लब्ध्वा पत्नीं मयात् तदा ।
२२] गत्वा स नगरं भार्ये भ्रातृभ्यां समुदाऽवहत् ॥२२॥ [२१
वैरोचनस्य दौहित्रीं वज्र-ज्वालेति वि-श्रुताम् ।
२३] तां भार्यां कुम्भ-कर्णाय दश-ग्रीव उदाऽवहत् ॥२३॥[7] [२२
गन्धर्व-राजस्य सुतां शैलूषस्य महाऽऽत्मनः ।
२४] वि-भीषणस्य भार्याऽर्थं[8] धर्म-ज्ञां समुदाऽवहत् ॥२४॥[8] [२३
तीरे वै सरसः सा हि मानसस्य व्य्-अजायत ।
२५] मानसं तु सरस् तद् वै वर्धते जलदाऽऽगमे ॥२५॥ [२४
मात्रैवाऽस्यास्[9] तु कन्यायाः पुत्री-स्नेह-तया वचः ।
२६] उक्तं सरो मा वर्धेति तेन[9] सा सरमाऽभवत् ॥२६॥ [२५

---

१. भ१ ल१ ब प्र-वर्ज-यथा° । २. भ१-°थ वीर्योऽहं । ल१ ल३ प्र-°स्त्यात्मजश्चाऽहं । ब-°स्याथात्मजोऽहं । ३. ल१ ल३ प्र-°ग्रीवोऽस्मि । ४. सन्धिरार्षो द्र. । ५. अतः परमधिकः पाठः—च भ१ भ२-गृहाण कन्यां चेमां वै मया दत्तां निशाचर । ६. भ२-निर्वृत्तः । ७. रा१-नास्ति । ८. च-नास्ति । ९. अ रा१ ल२-ततः ॥

एवं ते कृत-दारा वै रेमिरे[1] तत्र राक्षसाः ।
२७] स्वां स्वां भार्याम् उपा-दाय गन्धर्वा इव नन्दने ॥२७॥ [२६
ततो मन्दोदरी पुत्रं मेघ-नादम् अजीजनत् ।
२८] य एष युद्धे युष्माभिर् इन्द्र-जित् समभि-श्रुतः[2] ॥[3]२८॥ [२७
जात-मात्रेण हि पुरा तेन राक्षस-सूनुना ।
२९] रोदमानेन मुक्तोऽभून् नादो जल-भृतां[4] यथा ॥२९॥ [२८
जडी कृतायां लङ्कायां तेन नादेन तस्य वै ।
३१] पिता तदाऽकरोन् नाम मेघ-नाद इति प्र-भुः ॥३०[3]॥ [२९
सोऽवर्धत तदा राम रावणाऽन्तःपुरे शिशुः ।
३२] रक्ष्यमाणः प्र-यत्नेन छन्नः काष्ठैर् इवाऽनलः ॥३१॥ [३०

इत्यार्षे रामायण उत्तर-काण्डे इन्द्रजिद्-उत्पत्तिर्
नामैकादशः सर्गः ॥ ११ ॥

---

## [ वं-१३ ]= [ द्वादशः सर्गः ] =[ दा-१३ ]

अथ लोकेश्वरात्[5] सृष्टा[5] तत्र कालेन केन-चित् ।
१] निद्रा[6] समाऽविशत् तीव्रा[7] कुम्भ-कर्णं[8] स्व-रूपिणी ॥[8] १ ॥ [१
ततो भ्रातरम्[9] आसीनं कुम्भ-कर्णोऽब्रवीत् तदा ।
२] नि-द्रा मां बाधते राजन् कारयस्व ममाऽऽलयम् ॥ २ ॥ [२
नि-युक्तास् तु तदा राज्ञा शिल्पिनो विश्वकर्म-वत् ।
३] अकुर्वन् कुम्भ-कर्णस्य कैलासाऽऽकारम् आ-लयम् ॥ ३[10]॥ [३
षड्-व्याम-शत-विस्तीर्णं ततः[11] षड्-गुणम् आ-यतम् ।[12]
४] दर्शनीयं महाऽऽकारं[13] कुम्भ-कर्णस्य चक्रिरे ॥ ४ ॥ [४
काञ्चनाः स्फाटिकास् तत्र सर्व-तः स्तम्भ-पङ्क्तयः ।
५] वैडूर्य-कृत-भूषाश् च किङ्किणी-जाल-भूषिताः ॥ ५ ॥ [५
दान्त-तोरण-विन्यासा[14] वज्र-ग्रथित-वेदिकाः ।
६] सर्व-त्र सुख-दा नित्यं प्राऽग्रया मेरु-गुहा यथा ॥ ६ ॥ [६

---

१. अ-रेजिरे । २. अ ल$_2$-°भिद्रुतः । ३. च-नास्ति । ४ भ$_1$ रा$_1$-°भृतो । ल$_3$ ब प्र-जलमुचो । ५. च भ$_2$-°रोत्सृष्टा । ६. ल$_1$ ब प्र-निद्रां । ७. ल$_1$ ब प्र-तीव्रां कुंभकर्णः । ८. ल$_1$ ल$_3$ प्र-°णीम् । ९. ल$_3$-रावणम् । १०. ब-नास्ति । ११. प्र-तत्र । १२. अ रा$_1$ ल$_1$ ल$_3$ ब-नास्ति । १३. च भ$_2$-गुहा° । १४. ल$_3$ प्र-वंत° ॥

तत्र निद्रां स गत्वा तु कुम्भ-कर्णो निशा-चरः ।
७] बहून्य् अब्द-सहस्राणि प्र-सुप्तो[1] नाऽव-बुध्यते ॥ ७ ॥ [७
निद्राऽभिभूते तु तदा कुम्भ-कर्णे[2] दशाऽऽननः[3] ।
८] ब्राह्मणान् दैवतान् यक्षान् नि-जघ्ने स महोरगान् ॥ ८ ॥ [८
उद्यानानि वि-चित्राणि नन्दनाऽऽदीनि यानि च ।
९] तानि गत्वा सु-संक्रुद्धो भिनत्ति[4] स्म दशाऽऽननः ॥ ९ ॥ [९
नदीं गज इवाऽऽक्रीडन् वृक्षान् वायुर् इवाऽक्षिपत् ।
१०] शैलान् वज्रीऽव सं-क्रुद्धो[5] वि-ध्वंसयति[5] नित्य-शः ॥१०॥ [१०
तथा-वृत्तं तु वि-ज्ञाय दश-ग्रीवं धनेश्वरः ।
११] कुलाऽनुरूपं धर्म-ज्ञो वृत्तं सं-स्मृत्य चाऽऽत्मनः ॥११॥ [११
सौभ्रात्रं[6] दर्शयंस् तस्य दूतं वैश्रवणो नृपः ।
१२] लङ्कां सं-प्रेषयामास दशग्रीव-हिताय वै ॥१२॥ [१२
स गत्वा नगरीं लङ्काम् आ-ससाद वि-भीषणम् ।[7]
१३] आ-गतस् तेन पृष्टस् स हेतुम्[8] आ-गमनं प्रति ॥१३॥ [१३
स पृष्ट्वा राज-राजं तं ज्ञातीन् अन्यांश् च बान्धवान् ।
१४] सभायां दर्शयामास सम्-आसीनं दशाऽऽननम् ॥१४॥ [१४
स दृष्ट्वा तत्र राजानं दीप्यमानम् इव श्रिया ।
१५] जयेन चाऽभि-नन्द्यैनं तूष्णीम् आसीन् मुहूर्त-कम् ॥१५॥ [१५
तस्योप-नीतः पर्यङ्कः स्व्-आस्तीर्णो रावणाद् अनु ।
१६] तत्रोप-विश्य राजानं दूतो वचनम् अब्रवीत् ॥१६॥ [१६
राजन् वक्ष्यामि ते सर्वं[9] भ्राता तव यद् अब्रवीत् ।
१७] सर्वेषां प्र-हितं सम्यग् वृत्तस्य च कुलस्य च ॥१७॥ [१७
साधु पर्य्-आप्तम् एतावत् कृतश् चारित्र-सङ्करः ।
१८] साधु धर्म-व्यवस्थानं क्रियतां यदि शक्यते ॥१८॥ [१८
दृष्टं मे नन्दनं भग्नम् ऋषयश् च हताः श्रुताः ।
१९] देवतानां समुद्-योगं ततो राजन् श्रुतं मया ॥१९॥ [१९
नि-वारितस् त्वं पूर्वं हि मया भूयो नि-वार्यसे ।
२०] अप-राध्यंश्[10] च[10] बालो हि रक्षितव्यः स[11] बान्धवैः[11] ॥२०॥ [२०

---

१. च भ१ भ२ रा१ प्र-प्रबुद्धो । २. भ१-°र्णो । ३. ल३-ऽतिरावणः । ब प्र-निशाचरः । ४. च-नास्ति । ५. अ रा१ ल३-°सन्निभ । ६. ल१-सौभ्रातरं । ७. ब-नास्ति । ८. च भ१ भ२-च हे° । ९. रा१-यथा । १०. भ१ भ२-°ध्यम्हि । रा१-°ध्यति । ११. रा१ ल१ ल२ ल३ ब प्र-स्वबा° ॥

अहं हिम-वतः पृष्ठं गतो धर्मम् उपाऽऽसितुम् ।
२१] रौद्रं व्रतम् उपाऽतिष्ठं नि-वे(?वि)श्य च(?स)त्वरं[1] गिरिम् ।२१।[२१
तत्र रुद्रो मया दृष्टो देव्या[2] सह तदा[3] प्र-भुः ।
२२] सव्यं चक्षुर् मया राजंस् तत्र देव्यां नि-पातितम् ॥२२॥ [२२
केयं[3] त्व् इति महा-राज न खल्व् अन्येन[4] हेतुना ।
२३] रूपं ह्य् अन्-उपमं कृत्वा तत्र चिक्रीड पार्वती ॥[5]२३॥ [२३
तत्र[6] देव्याः प्र-भावेण दग्धं सव्यं ममेक्षणम् ।
२४] रेणु-ध्वस्तम् इव ज्योतिः पिङ्गल-त्वम् उपा-गतम्[7] ॥२४॥ [२४
ततोऽहम् अन्यद् वि-स्तीर्णं गत्वा तस्य गिरेस्[8] तटम्[8] ।
२५] पञ्च वर्ष-शतं तूष्णीं तपोऽहं[9] तप्तवांस्[9] तदा[10] ॥२५॥ [२५
सम्-आप्ते नि-यमे तस्मिंस् तत्र देवो महेश्वरः ।
२६] प्रीतः प्रीतेन मनसा प्राऽऽह वाक्यम् इदं प्र-भुः ॥२६॥ [२६
प्रीतोऽस्मि तव धर्म-ज्ञ येनैतत्[11] ते कृतं तपः । [२७उ
२७] मया चाऽऽचरितं पूर्वं त्वया चाऽनु-उपमं व्रतम् ॥२७॥
तृतीयः पुरुषो नाऽस्ति यश् चरेद् व्रतम् ईदृशम्[12] ।
२८] व्रतं सु-दुष्करं ह्य् एतन् मयैवोत्-पादितं पुरा ॥२८॥ [२८
तत् सखि-त्वं मया सार्धं रोचयस्व[13] धनेश्वर ।
२९] तपसा चाऽर्जित-त्वाद् धि सखा मम भवाऽऽत्मनः ॥२९[14]॥ [२९
देव्या दग्धं प्र-भावाच् च तव यत् सव्यम् ईक्षणम् ।[14]
३०] एकपिङ्गेक्षण इति नाम ते ख्यास्यते ध्रुवम् ॥३०॥ [३०
एवं कृते[15] मया सख्ये[16] गतो देवः स्वम् आ-लयम् ।
३१] आ-गतेन मया तत् ते श्रुतं पापं सु-निश्चितम्[17] ॥३१॥ [३१
तद् अ-धर्मिष्ठ-संयोगाद् विनि-वर्तस्व किल्बिषात् ।
३२] चिन्त्यते हि वधोपायः सर्षिसङ्घैः सुरैस् तव ॥३२॥ [३२

---

१. अ च भ$_1$ रा$_1$ ल$_1$ ल$_2$ ल$_3$ ब-तुरं । भ$_2$-स तं । २. च भ$_1$ भ$_2$-देवो देव्या सह । ३. ब भ$_2$-वर्जे-कार्यं । ४. प्र-एकेन । ५. ल$_3$-नास्ति । ६. च भ$_1$ ल$_2$-तच । ७. अ ब-वर्जे-°गता । ८. रा$_1$ ल$_1$ ल$_3$ ब प्र-°रेः स्थलं । ९. च भ$_1$ भ$_2$ ल$_1$ ल$_2$ ब-भासवान्सुमहत् । ल$_3$ प्र-तप्तवान्सुमहत् । १०. च भ$_1$ भ$_2$-व्रतं । ल$_1$ ल$_3$ ब प्र-तपः । ११. भ$_2$ ब-वर्जे-येन तत् । १२. च-उत्तमम् । १३. अ रा$_1$ ल$_2$-त्वं रोचय । १४. च-नास्ति । १५. अ ल$_1$-कृतं । १६. अ भ$_1$ रा$_1$ ल$_1$ ल$_2$ प्र-सख्यं । १७. च भ$_1$ भ$_2$-विनि° ॥

एवम् उक्तो राक्षसेन्द्रः क्रोध-संरक्त-लोचनः ।
३३] तलं तलेन सं-पीड्य वाक्यम् एतद् उवाच ह ॥३३॥ [३३
वि-ज्ञातं ते मया वाक्यं दूतं[1] यच् च प्र-भाषसे ।
३४] नैव त्वम् असि नैवाऽसौ येनाऽसि प्र-हितो मम ॥३४॥ [३४
हित-बुद्ध्या न मे वाक्यम् उक्तवान् धन-रक्षिता ।
३५] महेश्वर-सखि-त्वं च[2] मां[2] श्रावयति वि-स्मितः ॥३५॥ [३५
एतावन्तं मया कालं स्नेहात् तस्यैव मर्षितम् । [३६उ
३६] भ्राता किं तु गुरुर् ज्येष्ठो ममाऽयम्[3] इति जानता ॥३६॥
तस्य त्व् इदानीं श्रुत्वा मे वाक्यम् एवं कृता[4] मि(?म)ति(?तिः)[4] ।
३७] त्रींल् लोकान् अव-जेष्यामि बाहु-वीर्य-व्यपाश्रयः ॥३७॥ [३७
एतं मुहूर्तम् एकोऽहं तस्यैकस्य कृतेन वै ।
३८] चतुरो लोक-पालांस् तान् नयामि यम-सादनम् ॥३८॥ [३८
छित्वा स रोष-रक्ताऽक्षो दूतं खड्गेन राक्षसः ।
३९] भक्ष्याऽर्थं प्र-ददौ तत्र राक्षसेभ्योग्र-कर्म-कृत्[5] ॥३९॥ [३९
ततः कृत-स्वस्त्ययनो रथम् आ-रुह्य राक्षसः[6] ।
४१] त्रिलोक-विजयाऽऽकाङ्क्षी ययौ यत्र धनेश्वरः[7] ॥४०॥ [४०

इत्यार्षे रामायण उत्तर-काण्डे रावण-प्रयाणं[8] नाम
द्वादशः सर्गः ॥१२॥

---

## [ वं-१४ ]= [ त्रयोदशः सर्गः ] =[ दा-१४ ]

स ययौ सचिवैः सार्धं षड्भिः क्रुद्धो महा-रथैः ।
१] महोदर-प्रहस्ताभ्यां मारीच-शुक-सारणैः ॥ १ ॥ [१
धूम्राऽक्षेण च वीरेण नित्यं समर-गधि(?र्धि)ना[9] ।
२] ततः स प्र-ययौ धी-मांल् लोकान् क्रोधाद्[10] दहन्[11] इव ॥२॥ [२
स पुराणि नदीः शैलान् वनान्य् उप-वनानि च ।
३] अति-क्रम्य मुहूर्तेन कैलास-गिरिम् आऽगमत् ॥ ३ ॥ [३

---

१. अ $ल_2$-हंत । २. $ल_1$ $ल_3$ ब प्र-मां स । ३. $रा_1$ $ल_1$ ब-वर्जं-मयाऽयम् । ४. अ $भ_1$ $ल_1$ $ल_2$ $ल_3$ ब प्र-कृतानपि । ५. $रा_1$-°भ्यो विक्र° । टि० संधिर्वाऽऽर्षः । ६. ब-रावणः । ७. $ल_1$ $ल_2$ $ल_3$ प्र-धनाधिपः । ब-नराधिपः । ८. च $भ_2$ $रा_1$-°प्रस्थानो । $ल_1$ $ल_3$ ब-°प्रस्थानं । प्र-°प्रस्थापनं । ९. अ $भ_1$ $भ_2$ $ल_1$ $ल_2$ $ल_3$ ब प्र-गृद्धिणा । च-°गर्वितः । $रा_1$-°गर्विणा । १०. $ल_3$ ब प्र-क्रुद्धो । ११. च-प्रद° ॥

N] सोऽधि-ष्ठितान् गिरौ तस्मिन् यक्षान् रण-विशारदान् । [४पू
५पू] व्य्-अद्रावयत शैलेन्द्रात् ते[1] ततो दुद्रुवुः[1] क्षणात् ॥ ४ ॥ [५पू
४पू] ते तु तत्र नि-शाम्यैवं[2] दश-ग्रीवं निशा-चरम् । [N
५उ] राज्ञो भ्रातेति वि-ज्ञाय गता यत्र धनेश्वरः ॥ ५ ॥ [५उ
ते गत्वा सर्वम् आ-ख्याय भ्रातुस् तस्य विनिश्-चयम् ।
६] अनु-ज्ञाता ययुर् हृष्टा युद्धाय धन-देन ते ॥ ६ ॥ [६
ततो बलानां सं-क्षोभो व्य्-अवर्धत यथोदधेः ।[3]
७] तस्य नैर्ऋत-राजस्य शैलं सं-चालयन्न् इव ॥ ७ ॥ [७
ततो युद्धं सम्-अभवद् यक्ष-राक्षस-संकुलम् ।
८] व्यथिताश् चाऽभवंस् तत्र सचिवा राक्षसस्य ते ॥ ८ ॥ [८
स दृष्ट्वा तादृशं सैन्यं दश-ग्रीवो निशा-चरः ।
९] हर्षान् नादान् मुहुर् मुक्त्वा तदा क्रोधाद् अधावत ॥ ९ ॥ [९
ये तु ते राक्षसेन्द्रस्य सचिवा भीम-विक्रमाः ।
१०] ते[4] सहस्र-सहस्राणाम्[4] एकैकं सम्-अयोधयन् ॥१०॥ [१०
ततो गदाऽसि-मुसलैः[5] शक्तिभिश्[6] च स तोमरैः[6] ।
११] हन्यमानो[7] दश-ग्रीवो रोषाद्[8] अहत[8] तद् बलम् ॥११॥ [११
स निरुच्छ्वास-वांस् तत्र वध्यमानो दशाऽऽननः ।
१२] वर्षमाणैर् इव[9] घनैर् यक्षेन्द्रैः सोऽव(?वाऽ)रुध्यत[9] ॥१२॥ [१२
स[10] दुर्-आत्मा[10] समुद्-यम्य काल-दण्ड-निभां गदाम् ।
१४] प्र-विवेश ततः सैन्यं नेतुं यक्षान् यम-क्षयम् ॥१३॥ [१४
स कक्षम् इव सं-पूर्ण[11] शुष्केन्धन-समाकुलम् ।
१५] वनम्[12] अग्निर् इवाऽऽदीप्तो यक्ष-सैन्यं ददाह तत् ॥१४॥ [१५
तैस्[13] तु तत्र महाऽमात्यैर् महोदर-शुकाऽऽदिभिः ।
१६] अल्पाऽवशेषास्[14] ते[14] यक्षाः कृता वातैर् इवाऽम्बु-दाः ॥१५॥ [१६

---

१. अ– तेजसा रुरुधुः । ल$_1$–वर्ज–ते तमारुरुहुः । २. रा$_1$ ल$_1$ ल$_3$ ब प्र–निश° । ३. भ$_1$–नास्ति । ४. अ ल$_2$–द्विसहस्रे स° । ल$_1$ ल$_3$ ब प्र–द्विसहस्रं स° । ५. च रा$_1$–°मुशलैर् । भ$_1$ भ$_2$ ल$_1$ ल$_2$ ल$_3$–मुसुलैर् । ६. अ ल$_2$–वर्ज–असिभिः शक्तितो° । ७. च भ$_1$ ल$_1$ प्र–मध्यमानो । रा$_1$–वध्यमामो । ८. च भ$_1$ भ$_2$ रा$_1$ ल$_2$ ल$_3$ प्र–व्यवगाहत । ल$_1$–व्यगाहत च । ९. अ ल$_2$–महास्त्राणि शस्त्राणि च समंततः । १०. अ ल$_2$–दशग्रीवः । ११. प्र–विस्तीर्ण । १२. भ$_1$ भ$_2$ प्र–वातैर् । १३. ल$_1$ प्र–ते । १४. ल$_1$–°शेषिताः ॥

के-चित् समा-हता भग्नाः पतिताः सम्-अरे क्षितौ ।
१७] ओष्ठान् स्व-दशनैस् तीक्ष्णैर् ददंशुः कुपिता रणे ॥१६॥ [१७
श्रान्तास्[1] त्व् अन्योऽन्यम् आ-लिङ्ग्य भ्रष्ट-शस्त्रा[2] रणाऽजिरे ।
१८] सीदन्ति स्म च ते यक्षाः कूलानि सलिले[3] यथा ॥१७॥ [१८
हतानां गच्छतां स्वर्गं युध्यताम् अथ धावताम् ।
१९] पश्यताम् ऋषि-सङ्घानां न बभूवाऽन्तरं तदा[4] ॥१८॥ [१९
भग्नांस् तांस् तु समा-लक्ष्य यक्षेन्द्रान् सु-महाबलान् ।
२०] धनाऽध्यक्षो महा-बाहुः प्रेषयामास नायकान् ॥१९॥ [२०
एतस्मिन्न् अन्तरे राम विस्तीर्ण-बल-वाहनः ।
२१] प्रेषितोऽभ्याऽगमद् यक्षो नाम्ना यो गण्डभिण्डिकः[5] ॥२०॥ [२१
तेन यक्षेण[6] मारीचो विष्णुनेव रणे हतः ।
२२] पतितः पृथिवीं शैलात् क्षीण-पुण्य इव ग्रहः ॥२१॥ [२२
स-संज्ञस् तु[7] मुहूर्तेन वि-श्राम्याऽथ[8] निशा-चरः ।
२३] तं यक्षं योधयामास स तु भग्नः प्र-दुद्रुवे ॥२२॥ [२३
तप्त-काञ्चन-चित्राऽङ्गं[9] वैडूर्य-मणि-भूषितम्[10] ।
२४] मर्यादां प्रति-हाराणां तोरणाऽन्तरम् आऽविशत् ॥२३॥ [२४
तं तु राजन् दश-ग्रीवं प्र-विशन्तं निशा-चरम् ।
२५] सूर्य-भानुर् इति ख्यातो द्वार-पालो न्य्-अवारयत् ॥२४॥ [२५
२६पू] स वार्यमाणो यक्षेण प्र-विवेशैव रावणः । [२६पू
२७पू] ततस् तोरणम् उत्-पाट्य तेन यक्षेण ताडितः ॥२५॥ [२७पू
स शैल-शिखराऽऽभेन तोरणेन समा-हतः ।
२८] अगच्छन् न क्षितिं[11] रक्षो वर-दानात् स्वयं-भुवः ॥२६॥ [२८
तेनैव तोरणेनाऽथ रक्षसा सोऽभि-ताडितः[12] ।
२९] नाऽदृश्यत ततो राजन् भस्मी-कृत-दृढ-च्छविः[13] ॥२७॥ [२९

---

१. रा₁ ब-ततस् । २. रा₁-भ्रष्टराष्ट्रा । ३. रा₁-°लैर् । ४. ल₁-°वाकुकितं नभः । ५. च-गांडतिंडिकः । ६. च भ₁ भ₂ रा₁-वर्ज-चक्रेण । ७. भ₁ भ₂ रा₁-वर्ज-तं । ८. ल₁ ल₃-विश्वस्याथ । ९. अ च भ₂ ल₁ ल₂ ल₃ ब प्र-तालकांचनचित्रांगो । भ₁ रा₁-नीलकांचनचित्रांगो । १०. अ ल₂-भूषितः । ११. ब-क्षयं । १२. अ ल₂-वर्ज-सोऽपि ता° । १३. रा₁-°दृढद्युतिः ।

ततः प्र-दुद्रुवुः सर्वे यक्षा दृष्ट्वा परा-क्रमम् ।
३०] नभो[1] नदीर्[2] गुहाश् चैव विविशुर् भय-पीडिताः ॥[3]२८॥ [३०

इत्यार्षे रामायण उत्तर-काण्डे कैलास-युद्धं नाम
त्रयोदशः सर्गः ॥ १३ ॥

---

## [ वं-१५ ]=          [ चतुर्दशः सर्गः ]          =[ दा-१५ ]

तान् समा-लक्ष्य[4] वि-त्रस्तान् यक्षान् गच्छन् सहस्र-शः ।
१] धनाऽध्यक्षो महा-यक्षं मणि-भद्रम् अथाऽब्रवीत् ॥ १ ॥ [१
रावणं जहि यक्षेन्द्र दुर्-वृत्तं पाप-चेतसम् ।
२] शरणं भव वीराणां यक्षाणां युद्ध-शालिनाम् ॥ २ ॥ [२
एवम् उक्तो महा-बाहुर् मणि-भद्रः सु-दुर्जयः ।
३] वृतो[5] यक्ष-सहस्रैश्[6] च चतुर्भिः सम्-अयोधयत् ॥ ३ ॥ [३
ते गदा-मुसल-प्राऽऽस-शक्ति-तोमर-मुद्गरैः[7] ।
४] अभि-घ्नन्तस् तदा यक्षा राक्षसान् अभि-दुद्रुवुः । [४
५पू] कुर्वन्तस् तुमुलं युद्धं चरन्तः श्येन-वल् लघु ॥ ४ ॥ [५पू
तदा[8] प्र-हस्तेन तदा(?तेषां) सहस्रं विनि-पातितम्[9] ।
७] महोदरेण गदया सहस्रम् अपरं हतम् ॥ ५ ॥ [७
८उ] क्रुद्धेन[10] च तदा राम मारीचेन युयुत्सुना[11] ।
९पू] निमेषाऽन्तर-मात्रेण[12] द्वे सहस्रे नि-पातिते ॥[13]६ ॥ [८
१०उ] धूम्राऽक्षेण च सं-गम्य मणि-भद्रो महा-रणे ।
मुसलेनोरसि[14] क्रोधात् ताडितोऽपि न कम्पितः ॥ ७ ॥ [१०
११] ततो[15] गदां समा-विध्य मणि-भद्रेण राक्षसः ।
धूम्राऽक्षस् ताडितो मूर्ध्नि वि-ह्वलः पतितो भुवि ॥ ८ ॥ [११

---

१. अ प्र-ततो । २. ल$_{3}$ ब प्र-हृद्रा । ३. अतः परमधिक पाठः—भ$_{1}$ रा$_{1}$ प्र-त्यक्तप्रहरणाः सर्वे विवर्णवदनास्तदा । ४. अ ल$_{2}$-समभ्येत्य । ५. अ ल$_{2}$-निवृत्तो । भ$_{1}$-सोऽपि । ६. भ$_{1}$ भ$_{2}$ रा$_{1}$-°स्रौघैश् । ७. अ च-°मुसुल° । भ$_{1}$ भ$_{2}$-°मुशल° । रा$_{1}$-°मुशलप्राशश° । ल$_{2}$ ब-°लप्राशश° । ल$_{1}$ ल$_{3}$ प्र-°मुसुलप्राशश° । ८. भ$_{2}$-यक्षाः । ९. भ$_{2}$-°ताः । १०. अ ल$_{2}$-क्रोधेन । ११. च-°त्सता । १२. रा$_{1}$ ल$_{2}$-वर्ज-निमिषां° । १३. अतः परमधिकः पाठः—प्र-क च यक्षार्जयं युद्धं क च मायाबलार्दितम् । राक्षसाः पुरुषव्याघ्र तेन तेऽप्यधिका युधि ॥ १४. अ ल$_{1}$ ल$_{2}$ ल$_{3}$ प्र-मुसुले° । च-मुशुले° । भ$_{1}$ भ$_{2}$ रा$_{1}$-मुशले° । १५. च-तदा ॥

१२] धूम्राऽक्षं ताडितं[1] दृष्ट्वा पतितं[2] शोणितोक्षितम् ।
अभ्य्-अधावत् सु-संक्रुद्धो मणि-भद्रं दशाऽऽननः ॥९॥ [१२

१३] तं क्रुद्धम् अभि-धावन्तं युगाऽन्ताऽग्निम् इवोत्थितम् ।[3]
शक्तिभिस् ताडयामास तिसृभिर् यक्ष-पुङ्गवः ॥१०॥ [१३

१४] ततो राक्षस-राजेन ताडितो गदया रणे ।
मुकुटेन नि-वृत्तस्य मुकुटः पार्श्व-तोऽगमत् । [१४

१५] ततः प्रभृति यक्षोऽसौ पार्श्व-मौलिर्[4] अथाऽभवत्[5] ॥११॥ [१५उ
तस्मिंस् तु विमुखी भूते[6] मणि-भद्रे महाऽऽत्मनि ।

१६] सं-नादः[7] सु-महान् राजस्[8] तत्र[9] सैन्ये[6] व्य्-अवर्धत ॥१२॥ [१६
ततो दूरात् प्र-ददृशे धनाऽध्यक्षो महा-बलः ।

१७] शुक्र-प्रोष्ठपदाभ्यां[10] च शङ्ख-पद्म-समावृतः ॥१३॥ [१७
स दृष्ट्वा भ्रातरं सं-ख्ये शापाद् विभ्रष्ट-गौरवम् ।

१८] उवाच वचनं धी-मान् युक्तं पैतामहे कुले ॥१४॥ [१८
मया त्वं वार्यमाणोऽपि नाऽव-गच्छसि दुर्-मते ।

१९] पश्चाद् अस्य फलं प्राऽऽप्य भोक्ष्य(?तस्य)से[11] निर्-अयं गतः ।१५।[१९
यो हि मोहाद् विषं पीत्वा नाऽव-गच्छति दुर्-मतिः ।

२०] स तस्य परिणामाऽन्ते जानीते कर्मणः फलम् ॥१६॥ [२०
दैवतानि न नन्दन्ति तपो-युक्तेन केन-चित् ।

२१] येन त्वम् ईदृशं भावं नीतः स[12] च[12] न बुध्यसे ॥१७॥ [२१
मातर पितरं विप्रान् आचार्यांश चाऽव-मन्यते[13] ।

२२] स पश्यति फलं तस्य प्रेत-राज-वशं गतः ॥१८॥ [२२
योऽध्रुवेण शरीरेण न करोति तपोऽर्जनम् ।

२३] स पश्चात् तप्यते मूढो मृतो दुःखां गतिं गतः ॥१९॥ [२३
न हि सर्वस्य दुर्-बुद्धे दीप्यते[14] छन्द-तो मतिः[15] ।

२४] यादृशं कुरुते कर्म तादृशं फलम् अश्नुते ॥२०॥ [२६

---

१. अ भ$_2$ ल$_2$ ब–पातितं । २. अ भ$_2$ ल$_1$ ल$_2$–ताडितं । ३. रा$_1$–नास्ति । ४. च भ$_1$ भ$_2$ रा$_1$–पार्श्वे शूकिर् । ५. रा$_1$–अभूरिकृक । ६ अ भ$_2$ ल$_2$ ब–°खे भू° । ७. ल$_2$–वर्ज–सन्नदः । ८. ब–राज्ञां । ९. अ ल$_1$ ल$_2$–तस्मिन्शैले । १०. अ भ$_1$ ल$_1$ ल$_2$ ल$_3$ ब प्र–शुक्रः प्रो° । भ$_2$ रा$_1$–°प्रोष्ठ° । ११. च भ$_1$ भ$_2$ रा$_1$–वर्ज–बाध्यसे । १२. अ ल$_1$ ल$_2$–सर्व । १३. अ च ल$_1$ ल$_2$ प्र–चाव-मन्यसे । ल$_3$–चापमन्यते । १४. च भ$_2$–जायते । १५. च भ$_2$ रा$_1$–वर्ज–गतिः ॥

बुद्धिं रूपं कुलं पुत्रान् शौर्य[1] गाम्भीर्यम्[1] एव च ।
२५] प्राऽऽप्नुवन्ति नरा लोके निर्-जितं पूर्व-कर्मभिः ॥२१॥ [२७
एवं निरय-गामी त्वं यस्य ते मतिर् ईदृशी ।
२६] न त्वां समभि-भाषिष्ये दुर्-वृत्तो[2] ह्य् एष निर्-णयः ॥२२॥ [२८
एवम् उक्तस् ततस् तेन तस्याऽमात्याः समा-ग(?ह)ताः ।
२७] मारीच-प्रमुखाः[3] सर्वे वि-मुखाः सम्प्र-दुद्रुवुः ॥२३॥ [२९
ततस् तेन दश-ग्रीवो यक्षेन्द्रेण महाऽऽत्मना ।
२८] मूर्ध्न्य् आ-हतः स गदया न[4] चकम्पे च राक्षसः[4] ॥२४॥ [३०
ततस् तौ राम नि-घ्नन्तौ तथाऽन्योऽन्यं महाऽऽहवे ।
२९] न वि-ह्वलौ[5] न च[5] श्रान्ताव् अभूतां यक्ष-राक्षसौ ॥२५॥ [३१
आग्नेयम् अस्त्रं तस्मै तु मुमोच धन-दस् तदा ।
३०] राक्षसेन्द्रो वारुणेन तद् अस्त्रं पर्य्-अवारयत् ॥२६॥ [३२
ततो मायां प्र-विष्टः स राक्षसीं राक्षसेश्वरः ।
३१] रूपाणां शत-साहस्रं वि-नाशं प्र-करोति च ॥२७॥ [३३
व्याघ्रो वराहो जीमूतः पर्वतः सागरो हृदः ।     [३४पू
३२] रक्षो-रूपश्[6] च स तदा[6] दृश्यते न[7] च दृश्यते[7] ॥[8]२८॥ [३५
सं-मोहयित्वा मायाभिर् एवं राक्षस-पुङ्गवः ।
३३] जघान गदया मूर्ध्नि धन-दं वि-ननाद च ॥२९[9]॥ [३६
एवं स तेनाऽभि-हतो वि-ह्वलः शोणितोक्षितः ।
३४] कृत्त-मूल[10] इवाऽशोको[11] नि-पपात[12] धनाऽधिपः ॥३०॥ [३७
ततः पद्माऽऽदिभिस् तत्र नि-धिभिः[13] स धनाऽधिपः ।[14]
३५] आ-श्वासितो नर-पते वनम् आ-नीय नन्दनम् ॥३१॥ [३८
निर्-जित्य राक्षसस् तत्र[13] धन-दं हृष्ट-मानसः ।
३६] पुष्पकं तस्य जग्राह वि-मानं जय-लक्षणम् ॥३२॥ [३९

---

१. च भ$_1$ भ$_2$ रा$_1$-शौचं शौंडीर्यम् । २. च रा$_1$-दुर्वृत्ते । टि. बस. उप. =परिवर्तन- । ३. भ$_1$-मारीचाद्याश्च ते । ४. ल$_1$-°म्पे स रावणः । ल$_3$ ब प्र-वर्ज-नास्थातुं तस्य रक्षसः । ५. अ च ल$_1$ ल$_2$-°लौ तौ न । भ$_1$ भ$_2$-विह्वलेतां न । ६. अ-°रूपाश्च तदा ते । ७. अ रा$_1$ ल$_3$-च नराधिप । च भ$_1$ भ$_2$ ल$_1$ ब-स नराधिप । ८. ल$_2$-अत आरभ्य १५-शसर्गस्य १२-शश्लोकं यावन्नास्ति । ९. प्र-वर्ज-नास्ति । १०. अ-क्षतमूल । रा$_1$ प्र-कृन्तमूल । ११. प्र-वर्ज-इवाकाशे । १२. अ च भ$_1$ भ$_2$ रा$_1$ ल$_2$-निषसाद । ल$_1$ ब-विषसाद । १३. ल$_1$-नास्ति । १४. रा$_1$-नास्ति ॥

काञ्चन-स्तम्भ-निर्व्यूहं वैडूर्य-मणि-तोरणम् ।
३७] मुक्ता-जाल-प्रतिच्छन्नं सर्व-काम-फल-प्रदम्[1] ॥३३॥ [४०
मनो-जवं काम-गमं काम-रूपं विहं-गमम् ।
३८] मणि-काञ्चन-सोपानं तप्त-हाटक-वेदिकम्[2] ॥३४[3]॥ [४१
दै(?दे)वोपवाह्यम् अ-क्षय्यम् श्री-मद् दृष्टि-मनः-सुखम् ।
३९] बह्व्-आश्चर्यं भक्ति-चित्रं ब्रह्मणा परि-निर्मितम् ॥३५[3]॥ [४२
तं (?तत्) स राजा समा-रुह्य काम-गं वीर्य-निर्जितम् । [४४पू
४१] जित्वा वैश्रवणं देवं कैलासाद् व्य्-अतरत् तदा ॥३६[4]॥ [४५

इत्यार्षे रामायण उत्तर-काण्डे कैलास-निर्जयो नाम
चतुर्दशः सर्गः ॥ १४ ॥

---

## [ वं–१६ ]= [ पञ्चदशः सर्गः ] =[ दा–१६ ]

जित्वा स धन-दं देवं कैलासाद् राक्षसाऽधिपः ।
१] महासेन-प्रसूतिं तां ययौ शर-वणं[5] महत् ॥ १ ॥ [१
सोऽपश्यत् तद् दश-ग्रीवो रौक्मं शर-वणं महत् ।
२] गभस्ति-जाल-संवीतं द्वितीयम् इव भास्-करम् ॥ २ ॥ [२
स पर्वतं समा-रुह्य क्व-चिद् रम्य-वनाऽन्तरम्[6] ।
३] प्र-वृत्तं[7] पुष्पकं तत्र राम वि-ष्टम्भितं बलात् ॥ ३ ॥ [३
वि-ष्टब्धं पुष्पकं दृष्ट्वा दश-ग्रीवः प्रताप-वान् ।
४] अचिन्तयद् राक्षसेन्द्रः सचिवैस् तैः समा-श्रितः[8] ॥ ४ ॥ [४
किम् इदं ह्य् अ-निमित्तं मे नेदं गच्छति पुष्पकम् ।
५] पर्वतस्योपरिष्टात् तु कर्म कस्य भवेद् इदम् ॥[9]५ ॥ [५
ततोऽब्रवीत् तदा राम मारीचो बुद्धि-कोविदः ।
६] नेदं निष्-कारणं राजन् नाऽद्य गच्छति पुष्पकम् ॥ ६[9]॥ [६
शिखर-स्थं गिरि-स्थस्य कर्म कस्येदम् अद्भुतम् ।
N] निश्-चितं राज-राजेन पुष्पकं विनि-वारितम् ॥ ७[10]॥ [७

---

१. अ ल$_1$–वर्ज–°लद्रुमं । २. प्र–वैडूर्यमणिवे° । ३. भ$_1$ भ$_2$ रा$_1$ प्र–वर्जं–नास्ति । ४. अतः परमधिकः पाठः—प्र–जितं त्रिभुवनं मेने वीर्यौत्सुक्याच्च दुर्मतिः । ५. भ$_2$ ल$_1$ ल$_3$ ब प्र–°वनं । ६. च भ$_1$ भ$_2$ रा$_1$–रम्यव° । ७. भ$_2$ रा$_1$–प्रख्यातं । ८. च भ$_1$ भ$_2$ रा$_1$ ब–समावृतः । ९. अ च ल$_1$–नास्ति । १०. अत आरभ्य–रा$_1$–११-शश्लोकस्य पूर्वार्धं यावन्नास्ति ॥

८उ] ततः पार्श्वम् उपा-गम्य भवस्याऽनु-चरोऽब्रवीत् । [१०पू

९उ] नि-वर्तस्व दश-ग्रीव शैले क्रीडति शं-करः ॥८॥ [११

सुपर्ण-नाग-यक्षाणां देव-गन्धर्व-रक्षसाम् ।

१०] सर्वेषाम् एव भूतानाम् अ-गम्यः पर्वतः कृतः ॥९॥ [१२

११उ] स-रोष-ताम्र-नयनः[1] पुष्पकाद् अव-तीर्य सः[2] ।

कोऽयं शं-कर इत्य् उक्त्वा[3] शैल-मूलम् उपा गतः[4] ॥१०॥ [१३

१२] अ-पश्यन् नन्दिनं तत्र देवस्याऽदूर-तः स्थितम् ।

दीप्तं शूलम् अव-ष्टभ्य द्वितीयम् इव शं-करम् ॥११॥ [१४

१३] तं दृष्ट्वा वानर-मुखम् अव-ज्ञाय स राक्षसः ।

प्र-हासं मुमुचे तत्र सु-तोयम्[5] इव तोय-दः ॥१२॥ [१५

१४] तं[6] क्रुद्धो भग-वान् नन्दो शं-करस्याऽपरा तनुः ।

अब्रवीद् राक्षसं[7] तत्र दशाऽऽननम् उप-स्थितम्[7] ॥१३॥ [१६

१५] यस्माद् वानर-रूपं मां त्वम् अव-ज्ञाय दुर्-मते ।

अशनी-पात-सङ्काशम् अट्ट-हासं प्र-मुक्तवान् ॥१४॥ [१८

१६] तस्मान् मन्-मुख-सङ्काशा मद्-वीर्य-सम-तेजसः ।

उत्-पत्स्यन्ते वधाऽर्थं ते कुलस्याऽस्य च वानराः ॥१५॥ [१९

१७] नख-दन्ताऽऽयुधाः[8] शूरा मनः-पवन-रंहसः ।

युद्धोन्मत्ता बलोदग्राः शैला इव वि-सर्पिणः ॥१६॥ [२०

१८] ते तवाऽऽशु बलं दर्पम् उत्-सेकं च पृथग्-विधम् ।

व्यप-नेष्यन्ति सं-भूय सहाऽमात्य-सुतस्य हि[9] ॥१७॥ [२१

१९] किं त्व् इदानीं मया शक्यं कर्तुं यावन् न बुध्यसे ।

शक्यो हन्तुं हतस् त्वं हि पूर्वम् एव च यन्[10] मया[10] ॥१८॥ [२२

२०] अ-चिन्तयित्वा स तदा नन्दि-वाक्यं महा-बलः ।

पर्वतं तं समा-साद्य वाक्यम् आह दशाऽऽननः ॥१९॥ [२४

२१] पुष्पकस्य गतिश् छिन्ना यत्-कृते[11] मम गच्छतः ।

२२उ] तम् इमं शैलम् उन्-मूलं करोमि तव गो-पते[12] ॥२०॥ [२५

---

१. भ$_{१}$–रोषात्ताम्रनयनस्तु । च ल$_{३}$ ब प्र–स रोषात्ता° । २. ल$_{१}$–वै । ३. अ–वर्ज–उक्तः । ४. अ–उपागमत् । ५. अ च भ$_{१}$ भ$_{२}$–स तो° । ६. भ$_{१}$ भ$_{२}$ रा$_{१}$–तव । ७. अ च ल$_{२}$–तत्र रक्षेन्द्रं रावणं समुप° । भ$_{१}$ भ$_{२}$–तत्र रक्षः स दशा° । ८. च भ$_{१}$ भ$_{२}$ रा$_{१}$–नखदंष्ट्रायुधाः । ९. अ–ते । १०. अ च ल$_{१}$ ल$_{२}$ ल$_{३}$ ब प्र–यत्त्वया । ११. अ ल$_{१}$ ल$_{२}$–यतस्ते । १२. भ$_{२}$–°तेः ॥

२३पू] केन प्र-भावेण[1] भवः[1] क्रीडत्य् अत्र प्र-भुर् यथा ।
N] वर्जनीयं न जानीते भय-स्थानं न बुध्यते[2] ॥२१॥ [२६
स एवम् उक्त्वा ततो राजा भुजान् आ-क्षिप्य पर्वते ।
N] तोलयामास तं शीघ्रं स[3] च[3] शैलोऽभ्य्-अकम्पयत् ॥२२॥ [२७
ततो राम महा-देवो देवानां प्र-वरो हरः ।
N] पादाऽङ्गुष्ठेन तं शैलं पीडयामास सर्व-तः[4] ॥२३॥ [२९
२३उ] आऽपीड्यन्त[5] ततस् तस्य शैलस्तम्भोपमा भुजाः ।
वि-स्मिताश् चाऽभवंस् तत्र सचिवास् तस्य रक्षसः ॥[6]२४॥ [३०
२४] रक्षसा तेन रोषाच् च भुजानां पीडनात् तथा ।
मुक्तो वि-रावः सु-महान् त्रैलोक्यं येन कम्पितम् ॥[7]२५॥ [३१
२५] तम्[8] एवं[8] वज्र-निष्पेषं दैत्या मत्वा युग-क्षयम् ।
२६पू] आसनेभ्यः प्र-चलिता देवाः शक्र-पुरो-गमाः ॥२६॥ [३५
ततः प्रीतो महा-देवो म(?ब)लेनाऽधि-ष्ठितांस्[9] तदा ।
३०] मुक्त्वा चाऽस्य भुजान् राजन् प्राऽऽह वाक्यं दशाऽऽननम् ।२७।[४१
प्रीतोऽस्मि तव वीर्येण शौण्डीर्याच्[10] च दशाऽऽनन ।
३१] अ-राक्षसश् च ते रावो मुक्तो लोक-भयङ्करः ॥२८॥ [४२
यस्माल् लोक-त्रयं चैव रावितं[11] भयम् आ-गतम् ।
३२] तस्मात् त्वं रावणो नाम नाम्ना राजन् भविष्यसि ॥२९॥ [४३
एवं त्वां मानुषा दैत्या गन्धर्वाः सह दैवतैः[12] ।
३३] सर्वदैवाऽभि-धास्यन्ति रावणेत्य् एव रावण ॥३०॥ [४४
गच्छ पौलस्त्य वि-श्रब्धो पथा येन त्वम् इच्छसि ।
३४] मया चैवाऽभ्यनु-ज्ञातो राक्षसाऽधिप गम्यताम् ॥३१॥ [४५
साक्षान् महेश्वरेणैवं कृत-नामा स राक्षसः[13] ।
३५] अभि-वाद्य महा-देवम् आ-रुरोहाऽथ पुष्पकम् ॥३२॥ [५१
ततो मही-तलं राम पर्याऽक्रमत रावणः ।
३६] क्षत्रियान् स महा-भागान् बाधमानस् ततस् ततः ॥३३॥ [५२

१. अ ल$_2$–केन प्रभावेन । प्र– °बेण हरो । २. ल$_3$ प्र–विद्यते । ३. ल$_3$ ब-सर्वः । ४. भ$_1$–वर्जे–पर्वतम् । ५. भ$_1$ भ$_2$ रा$_1$ ब–अपी° । ल$_1$–आपोड्यत । ६. अ ल$_2$ ल$_3$ ब–नास्ति । ७. ल$_1$–ततो मुञ्चन् महारावं दशग्रीवो महाबलः ॥ ८. अ ल$_2$–तं रावं । रा$_1$ च भ$_1$ भ$_2$–मेनिरे । ल$_1$–तच्छ्रुत्वा । ९. ल$_3$ ब प्र–वर्जे–शैलाग्रे धि° । १०. अ ल$_1$ ल$_2$ ब–शौटीर्याच् । ११. च भ$_1$ भ$_2$ रा$_1$–द्रावितं । १२. ल$_1$ ल$_3$ प्र–किन्नरैः । १३. अ ल$_2$–रावणः ॥

के-चित् तेजस्विनः शूराः क्षत्रिया युद्ध-दुर्मदाः ।
३७] तच्-छासनम् अ-कुर्वन्तो वि-नेशुः स-परिच्छदाः ॥३४॥ [५३
अपरे दुर्-जयं रक्षो जानानाः प्राज्ञ-सम्मताः ।[1]
३८] जिताः स्म इत्य् अभाषन्त राक्षसं बल-दर्पितम् ॥३५॥ [५४
एवं दर्पबलोत्सिक्तो रावणो लोक-रावणः ।
३९] प्रतापाऽवनतान् कुर्वन् क्षत्रियान् वि-चचार ह ॥३६॥ [५५

इत्यार्षे रामायण उत्तर-काण्डे महादेव-वाक्यं[2] नाम
पञ्चदशः सर्गः ॥ १५ ॥

---

## [ वं-१७ ]= [ षोडशः सर्गः ] =[ दा-१७ ]

अथ राम दश-ग्रीवो वि-चरन् स महो-तलम्[3] ।
१] हिमवद्-वनम् आ-साद्य परि-चक्राम रावणः ॥ १ ॥ [१
तत्राऽपश्यत कन्यां स कृष्णाऽजिन-जटा-धराम्[4] ।
२] आर्षेण वि-धिना युक्तां तप्यन्तीं[5] देवताम् इव ॥ २ ॥ [२
स दृष्ट्वा रूप-सम्पन्नां कन्यां तां सु-महा-प्रभाम् ।
४] काम-लोभ-परीऽताऽऽत्मा पप्रच्छ प्र-हसन् इव ॥ ३ ॥ [३
किम् इदं वर्तते भीरु वि-रुद्धं यौवनस्य ते ।
५] न हि युक्तं तवैतस्य रूपस्येह परि-श्रमः ॥ ४ ॥ [४
कस्याऽसि दुहिता भीरु को वा भर्ता तवाऽन्-अघे ।
७] पृच्छतः शंस मे तत्-त्वं को वा हेतुस् तपोऽर्जने ॥ ५ ॥ [६
एवम् उक्ता तु सा कन्या तेनाऽन्-आर्येण रक्षसा ।
८] अब्रवीद् विविधं(?)[6] कृत्वा तस्याऽऽतिथ्यं तपो-धना[7] ॥ ६ ॥ [७
कुश-ध्वजो नाम पिता ब्रह्मर्षिर् मम[8] धार्मिकः ।
९] बृहस्पति-सुतः श्री-मान् बुद्धया तुल्यो बृहस्पतेः ॥ ७ ॥ [८
तस्याऽहं कुर्वतो नित्यं वेदाऽभ्यासं निशा-चर ।
१०] सं-भूता वाङ्-मयी कन्या नाम्ना वेद-वती मता[9] ॥ ८ ॥ [९

---

१ च–नास्ति । २. रा$_1$ ल$_1$–दिग्विजयो । ३. ल$_1$ ल$_2$ ल$_3$ ब प्र–°तले । ४. रा$_1$–वर्जे–°जिनधरां तदा । ५. अ ल$_2$ ल$_3$ ब प्र–तथा तां । भ$_2$–तपन्तीं । ६. टि. विधिवत् (तु. वं. दा.) । ७. अ ल$_2$–°धन । ८. अ भ$_2$ रा$_1$ ल$_2$–नाम । ९. अ ल$_1$ ल$_2$ प्र–समा । भ$_1$–मम । ब–च सा ॥

ततो दैत्याः स-गन्धर्वा देव-दानव-राक्षसाः ।<br>
११] ममाऽभि-गम्य[1] पितरं वरणायोप-चक्रमुः ॥९॥ [१०<br>
न च मां स पिता तेभ्यो दत्तवान् राक्षसेश्वर ।<br>
१२] कारण तच् च वक्ष्यामि नि-शामय महा-भुज ॥१०॥ [११<br>
पितुर् हि मम जामाता योऽभिप्रेतः पुरा किल ।<br>
१३] श्रावितः स च मे मात्रा विष्णुः किल सुरोत्तमः ॥११॥ [१२<br>
शं-भुर्[2] नाम ततो राजा दैत्यानां कुपितस् तदा । [१३उ<br>
१४] तेन रात्रौ प्र-मत्तेन[3] पिता पापेन हिंसितः ॥१२॥ [१४<br>
ततो जनित्री मम[4] या[4] शरीरं सा पितुर् मम ।<br>
१५] परि-ष्वज्य महा-भागा प्र-विष्टा हव्य-वाहनम् ॥१३॥ [१५<br>
ततो मनो-रथं श्रुत्वा पितुर् नारायणं प्रति । [१६पू<br>
१६] मृतं च पितरं दृष्ट्वा[5] चर्तु-कामा महा-व्रतम् ॥१४॥<br>
१७पू] तस्य प्रेत-गतस्याऽपि करिष्यामि मनो-रथम् । [१७<br>
१९पू] मम चेदं तपो विद्धि नारायण-परीऽऽप्सया ॥१५॥ [१९उ<br>
इत्य् एतत्[6] सर्वम् आ-ख्यातं तव राक्षस-पुङ्गव । [१८उ<br>
१८] नारायणः पतिर् मह्यं न चाऽन्यो मानुषो मतः ॥१६॥ [१९पू<br>
१९उ] वि-ज्ञातस् त्वं मया राजन् पौलस्त्य-कुल-नन्दनः[7] ।<br>
जानामि तपसा सर्वं[8] त्रैलोक्ये[8] यद् धि वर्तते ॥१७॥ [२०<br>
२०] सोऽब्रवीद् रावणस् तत्र तां कन्यां कनक-प्रभाम् ।<br>
अव-तीर्य विमानाऽग्रात् कन्दर्प-शर-पीडितः ॥१८॥ [२१<br>
२१] अव-लिप्ताऽसि सु-श्रोणि यस्यास् ते मतिर्[11] ईदृशी[11] ।<br>
वृद्धानां मृग-शावाऽक्षि भ्राजते धर्म-सञ्चयः ॥[10] १९॥ [२२<br>
२२] त्वं तु सर्वगुणोपेता नाऽर्हसे कर्तुम्[9] ईदृशम् ।[10]<br>
त्रैलोक्य-सुन्दरी भूत्वा यौवने वार्धकं वि-धिम् ॥२०॥ [२३<br>
२३] कश् च तावद् असौ यं त्वं विष्णुर् इत्य् अभि-भाषसे[11] ।<br>
एकेनाऽपि न तुल्योऽसौ गुणेन मम वीर्य-तः ॥२१॥ [२५<br>
२४] मा मैवम् इति सा कन्या तम् उवाच निशा-चरम् । [२६उ<br>
२५पू] मूर्ध-जेषु च तां रक्षः कराऽग्रेण पराऽमृशत् ॥२२॥ [२८उ

१. अ च्च $ल_2$ प्र-समा° । २. $रा_1$-शुंभो । ३. $भ_2$ $रा_1$-प्रसुप्तो मे । ४. $रा_1$-मे दीना । ५. ब प्र-श्रुत्वा । ६. $ल_2$-एव । ७. $भ_1$-°नन्दन । ८. च्च $भ_2$ $रा_1$-वर्जं-°क्यं । ९. $ल_1$-कर्तुमीदृशं । १०. $रा_1$ $ल_1$-नास्ति । ११. $ल_3$ ब प्र-व्रज एव भा° ॥

ततो वेद-वती क्रुद्धा नेत्राभ्यां ज्वलतीऽव सा । [२९पू

२६] उवाचाऽग्निं समा-धाय दृष्टि-पातैर्[1] दहन्न् इ(?न्ति)व(?का)।२३[३०उ

धर्षितायास् त्वयाऽन्-आर्य नेदानीं मम जीवितम् ।

२७] क्षेमं तस्मात् प्र-वेक्ष्यामि पश्यतस् ते हुताऽशनम् ॥२४॥ [३१

यस्मात् तु धर्षिता चाऽहम् एकेन चरता वने ।

२८] तस्मात् तव वधाऽर्थाय समुत्-पत्स्याम्य् अहं पुनः ॥२५॥ [३२

न हि शक्यः[2] स्त्रिया पाप[2] हन्तुम् त्वम्[3] अ-शुभ-व्रत[4] ।

२९] शापाद् यद्य्[5] अपि मे शक्तिस्[6] तपसः[7] किं व्य्-अयेन मे ॥२६॥[३३

यदि त्व् अस्ति मया किं-चित् कृतं दत्तं हुतं तथा ।

३०] तेन ह्य् अ-योनि-जा साध्वी भवेयं धर्मिणः सुता ॥२७॥ [३४

एवम् उक्त्वा प्र-विष्टा सा ज्वलन्तं जात-वेदसम् ।

३१] पपात च दिवो दिव्या पुष्प-वृष्टिः समन्त-तः ॥२८[8]॥ [३५

३७उ] पूर्वं[9] क्रोध-हतः[9] शत्रुस् तयाऽसौ घातितस् त्वया ।

समुपा-श्रित्य शैलाऽऽभं तव वीर्यम् अ-मानुषम् ॥२९॥ [४१

३८] एवम् एषा महा-भागा पुनर् मर्त्येष्व् अजायत ।

क्षेत्रे हल-मुख-ग्रस्ते जनकस्य महाऽऽत्मनः ॥३०॥ [४२

३९] सैषा वेद-वती नाम[10] पूर्वम् आसीत् कृते युगे । [४३पू

सीतोत्पन्ना तु सीतेति मानवैः पुनर् उच्यते ॥३१॥ [४४उ

कृते युगे विनिर्-वृत्तम् एतत् पर-पुरं-जय । [N

४०] त्रेता-युगे तद्-वधाऽर्थं जज्ञे तु जनकाऽऽत्मजा ॥३२॥ [४३उ

इत्यार्षे रामायण उत्तर-काण्डे वेदवत्य्-उपाख्यानं नाम षोडशः सर्गः ॥ १६ ॥

---

१. अ ल$_1$ ल$_2$–प्रांतैर् । २. अ च ल$_1$ ल$_2$ ल$_3$ ब–शक्ताः स्त्रियः पापं । ३. भ$_1$ रा$_1$–वर्जं–त्वाम् । ४. ल$_1$ ल$_2$ ल$_3$ ब प्र–°तम् । ५. ल$_1$–वर्जं–यद् । ६. रा$_1$–वर्जं–प्राप्तं । ७. च भ$_1$ भ$_2$–तपसा । ८. अतः परमधिकः पाठः—प्र–पुनरेव हि संभूता पद्मे पद्मसमप्रभा । तस्मादपि पुनः प्राप्ता पर्यटन् तेन रक्षसा ॥ कन्यां पद्मगर्भां तां गृह्य स्वगृहान् ययुः । प्रविश्य रावणः सेनां दर्शयामास मन्त्रिणे ॥ लक्षणाग्रैर्निरीक्ष्यैव रावणस्येदमावहत् । गृहस्थैषा हि सुश्रोणी त्वद्वधायैव दृश्यते ॥ एतच्छ्रुत्वार्णवं राम संप्रचिक्षेप राक्षसः । सा क्षिप्रं क्षितिमासाद्य यज्ञायतनमध्यमा ॥ राज्ञो हलमुखाग्रस्था पुनरभ्युदिता सती । च भ$_1$ भ$_2$ रा$_1$ प्र–सैषा जनकराजस्य प्रसूता तनया प्रभो । तव भार्या महाबाहो त्वं हि विष्णुः सनातनः ॥ ९. अ–क्रोधवशः । प्र–क्रुद्धहतः । १०. ल$_1$ ल$_3$ ब–नाम्ना ॥

प्र-विष्टायां हुताऽशं तु वेद-वत्यां स रावणः ।
१] आ-रुह्य[1] पुष्पकं कृत्स्नां[1] पर्याऽक्रमत मेदिनीम् ॥ १ ॥ [१
ततो मरुत्तं नृ-पतिं यजन्तं सह दैवतैः ।
२] उशीर-बीजम् आ-साद्य शैलं प्रैक्षत रावणः ॥ २ ॥ [२
सं-वर्त्तो[2] नाम[2] विप्रर्षिः[3] साक्षाद् भ्राता बृहस्पतेः ।
३] याजयामास धर्म-ज्ञस् तं सर्वैर् ब्राह्मणैर् वृतः ॥ ३ ॥ [३
दृष्ट्वा देवास्[4] तु तद् रक्षो वर-दानात्[4] सु-दुर्जयम्[4] ।
४] तां तां योनिं समा-विष्टास् तस्माद् धर्षण-भीरवः ॥ ४ ॥ [४
इन्द्रो मयूरः सं-वृत्तो धर्म-राजस् तु वायसः ।
५] कृकलासो धनाऽध्यक्षो हंसो वै वरुणोऽभवत् ॥ ५ ॥ [५
तं राजानं समा-साद्य रावणो राक्षसाऽधिपः ।
७] प्राऽऽह युद्धं प्र-यच्छेति निर्-जितोऽस्मीऽति[6] वा वद[6] ॥ ६ ॥ [७
ततो मरुत्तो नृ-पतिः को भवान् इत्य् अभाषत ।
८] अट्ट-हासं च मुक्त्वा तद् रक्षो वचनम् अब्रवीत् ॥ ७ ॥ [८
अ-कौतूहल-भावेन[7] प्रीतोऽस्मि तव पार्थिव ।
९] भ्रातरं धन-दस्यैवं[8] रावणं यन् न वेत्सि माम् ॥ ८ ॥ [९
लोकानां न स लोकोऽस्ति यो मे वीर्यं न विन्दति ।
१०] भ्रातरं येन निर्-जित्य वि-मानम् इदम् आ-हृतम्[9] ॥ ९ ॥
ततो मरुत्तो नृ-पती रावणं प्रत्य्-उवाच ह । [१०
११] धन्यः खलु भवान् येन ज्येष्ठो भ्राता रणे जितः ॥१०॥ [११पृ
न धर्म-सदृशं प्रोक्तं न लोक-प्रतिसंहितम् ।
१२] कर्म पापाऽऽत्मकं कृत्वा श्लाघसे[10] भ्रातृ-निन्दया ॥११॥ [१२
किं त्व् एकः केवलं धात्रा निर्-मितः पाप-कर्म-कृत् ।
१३] श्रुत-पूर्वं हि न मया यादृशं भाषसे स्वयम् ॥१२॥ [१३

१. अ ल$_2$–ततो विमानमारुह्य च भ$_1$ भ$_2$ रा$_1$–पुष्पकं तत्समरुह्य । २. अ ल$_2$–°र्त्ताख्यो हि । ३. च भ$_2$–राजर्षिः । ४. रा$_1$ व प्र–वर्ज–देवांस । ५. ल$_1$–नास्ति । ६. अ ल$_1$ ल$_2$–वद वा निर्जितोस्म्यहं । ७ भ$_1$ भ$_2$ रा$_1$–आःकौतू° । ८. अ च ल$_1$ ल$_2$–°स्यैव । ९. च भ$_2$ रा$_1$–मद्भुतं । १०. भ$_1$ भ$_2$ रा$_1$ ल$_3$–वर्ज–श्लाघ्यसे ॥

गृहीत्वा तु ततश् चापं सायकांश् च नराऽधिपः ।
१५] निर्-जगाम ततस् तस्य सं-वर्त्तो[1] मार्गम् आ-वृणोत् ॥१३॥ [१५
मोऽब्रवीद्[2] धर्म-संयुक्तं मरुत्तं[3] तं महान् ऋषिः ।
१६] श्रोतव्यं यदि ते मह्यं[3] सम्प्र-हारो न ते क्षमः ॥१४॥ [१६
माहेश्वरोऽयं[4] यज्ञस्[5] ते हन्यात् कुलम् अधि-ष्ठितः । [१७
१७] दीक्षितस्य कुतो युद्धं क्रूर-त्वं दीक्षिते कुतः ।
सं-शयश् च रणे नित्यं राक्षसश् चैव दुर्-जयः ॥१५॥ [१८
१८] स नि-वृत्तो गुरोर् वाक्यान् मरुत्तः पृथिवी-पतिः ।
उत्-सृज्य स-शरं चापं स्थितो मख-मुखेऽभवत् ॥१६॥ [१९
१९] ततस् तं निर्-जितं ज्ञात्वा घोषयामास वै शुकः ।
रावणो जयतीऽत्य् उक्त्वा हर्षान् नादं वि-मुक्तवान् ॥१७॥ [२०
२०] स[6] भक्षयित्वा[6] तत्र-स्थान् ब्रह्मर्षीन् यज्ञ-सङ्गतान् ।
वि-तृष्णो रुधिरैस् तेषां पुनः सम्प्र-ययौ महीम् ॥१८॥ [२१
२१] जित-काशिनो नि-वृत्तस्य रावणस्य तु ते सुराः ।
पुनः स्व-रूपम् आ-स्थाय तानि सत्त्वान्य् अथाऽब्रुवन् ॥१९॥ [२२
२२] हर्षाद् अथाऽब्रवीच् छक्रो मयूरं नील-बर्हिणम् ।
प्रीतोऽस्मि तव धर्म-ज्ञ भुजङ्गाऽरे विहं-गम ॥२०॥ [२३
२३] मम नेत्र-सहस्रं तु यत्[7] ते बर्हिर्[7] भविष्यति ।
२४पू] मयि वर्षति हर्षं च परं त्वम् उप-यास्यसि ॥२१॥ [२४
नीलाः किल पुरा बर्हा मयूराणाम् इहाऽभवन्[8] ।
२५] सुराऽधिपाद् वरं प्राऽऽप्य गताः सर्वे विचित्र-ताम् ॥२२॥ [२५
वरुणस् त्व् अब्रवीद् धंसं गङ्गा-तोय-विचारिणम् ।
२६] श्रूयतां मे प्र-सन्नस्य वचः पत्ररथेश्वर ॥२३॥ [३०
वर्णो[9] मनो-हरः[9] सौम्यश् चन्द्र-मण्डल-निर्मलः ।
२७] भविष्यति तवोद्-अग्रः शुक्ल-तोय सम-प्रभः ॥२४॥ [३१
मच्-छरीरं समा-साद्य तोयं जलचरेश्वर ।
२८] प्राऽऽप्स्यसि[10] ह्य् अ-तुलां प्रीतिम् एतत् ते प्रीति-लक्षणम् ।२५।[३२

---

१. अ ल$_2$–संवर्तो । २ भ$_1$–वचनं । ३. ल$_1$ ल$_3$ ब–सख्यं । ४. भ$_2$ रा$_1$–वर्जं–महे° । ५. ब–यज्ञ । ६. ल$_3$ प्र–भक्षयित्वा च । ७. ल$_1$ ल$_2$ ब–पर्यंते ते । ८. रा$_1$ ब–वर्जं–इवाभ° । ९. ल$_1$–त्रुटितः । १०. ल$_1$ ल$_3$ ब प्र–प्राप्स्यसे ॥

हंसानां हि पुरा राजन् न वर्णः सर्व-पाण्डुरः ।
२९] पक्षा नीलाऽग्र-संवीताः क्रोडः सर्पाऽग्र-पाण्डुरः[1] ॥२६॥ [३३
अथाऽब्रवीद् वैश्रवणः कृकलासं गिरौ स्थितम् ।
३०] हैरण्यं सम्प्र-यच्छामि वर्णं प्रीतस् तवाऽप्य् अहम् ॥२७॥ [३४
स-द्रव्यं च शिरो नित्यं भविष्यति तवाऽक्षयम् ।
३१] एष चाऽञ्जन-को वर्णो निः-शेषं ते नशिष्यते[2] ॥२८॥ [३५
३२उ] यमस् तथाऽब्रवीद् राम वायसं[3] चोपसं-स्थितम् ।
पक्षिस् तवाऽस्मि सं-प्रीतः प्रीतस्य शृणु मे वचः ॥२९॥ [२६
३३] मृत्यु-तो वै भयं नाऽस्ति मत्-तस् तव विहं-गम ।[4]
यावत् त्वां न हनिष्यन्ति तावत् त्वं हि धरिष्यसि ॥३०॥ [२८
३४] यथाऽन्ये वि-विधैर् रोगैः पीड्यन्ते प्राणिनः सदा ।
न त्वाम् अभि-भविष्यन्ति मयि प्रीते तु वायस ॥३१॥ [२७
३५] यश्[5] च[5] मद्-विषय-स्थानां[6] मानवो निर्-वपिष्यति[7] ।
त्वयि भुक्ते तु तृप्तास् ते भविष्यन्त्य् अन्त्य-लोक-गाः ॥३२॥ [२९
एवं दत्त्वा वरांस् तेषां तस्मिन् यज्ञाऽऽश्रमे सुराः ।
३६] नि-वृत्ते यज्ञ-समये पुनः स्व-विषयं गताः ॥३३॥ [३६

इत्यार्षे रामायण उत्तर-काण्डे मरुत्त-समागमो नाम
सप्तदशः सर्गः ॥ १७ ॥

---

## [ वं-१८ ]= [ अष्टादशः सर्गः ] =[ दा-१८ ]

ततो जित्वा मरुत्तं स प्र-ययौ राक्षसेश्वरः[8] ।
१] नरेन्द्रान् अपरांस् तांस् तान् युद्ध-काङ्क्षी दुरात्म-वान् ॥ १ ॥ [१
स समा-साद्य नृ-पतीन् महेन्द्रवरुणोपमान् ।
२] अब्रवीद् राक्षसः क्रुद्धो युद्धं मे सम्प्र-दीयताम् ॥ २ ॥ [२
जिताः स्म इति वा ब्रूत ज्ञात्वैवाऽऽत्म-विनिश्चयम् ।
३] अन्य-था कुर्वतां वाचं[9] नाऽस्ति मोक्षोऽद्य जीवताम् ॥ ३ ॥ [३

१. अ प्र-°पांडरः । रा$_1$-पृष्ण्यश्च पां° । ल$_3$ ब-°राः । २. ब-वर्ज-°ति । ३. अ च भ$_2$ रा$_1$ ल$_2$ प्र-प्राग्वंशे । ४. ल$_1$-नास्ति । ५. च भ$_1$ भ$_2$ रा$_1$-वर्ज-यदि । ६. अ ल$_2$ ल$_3$-°यस्थांस्तु । ७. अ ल$_2$-°पेत्त्वयि । ८. ल$_2$-तत्र राक्षसः । ९ च भ$_1$ रा$_1$ ल$_1$-वाचो ॥

ततः सु-बहवः[1] प्राज्ञाः पार्थिवा धर्म-निश्चयाः ।
४] जिताः स्म इत्य् अभाषन्त ज्ञात्वा वर-बलं[2] रिपोः ॥ ४ ॥ [४
दुष्यन्तः सु-रथो गाधिर् जयो राजा पुरूरवाः ।
५] एते सर्वेऽब्रुवन् राम जिताः स्मेत्य् अरि-सूदन ॥ ५ ॥ [५
अथाऽयोध्यां समा-साद्य रावणो राक्षसाऽधिपः ।
६] सु-गुप्ताम् अनरण्येन शक्रेणेवाऽमरा-वतीम् ॥ ६ ॥ [६
N] स तं पुरुष-शार्दूलं पुरन्दर-समं बले ।
प्राऽऽह राजानम् आ-साद्य युद्धं मे दीयताम् इति ।
७] निर्-जितोऽस्मीऽति वा ब्रूहि ममैतद् इह शासनम् ॥ ७ ॥ [७
अनरण्यस् तु सं-क्रुद्धो राक्षसेन्द्रम्[3] अथाऽब्रवीत् । [८उ
८] स्थीयतां द्वन्द्व-युद्धे[4] मे राक्षसेन्द्राऽधिप स्वयम् ॥ ८ ॥ [९पू
अथ पूर्व-श्रुताऽर्थेन सूऽऽर्जितं[5] सु-महद् बलम् ।
९] निश्-चक्राम नरेन्द्रस्य[6] राक्षसेन्द्र-वधे धृतम् ॥ ९ ॥ [१०
नागानां बहु-साहस्रं वाजिनाम् अयुताऽन्वितम् ।
१०] महीं सं-च्छाद्य निर्-यातं स-पदाति-रथं क्षणात् ॥[8]१०॥ [११
तद् रावण-बलं प्राऽऽप्य बलं तस्य मही-पतेः ।
१२] प्राऽणश्यत तदा राजन् हुताऽऽहुतिर् इवाऽनले ॥११॥ [१३
स नश्यमानं सम्प्रेक्ष्य नरेन्द्रस् तन् महद् बलम् ।
१३] महाऽर्णवं समा-साद्य यथा पश्चाऽऽप-गा-जलम्[7] ॥१२॥ [१६
ततः शक्र-धनुः-प्रख्यं धनुर् वि-स्फार्य वीर्य-वान् ।
१५] आ-ससाद नरेन्द्रस् तं राक्षसं क्रोध-मूर्च्छितम् ॥१३॥ [१७
ततो बाण-मयं वर्षं पातयामास मूर्धनि ।
१६] तस्य राक्षस-वीरस्य सोऽनरण्यो नराऽधिपः ॥१४॥ [१९
तस्य बाणाः पतन्तस्[9] ते नाऽकुर्वन्त क्षतं क्व-चित् ।
१७] वारि-धारा इवाऽभ्रेभ्यः पतमाना मही-धरे ॥१५[10]॥ [२०

१. रा —मानवन्तः । २. अ ल$_3$—पर° । ३. च—नास्ति । ४. भ$_2$ रा$_1$—°द्धं । ५. रा$_1$—सज्जितं । ६. ल$_3$—नास्ति । अतः परमधिकः पाठः—च भ$_1$ भ$_2$ रा$_1$ प्र—अनरण्यस्य नृपते राक्षसेंद्रस्य चाऽद्भुतम् । ततः प्रवृत्तं सुमहद्युद्धं युद्ध-विशारद ॥ ७. च भ$_1$ भ$_2$ रा$_1$—सर्वापगा° । ८. अत· परमधिकः पाठः—च भ$_1$ भ$_2$ रा$_1$ प्र—अनरण्येन तेऽमात्या मारीचशुकसारणाः । प्रहस्तसहिता भग्नाः प्राद्रवंत मृगा इव ॥ ९. च भ$_1$ भ$_2$ ब—च याताहते न कुर्वंति क्षतिं । १०. अ रा$_1$ ल$_1$ ल$_3$—नास्ति ॥

ततो राक्षस-राजेन क्रुद्धेन स नराऽधिपः ।[1]
१८] तलेनाऽभि-हतो मूर्ध्नि स रथान् नि-पपात ह ॥१६॥ [२१
स राजा पतितो भूमौ विह्वलाऽङ्गः प्र-वेपते ।
१९] वज्र-दग्ध इवाऽरण्ये सालो नि-पतितोऽभवत् ॥१७॥ [२२
तं प्र-हस्याऽब्रवीद् रक्षोऽनरण्यं पृथिवी-पतिम् ।
२०] किम् इदानीं त्वया प्राऽऽप्तं मया सह[2] युयुत्सुना[3] ॥१८॥ [२३
त्रैलोक्ये नाऽस्ति[4] यो द्वन्द्वे मम तिष्ठेन् नराऽधिप[5] ।
२१] शङ्के हि[6] सक्तो[6] भोगेषु न शृणोषि[7] बलं मम[7] ॥[8]१९॥ [२४
२२पू] तस्यैवं ब्रुवतो राजा मन्दाऽसुर[9] वाक्यम् अब्रवीत् ।[10]
२३उ] किं नु शक्यं मया कर्तुं यत् कालो दुर्-अतिक्रमः ॥[11]२०॥ [२५
नह्य् अहं निर्-जितो रक्षस् त्वया ह्य् अद्याऽभि-भाविना[12] ।
२४] कालेन वाऽभि-पन्नोऽहं हेतु-भूतस् तु मे भवान् ॥२१[11]॥ [२६
किं त्व् इदानीं मया शक्यं कर्तुं प्राण-परिक्षयात् । [२७पू
२५] वाचा त्वां सम्प्र-वक्ष्येऽहम् इक्ष्वाकु-परिभाविनम् ॥२२॥ [२८पू
काल-पाशस्य हि यथा मध्ये तिष्ठन्ति मानवाः ।
२६] एत(?व)म्[13] अस्मि जितो[13] युद्धे[14] वदतः[15] शृणु[15] राक्षस[16] ।२३। [N
यदि दत्तं यदि हुतं यदि मे सु-कृतं तपः ।
२७] यदि गुप्ताः प्र-जाः सम्यक् तथा सत्यं वचोऽस्तु मे ॥२४॥ [२८उ
उत्-पत्स्यति[17] कुले ह्य् अस्मिन् इक्ष्वाकूणां महाऽऽत्मनाम् ।
२८] राजा परम-तेजस्वी यस् ते प्राणान् हरिष्यति ॥२५॥ [२९
ततो जलधरोदग्रस् ताडितो देव-दुन्दुभिः ।
२९] तस्मिंस् तदाऽद्भुते[18] शापे पुष्प-वृष्टिः पपात ह ॥२६॥ [३०

१. अ रा$_{1}$ ल$_{1}$ ल$_{3}$–नास्ति । २. ल$_{2}$ प्र–सार्ध । ३. च भ$_{1}$ भ$_{2}$ रा$_{1}$ ल$_{3}$–°त्सता । ४. ल$_{1}$ ल$_{3}$ ब प्र–कस्तु । ५. ल$_{3}$ ब प्र–°पः । ६. रा$_{1}$–प्रसक्तो । प्र–प्रमत्तो । ७. रा$_{1}$ प्र–त्वं जानासि मे बलं । ८. ल$_{3}$ ब–नास्ति । ९. रा$_{1}$–मंदाश्रुर् । १०. अतः परमधिकः पाठः—प्र–किमिदं गर्जसे युद्धे मां निहत्य विकत्थसे । नह्येवं भासते शूरः कुलीनोऽयं नराधिपः ॥ ११. ल$_{2}$–नास्ति । १२. रा$_{1}$–°भिमानिना । १३. अ ल$_{2}$–एवं वाक्यांतरे । च भ$_{1}$ भ$_{2}$ ल$_{1}$ ल$_{3}$ ब प्र–एवं वाक्योत्तरे । १४. अ भ$_{2}$ ल$_{2}$ ल$_{3}$ ब प्र–स ?ऽश)क्ते । च भ$_{1}$ ल$_{1}$–सक्तो । १५. रा$_{1}$–वर्जे–मम राक्षस । १६. अ ल$_{1}$ ल$_{2}$ ल$_{3}$ ब प्र–तिष्ठतः । च–तिष्ठसे । भ$_{1}$–तिष्ठसि । भ$_{2}$–तिष्ठति । १७. अ– उत्पत्स्यते । १८. भ$_{1}$–तद्दा कृते । रा$_{1}$–तदा हृते ॥

३०पू] ततः स राजन् राजेन्द्रो गतः स्थानं त्रि-विष्टपम् । [३१पू
N] कर्मणा तेन दुर्-धर्षस् तथा सु-व्याहृतेन च । [N
३०उ] स्वर्-गते च[1] नृ-पे[2] राम राक्षसः सन्य्-अवर्तत ॥२७॥ [३१उ

इत्यार्षे रामायण उत्तर-काण्डे पृथ्वी-जयो[2]
नामाऽष्टादशः सर्गः ॥ १८ ॥

---

## [ वं-२० ]= [ एकोनविंशः सर्गः ] =[ दा-३१]

ततो रामो महा-तेजाः स्मयित्वा पर-वीर-हा ।
१] उवाच प्र-णतो वाक्यम् अगस्त्यम् ऋषि-सत्तमम् ॥ १ ॥ [१
भग-वन् किं तदा लोकः शून्य आसीद् द्विजोत्तम । [२उ
२] येन युद्धेषु न प्राऽऽप्तो रावणः परा-जयम्[3] ॥ २ ॥ [३उ
उताऽहो क्षीण-वीर्यास्[4] ते बभूवुः पृथिवी-क्षितः ।
३] बहिष्-कृता वराऽस्त्रैश् च यैर् उक्तं वि-जिता इति ॥ ३ ॥ [४
रामस्य तु वचः श्रुत्वा अगस्त्यो भग-वान् ऋषिः ।
४] उवाच रामं प्र-हसन्[5] पिता-मह इवेश्वरम् ॥ ४ ॥ [५
स एवं बाधमानस् तु पार्थिवान् पार्थिवर्षभ[6] ।
६] चचार रावणो नाम पृथिवीं पृथिवी-पते ॥ ५ ॥ [६
ततो माहिष्मतीं नाम[7] पुरीं स्वर्ग-पुरीम् इव ।
७] संप्राऽऽप्तो यत्र सान्निध्यं राज्ञां[8] नैर्ऋत-सत्तमः ॥ ६ ॥ [७
तुल्य आसीन् नृ-पस् तत्र प्र-तापाद् वसु-रेतसः ।
८] अर्जुनो नाम बल-वान् अग्नि-कुण्डे-शयः[9] सदा ॥[10] ७ ॥ [८
तम् एव दिवसं सोऽथ हैहयाऽधिपतिर् बली ।[10]
९] अर्जुनो नर्मदा-तीरे गतः स्त्रीभिः सहेश्वरः[11] ॥ ८ ॥ [९
रावणो राक्षसेन्द्रस् तु तस्याऽमात्यान् अपृच्छत । [१०उ
१०] क्व सोऽर्जुनोऽथ नृ-पतिः शीघ्रम् आ-ख्यातुम् अर्हथ ॥ ९ ॥

१. अ च ल$_1$ ल$_2$–नृपते । २. च भ$_1$ भ$_2$–रावणपृथ्वीजयो । ३ अ ल$_2$ ल$_3$ ब–°रायणम् । च भ$_1$ भ$_2$ रा$_1$ ल$_1$–स प° । प्र– न पराभवम् । ४. च रा$_1$ ल$_1$ ल$_3$ ब प्र–हीनवीर्यास् । ५. अ ल$_2$–सहसा । ६. रा$_1$–वर्जं–°भः । ७. ल$_3$ ब प्र–वर्जं–राम । ८ भ$_1$–राज्ञो । ९. च भ$_1$–शूरः कुण्डेश्वर. । १०. रा$_1$–नास्ति । ११. ल$_3$ ब प्र–सहस्रशः ॥

रावणोऽहम् अनुप्राऽऽप्तो युद्धेप्सुः सह भू-भुजा ।
११] ममाऽऽगमनम् अ-व्यग्रास् तस्य वै सन्नि-वेद्यताम् ॥१०॥ [११
इत्य् एतद् रावणेनोक्तास् तेऽमात्याः सु-विपश्चितः ।
१२] अब्रुवन् राक्षसाऽधीऽऽशम् अ-सान्निध्यं मही-पतेः ॥११॥ [१२
श्रुत्वा वि-श्रवसः पुत्रो मन्त्रिभ्यो[1] नृ-पतिं गतम् । [१३पू
१३] अप-सृत्याऽऽस्थितो विन्ध्यम् उल्-लिखन्तम् इवाऽम्बरम् ।[2]१२।[१४उ
सहस्रशिखरोपेतं[3] सिंहाऽध्युषित-कन्दरम् ।
१५] प्रपात-पतितैः शीतैः साऽट्ट-हासम् इवाऽम्बुभिः ॥१३॥ [१५
देव-दानव-गन्धर्वैः साऽप्सरो-गण-किन्नरैः ।
१६] क्रीडमानैः[4] सह स्त्रीभिः[4] स्वर्ग-भूतम् इवोत्थितम् ॥१४[5]॥ [१६
नदीभिः स्यन्दमानाभिः षड्-गुण-प्रति-मण्डलम्[6] ।
१७]स्फुटा(?फणा)भिश्[7] चलदीर्घाभिर्[7] उन्-मत्त(?अन्-अन्त)म् इव धिष्ठितम्
उल्का-वन्तं दरी-वन्तं हिमवत्-सन्निभं गिरिम् ।
१८] पश्यन्न् एवं तदा विन्ध्यं रावणो[9] नर्म-दां[8] ययौ[8] ॥१६॥
चलोपलजलां[10] पुण्यां दक्षिणोदधि-गामिनीम् । [१८
१९] महिषैश् चमरैः सिंहैः शार्दूलर्क्षैर्[11] गजोत्तमैः[11] ।
उष्णाऽभितप्तैस्[12] तृषितैः संक्षोभित-जलाऽऽशयाम्[13] ॥१७॥ [१९
२०] चक्र-वाकैः स-कादम्बैः सहस्रैर् जल-कुक्कुटैः ।
सारसैश् च सदा मत्तैः कूजद्भिश् च समा-वृताम् ॥१८॥ [२०
२१] फुल्ल-द्रुम-कृतोत्तंसां चक्रवाक-युग-स्तनीम्[14] ।
विस्तीर्ण-पुलिन-श्रोणीं[15] हंसाऽऽवलित-मेखलाम्[16] ॥१९॥ [२१
२२] पुष्प-रेण्व्-अनुलिप्ताऽङ्गीं जल-पुष्पाऽम्बरैर्[17] वृताम्[17] ।
जलाऽवगाह-संस्पर्शां फुल्लोत्पल-शुभेक्षणाम्[18] ॥२०॥ [२२

---

१. रा$_1$-वर्जं-पौरेभ्यो । २. अतः परमधिकः पाठः—प्र-जलदच्छन्नमूर्धानं मत्तकुंजरसंकुलम् । अपश्यद्रावणो विन्ध्यमाह्वयन्तमिवाऽचलम् ॥ ३. च भ$_1$ रा$_1$-वर्जं-शिरसोपेतं । ४. अ ल$_1$ ल$_2$-क्रीडनैः सहभार्यैश्च । ५. च-नास्ति । ६. रा$_1$-°प्रतिम जनं । भ$_1$-वर्जं-°प्रतिमं जलं । ७. अ ब ल$_1$ ल$_2$ ल$_3$ ब-स्फुट-निश्चलवीर्याभिर् । ८. अ ल$_2$-तुष्टोऽभूद् । ल$_1$ ल$_3$ ब प्र-स रेमे । ९. अ ल$_1$ ल$_2$ ल$_3$ ब प्र-राक्षसाधिपः । १०. अ ल$_2$ ल$_3$ ब-°पलामलां । ११. अ ल$_2$ ल$_3$ ब-शार्दूलार्क्षग° । १२. ल$_1$ ब-उष्णाभिभूतैस् । प्र-ग्रीष्माभि° । १३. च रा$_1$ प्र-°शयं । १४. रा$_1$-कस्तनी बभौ । ब-°कक्कृतस्तनीं । १५. रा$_1$ ब-वर्जं-°र्णत्रिपुल-श्रोणीं । १६. रा$_1$-हंसाचालितमे° । १७. भ$_1$-जलफेनाऽम्बरां शुभां । रा$_1$-°म्बरा-वृतां १८. भ$_1$ रा$_1$-फुल्लोत्फुलशु° ॥

२३] पुष्पकाद् अव-रुह्याऽऽशु नर्म-दां सरितां वराम् ।
प्रियाम् इव वरां नारीम् अव(?वाऽ)गाहद् दशाऽऽननः ॥२१॥ [२३
२४] स तस्याः पुलिने रम्ये नाना-कुसुम-चित्रिते ।
२५पू] सुखोपविष्टः सचिवैः सार्धं राक्षस-पुङ्गवः ॥२२॥ [२४
N] आ-स्थाय[1] नर्मदा-तोयं गाङ्गेयम् इव[2] रावणः ।
२५उ] नर्मदा-दर्शने हर्षं तदाऽगाद्[3] राक्षसाऽधिपः[4] ॥२३॥ [२५
ततः स-लीलं प्र-हसन् रावणो राक्षसाऽधिपः ।[5]
२६] उवाच सचिवांस् तत्र मारीच-शुक-सारणान् ॥२४॥ [२६
एष रश्मि-सहस्रेण जगत् कृत्वैव काञ्चनम् ।
२७] तीक्ष्णाऽऽतप-करः[6] सूर्यो नभसो मध्यम् आ-स्थितः ।
माम् आसीनं विदित्वेह चन्द्राऽऽतप इवांऽशु-मान् ॥२५॥ [२७
२८] नर्मदा-जल-शीतां(?त)ऽशु(?श्र)[7] सु-गन्धः[8] श्रम-नाशनः ।
मद्-भयाद् अ-निलो ह्य् एष वाति सद्यः शनैः शनैः ॥२६॥ [२८
२९] इयं चाऽपि सरिच्-छ्रेष्ठा नर्म-दा पुण्य-वर्धिनी ।
लीन-मीन-तरङ्गोर्मिः शङ्कितेवाऽङ्गना स्थिता ॥२७॥ [२९
३०] सर्व-तस्[9] तु क्षताः शस्त्रैर् नृ-पैर् इन्द्र-समैर् युधि ।
चन्दनस्य रसेनेव रुधिरेण सम्-उक्षिताः ॥२८॥ [३०
३१] ते भवन्तोऽव-गाहन्तु नर्म-दां शर्म-दां नृणाम् ।
यथा[10] त्रि-पथ-गां मत्तां[10] गङ्गाम् इव महा-गजाः ॥२९॥
३२] अस्यास् तीरं महा-नद्याः पावनं च निशा-चराः[11] । [३१
वि-चरध्वं महाऽऽत्मानः पुष्पाऽऽहरण-कारणात् ॥३०॥ [N
३३] महोदराऽत्र पुलिने नर्म-दायाः शशि-प्रभे ।
पुष्पोपहारं विधि-वत् करिष्यामि[12] ह्य् उमा-पतेः ॥३१॥ [३२
३४] रावणेनैवम् उक्तास् तु मारीच-शुक-सारणाः ।
स-महोदर-धूम्राऽक्षा अव-तेरुर् महा-नदीम् ॥३२॥ [३३

---

१. च-भास्नाय । भ$_{1}$ भ$_{2}$ रा$_{1}$-भाख्याय । २. भ$_{1}$-इति । ३. च भ$_{1}$ भ$_{2}$ रा$_{1}$-तदायद् । ल$_{1}$-तदागच्छद् । ४. रा$_{1}$-°सेश्वरः । ल$_{1}$-दशाननः । ५. ल$_{1}$-नास्ति । ६. ल$_{1}$ प्र-तीक्ष्णताप° । ७. रा$_{1}$-°दाया जलं शीतं । टि. तु. दा. । ८. भ$_{1}$ रा$_{1}$-वर्ज-सुगंधिः । भ$_{2}$-सुगंधी । ९. रा$_{1}$-भवन्तस् । ल$_{3}$ ब प्र-सर्वथा । १०. भ$_{1}$-सलीलं वै त्रिपथगां मत्तां । रा$_{1}$-सलिलं तु त्रिपथगां मत्तां । ११. अ ल$_{1}$-विशेषतः । १२. च-पूजिष्यामि ॥

३५] राक्षसेन्द्र-भुजैस् तैस् तु क्षोभ्यते नर्म-दा नदी ।
वामनाऽञ्जन-पद्माऽऽभैर् गङ्गेव[1] हि[1] महा-गजैः ॥[2]३३॥ [३५

३६] ततस् ते राक्षसाः सर्वे नर्म-दाया वराऽम्भसि ।
उत्-तीर्य पुष्पाण्य् आ-जह्रुर् बल्य्-अर्थं रावणस्य च ॥३४॥ [३५

३७] नर्मदा-पुलिने रम्ये शुभ्राऽभ्र-सदृश-प्रभे ।
राक्षसेन्द्रैर् मुहूर्तेन कृतः पुष्प-मयो गिरिः ॥३५॥ [३६

३८] पुष्पेषूऽप-हृतेष्व् आशु रावणो राक्षसेश्वरः[3] ।
अव-तीर्णो नदीं स्नातुं गङ्गाम् इव महा-गजः ॥३६॥ [३७

३९] तत्र स्नात्वा तु[4] विधि-वज् जप्त्वा[5] जप्यम्[5] अनु-उत्तमम् ।
नर्मदा-सलिलात् तस्मात् उत्-ततार स रावणः ॥३७॥ [३८

४०] रावणं प्राऽञ्जलिं यान्तम् अन्व्-अयुः सर्व-राक्षसाः[6] ।
N] गायन्तो मधुरं तत्र नृत्यन्तश् च महा-बलाः ॥३८॥ [३९

४२उ] यत्र यत्र हि याति[7] स्म रावणो राक्षसाऽधिपः[7] ।[8]
४३पू] जाम्बुनद-मयं लिङ्गं तत्र[9] तत्र स्म नीयते[9] ॥३९॥ [४०

लिङ्गं तु[10] पूजयन्[10] रक्षो रावणो लोक-रावणः ।
जप्योपहारैः सततं गन्ध-पुष्पैश् च नित्य-शः ।
N] बलि-धूप-प्रदानैश् च रावणो लिङ्गम् आर्चयत्[11] ॥४०॥ [N
सर्व-वादित्र-नादैश् च शर्वम् आऽराधयत् प्र-भुः ।
N] घृत-क्षीराऽभिषेकैश् च[12] दध्ना चाऽप्य् उदकेन च ॥४१॥ [N
पट्टैः कौशेय-संमिश्रैर् नामाऽष्ट-शत-संस्तवैः ।
N] शुशुभे तत्र लिङ्गं च सर्व-रत्न-विभूषितम् ॥[13]४२॥ [N

१. च भ$_1$ भ$_2$ रा$_1$-गंगा इव । २. अतः परमधिकः पाठः—रा$_1$ भ$_1$-स तस्याः पुलिने रम्ये नानाकुसुममंडिते । सुखोपविष्टः सचिवैः सार्धं राक्षसपुंगवः ॥ अध्यास्ते नर्मदातोयं गांगेयमिव रावणः । नर्मदादर्शने तद्धृयत्नवान्राक्षसेश्वरः ॥ ३. अ ल$_2$-°साधिपः । ४. रा$_1$-च । ५. च-दृष्ट्वा विधिं । ६. रा$_1$-वर्ज-सहरा° । ७. अ ल$_2$ ल$_3$ ब प्र-यांति स्म राक्षसेंद्रस्य मंत्रिणः । ल$_1$ प्र-यांति स्म तत्र तत्र ववौ मरुत् । ८. अतः परमधिकः पाठः—ल$_3$ ब-सुगंधः शीतलश्चापि तत्र तत्र ववौ मरुत् । अ ल$_1$ ल$_2$ ल$_3$ ब प्र-रावणो राक्षसश्चात्र प्रतस्थे युद्धलालसः ॥ ९. अ-तत्रस्थमवनी° । १०. अ ल$_2$-त्वपूजयद् । ११. च भ$_1$ भ$_2$ रा$_1$ ल$_2$-अर्च° । १२. च भ$_1$ भ$_2$-तु । १३. रा$_1$-नास्ति ॥

अर्चयित्वा[1] तु तं देवं यद् आ-रभति रावणः ।[2]
N] तत् सर्वं सिध्यते तस्य शिव-लिङ्गं यदाऽर्चयेत् ॥[3]४३॥ [N

बालुका-वेदि-मध्ये तु लिङ्गं सं-स्थाप्य रावणः ।
४३] अर्चयामास पुष्पैश् च गन्धैश् चाऽमृत-गन्धिभिः ॥४४॥ [४१
ततः सदा चाऽऽर्त्ति-हरं हरं तदा
वर-प्रदं चन्द्रमसा वि-भूषितम् ।
तम् अर्चयित्वा शिरसा महीं गतः
४४] प्र-सार्य हस्तांश्[4] च जगौ ननर्त च ॥४५॥ [४२

इत्यार्षे रामायण उत्तर-काण्डे रेवा-तीर-गमनं
नामैकोनविंशः सर्गः ॥ १९ ॥

---

## [ वं-२१ ]= [ विंशः सर्गः ] =[ दा-३२ ]

नर्मदा-पुलिने रम्ये राक्षसेन्द्रः स रावणः ।
१] पुष्पोपहारं कुरुते तस्माद् देशाद् अदूर-तः[5] ॥ १ ॥ [१
अर्जुनो जयतां श्रेष्ठो माहिष्मत्याः पतिः प्र-भुः ।
२] क्रीडते सह नारीभिर् नर्मदा-तोयम्[6] आ-श्रितः ॥ २ ॥ [२
तासां मध्य-गतो राजा रराज[7] स[8] ततोऽर्जुनः[8] ।
३] करेणूनां सहस्रस्य मध्य-स्थ इव कुञ्जरः ॥ ३ ॥ [३
जिज्ञासुः स तु बाहूनां सहस्रस्योत्-तमं बलम् ।
४] रुरोध नर्मदा-तोयं बाहुभिर् बहुभिः प्र-भुः ॥ ४ ॥ [४
कार्तवीर्य-भुजैः[9] सेतुं तज्-जलं प्राऽऽप्य निर्-मलम् ।
५] कूलाऽपहारं कुर्वाणं प्रति-स्रोतःसु[10] धावति[10] ॥ ५ ॥ [५
स-मीन-नक्र-मकरः स-पुष्प-कुश-संस्तरः ।[11]
६] स नर्मदाऽम्भसो वेगः प्रावृट्-काल इवाऽभवत् ॥ ६ ॥ [६

१. भ$_2$-अर्घयित्वा । २ रा$_1$-नास्ति । ३. अतः परमधिकः पाठः—च भ$_1$ भ$_2$ रा$_1$ ल$_1$ ब-अप्यवज्ञां करोत्यत्र रावणो दुर्मतिर्यदा । ऋषिभिर्दैवतैश्चास्य मृत्युः संचिंत्यते तदा ॥ स तु रक्षो न जानीते विधिहीनं तदार्चयेत् । ४. अ ल$_1$ ल$_2$ ल$_3$ ब प्र-हस्तौ । ५. अ ल$_2$-°रगः । ६. अ भ$_1$ भ$_2$ ल$_2$ ल$_3$-तीरम् । ७ प्र-ररास । ८. रा$_1$-समरेऽर्जुनः । ९. भ$_2$-वर्ज-°भुजान् । १०. रा$_1$-°तः प्रधावितं । ११. ल$_2$-नास्ति ॥

स वेगः कार्तवीर्येण संप्रेषित इवाऽम्भसः ।
७] पुष्पोपहारं तत् सर्वं रावणस्य जहार ह ॥ ७ ॥ [७
रावणोऽर्ध-समाप्तं तम्[1] उत्-सृज्य नि-यमं तदा ।
८] नर्म-दां[2] पश्यते[2] कान्तां प्रति-कूलां यथा प्रियाम् ॥ ८ ॥ [८
पश्चिमेन तु तं दृष्ट्वा सागरोद्गार-सन्निभम् ।
९] वर्धन्तम्[3] अम्भसां वेगं पूर्वां दिशम् अपश्यत ॥ ९ ॥ [९
तत्राऽनु-उद्भ्रान्त-शकुनां स्व-भावे[4] परमे[4] स्थिताम् ।
१०] निर्विकाराऽर्णवाऽऽभासाम्[5] अपश्यद् रावणो नदीम् ॥१०॥ [१०
अङ्गुल्या[6] सव्य-हस्तस्य[6] शशास हि दशाऽऽननः ।
११] वेग-प्रभावम् अन्व्-एष्टुं मन्त्रिणौ शुक-सारणौ ॥११॥ [११
तौ च रावण-संदिष्टौ भ्रातरौ शुक-सारणौ ।
१२] व्योम-मार्ग-चरौ[7] वीरौ प्र-स्थितौ पश्चिमा-मुखौ ॥१२॥ [१२
अर्ध-योजन-मात्रं[8] तु गत्वा तौ च निशा-चरौ ।
१३] पश्येतां पुरुषं तोये क्रीडन्तं सह-योषितम् ॥१३॥ [१३
बृहत्-साल-प्रतीकाशं[9] तोय-व्याकुल-मूर्धजम् ।
१४] मद-रक्ताऽन्त-नयनं मदनाऽऽकार-वर्चसम्[10] ॥१४॥ [१४
नदीं बाहु-सहस्रेण रुन्धन्तम् अरि-मर्दनम्[11] ।
१५] गिरि-पाद-समीपे तु सर्व-कान्ताऽभिनन्दितम् ।[12] [१५
१६उ] स-मदानां[13] करेणूनां सहस्रेणेव कुञ्जरम् ॥१५॥ [१६उ
तम् अद्भुत-तमं दृष्ट्वा राक्षसौ शुक-सारणौ ।
१७] सन्नि-वृत्ताव् उपा-गम्य रावणं तम् अथोचतुः ॥१६॥ [१७
बृहत्-साल-प्रतीकाशः[14] कोऽप्य् असौ राक्षसेश्वर ।
१८] नर्म-दां रोधयन् बद्ध्वा क्रीडापयति योषितः ॥१७॥ [१८
तेन बाहु-सहस्रेण सन्निरुद्ध-जला[15] नदी ।
१९] सागरोद्गार-सङ्काशान् उद्-गारान् सृजते[16] बहून् ॥१८॥ [१९

---

१. च प्र-तु । २. रा$_1$-अपश्यन्नर्मदां । ३. ल$_3$-बबन्ध । ४ अ ल$_2$-°वोप° । ५. ल$_3$ ब प्र-वर्जं-°रारुणाभासां । ६. रा$_1$-वर्जं-करेण सव्येनांगुल्या । ७. अ-वेगमानौ वरौ । भ$_1$ ल$_1$-वेपमानौ वरौ । ८. अ-°मानं । ९. भ$_1$ भ$_2$ रा$_1$-बृहच्छाल° । १०. अ ब ल$_2$-°नाक्रांतचक्षुषं । ल$_1$ ल$_3$ प्र-°नांतकवर्चसं । ११. ल$_1$-अरिसूदनं । १२. अ-नास्ति । १३. इतः पूर्वं "बालानां वरनारीणां सहस्रेण समावृतम्" इति श्लोकार्धस्त्रुटितः द्र. (तु. वं., दा.) । १४. च भ$_1$ भ$_2$ रा$_1$-बृहच्छाल° । १५. ल$_3$ ब प्र-संरुद्धसलिला । १६. अ ल$_1$ ल$_2$ ल$_3$ ब प्र-सृजती ॥

इत्य् एवं भाषमाणौ तौ नि-शम्य शुक-सारणौ ।

२०] रावणोऽर्जुन इत्य् उक्त्वा प्र-तस्थे[1] युद्ध-लालसः[1] ॥१९॥ [२०

अर्जुनाऽभिमुखे तस्मिन् प्र-स्थिते राक्षसेश्वरे ।

२१] चण्डः प्र-वाति पवनः स-नादः स-रजास् तथा ॥२०॥ [२१

महोदर-महापार्श्व-धूम्राऽक्ष-शुक-सारणैः ।

२२] सं-वृत्तो राक्षसेन्द्रस् तु तत्राऽगाद् यत्र सोऽर्जुनः ॥२१॥ [२२

नाऽति-दीर्घेण कालेन स तदा राक्षसो बली ।

२३] स नर्मदा-ह्रादं भीमम् आ-जगामाऽञ्जन-प्रभः ॥२२॥ [२३

स तत्र स्त्री-परिवृतं गीत-वाद्य-निनादितम् ।

२४] नरेन्द्रं पश्यते राजा रावणो[3] राक्षसो बली[3] ॥२३॥ [२४

स रोषाद् रक्त-नयनो राक्षसेन्द्रो बलोद्धतः ।

२५] इत्य् एवम् अर्जुनाऽमात्यान् प्राऽऽह गम्भीरया गिरा ॥२४॥ [२५

अमात्याः[4] शीघ्रम् आ-ख्यात[5] हैहयस्य नृपस्य माम् ।

२६] युद्धाऽर्थी[6] समनुप्राऽऽप्तो रावणो नाम राक्षसः ॥२५॥ [२६

रावणस्य वचः श्रुत्वा मन्त्रिणोऽथाऽर्जुनस्य ते ।

२७] उत्-तस्थुः साऽऽयुधास् ते वै रावणं[7] वाक्यम् अब्रुवन् ॥२६॥ [२७

२८पू] रणस्य कालोऽविज्ञातः साधु रावण[8] तं(?ते) शृणु ।

२९पू] क्षीबं च स्त्री-प्रसक्तं च बाधयेत रिपुं न तु ॥२७॥ [२८

२८उ] क्षीबं च स्त्री-प्रसक्तं[9] च[9] योद्धुम् इच्छति को नृ-पम् ।

२९उ] वाशिता-मध्य-गं[10] दीप्तं शार्दूल इव कुञ्जरम् ॥२८॥ [२९

क्षमस्वाऽद्य दश-ग्रीव वस चैकां क्षपाम् इमाम् ।

३०] युद्ध-श्रद्धां वि-नेता ते वि-श्वस्तः सम्-अरेऽर्जुनः ॥२९॥ [३०

अथवाऽप्य् अ-समाप्ताऽद्य[11] युद्ध-श्रद्धा च ते यदि ।

३१] नि-हतस् त्वं ततो युद्धाद् अर्जुनेनोप-यास्यसि ॥३०॥ [३१

ततस् तु रावणाऽमात्यैर् अमात्याः पार्थिवस्य ते ।

३२] बहु-धा[12] द्राविता युद्धे भक्षिताश् च बुभुक्षितैः ॥३१॥ [३२

---

१. अ ल२–रावणो । रा१–उत्तस्थौ । ल१ ल३ ब प्र–त्वरया । २. अ ल१ ल२ ल३ ब प्र–नर्मदां ययौ । ३. च भ१ भ२ रा१–राक्षसानां तदार्जुनं । ४. च ल३ प्र–मामात्या: । ५. अ ल२–आगत्य । ६. च ल३ प्र–युद्धार्थं । ७. अ ल२–निष्ठुरा । ८. अ ल२–राक्षस । ९. च भ१ रा१–स्त्रीगतं चैव । १०. ल१ ब–वर्जं–वासिता° । ११. अ भ२ ल१–°माप्ते हि । च भ१ ल२ प्र–°समस्तेऽद्य । १२. अ ल१ ल२–बहुशो ।

ततो हलहला-शब्दो नर्मदा-तीर-सन्निधौ ।
३३] अर्जुनस्याऽनु-यात्राणां रावणस्य च मन्त्रिणाम् ॥[1]३२॥ [३३
३४पू] इषुभिस् तोमरैः शूलैर् मुष्टिभिर् वज्र-कम्पनैः ।
रावणेनाऽऽहतानां[2] तु[3] समन्ताद् बलिनां तदा ॥३३॥ [३४
३५] हैहयाऽधिप-योधानां वेग आसीत् सु-दारुणः ।
स-नक्र-मीन-मकरः[4] सम्-उद्रस्येव[5] सं-क्षये ॥३४॥ [३५
३६] रावणस्य तु ते भृत्याः प्रहस्त-शुक-सारणाः ।
कार्तवीर्य-बले क्रुद्धा ज्वलन्त इव तेजसा ॥३५॥ [३६
३७] अर्जुनायाऽथ तत् कर्म रावणस्य[6] तु[6] मन्त्रिणाम् ।
क्रीडमाणाय कथितं पुरुषैर् द्वार-दर्शिभिः ॥३६॥ [३७
३८] न भेतव्यम् इति ह्य् उक्त्वा स्त्री-जनं स ततोऽर्जुनः ।
उत्-ततार जलात् तस्माद् गङ्गा-तोयाद् इव[7] द्वि-पः[7] ॥३७॥ [३८
३९] क्रोधाऽधिष्ठित-नेत्रस् तु स ततोऽर्जुन-पावकः ।
प्र-जज्वाल यथा घोरो युगाऽन्ताऽर्णव-पावकः ॥[8]३८॥ [३९
४०] स तूर्ण-तरम् आ-दाय वरां हेमाऽङ्गदां[9] गदाम् ।
अभ्याऽद्रवद्[10] रक्षांसि तमांसीऽव दिवा-करः ॥३९॥ [४०
४१] बाहु-विक्षेप-करणैः समुद्यत-महा-गदैः[11] ।
गारुडं रूपम् आ-स्थाय नि-पपातैव सोऽर्जुनः ॥४०॥ [४१
४२] तस्य मार्गं समा-वृत्य विन्ध्योऽर्कस्येव पर्वतः ।
स्थितो मेरुर् इवाऽकम्प्यः प्र-हस्तो मुसलाऽऽयुधः[12] ॥४१॥ [४२
४३] ततोऽस्य लोह-मुसलं[13] नर्दयित्वा[14] बलोत्कटः[15] ।
प्र-हस्तः प्रैषयत्[16] क्रुद्धो ननाद च यथाऽम्बु-दः ॥४२॥ [४३
४४] तस्याऽग्रे मुसलस्याऽग्निम्[17] अशोकाऽऽपीड-सन्निभम्[18] ।

१. इतः परं च-३५-शश्लोकं यावन्नास्ति । २. भ$_1$-°नार्दितानां । ३. भ$_1$ रा$_1$ ल$_1$ ब प्र-हि । ४. भ$_1$-नास्ति । ५. रा$_1$-°द्रस्य च । ६. अ भ$_2$ ल$_2$-°स्याथ । रा$_1$-°स्य च । ७. अ-द्विपं यथा । ८. अ-नास्ति । ९. प्र-°दो । १०. भ$_1$ भ$_2$ ल$_3$ प्र-अभ्यद्र° । ११. अ भ$_1$ भ$_2$ रा$_1$ ल$_1$ ल$_2$-°गदः । च-°गदाः । १२. भ$_1$ भ$_2$ रा$_1$-मुशला° । १३. अ ल$_1$ ल$_2$ ब-°मुसुलं । च भ$_1$ भ$_2$ रा$_1$-°मुशलं । १४. ल$_1$-भ्रामयित्वा । १५. अ ल$_2$ ब-महोत्कटः । १६. अ च ल$_2$-प्रेष्य यत् । १७. अ ल$_1$ ल$_3$ ब-मुसुलस्याग्निर् । ल$_2$-मुसुल° । च भ$_1$ भ$_2$ रा$_1$-मुशलस्याग्निर् । १८. च भ$_2$ ल$_2$-वर्जं-°भः ॥

प्रहस्त-कर-मुक्तस्य निर्-ईक्ष्य[1] प्र-हसन्न् इव ॥४३॥ [४४

४५] अथाऽऽपतन्तं मुसलं कार्तवीर्यस् तदाऽर्जुनः ।
नि-पुणं वञ्चयामास[2] गदया गज-विक्रमः ॥४४॥ [४५

४६] ततस् तम् अभि-दुद्राव प्र-हस्तं हैहयाऽधिपः ।
भ्रामयंस्[2] तां[2] गदां गुर्वीं तस्य[3] बाहु-समुच्छ्रिताम्[3] ॥४५॥ [४६

४७] तेनाऽऽहतोऽति-वेगेन प्र-हस्तो गदया तदा ।
नि-पपात ततः शैलो वज्रि-वज्राऽऽहतो यथा ॥४६॥ [४७

४८] प्र-हस्तं पतितं दृष्ट्वा मारीच-शुक-सारणाः ।
स-महोदर-धूम्राऽक्षा अप-क्रान्ता[4] रणाऽजिरात् ॥४७॥ [४८

४९] अप-यातेष्व्[5] अमात्येषु प्र-हस्ते च नि-पातिते ।
रावणोऽभ्य-अद्रवत् तूर्णम् अर्जुनं नृप-सत्तमम् ॥४८॥ [४९

५०] सहस्र-बाहोस् तद् युद्धं रावणस्य च दारुणम् ।
नृप-राक्षसयोस् तत्र वि-षमं रोम-हर्षणम् ॥४९॥ [५०

५१] सागराव् इव सं-क्षुब्धौ[6] चल-मूलाव् इवाऽचलौ । [५१पू
बलोद्धतौ यथा नागौ वाशिताऽर्थे महा-बलौ ॥[7]५०॥ [५२पू

५२] ओजो-दृप्ताव् इवाऽऽदित्यौ प्र-दहन्ताव्[8] इवाऽनलौ । [५१उ
मेघाव् इव प्र-नर्दन्तौ सिंहाव् इव बलोत्कटौ ॥५१॥ [५२उ

५३] रुद्र-कालाव् इवाऽत्य्-उग्रौ[8] तथा राक्षसाऽर्जुनौ ।

५४पू] परस्परं गदाभ्यां च ताडयामासतुर् भृशम् ॥५२॥ [५३

५५पू] वज्र-प्रहारान् अ-तुलान् यथा मेघौ वि-षेहतुः[9] ।

५४उ] गदा-प्रहारांस् तौ तद्-वद्[10] असहेतां परस्परम्[10] ॥५३॥ [५४

५५उ] यथाऽशनि-रवेभ्यस् तु जायन्ते वै प्रति-स्वनाः ।
तथा ताभ्यां गदाऽऽघातैर् दिशः सर्वाः प्रति-स्वनाः[11] ॥[12]५४॥ [५५

५६] अर्जुनस्य गदा सा हि क्षिप्यमाणा तथोरसि ।
काञ्चनाऽऽभं नभश् चक्रे विद्युत् सौदामिनी यथा ॥५५॥ [५६

५७] तथैव रावणेनाऽपि पात्यमाना मुहुर्-मुहुः ।
अर्जुनोरसि निर्-भाति रवि-ज्योतिर्[13] महा-गिरौ ॥५६॥ [५७

---

१. अ–नास्ति। २. भ₁ रा₁ ब ल₁–वर्जं–भ्रामयंतं। ३. भ₁ रा₁–पंचबाहु-शतोच्छ्रि°। ब–प्रहस्तस्य समु°। ४. ब–वर्जं–अपा°। ५. च भ₁ भ₂ रा₁–अपाक्रांतेष्व्। ६. अ च रा₁ ल₂–संक्रुद्धौ। ७. अतः परमधिकः पाठः—प्र–घोणाविव विनर्दंतौ सिंहाविव बलोत्कटौ। ८. अ ब–नास्ति। ९. प्र–विरेचतुः। १०. च भ₁ भ₂ रा₁ ल₃ प्र–°वस्सहेतां नरराक्षसौ। ११. ब–प्रतिश्रुताः। १२. अ ल₂ ल₃–नास्ति। १३. च भ₁ भ₂ रा₁–गदोल्केव॥

५८] नाऽर्जुनः खेदम् आ-याति न राक्षसगणेश्वरः ।
समम् आसीद् द्वयोर् युद्धं यथा पूर्वं बलीऽन्द्रयोः ॥५७॥ [५८
५९] ऋषभाव् इव तौ शृङ्गैर् दन्ताऽग्रैर् इव कुञ्जरौ ।
परस्परं जघ्नतुर् वै नर-राक्षस-पार्थिवौ ॥५८॥ [५९
६०] ततोऽर्जुनेन क्रुद्धेन सर्व-प्राणेन सा गदा ।
स्तनयोर् अन्तरे मुक्ता रावणस्य महा-मृधे ॥५९॥ [६०
६१] वरदान-कृत-त्राणे सा गदा रावणोरसि ।
दुर्-बलेव यथा सेना द्विधा भूताऽपतत् क्षितौ ॥६०॥ [६१
६२] स चाऽर्जुन-प्रमुक्तेन गदा-वेगेन रावणः ।
अपाऽसर्पद्[1] धनुर्-मात्रं नि-षसाद च धि-ष्ठितः ॥[2]६१॥ [६२
६३] वि-ह्वलं तु समा-लक्ष्य दश-ग्रीवं ततोऽर्जुनः ।[3]
सहसा प्रति-जग्राह गरुत्-मान् इव पन्न-गम्[3] ॥६२॥ [६३
६४] स तं बाहु-सहस्रेण बलेनाऽऽदाय राक्षसम् ।
बबन्ध बल-वान् राजा बलिं नारायणो यथा ॥६३॥ [६४
६५] बध्यमाने दश-ग्रीवे सिद्ध-चारण-देवताः ।
साधु साध्व् इत्य् अभाषन्त किरन्तः कुसुमं बहु ॥६४॥ [६५
६६] व्या-घ्रो मृगम् इवाऽऽसाद्य सिंहो वा हस्तिनं[4] यथा[5] ।[5]
ररास हैहयो राजा हर्षाद् अम्बुद-वन् मुहुः ॥६५॥ [६६
६७] प्र-हस्तोऽथ समा-श्वस्तो दृष्ट्वा बद्धं दशाऽऽननम् ।
सह तै राक्षसैः क्रुद्धैः प्र-दुद्राव नराऽधिपम् ॥६६॥ [६७
६८] नक्तं-चराणां वेगस् तु तेषाम् आ-पततां बभौ ।
उद्-भूतानां तपाऽपाये सम्-उद्राणाम् इवोद्-धतः ॥६७॥ [६८
६९] मुञ्च मुञ्चेत्य् अभाषन्त तिष्ठ तिष्ठेति चाऽसकृत् ।
मुसलानि[6] च शैलांश् च अर्जुने ससृजुस् तदा ॥६८॥ [६९
७०] अ-प्राऽऽप्तान्य्[7] एव तान्य्[8] आशु ह्य् अ-सम्भ्रान्तस् ततोऽर्जुनः ।
आ-युधानि सुराऽरीणां जग्राह च ननाद च ॥६९॥ [७०
७१] ततस् तैर् एव रक्षांसि दुर्-धर्षः प्रवराऽऽयुधैः ।
भित्त्वा वि-द्रावयामास वायुर् अम्बु-धरान् इव ॥७०॥ [७१

---

१. भ$_१$ रा$_१$–वर्ज-अथास° । २. ल$_२$–नास्ति । ३. भ$_१$–°गौ । ४. रा$_१$–मृगयूथपं । ५. अ ल$_१$–नास्ति । ६. अ ल$_१$ ल$_२$ ल$_३$ ब–मुसुलानि । च भ$_१$ भ$_२$ रा$_१$–मुशलानि । ७. च भ$_१$ भ$_२$ रा$_१$–°प्तान् । ८. भ$_१$ भ$_२$ रा$_१$–तान् ॥

७२] राक्षसांस् त्रासयित्वा तु कार्तवीर्योऽर्जुनस्[1] तदा ।
७३पू] गृहीत्वा नगरीं रक्षः प्र-विवेश सुहृद्-वृतः[2] ॥७१॥ [७२
स कीर्यमाणः कुसुमोत्करैः शुभैर्
द्वि-जैः स-पौरैः पुरुहूत-सन्निभः[3] ।
नृ-पोऽर्जुनः सम्प्र-विवेश तां पुरीं
७४] बलिं[4] नि-गृह्येव सहस्र-लोचनः ॥७२॥ [७३

इत्यार्षे रामायण उत्तर-काण्डे रावण-प्रग्रहणं नाम
विंशः सर्गः ॥ २० ॥

---

## [ वं-२२ ]= [ एकविंशः सर्गः ] =[ दा-३३ ]

रावण-ग्रहणं तत् तु वायु-ग्रहण-सन्निभम् ।
१] ऋषिः पुलस्त्यः शुश्राव कथ्यमानं दिवाऽऽलयैः ॥ १ ॥ [१
ततो भृशं सुत-स्नेहात् तप्यमान-मनो-धृतिः ।
२] स च माहिष्मतीं द्रष्टुं जगाम सहसा[5] मुनिः[5] ॥ २ ॥ [२
स वायु-मार्गम् आ-स्थाय वायु-तुल्य-गतिर् द्वि-जः ।
३] पुरीं माहिष्मतीं प्राऽयान् मनः-सम्पात-विक्रमः[6] ॥ ३ ॥ [३
सोऽमरावति-सङ्काशां हृष्ट-पुष्ट-जनाऽऽवृताम् ।
४] विवेश ब्रह्मणः पुत्र इन्द्रस्येवाऽमरा-वतीम् ॥ ४ ॥ [४
पाद-चारी यथाऽऽदित्यः प्र-तपन् सर्व-तो दिशः ।
५] ततस् तं[7] प्रत्यभि-ज्ञाय[7] द्वा-स्थो राज्ञे न्य्-अवेदयत् ॥ ५ ॥ [५
पुलस्त्य इति सम्प्राऽऽप्तः प्राऽऽह तं हैहयाऽधिपम् ।
६] शिरस्य् अञ्जलिम् आ-धाय[8] प्रत्य्-अगच्छत् स ब्रह्म-जम् ॥६॥ [६
पुरो-हितः स गृह्याऽर्घ्यं[9] मधु-पर्कं च गां च ह ।
७] पुर-तः प्र-ययौ राज्ञः शक्रस्येव बृहस्पतिः ॥ ७ ॥ [७
ततस् तम् ऋषिम् आ-यान्तम् उद्-यन्तम् इव भास्-करम् ।
८] अर्जुनः प्रेक्ष्य सं-भ्रान्तो ववन्दे चरणाव्[10] ऋषेः[10] ॥ ८ ॥ [८

---

१. रा$_1$ ल$_1$ ब–°वीर्योऽर्जु° । २. रा$_1$–स्म दुर्हृदं । ३. अ ल$_2$–°तविक्रमः । ४. अ भ$_1$ रा$_1$ ल$_2$ ल$_3$ ब–बल । ५. प्र–स महामुनिः । ६. अ च भ$_1$ भ$_2$ ल$_2$ ल$_3$–°संपातिवि° । ७. अ भ$_2$ ल$_2$ प्र– संप्रत्य° । ८. च भ$_1$ भ$_2$–वर्जमादाय । ९. अ च भ$_1$ भ$_2$ ल$_2$–गृह्यार्थं । १०. अ ल$_2$–द्रुतमीश्वरं । च–तमिवेश्वरं । भ$_1$ भ$_2$ रा$_1$–इन्द्रमिवेश्वरं ॥

स तस्य मधु-पर्कं[1] च पाद्यम् अर्घ्यं[1] प्र-दाप्य च ।
९] पुलस्त्य प्राऽऽह[1] राजेन्द्रो हर्ष-गद्गदया गिरा ॥ ९ ॥ [९
अद्येयम् अमरावत्यास् तुल्या माहिष्मती पुरी[2] ।
१०] अद्य[3] चाऽहं[3] द्विजेन्द्राऽऽभो[4] यस् त्वां[4] पश्यामि वेश्मनि ।१०। [१०
अद्य मे कुशलं ब्रह्मन्[5] अद्य मे कुलम् उद्-धृतम् ।
११] यत् ते देव-शतैर्[6] वन्द्यौ वन्देऽहं चरणाव्[7] इमौ[7] ॥११॥ [११
इदं राज्यम् इमे पुत्रा इमे दारा इमे वयम् ।[8]
१२] किं कार्यं[9] विप्र किं कुर्म[9] आ-ज्ञापय ममाऽनु-अद्य ॥१२॥ [१२
धर्मे चाऽग्निषु भृत्येषु पृष्ट्वा तं कुशलं यथा[10] ।
१३] उवाच विप्रो राजानं हैहयानां ततोऽर्जुनम् ॥१३॥ [१३
राजन् कमल-पत्राऽक्ष पूर्णचन्द्रनिभाऽऽनन ।
१४] अ-तुलं ते बलं[10] येन दश-ग्रीवस् त्वया जितः ॥१४॥ [१४
भयाद् यस्य तु तिष्ठेते नि-ष्यन्दौ सागराऽनिलौ ।
१५] सोऽयम् अद्य त्वया बद्धः पौत्रो[11] मेऽतीव दुर्-जयः ॥१५॥ [१५
तत् पुत्र-क यशः स्फीतं नाम वि-श्रावितं[12] त्वया ।
१६] मद्-वाक्यं मानयाऽद्य त्वं मुच्यतां हि दशाऽऽननः ॥१६॥ [१६
पुलस्त्यस्याऽऽज्ञां प्र-गृह्याऽऽशु प्र-हृष्टः स नृपोत्तमः ।
१७] अमुञ्चत् पार्थिवेन्द्रो हि राक्षसेन्द्रं प्रहृष्ट-वत् ॥१७॥ [१७
स तं वि-मुच्य त्रिदशाऽरिम् अर्जुनः
प्र-दाय दिव्याऽऽभरणाऽम्बर-स्रजम् ।
अ-हिंसकं सख्यम् उपेत्य साऽग्निकं
१८] प्र-णम्य च ब्रह्म-सुतं गृहं ययौ ॥१८॥ [१८
पुलस्त्येनाऽभिसं-गम्य राक्षसेन्द्रः स[13] रावणः[13] ।
१९] परिष्वङ्ग-कृताऽऽतिथ्यो लज्जमानो वि-सर्जितः ॥१९॥ [१९
पितामह-सुतश् चाऽपि पुलस्त्यो मुनि-सत्तमः ।
२०] मोचयित्वा दश-ग्रीवं ब्रह्म-लोकं जगाम ह ॥२०॥ [२०

---

१. च-नास्ति । २. $भ_१$-मम । ३. प्र-अथवाहं । ४. $भ_१$ $भ_२$-द्विजेन्द्रेन्द्रो । $ल_३$ प्र-द्विजश्रेष्ठो । ५. च $ल_३$ ब प्र-देव । ६. $ल_१$ $ल_३$ ब प्र-देववरैर् । ७. अ $ल_२$-°णौ तव । ८. $ल_३$-नास्ति । ९. $भ_१$-कुर्म ऋषिवर्य त्वं । १०. $भ_१$-नास्ति । ११. अ च $भ_१$ $ल_२$ $ल_३$-पुत्रो । १२. अ $ल_२$-विश्राव्यतां । १३. च $भ_१$ $भ_२$-वर्जं-सुरोषणः ॥

एवं स रावणः प्राऽऽप्य कार्तवीर्यात् प्र-धर्षणाम् ।
२१] पुलस्त्य-वचनाच् चाऽपि पुनर् मोक्षम्[1] अवाऽऽप्तवान्[2] ॥२१[3]॥ [२१
एवं बलिभ्यो बलिनः सन्ति राघव-नन्दन ।
२२] नाऽव-ज्ञां तु[4] परे[4] कुर्याद् य इच्छेच् छ्रेय आत्मनः ॥२२॥ [२२
ततः स राजा पिशिताऽशनानां
सहस्र-बाहुं परि-रभ्य मित्रम् ।
पुनर् नराणां कदनं चकार
२३] चचार सर्वां पृथिवीं च दर्पात् ॥२३॥ [२३

इत्यार्षे रामायण उत्तर-काण्डे रावण-मोक्षो
नामैकविंशः सर्गः ॥ २१ ॥

---

## [ वं–२३ ]= [ द्वाविंशः सर्गः ] =[ दा–३४ ]

अर्जुनेन वि-मुक्तस् तु रावणो राक्षसेश्वरः ।
१] चचार पृथिवीं सर्वाम् अ-निर्विण्णस्[5] तथा कृतः ॥ १ ॥ [१
राक्षसं वा मनुष्यं वा यं शृणोति बलाऽधिकम् ।
२] रावणस् तं समा-साद्य युद्धायाऽऽह्वयते[6] हि[7] तम्[7] ॥ २ ॥ [२
ततः कदा-चित् किष्किन्धां नगरीं वालि-पालिताम् ।
३] गत्वाऽऽह्वयत[8] युद्धाऽर्थं वालिनं हेम-मालिनम् ॥ ३ ॥ [३
ततस् तं वानराऽमात्यस् तारस् ताराऽधिपः[9] प्र-भुः ।
४] उवाच रावणं वीरो युद्ध-प्रेप्सुम् उपा-गतम् ॥ ४ ॥ [४
राक्षसेन्द्र गतो वाली यस्[10] ते[10] प्रति-बलो भवेत् ।
५] नाऽन्यः प्रमुख-तः स्थातुं तव शक्तः प्लवं-गमः ॥ ५ ॥ [५
चतुर्भ्य् अपि सम्-उद्रेषु सं-ध्याम् अन्व्-आस्य रावण[11] ।
६] इमं क्षणम् इहाऽऽयाति वाली तिष्ठ मुहूर्त-कम् ॥ ६ ॥ [६
पश्यस्य् अस्थीनि यान्य् एव महान्ति बलिनाम् अपि ।
७] दृश्यन्ते शङ्ख-शुद्धानि वानराऽधिप-तेजसा ॥ ७ ॥ [७

१. ल$_{2}$ अ–मोहम् । २. रा$_{1}$–अवाप्नुयात् । ल$_{1}$–अवाप हि । ल$_{3}$–अवाप ह । ३. ब–नास्ति । ४. अ ब–स्वधरे । ५. ल$_{1}$–अविषण्णः । ६. रा$_{1}$ प्र–°याहूयते । ७. रा$_{1}$–नित्यम् । ८. च–राजाह्व° । प्र–गत्वाहूयत । ९. अ ल$_{1}$ ल$_{2}$ ब–°प । १०. च भ$_{1}$ भ$_{2}$–वर्ज–योऽसौ । ११. ल$_{1}$–वानरः ॥

भवेत् पीतोऽमृत-रसस् त्वया रावण राक्षस ।
८] तथाऽपि वालिनं प्राऽऽप्य तद्-अन्तं तव जीवितम् ॥ ८ ॥ [८
अथवा त्वरसे मर्तुं दक्षिणं गच्छ सागरम् ।
१०] हरिं द्रक्ष्यसि तत्र त्वं भूमि-स्थम् इव भास्-करम् ॥ ९ ॥ [१०
स तं तारं विनिर्-भर्त्स्य रावणो राक्षसेश्वरः ।
११] पुष्पकं तु समा-रुह्य प्र-ययौ दक्षिणाऽर्णवम् ॥१०॥ [११
तत्र हेम-गिरिं प्राऽऽप्य तरुणाऽर्क-निभाऽऽननम् ।
१२] वालिनं रावणोऽपश्यत् सन्ध्योपासन-तत्परम् ॥११॥ [१२
पुष्पकाद् अव-रुह्याऽऽशु रावणोऽञ्जन-सन्निभः ।
१५] ग्रहीतुं वालिनं तूर्णं निः-शब्द-पदम् आऽव्रजत् ॥१२॥ [१३
यदृच्छोन्मीलित-दृशा[1] वालिना स च रावणः ।
१३] पापाऽभिप्राय-वान्[2] दृष्टश् चकार च न सं-भ्रमम् ॥१३॥[3] [१४
गजम् आ-लोच(?च्य)[4] सिंहो वा भुजं-गं गरुडो यथा ।
१४] नाऽचिन्तयत तं वाली रावणं पाप-निश्चयम् ॥१४॥ [१५
जिघृक्षमाणम् एवैनं रावणं पाप-चेतसम्[5] ।
१७] कक्ष्याऽवलम्बिनं[6] कृत्वा गमिष्ये त्रीन् महाऽर्णवान् ॥१५॥ [१६
द्रक्ष्यन्त्य् एनं मयाऽऽनीतं स्रंसितोरुकराऽऽननम् ।
१८] लम्बमानं[7] दश-ग्रीवं गरुडस्येव पन्न-गम् ॥१६॥ [१७
इत्य् एवं मतिम् आ-स्थाय वाली कर्ण-बिलं[8] श्रितः[9] ।
१९] जपन् वै नैगमं मन्त्रं तस्थौ पर्वत-राड् इव ॥ १७॥ [१८
ताव् अन्योऽन्यं जिघृक्षन्तौ हरि-राक्षस-पार्थिवौ ।
२०] प्रयत्न-वन्तौ तत् कर्म ईहतुर् बल-दर्पितौ ॥१८॥ [१९
हस्त-ग्राह्यं ततो मत्वा पाद-शब्देन रावणम् ।
२१] पराङ्-मुखः[10] प्र-जग्राह वाली[11] सर्पम् इवाऽण्ड-जः ॥१९॥ [२०
ग्रहीतु-कामं सं-गृह्य रक्षसाम् ईश्वरं हरिः ।
२२] खम् उत्-पपात वेगेन कृत्वा कक्ष्याऽवलम्बिनम्[12] ॥२०॥ [२१

१. च भ$_1$ भ$_2$-वर्जं-पश्चादुन्मी° । २. प्र-°वतो । ३. च भ$_1$ भ$_2$ प्र-वर्जं-नास्ति । ४. च भ$_1$ भ$_2$-आलंब्य । ५. प्र-पापनिश्चयं । ६. अ रा$_1$ ल$_1$ ल$_2$-कक्षाविलम्बिनं । ७. अ च रा$_1$ ल$_1$ ल$_2$-लंबमानं । ८. अ ल$_1$-वर्जं-कर्णबलं । ९. ल$_3$-वर्जं-श्रितं । १०. च भ$_1$ भ$_2$-मुखात् । ब-मुखं । ११. ब-वर्जं-वालि । १२. ल$_2$ ल$_3$ प्र-वर्जं-कक्षाव° ॥

ततः सं-पीड्यमानं(?नस्) तु तुदते स्म नखैर् मुहुः ।
२३] जग्राह रावणं वाली पवनस् तोय-दं यथा ॥२१॥ [२२
ततस् ते रावणाऽमात्या ह्रियमाणं[1] दशाऽऽननम् ।
२४] मुमोचयिषवो वालिं द्रवमाणम् अभि-द्रुताः ॥२२॥ [२३
२५उ] [2]अन्व्-ईयमानो मेघौघैर्[3] अम्बर-स्थ इवांऽशु-मान् ॥२३॥ [२४उ
अ-शक्नुवन्तः संप्राऽऽप्तुं वालिनं राक्षसोत्तमाः ।
२६] तस्य बाहूऽरु-वेगेन परि-श्रान्ता व्यव-स्थिताः । [२५
२७पू] वालि-मार्गाद्[4] अपा-क्रान्ताः पर्वतेन्द्राद् इव च्युताः ॥२४॥ [२६पू
स पक्षि-गण-सम्पातो वानरेन्द्रो महा-जवः ।
२८] अगमत्[5] सागरान् सर्वान् सन्ध्या-कालम् उपाऽऽसितुम् ॥२५॥ [२७
सं-पूज्यमानो भूतैश् च खे-चरैः[6] खे-चरो[7] हरिः ।
२९] पश्चिमं सागरं वाली जगामैव स-रावणः ॥२६॥ [२८
तत्र सं-ध्याम् उपाऽऽस्यैवं स्नात्वा जप्त्वा[8] च वानरः[9] ।
३०] उत्-तरं सागरं प्राऽयाल् लम्बमाने दशाऽऽनने ॥२७॥ [२९
३०पू] तत्र सं-ध्याम् उपाऽऽसित्वा स्नात्वा जप्त्वा च वानरः[9] ।
३२उ] वहमानोऽगमद् वाली पूर्वम् एवं तथोदधिम् ॥२८॥ [३१
तत्राऽपि सं-ध्याम् अन्व्-आस्य वासविः स हरीऽऽश्वरः ।
३३] किष्किन्धाऽभि-मुखो रक्षः सं-गृह्य पुनर् आऽगमत् ॥२९॥ [३२
चतुर्ष्व् अपि सम्-उद्रेषु सं-ध्याम् अन्व्-आस्य वानरः ।
३४] स-रक्षा[10] वालिर् अ-श्रान्तः[11] किष्किन्धोपवनेऽपतत् ॥३०॥ [३३
रावणं च मुमोचाऽथ कक्ष्या-तः[12] कपि-कुञ्जरः ।
३५] कुतस् त्वम् इति होवाच प्र-हसन् रावणं प्रति ॥३१॥ [३४
वि-स्मयं परमं गत्वा श्रम-लोलाऽऽकुलेक्षणः ।
३६] राक्षसश् च हरीऽऽशं तम् इदं वचनम् अब्रवीत् ॥३२॥ [३५
वानरेन्द्र महेन्द्राऽऽभ रावणो राक्षसाऽधिपः ।
३७] युद्धेप्सुर् इह सम्प्राऽऽप्तस् तनो ह्य् आ-सादितस् त्वया ॥३३॥ [३६

---

१. च भ$_1$ भ$_2$-वर्जं-ध्रिय° । २. टि-अत्र 'अन्वीयमानस्तैर्वाली भ्राजतेऽम्बरमध्यगः" इति पूर्वार्धस्त्रुटितः (तु. दा-२४पू) । ३. अ-मेघोघैर । ४. च-°गो ह्युप° । ५. च भ$_1$ भ$_2$-आक्रमत् । ६. अ रा$_1$ ल$_2$-वचनैः । ७. च भ$_1$ भ$_2$-वर्जं-मे ब्रभौ । ८. अ ल$_3$-जापं चकार ह । ९. प्र-वर्जे-नास्ति । १०. अ च भ$_1$ भ$_2$ रा$_1$ ल$_2$-सरक्षो । ११. व ल$_3$ प्र-भ्रांतः । १२. अ च भ$_1$ भ$_2$ ल$_1$ ल$_2$ ल$_3$-कक्षांतः ॥

अहो बलम् अहो धैर्यम् अहो गम्भीर-ता च ते ।
३८] गृहीत्वा दंश-वद् येन भ्रामितश् चतुरोऽर्णवान् ॥३४॥ [३७
एवम् अ-श्रान्त-वद् वीर शीघ्रम् एवं[1] च वानर ।
३९] गृहीत्वा मां च कोऽध्वानम् एवम् अन्यो गमिष्यति ॥३५॥ [३८
त्रयाणाम् एव भूतानां गतिर् एषा प्लवं-गम ।
४०] मनो-गरुड-वातानां तव वा नाऽत्र सं-शयः ॥३६॥ [४०
सोऽहं दृढ-बलो युद्धे बलिनां हरि-पुङ्गव ।
४१] त्वया सह चिरं सख्यं सु-स्निग्धं पावनं[2] ग्र(?गृ)हे[2] ॥३७॥ [४१
दाराः पुत्राः पुरं भृत्या भोगाऽऽच्छादन-भोजनम्[3] ।
४२] सर्वम् एवाऽवि-भक्तं नौ भविष्यति हरीऽऽश्वर ॥३८॥ [४२
ततः प्र-ज्वाल्य दहनं ताव् उभौ हरि-राक्षसौ ।
४४] भ्रातृ-त्वम् उप-पन्नौ तौ परि-ष्वज्य परस्परम् ॥[4]३९॥ [४३
अन्योऽन्याऽऽलिङ्गन-करौ ततस् तौ हरि-राक्षसौ ।[4]
४५] किष्किन्धां विशतुर्[5] हृष्टौ सिंहौ गिरि-गुहाम् इव ॥४०॥ [४४
स तत्र मासम् उषितः सु-ग्रीव इव रावणः ।
४६] अमात्यैर् आ-गतैर् नीतस् त्रैलोक्योत्सादनाऽर्थिभिः ॥४१॥ [४५
एवम् एतत् पुरा-वृत्तं वालिनो रावणस्य च ।
४७] धर्षितश् च कृतश् चाऽपि भ्राता पावक-सन्निधौ ॥४२॥ [४६
बलम् अ-प्रतिमं राम वालिनोऽद्भुतम् उत्-तमम् ।
४८] सोऽयं त्वया विनिर्-दग्धः शलभो वै यथाऽग्निना ॥४३[6]॥ [४७

इत्यार्षे रामायण उत्तर-काण्डे रावण-वालि-सख्यं नाम

द्वाविंशः सर्गः ॥ २२ ॥

---

## [ वं-२४ ]= [ त्रयोविंशः सर्गः ] =[ दा-२० ]

स[7] तु[7] वि-त्रासयन् मर्त्यान् पृथिव्यां राक्षसाऽधिपः ।
१] आ-ससाद वने पुण्ये देवर्षिं नारदं ततः ॥ १[8] ॥ [१

१. च रा$_1$ भ$_1$ भ$_2$ प्र-एवं । २. अ ल$_2$-वर्जं-पावकाग्रतः । ३. ल$_1$ ल$_3$ ब प्र-°जने । ४. प्र-वर्जं-नास्ति । ५. भ$_1$ भ$_2$-विविशुर् । ६. च--नास्ति । ७. ल$_1$ ल$_3$ ब प्रं-सर्वान् । ८. च-सर्गसमाप्तिं यावन्नास्ति ॥

नारदस् तु महा-तेजा देवर्षिर् अमित-द्युतिः ।
२] अब्रवीन् मेरु-पृष्ठ-स्थः पुष्पके रावणं स्थितम् ॥ २ ॥ [३
राक्षसाऽधिपते वीर तिष्ठ वि-श्रवसः सुत ।
३] प्रीतोऽस्म्य् अभिजनोपेत[1](?तैर्) वि-क्रमैर् ऊर्जितैस्[2] तव ॥३॥[४
विष्णुना दैत्य-मथनात् तार्क्ष्येणोरग-धर्षणात् ।
४] त्वया च युद्ध-शौण्डेन दृढम् अस्म्य् अभि-तोषितः ॥ ४ ॥ [५
५पू] किं तु वक्ष्यामि तावत् त्वां श्रोतव्यं तत्त्वम् एव च ।
N] श्रुत्वा चाऽनन्तरं कार्यं त्वया राक्षस-पुङ्गव ॥ ५ ॥ [६
किम् अयं वध्यते लोकस् त्वयाऽवध्येन दैवतैः ।
६] हत एव ह्य् अयं लोको यतो[3] मर्त्यो निसर्ग-तः ॥[4]६॥ [७
पश्यै(?श्य)ता(व)न् महा-बाहो भार्या-बन्धु-मनोरथैः ।[4]
१३] मुह्यमानो ह्य् अयं लोको लोभान्[5] मृत्युं न बुध्यते ॥ ७ ॥ [१४
तत् किम् एवं परि-क्लिश्य लोकं मोहान्[6] निर्-अर्थकम्[7] ।
१४] जित एव त्वया सौम्य मर्त्य-लोको[8] न सं-शयः ॥ ८ ॥ [१५
११उ] पश्यस्य् एवं विचित्राऽर्थं जीव-लोकं समन्त-तः । [१२उ
यत्र वादित्र-निनदा मुदितैः सम्प्र-वर्तिताः ॥ ९ ॥
१२] भज्यते किल चाऽप्य् एतद् अश्रु-धौताऽऽननैर्[9] जनैः । [१३
अवश्यम् एव गन्तव्यं सर्वैश् च यम-सादनम् ॥१०॥
१५] तं[10] गृह्णीष्व च[10] पौलस्त्य यमं पर-पुरं-जय । [१६
तस्मिन् विनिर्-जिते सर्वं जितं भवति धर्म-तः ॥११॥
१६] एवम् उक्तो राक्षसेन्द्रो दीप्यमान इवौजसा ।
अब्रवीन्[11] नारदं वाक्यं सम्प्र-हस्याऽभि-वाद्य च ॥१२॥ [१७
१७] महर्षे देव-गन्धर्व-विहार-समर-प्रिय ।
N] शृणुष्वैक-मना ब्रह्मन् यन्-निमित्तम् अयं श्रमः ॥१३॥ [N

---

१. भ$_1$–वर्ज–°नप्रीत्या । २. अ ल$_2$ ल$_3$–°तस् । ३. अ ब–वर्ज–यदा । ४. अ ब–वर्ज–नास्ति । ५. रा$_1$ ल$_3$ ब–भावान् । ६. अ रा$_1$ ल$_2$ ल$_3$ ब प्र–मोहो । ल$_1$–हंसि । ७. अ रा$_1$ ल$_2$ ल$_3$–°कः । ८. अ भ$_2$ रा$_1$ ल$_1$ ल$_2$ प्र–मृत्युलोको । ९. भ$_1$–वर्ज–मलुधौ° । १०. भ$_1$ भ$_2$–तन्निगृह्णीष्व । ल$_1$ ल$_3$ ब प्र–तं त्वं गृह्णीष्व । ११. अ रा$_1$ल$_2$–अबोधन् ॥

अहं खल्वऽद्य-यतो गन्तुं जयाऽर्थी[1] वसुधा-तलम् । [१८उ

१८] ततो लोक-द्वयं जित्वा कृत्वा तान्[2] अ-सुरान्[2] वशे ।

सम्-उद्रम् अमृताऽर्थी च अन्व्-एष्यामि[3] नभस्-तलम् ॥१४[4]॥[१९

१९] अथाऽब्रवीद् दश-ग्रीवं नारदो भग-वान् ऋषिः ।

किं-चित्[5] त्व् इदानीं मार्गेण त्वयेहाऽन्येन गम्यते ॥१५॥ [२०

२०] अयं तु सु-गमः पन्थाः प्रेतराज-पुरं प्रति ।

गच्छत्व् अमर-मुख्यस्य यमस्याऽमित्र-कर्षण:(?ण)[6] ॥१६॥ [२१

२१] स तु शारद-मेघाऽऽभं हास्यं मुक्त्वा दशाऽऽननः ।

अब्रवीत् कृतम् इत्य् एवं वचनं चेदम् अब्रवीत् ॥१७॥ [२२

२२] तस्य(?तश्)[7] चैवम् अहं ब्रह्मन् वैवस्वतवधोद्यतः ।

गच्छामि दक्षिणाम् आशां प्र-हृष्टः[8] सह मन्त्रिभिः[8] ॥१८॥ [२६

---

२३] मया हि भग-वन् क्रोधात् प्रति-ज्ञातं वधाऽर्थिना ।

अव-जेष्यामि चतुरो लोक-पालान् इति प्र-भो ॥१९[9]॥ [२४

२४] तद् एष प्र-स्थितोऽहं वै वैवस्वत-पुरं प्रति ।

प्रजा-संक्लेश-कर्तारं योजयिष्यामि मृत्युना ॥२०॥ [२५

२५] एवम् उक्त्वा दश-ग्रीवो मुनिं तम् अभि-वाद्य च ।

प्र-ययौ दक्षिणाम् आशां प्र-हृष्टः सह मन्त्रिभिः ॥२१[9]॥ [२६

---

२६] नारदस् तु महा-तेजा मुहूर्तं ध्यानम् आ-स्थितः ।

चिन्तयामास विप्रेन्द्रो वि-धूम इव पावकः ॥२२॥ [२७

२७] येन लोकास् त्रयः कृत्स्नाः क्लिश्यन्ते स-चराऽचराः ।

N] क्षीणे चाऽऽयुषि[10] धर्मे[12] च[11] स[11] कालो[11] हन्यते कथम् ॥२३॥ [२८

यस्य[13] लोकास् त्रयो नित्यं वि-द्रवन्ति[13] भयाऽर्दिताः ।

२९] तं कथं राक्षसेन्द्रोऽयं स्वयम् एवाऽभि-यास्यति[14] ॥२४॥ [३०

यो वि-धाता च धाता च सु-कृते दुष्-कृते तथा ।

३०] त्रैलोक्यं तु वशे यस्य तं कथं नु हनिष्यति ॥२५[15]॥ [३१

---

१. अ ल$_{1}$ ल$_{2}$ ब-°र्थे । २. भ$_{1}$ भ$_{2}$ रा$_{1}$ ल$_{2}$-नागासु° । ३. रा$_{1}$ ब ल$_{3}$-अभ्येष्यामि । ४. अ-नास्ति । ५. भ$_{1}$ भ$_{2}$-किं स्वित् । ६. भ$_{1}$ भ$_{2}$ रा$_{1}$ ल$_{1}$-°कर्शिनः । ७. च-श्रुत्वा । ८. प्र-यत्र सूर्यात्मजो नृपः । ९. प्र-वर्ज-नास्ति । १०. अ रा$_{1}$ ल$_{1}$ ल$_{2}$ ब-त्वायुषि । ११. ल$_{3}$ ब प्र-वा । १२. प्र-धर्मेण । १३. भ$_{1}$-यत्तेजसा इमे लोकास्त्रयो नित्यं । १४. भ$_{2}$ रा$_{1}$ ल$_{2}$ ब प्र-°भिधास्यति । ल$_{3}$-°भिधास्यते । ल$_{2}$-°धावति । १५. अ-नास्ति ॥

अ-परं किन्[1] नु दृष्ट्वैवं[1] वि-धानं[2] संवि-धास्यति[2] ।[3]
३२] कौतूहल-समाविष्टः सोऽहं[4] यास्ये यमाऽऽलयम्[5] ॥२६॥ [३२

इत्यार्षे रामायण उत्तर-काण्डे नारद-समागमो नाम
त्रयोविंशः सर्गः ॥ २३ ॥

---

## [ वं–२५ ]= [ चतुर्विंशः सर्गः ] =[ दा–२१ ]

एवं वि-चिन्त्य विप्रेन्द्रो ययौ त्वरित-विक्रमः ।
१] आ-ख्यातुं तद् यथा-वृत्तं यमस्याऽऽशु[6] महाऽऽत्मनः॥ १॥ [१
सोऽपश्यद् भय-दं तत्र देवताभिः पुरस्-कृतम् ।
२] वि-धानम् अनु-तिष्ठन्तं प्राणिनां यस्य यादृशम्[7] ॥ २ ॥ [२
स तु दृष्ट्वा यमः प्राऽऽप्तं नारदं देव-दर्शनम्[8] ।
३] अब्रवीत् समुपाऽऽसीनम् अर्घ्यम्[9] आ-वेद्य धर्म-तः ॥ ३ ॥ [३
कच्-चित् क्षेमं तु विप्रर्षे कच्-चिद् धर्मो न नश्यति ।
४] किं चाऽऽगमन-कृत्यं[10] ते नृत्य-गान्धर्व-कोविद ॥ ४ ॥ [४
अब्रवीत् प्रेत-राजानं नारदो भग-वान् ऋषिः ।
५] श्रूयतां चाऽभि-धास्यामि श्रुत्वा चैव[11] वि-धीयताम्[11] ॥५॥ [५
एष एव दश-ग्रीवः पितृ-राज निशा-चरः ।
६] उप-याति वशं नेतुं वि-क्रमैस् त्वां तु दुर्-जयः[12] ॥ ६ ॥ [६
एतद् वै कारणं येन त्वरितोऽस्म्य् आ-गतः प्र-भो ।
७] मृत्योः[13] प्र-हरणस्याऽद्य[13] तव किं नु करिष्यति ॥ ७ ॥ [७
एतस्मिन्न् अन्तरे दूराद् उद्-अयन्न् इव भास्-करः ।
८] ददृशे दिव्यम् आ-यान्तं वि-मानं तस्य रक्षसः ॥८[14]॥ [८
स त्व् अपश्यन् महा-बाहुर् दश-ग्रीवस् ततस् ततः ।
९] प्राणिनां(?नः) सु-कृतं कर्म दुष्-कृतं चोप-भुञ्जताम्(?तः)।९।[१०

---

१. च–वर्ज–किं तु दृष्टेव । २. भ$_1$ रा$_1$ ल$_1$ ल$_2$ ल$_3$ प्र–विधानमभि° । ब–वधं कथं विधास्यति । ३. अ–नास्ति । ४. अ–सोऽयं । ५. अ–हिमा° । ६. च भ$_1$ भ$_2$–वर्ज–°स्यापि । ७. अ ल$_2$ प्र–तादृ° । ८. अ ल$_2$–°दर्शिनं । ९. च भ$_2$–अर्घं । १०. अच भ$_2$–°मेन कृ° । ११. च भ$_1$–चैवाभिधी° । १२. च भ$_1$ भ$_2$–वर्ज–°य । १३. भ$_1$–मृत्युं प्रहरतश्चाद्य । १४. च–नास्ति ॥

अपश्यत् सैनिकांश् चाऽस्य यमस्याऽनु-चरैः सह ।
१०] वध्यतीः[1] पूज्यमानाश् च प्र-जाः[2] सुकृत-दुष्कृतैः ॥१०॥ [११
N] दुष्-कृतैः सु-महाघोरैः क्रोशतीश् च महाऽऽननैः[3] ।[4] [१२पू
१७पू] ददृशे रमतीस् तत्र रावणः सु-कृतैः प्र-जाः ॥११[5]॥ [N
१८उ] सभाकर्तॄन्(?) गृहांश् चैव तत्र तत्र समन्त-तः ।
क्व-चिद् अन्तर्-जल-गृहांस् तमसा सं-वृतान् क्व-चित् ।
२०] क्व-चिद् रम्यांश् च दिव्यांश् च ददृशे[6] राक्षसः[7] शुभान् ।१२।[N
तं देशं प्र-भया तस्य पुष्पकस्य महाऽऽत्मनः ।
२१] कृत्वा वि-तिमिरं सर्वं समीपं सोऽभ्य्-अवर्तत ॥१३॥ [९
ततो[8] यास्[8] तत्र वध्यन्ते कर्मभिर् दुष्-कृतैः प्र-जाः ।
२२] ता रक्षो मोक्षयामास वि-क्रमेण बलाद् बली ॥१४॥ [२०
ततो हलहला-शब्दः सर्व-दिग्भ्यः समुत्-थितः ।
२५] धर्म-राजस्य योधानां शूराणां सम्प्र-धावताम् ॥१५[9]॥ [२३
ते[10] प्राऽऽप्तैः[10] परि-घैः शूलैस् तोमरैः शक्ति-मुद्गरैः ।
२६] पुष्पकं सम्-अवर्षन्त शूराः शत-सहस्र-शः ॥१६॥ [२४
अ-संख्येयं यमस्याऽऽसीत् तत्र सैन्यं महाऽऽत्मनः[11] ।
२७] शूराणाम् उग्र-वीर्याणां[12] सं-युगेष्व् अ-निवर्तिनाम् ॥१७॥ [२७
ततो वृक्षांश् च शैलांश् च प्रासाऽऽदीन्य् आ-युधानि च ।
२८] पुष्पके[13] सम्-असज्जन्त[13] शीघ्रा[14] मधु-करा इव ॥१८॥ [२५
आ-युधैः[15] पूर्यमाणं[15] तु यानं पुष्पकम् आ-बभौ ।
N] यथा स्वर्ण-मयं शृङ्गं समन्ताद् वि-द्रुतं[16] घनैः[16] ॥१९॥ [N

---

१. अ च भ$_2$ रा$_1$ ल$_1$ ल$_2$–त्रध्यतां । २. च–जनाः । ३. टि–उप-नन-(<√*नन् शब्दे),आनन-वा ? । ४. च भ$_1$ भ$_2$–क्रोशतन्तश्च महानादान् दुष्कृतैश्च ततोऽपरान् । अतः परमधिकश्च पाठः—विमर्दतः क्षुरनद्यां क्षुरधारापथेरितान् । क्वचिद् गृहेषु रम्येषु गीतवादित्रनिःस्वनैः ॥ ५. अतः परमधिकः पाठः—प्र–स गवाऽक्षान्गृहांश्चैव तत्र तत्र समाश्रिताः । क्वचिदभ्रसमा वृक्षास्तमसा संवृतान्क्वचित् ॥ ६. च–गृहांश्च । ७. च भ$_2$–सपथः । भ$_1$–सपथि । ल$_1$–समयान् । ब–समये । ८. अ–त्वदीयास् । ९. अतः परमधिकः पाठः—प्र–वीराणामुग्रकर्माणां संग्रामेष्वनिवर्तिनाम् । १०. च भ$_1$ भ$_2$–वर्ज-प्रासैश्च । ११. भ$_1$–°नां । १२. ल$_1$ ल$_3$ य प्र–अतिवीराणां । १३. भ$_1$–°कस्य बभंजुस्ते । १४. अ ल$_1$ ल$_2$–शीघ्रं । १५. च भ$_1$ भ$_2$–समंताभिद्रुतं तैस्तु । १६. च ल$_1$ ल$_3$ प्र–अभिद्रुतं वनैः ॥

देव-निर्माण-भूतं[1] तु वि-मानं पुष्पकं तथा ।
२९] पूर्यमाणं[2] तथैवाऽऽसीद् अ-क्षय्यं ब्रह्म-तेजसा ॥२०॥ [२६
ततस् ते सचिवास् तस्य यथा-कामं यथा-बलम् ।
३०] अयुध्यन्त महा-बाहो दश-ग्रीवस्य रक्षसः ॥२१॥ [२८उ
ते च शोणित-दिग्धाऽङ्गाः सर्व-शस्त्र-निराकृताः ।
३१] अमात्या राक्षसेन्द्रस्य चक्रुर् आ-योधनं महत् ॥२२॥ [२९
अन्योऽन्यं ते महा-वेगाज्[3] जघ्नुः प्र-हरणैर्[3] भृशम् ।
३२] यमस्य च महाऽऽत्मानो रावणस्य[4] च मन्त्रिणः ॥२३॥ [३०
अमात्यांस् तांस् तु सं-त्यज्य यम-योधा महा-बलाः[5] ।
३३] तम् एव पर्य्-अधावन्त शूल-वर्षैर् दशाऽऽननम् ॥२४॥ [३१
ततः शोणित-दिग्धाऽङ्गः प्र-हारैर् जर्जर-च्छविः ।
३४] फुल्लाऽशोक इवाऽऽभाति पुष्पके राक्षसेश्वरः ॥२५॥ [३२
ततः शूल-गदा-प्राऽऽसान् राक्षसो[6] वि-विधान् सृजन्[6] ।
३५] नगान् बाणांश् च वृक्षांश् च चिक्षेप कार्मुक-च्युतान् ॥२६॥ [३३
३६पू] तानि सर्वाण्य् अवा-क्षिप्य तच् चाऽस्त्रम्[7] अप-कृत्य च ।
N] तद् रक्षो रुषितं जघ्नुर् एकं शत-सहस्र-शः[8] ॥२७॥ [३५
N] परि-वार्य च तं सर्वे शैलं मेघोत्करा[9] इव ।
३६उ] शक्तिभिर् भिण्डिपालैश् च निर्-उच्छ्वासम् अपोथयन् ।२८। [३६
विमुक्त-कवचः क्रुद्धः स[10] तु[10] शोणित-विस्रवैः ।
३७] त्यक्त्वा तत् पुष्पकं वीरः पृथिवीं सम्-अतिष्ठत ॥२९॥ [३७
ततः स-कार्मुक-बाणो[11] राक्षसेन्द्रो महा-बलः ।
३८] लब्ध-संज्ञो मुहूर्तेन तस्थौ क्रुद्ध इवाऽन्त-कः ॥३०॥ [३०
ततः[12] पाशुपतं दिव्यम् अस्त्रं सं-धाय कार्मुके ।
३९] इदानीं तिष्ठतेत्युक्त्वा तच् चापं वि-चकर्ष सः ॥३१॥ [३९
ज्वाला-माली स तु शरः क्रव्याऽऽदाऽनुगतो[13] रणे ।
४०] मुक्तो[14] गुल्मान् द्रुमांश् चैव भस्म-साद् अकरोत् तदा ॥३२॥ [४२

---

१. भ$_1$ ल$_1$-वर्जे-दैव° । २. भ$_1$-भज्यमानं । ३. अ रा$_1$ ल$_2$-°गा नानाप्रहरणा । ल$_1$ ल$_3$ ब प्र-°गा हताः प्राणहरैर् । ४. अ रा$_1$ ल$_2$-वर्जं-राक्षसस्य । ५. ल$_1$ भ$_2$-महाजवाः । ६. च-सृजन्वै यमकिंकराः । ७. च भ$_1$ भ$_2$-अस्त्रं । ८. च ल$_3$ ब प्र-तं वै सह° । भ$_1$ ल$_1$-ते वै सह° । ९. अ-मेघा वरा । रा$_1$-वर्जं-मेघकरा । १०. रा$_1$-वर्जं-मत्तः । ११. च-वर्जं-°र्मुकी बा° । च भ$_1$ भ$_2$ ल$_3$ ब प्र-°कबाणान् । १२. भ$_1$ भ$_2$-वर्जं-तथा । १३. अ ब-°दोऽनु° । १४. अ प्र-मुक्त्वा ॥

अथाऽस्त्र-तेजसा दग्धा योधा वैवस्वतस्य[1] ते ।
४३] न्य्-अपतन्त रणे तस्मिन् महेन्द्र-ध्वज-सन्निभाः ॥३३॥ [४३
ततः स[2] सचिवैः सार्धं राक्षसो भीम-विक्रमः ।
४४] ननाद सु-महानादं कम्पयन्न् इव मेदिनीम् ॥३४॥ [४४

इत्यार्षे रामायण उत्तर-काण्डे यमबल-विध्वंसनं[3] नाम
चतुर्विंशः सर्गः ॥ २४ ॥

---

[ वं—२६ ]= [ पञ्चविंशः सर्गः ] =[ दा—२२ ]

स तु तस्य महा-नादं श्रुत्वा वैवस्वतः प्र-भुः ।
१] शत्रुं[4] वि-जयमानं वै स्व-बलस्य परि-क्षयम् ॥ १ ॥ [१
ततो योधान् हताञ् ज्ञात्वा क्रोध-संरक्त-लोचनः ।
२] अब्रवीत् त्वरितं सूतं रथं मे समुपा-नय ॥ २ ॥ [२
तस्य सूतो रथं दिव्यम् उप-स्थाय महा-प्रभम्[5] ।
३] स्थितः स च महा-तेजा रथं समध्य्-अरोहत[6] ॥ ३ ॥
पाश-मुद्गर-हस्तश्[7] च मृत्युस् तस्याऽग्र-तः स्थितः । [३
४] येन सं-क्षिप्यते सर्वं त्रैलोक्यं स-चराऽचरम् ॥ ४ ॥
काल-दण्डस् तु पार्श्व-स्थो मूर्ति-मान् स्यन्दने स्थितः ।
५] यम-प्रहरणं दिव्यं तेजसैव समुज्-ज्वलम् ॥ ५ ॥ [४
ततो लोकास् त्रयः क्षुब्धाश्[8] चकम्पे च वसुं-धरा ।
६] कालं क्रुद्धं तथा[9] दृष्ट्वा लोक-क्षय-भयङ्करम् ॥ ६ ॥ [६
ते तु सं-दृश्य वि-कृतं रथं मृत्योर् भयाऽऽवहम् ।
९] सचिवा राक्षसेन्द्रस्य सहसा विप्र-दुद्रुवुः ॥ ७ ॥ [९
लघु-चित्त-तया ते हि नष्ट-संज्ञा भयाऽर्दिताः ।
१०] नाऽत्र योद्धुं सम्-अर्थाः स्म इत्य् उक्त्वा सम्प्र-दुद्रुवुः ॥८[10]॥ [१०उ
स तु तं तादृशं दृष्ट्वा मृत्युं लोक-भयाऽऽवहम् ।
११] चुक्षुभे न दश-ग्रीवो न बभूवाऽस्य च व्यथा ॥ ९ ॥ [११

---

१. अ ल१ ल२ ल३ ब प्र-°स्वताश्च ते । च-°तस्तदा । २. ल३ ब प्र-तु । ३. अ भ१ ल१ ल२ रा१-धर्मराजबलिविध्वंसनं । ४. अ-सैन्यं । ५. च भ१ भ२-महारथं । ६. अ भ१ भ२ रा१ ल२-समधिरो° । अत आरभ्य च-७-मश्लोकस्य 'विकृतं रथं' इत्यन्तः पाठो नास्ति । ७. भ१ भ२ ल३ प्र-प्रासमु° । ८. भ१ भ२-वर्ज-कृत्स्नाश् । ९. भ१ रा२ ल३ ब प्र-तदा । १०. अ ल१ ल२-नास्ति ॥

स तु रावणम् आ-साद्य व्य्-असृजच् छक्ति-तोमरान् ।
१२] यमोऽप्य् अस्त्राणि सं-क्रुद्धो रावणस्य न्य्-अकृन्तत ॥१०॥ [१२
रावणस् तु ततः स्व-स्थः शर-वर्षं मुमोच ह ।
१३] तस्मिन् वैवस्वत-रथे तोय-वर्षम् इवाऽम्बु-दः ॥११॥ [१४
ततो गदा-शक्ति-शतैः पात्यमानैर् महोरसि ।
१४] नाऽशकत् प्रति-कर्तुं स राक्षसः शल्य-पीडितः ॥१२॥ [१७
एवं नाना-प्रहरणैर् यमेनाऽमित्र-कर्षिणा[1] ।
१५] सप्त-रात्रं कृतं(?तः) सं-ख्ये[2] वि-संज्ञो वि-मुखो रिपुः ॥१३॥ [१८
तद् आसीत् तुमुलं युद्धं यम-राक्षसयोर् द्वयोः[3] ।
१६] जयम् आ-काङ्क्षतोर् वीर[4] सम्-अरेष्व् अ-निवर्तिनोः ॥१४॥ [१९
ततो देवाः स-गन्धर्वाः सिद्धाश् च परमर्षयः ।
१७] प्रजा-पतिं पुरस्-कृत्य समेतास् तद्-रणाऽजिरे[5] ॥१५॥ [२०
सं-वर्त्त इव लोकानां[6] युध्यतोर् आ-बभौ तदा ।
१८] राक्षसानां च मुख्यस्य प्रेतानाम् ईश्वरस्य च ॥१६॥ [२१
राक्षसेन्द्रोऽथ वि-स्फार्य चापम् इन्द्राऽशनि-प्रभम् ।
१९] निर्-अन्तरम् इवाऽऽकाशं कुर्वन् बाणान् अमुञ्चत ॥१७[7]॥ [२२
मृत्युं चतुर्भिर् वि-शिखैः कालं[8] सप्तभिर् आर्दयत्[9] ।
२०] यमं शत-सहस्रेण शीर्ष-मर्मस्व्[10] अताडयत् ॥१८॥ [२३
ततः क्रुद्धस्य वदन यमस्य सम्-अजायत ।
२१] ज्वाला-माली स-निश्वासः स-धूम इव पावकः ॥१९॥ [२४
तद् आश्चर्यम् अथो दृष्ट्वा देव-दानव-सन्निधौ ।
२२] प्र-हर्षितौ मुदा-युक्तौ मृत्यु-कालौ बभूवतुः ॥२०॥ [२५
ततो मृत्युः क्रुद्ध-तरो वैवस्वतम् अभाषत ।
२३] मुञ्च मां सम्-अरे यावद् धन्म्य् एनं पाप-राक्षसम् ॥२१॥
न ममैष भवेत् कश्-चिन्[11] मर्यादा मे निसर्ग-तः । [२६
२४] हिरण्य-कशिपुः श्रीमान् न-मुचिः शंबरस् तथा ॥२२॥

---

१. च भ$_{1}$ भ$_{2}$ रा$_{1}$ ल$_{1}$–°कार्शिना । २. भ$_{1}$ वर्ज-संख्यं । ३. अ रा$_{1}$ ल$_{2}$ ल$_{3}$–तयोः । ४. अ भ$_{2}$ रा$_{1}$ ल$_{1}$ ल$_{2}$–चैव । ५. च भ$_{1}$ भ$_{2}$–°रं । ६. अ रा$_{1}$ ल$_{2}$–लोकेषु । ७. च–नास्ति । ८. भ$_{1}$–सूतं । ९. भ$_{1}$–अर्दयन् । १०. अ रा$_{1}$ ल$_{2}$–वर्ज–शीर्षे म° । ११. भ$_{1}$ भ$_{2}$ रा$_{2}$–वर्ज–कश्चिन् ॥

वि-सुन्दो[1] धूम-केतुश् च बलिर् वैरोचनोऽपि च ।
२५] शं-भुर् दैत्यो महा-राज वृत्रो बाणस् तथैव च ॥२३॥ [२७
राजर्षयः शस्त्र-विदो गन्धर्वाः स-महोरगाः ।
२६] ऋषयः पन्न-गा यक्षास् तथैवाऽप्सरसां गणाः ॥२४॥ [२८
[युगाऽन्ते परि-वर्तेत[2] पृथिवी स-महाऽर्णवा ।
२७] क्षयं नीता[3] महा-राज स-पर्वत-वन-द्रुमा ॥२५॥ ?] [२९
एते चाऽन्ये च बहवो बल-वन्तोऽपरे[4] सदा[5] ।
२८] नि-पातिता मया दृष्टाः किम् उताऽयं निशा-चरः ॥२६॥ [३०
मुञ्च मां साधु धर्म-ज्ञ यावद्[6] एनं नि-हन्म्य् अहम् ।
२९] न हि कश्-चिन् मया दृष्टो मुहूर्तम्[6] अपि जीवति[6] ॥२७॥ [३१
बलं मम न खल्व् एतन् मर्यादा हि निसर्ग-तः ।
३०] दृष्टो हि न मया कश्-चिन्[7] मुहूर्तान् म्रियते न यः ॥२८॥ [३२
एतत् तु वचनं श्रुत्वा धर्म-राजः प्रताप-वान् ।
३१] अब्रवीत् तत्र तं मृत्युं य(?प्रे) ए(?ह्ये) नं च नि-हन्म्य् अहम् ।२९[9] [३३
ततः[8] संरक्त-नयनः[8] क्रुद्धो वैवस्वतः प्र-भुः ।
३२] काल-दण्डम् अ-मोघं तं तोलयामास पाणिना ॥३०॥ [३४
यस्य पार्श्वेषु[10] निश्-छिद्राः[10] काल-पाशाः प्रति-ष्ठिताः ।
३३] पावकस्याऽथ[10] सं-काशो[10] मुद्गरो मूर्ध्न्य्[11] अत्र-स्थितः[11] ॥३१॥ [३५
दर्शनाद् एव यः प्राणान् प्राणिनां विप्र-कर्षति[12] ।
३४] किं पुनः स्पृश्यमानस्य ताड्यमानस्य[13] वा पुनः ॥३२॥ [३६
स ज्वाला-परिवारस् तु निर्-दहन्न् इव राक्षसम् ।
३५] करे स्पृष्टो[14] भग-वता महा-प्रहरणं(?णोऽ)[15] स्फुरन्(?त्)[15] ।३३।[३७
ततोऽभि-दुद्रुवुः सर्वे राक्षसा भय-पीडिताः ।
३६] सुराश् च क्षुभिताः सर्वे स-यक्षोरगराक्षसाः ॥३४॥ [३८

---

१. भ$_1$-विशुंभो । ल$_1$ ल$_3$ ब-वितुर्दो । प्र-वित्तदो । २. ल$_1$ ल$_3$ ब प्र-°वर्तते । ३. अ रा$_1$ ल$_1$ ल$_2$-प्राप्ता । ल$_3$ ब प्र-गता । ४. च-°न्तो दुरासदाः । ५. च-नास्ति । ६ अत आरभ्य ल$_1$-२८-शश्लोकस्य तृतीयपादं यावन्नास्ति । ७ भ$_1$-नास्ति । ८. भ$_1$-एवमुक्त्वा वचस्तस्य । ९. ल$_3$ प्र-वर्जं-°त्वनि° । १०. च-भ$_1$ भ$_2$-°कस्पर्शसं° । ११. भ$_1$ भ$_2$-मूर्ध्नि च स्थितः । १२ भ$_1$-व्यपक° । १३. अ-ताडमा° । १४. भ$_1$ वर्जं-स्पृष्टं । १५. अ ल$_2$ ल$_3$-महास्फुरणं महत् । प्र-°रणं फुटत् ॥

तस्मिन् प्रहर्तु-कामे तु यम-दण्डेन भास्-वता ।
३७] यमं पिता-महः साक्षाद् दर्शयित्वेदम् अब्रवीत् ॥३५॥ [३९
वैवस्वत महा-बाहो न खल्व् अमित-विक्रम ।
३८] नि-हन्तव्यस् त्वयाऽनेन दण्डेनैष निशा-चरः ॥३६॥ [४०
वरः खलु मयैतस्य दत्तस् त्रिदश-पुङ्गव ।
३९] तत् त्वया नाऽनृ-कृतं कार्यं यन् मया व्या-हृतं वचः ॥३७॥ [४१
अ-मोघो ह्य् एष सर्वेषां प्राणिनाम् अ-मितप्रभः[1] ।
४२] काल-दण्डो मया सृष्टः सर्व-मृत्यु-पुरः-सरः ॥३८॥ [४४
न तु खल्व् एष ते सौम्य पात्यो राक्षस-मूर्धनि ।
४३] न ह्य् अस्मिन् पतिते कश्-चिन् मुहूर्तम् अपि जीवति ॥३९॥ [४५
यदि ह्य् अस्मिन् नि-पतिते न म्रियेतैव[2] राक्षसः ।
४४] म्रियेत वा दश-ग्रीवस् तथाऽप्य् उभय-तोऽनृ-कृतम् ॥४०॥ [४६
तन् नि-वर्तय लङ्केशाद् दण्डम् एनं समुद्-यतम् ।
४५] रोषं च मा कुरुष्वाऽद्य लोकस् त्वां पर्यवेक्षते ॥४१॥ [४७
एवम् उक्तस् तु धर्माऽऽत्मा प्रत्य्-उवाच यमस् तदा ।
४६] मया[3] व्या-वर्तितो दण्डः प्र-भविष्णुर् हि नो भवान् ॥४२॥ [४८
किं न्व् इदानीं मया शक्यं कर्तुं रण-गतेन हि[4] ।
४७] न मया यद्य् अयं शक्यो हन्तुं वर-पुरस्कृतः ॥४३॥ [४९
एष तस्मात् प्र-णश्यामि दर्शनाद् अस्य रक्षसः ।
४८] इत्य् उक्त्वा स-रथः साऽश्वस् तत्रैवाऽन्तर्-अधीयत ॥४४॥ [५०
दश-ग्रीवस् तु तं जित्वा नाम वि-श्राव्य चाऽऽत्मनः ।
४९] पुष्पकेण सु-संहृष्टो निश्-चक्राम यमाऽऽलयात् ॥४५॥ [५१
स तु वैवस्वतो देवैः सह ब्रह्म-पुरो-गमैः ।
५०] जगाम त्रि-दिवं देवो नारदश् च महान् ऋषिः ॥४६॥ [५२

इत्यार्षे रामायण उत्तर-काण्डे यमाऽन्तर्धानं नाम

पञ्चविंशः सर्गः ॥ २५ ॥

---

१. च-°भ । २. च $ल_3$-°येत च । ३. च $भ_1$ $भ_2$ एष । ४. अ च $भ_1$ $भ_2$ $ल_2$ $ल_3$ ब-ह । प्र-च ॥

स तु जित्वा[1] दश-ग्रीवो यमं त्रिदश-पुङ्गवम् । [१पू

१] निर्-गत्य नगरात् तस्मान् नारदं ददृशे पुनः ॥ १[2] ॥ [N

जयेन वर्धयित्वा तं मारीच-प्रमुखास् तदा ।

२] पुष्पकं तं समा-रूढाः सान्त्विता रावणेन तु ॥ २ ॥ [३

ततो रसा-तलं रक्षः प्र-विष्टः[3] पयसां[4] निधिम् ।

३] दैत्योरगगणाऽऽकीर्णं वरुणेन सु-रक्षितम् ॥ ३ ॥ [४

स तु भोग-वतीं[5] जित्वा पुरीं वासुकि-पालिताम् ।

४] कृत्वा नागान् वशे हृष्टो ययौ मणि-मतीं पुरीम् ॥ ४ ॥ [५

निवात-कवचा यत्र दैत्या लब्ध-वराः स्थिताः ।

५] आ-साद्य तान् राक्षसेन्द्रो युद्धायाऽऽह्वयते तदा ॥ ५ ॥ [६

ते तु सर्वे सु-विक्रान्ता दैतेया[6] बाहु-शालिनः ।

६] नाना-प्रहरणास् तत्र प्र-वृद्धा[7] युद्ध-दुर्मदाः ॥ ६ ॥ [७

तेषां प्र-युध्यतां तत्र साऽग्रः सं-वत्सरो गतः ।

८] न चाऽन्य-तरयोस् तत्र वि-जयोऽथ क्षयोऽपि[8] वा ॥ ७ ॥ [९

ततः पिता-महो देवस् त्रैलोक्य-गतिर्[9] ईश्वरः[9] ।

९] आ-जगाम द्रुतं तत्र विमान-वरम् आ-स्थितः ॥ ८ ॥ [१०

निवात-कवचानां च नि-वार्य रण-कर्म[10] तत्[10] ।

१०] पिता-महस् ततो वाक्यम् आह दैतेय-राक्षसान्[11] ॥ ९ ॥ [११

नैव चाऽयं रणे[12] शक्यो युद्धे(?योधैर्) जेतुं[12] सुराऽसुरैः ।

११] न भवन्तः[13] क्षयं नेतुं शक्याः[14] साऽमर-दानवैः ॥१०॥ [१२

तत् सखि-त्वं तु भवतां राक्षसेन तु रोचते ।

१२] अ-विभक्तांश् च सर्वाऽर्थान्[15] सु-हृदो नाऽत्र संशयः ॥११॥ (?) [१३

ततोऽग्नि-साक्षिकं सख्यं कृत्वा तत्र दशाऽऽननः ।

१३] निवात-कवचैः सार्धं प्रीति-मान् अभवत् तदा ॥१२॥ [१४

---

१. क$_1$–गत्वा । २. ल$_2$–नास्ति । ३. भ$_1$–वर्जं–°ष्टम् । ४. च भ$_1$ भ$_2$ रा$_1$ ल$_3$ ब प्र-पयसो । ५. च रा$_1$ ल$_1$ ल$_3$ ब प्र–भोगपुरीं । ६. अ ल$_2$ प्र–दैत्येया । ७. च–दैतेया । ८. ब प्र–क्षयोऽथ । ९. च भ$_1$ भ$_2$–°गतिरव्ययः । ब ल$_3$ प्र–°गतिसंश्रयः । १० च–°र्मकृत् । ११. भ$_1$ ल$_1$–वर्जं-दैत्येय° । १२. ल$_1$–युद्धे जेतुं यौद्धैः शक्यः । १३. ल$_3$ ब–भवद्भिः । प्र–भवद्विधाः । १४. ल$_1$–वर्जं–अपि । १५. च भ$_1$ भ$_2$–वर्जं–सर्वांस्तान् ॥

पूजितस्[1] तैर् यथा-कामं सं-वत्सरम् अथाऽवसत् ।
१४] स्व-पुरान्[2] निर्-विशेषां हि पूजां लेभे दशाऽऽननः ॥१३॥ [१५
स तु(?तू ऽ)प-धार्य[3] मायानां[3] शतम् एकोनम् आत्म-वान् ।
१५] सलिलेन्द्र-पुराऽन्वेषी भ्रमति स्म रसा-तलम् ॥१४॥ [१६
ततोऽश्म-नगरं नाम[4] दैत्यानां पुरम् आऽविशत् ।
१६] तांस् तु जित्वा मुहूर्तेन हत्वा दैत्यान् सहस्र-शः ॥१५॥ [१७
ततः[5] पाण्डुर-मेघाऽऽभं कैलास-वद् अव-स्थितम् ।
१७] वरुणस्याऽऽलयं चित्रम् अपश्यद् राक्षसाऽधिपः ॥१६॥ [२०
पयः क्षरन्ती सततं यत्र गौः काम-संज्ञिता[6] ।
१८] यस्याः पयोऽभिनि-ष्यन्दात् क्षीरोदो नाम सागरः ॥१७॥ [२१
तस्मात् प्र-भवति श्री-माञ् छीत-रश्मिः प्रजा-पतिः । [२२उ
१९] यं समा-साद्य जीवन्ति फेन-पाः परमर्षयः ॥१८॥
अ-मृतं यत्र[7] चोत्-पन्नं सुधा चाऽपि सुधाऽऽशिनाम् । [२३
२०] ब्रुवन्ते[8] यां नरा[9] लोके सुरभीं नाम नाम-तः ॥१९॥
प्र-दक्षिणं तु तां कृत्वा रावणः परमाऽद्भुताम् ।
२१] प्र-विष्टो[10] वारुणं वेश्म रम्यं यादो-गणैर् वृतम् ॥२०॥ [२४
ततो धारा-शताऽऽकीर्णं शारदाऽभ्र-निभं तदा ।
२२] नित्य-प्रहृष्टं[11] ददृशे यत्राऽऽस्ते वरुणो गृहे ॥२१॥ [२५
ततो हत्वा बलाऽध्यक्षान् सम्-अरे तैश् च ताडितः ।
२३] अब्रवीत् क्व स वो राजा गतः[12] शीघ्रं नि-वेद्यताम् ॥२२॥ [२६
युद्धाऽर्थी रावणः प्राऽऽप्तस् तस्य युद्धं प्र-दीयताम् ।
२४] वद[13] वा न भयं[13] तेऽस्ति[14] निर्-जितोऽस्मीऽति[15] साऽञ्जलिः[15] ।२३।[२[illegible]
एतस्मिन्न् अन्तरे क्रुद्धा वरुणस्य महाऽऽत्मनः ।
२५] पुत्राः पौत्राश् च निष्-क्रान्ता[16] गौर-पुष्कर-रोचिषः[16] ॥२४॥

---

१. ल$_1$-वर्जं-°तैस् । २. अ-स पुरे । ३. अ-अरूपं धार्यमाणानां । भ$_2$-सरूपधार्यमाणानां । रा$_1$-वर्जं-सरूपं धार्यमाणानां । ४. अ ल$_2$-प्राप्य । ५. च भ$_1$ रा$_1$ ल$_1$ ल$_3$ ब प्र-तत्र । ६. च भ$_1$ भ$_2$ ल$_1$ ब-नाभिसं° । ल$_3$ प्र-नानसं° । ७. अ रा$_1$ ल$_2$-तत्र । ८ रा$_1$-वदंति । ल$_1$ ल$_3$ ब प्र-ब्रुवति । ९. रा$_1$-सुरा । १०. ल$_1$-वर्जं-प्रविश्य । ११. च रा$_1$ ल$_1$-नित्यं प्र° । १२. च-यतः । १३. ल$_3$ ब-वरदानभयं । १४ भ$_1$-मेऽस्ति । १५ च रा$_1$-वर्जं-°स्मि कृताञ्जलिः । १६. अ ल$_2$ ब प्र-°श्चरः पुष्कर एव च । भ$_1$ भ$_2$ रा$_1$-गौश्च पुष्कर एव च । ल$_1$ ल$_3$-श्चान्ये पुष्कर एव च ॥

निष्-क्रम्य च महा-वीर्या बलैः समुद्र-इतास्[1] तथा[1] ।
२६] युक्त्वा रथान् काम-गमांस् तुल्यान् पुष्कर-तेजसा[2] ॥२५॥ [२५
ततस् तद् युद्धम् अभवद् दारुणं रोम-हर्षणम् ।[3]
२७] सलिलेशस्य[4] पुत्राणां रावणस्य च रक्षसः[5] ॥२६॥ [३०
अमात्यैः सु-महावीर्यैर्[6] दश-ग्रीवस्य[7] रक्षसः ।
२८] वारुणं तद् बलं कृत्स्नं क्षणेन विनि-पातितम् ॥२७॥ [३१
ततस् त्व्[8] एतान्[8] समा-साद्य वरुणस्य सुतास्[9] तदा ।
२९] अर्दिता वै[10] शरौघेन[11] नि-वृत्ता रण-कर्मणः[12] ॥२८॥ [३२
अर्दितेष्व् अथ रक्षःसु तदा वरुण-सूनुभिः ।
३०] रावणः क्रोध-ताम्राऽक्ष आ-काशे सम्-अतिष्ठत ॥२९॥[13] [N
दृष्ट्वाऽऽकाश-गतं[14] तं[15] तु रावणं राक्षसं[16] स्थितम्[16] । [N
३१] आ-काशम् एवाऽऽविविशुस् ते रथाः[17] शीघ्र-गामिनः ॥३०॥ [३३उ
तद् आसीत् तुमुलं तेषां[18] तुल्यं वि-जयम् इच्छताम् ।
३२] आकाश-युद्धं तुमुलं पुरा वृत्रेन्द्रयोर् यथा ॥[19] ३१॥ [३४
ततस् ते रावणं युद्धे शितैः[20] पावक-सन्निभैः ।
३३] विमुखी-कृत्य सं-हृष्टाः शरैर् मर्मस्व् अताडयन् ॥३२॥ [३५
ततो महोदरः क्रुद्धो राजानं[21] वीऽऽक्ष्य ताडितम्[22] ।
३४] त्यक्त्वा मृत्योर् भयं शूरो युद्धाऽऽकाङ्क्षी व्य्-अलोकयत् ॥३३॥ [३६
तेन तेषां हयाः सर्वे काम-गाः पवनोपमाः ।
३५] महोदरेण गदया ताडितास्[23] ते मदोत्कटाः[23] ॥३४॥ [३७
हत्वा रथांश् च योधांश् च वारुणानां[24] स राक्षसः ।
३६] मुमोच सु-महानादं वि-रथान् प्रेक्ष्य सं-स्थितान् ॥३५॥ [३८

---

१. च-परिवृताः स्वकैः । २. अ-°सः । ३. च-ततो युद्धं समभवत्तुमुलं लोमहर्षणम् । ल१ प्र-ततस्तु यु° । ४. च-°लेंद्रस्य । ५. प्र-मंत्रिणां । ६. च प्र-तु म° । ७. प्र-रावणस्य च । ८. च भ१ ल१-ते तान् । ९. अ च भ२ ल२-सुतांस् । १०. च-ते । ११. भ१ भ२ रा१ ल१-°घेण । १२. च भ१-°र्मतः । १३. च-वर्जं-नास्ति । १४. च-°गमं । १५ ब-ते । १६. च-गगनास्थितं । १७. च-रथैः । १८. च-युद्धं । १९. च-तदा सुमहदाकाशे वृत्रवासवयोरिव । २०. च रा१-वर्जं-शरैः । २१. अ ल२-रावणं । २२. च-धर्षितं । २३. च-हताः पेतुरथांबरात् । भ१-°तास्ते महोत्कटाः । २४. च-वारुणीयान् ॥

तेन तेषां रथाः साऽश्वाः स[2] ह सारथिभिस्[1] तदा[1] ।
३७] महोदरेण नि-हताः पतिता[3] जगती-तले[4] ॥३६॥ [३९
ते[5] तु त्यक्त्वा रथान् पुत्रा[6] वरुणस्य महाऽऽत्मनः[7] ।
३८] आ-काशे[8] धि-ष्ठिताः सर्वे[8] स्व-प्रभावान् न विव्यथुः ॥३७॥ [४०
धनूंषि कृत्वा सज्जानि विनिर्-भर्त्स्य महोदरम् ।
३९] रावणं सम्-अरे क्रुद्धाः सहिताः समुपाऽद्रवन्[9] ॥[10]३८॥ [४१
ततः क्रुद्धो दश-ग्रीवः कालाऽग्निर् इव धि-ष्ठितः ।
४१] शर-वर्षं महा-वेगं तेषां मर्मस्व् अताडयत्[11] ॥३९॥ [४३
मुसलानि[12] वि-चित्राणि तथोपल-शतानि च ।[13] [४४उ
४२] पट्टिशांश् चैव शक्तीश् च शत-घ्नीर् महतीर् अपि ।[13]
पातयामास लङ्केशस् तेषाम् उपरि धि-ष्ठितः ॥[14]४०॥ [४५
४३] रथ-भ्रंशात् तु ते वीराः सीदन्ति[15] स्म[15] पदातयः ।
N] महा-पङ्कं समा-साद्य कुञ्जराः षष्टि-हायनाः ॥[16]४१॥ [४६
सीदमानांस् तु तान् दृष्ट्वा पुत्रान् अम्बु-पतेस् तदा ।[16]
N] ननाद रावणो हर्षान् महान् अम्बु-धरो यथा ॥[17]४२॥ [४७
ततो रक्षो महा-नादं मुक्त्वा सम्प्राऽहरत् तदा ।
४४] नाना-प्रहरणाऽऽसारैर् धाराऽऽसारैर् इवाऽम्बु-दः ॥४३[17]॥ [४८
ततस् ते वि-मुखाः सर्वे पतिता धरणी-तले ।
४५] युद्धात् स्वैः पुरुषैः क्षिप्रं[18] गृहान् एव नि-वेशिताः[19] ॥४४॥ [४९
ततस् तान् अब्रवीद् रक्षो वरुणाय नि-वेद्यताम्[20] । [५०
४६] रावणं चाऽब्रवीन् मन्त्री प्र-भासो नाम वारुणः ॥४५[21]॥

१. ल$_{3}$ ब–आश्वा रथि° । प्र–आशु सार° । २. च–वर्जं–सह । ३. अ ल$_{2}$ ल$_{3}$ प्र–पातिता । ४. च–पृथिवीतले । ल$_{1}$–धरणीतले । ५. च–तैस् । ६. च–पुत्रैर् । ७. च–°त्मभिः । ८. च–°शेऽवस्थितैः शूरैः । ९ अ ल$_{2}$–वर्जं–समभिद्रुताः । १०. अतः परमधिकः पाठः—च–ते शरैश्चापनिर्मुक्तैर्बहुवक्त्रैः सुदारुणैः । दारयन्ति दशग्रीवं मेघा इव महागिरिम् ॥ ११. च भ$_{1}$ भ$_{2}$–अपातयत् । ब ल$_{3}$ प्र–अवासृजत् । १२. रा$_{1}$–मुशलानि । १३. अ ल$_{2}$–नास्ति । १४. अ भ$_{1}$ भ$_{2}$ ल$_{2}$–नास्ति । १५. च–न्यसीदंस्ते । १६. च भ$_{1}$–नास्ति । १७. अ ल$_{2}$–नास्ति । १८. च–शीघ्रं । १९ च–प्रवे° । २०. अ ल$_{2}$–निवेदितां । २१. अत आरभ्य रा$_{1}$–५०–शश्लोकस्य पूर्वार्धं यावन्नास्ति ॥

गतः खलु महा-राजो ब्रह्म-लोकं जलेश्वरः ।
४७] गान्धर्वं हि सुरैः सार्धं श्रोष्यते[1] पद्म-योनिना[2] ॥४६॥ [५१
तत् किं तव वृथा वीर श्रमेण नृ-पतौ गते ।[3]
४८] ये[4] हि[4] संनि-हिता वीराः कुमारास् ते परा-जिताः ॥४७॥ [५२
एतच् छ्रुत्वा राक्षसेन्द्रो नाम वि-श्राव्य चाऽऽत्मनः ।
४९] हर्षान् नादं[5] स[6] वि-सृजन्[6] निष्-क्रान्तो वरुणाऽऽलयात् ॥४८॥ [५३
महोदरेण सं-घुष्टं[7] हर्ष-गद्गदया गिरा ।　　[दा २३-प्र १, १उ
५०] द्वितीयं जितवांल् लोकं रावणो राक्षसाऽधिपः[8] ॥४९॥ [N
ते[9] येनैवाऽऽगतास्[9] तत्र[10] तेनैव प्रतिनिर्-गताः[11] ।
५१] पातालं नगरं जित्वा ततस् ते प्र-ययुर् द्रुतम् ॥[12]५०॥ [५४

इत्यार्षे रामायण उत्तर-काण्ड पाताल-विजयो[13] नाम

षड्विंशः सर्गः ॥ २६ ॥

---

## [ वं-२८ ]= [ सप्तविंशः सर्गः ] =[ दा-२३, प्र०-१ ]

[14]ततोऽश्म-नगरं भूयो विविशुर्[15] युद्ध-लालसाः ।
१] स तु तत्र दश-ग्रीवो गृहं पश्यति भास्वरम् ॥ १ ॥
वैडूर्य-तोरणाऽऽकीर्णं मुक्ता-जाल-विभूषितम् ।　　[२
२] सुवर्ण-स्तम्भ-गहनं वेदिकाभिः समन्त-तः ॥ २ ॥
वज्र-स्फटिक-सोपानं किङ्किणी-स्वन-सङ्कुलम्[16] ।　　[३
३] भद्राऽऽसन-युतं[17] रम्यं महेन्द्रभवनोपमम् ॥ ३ ॥
तत्[18] तु[18] दृष्ट्वा गृह-वरं दश-ग्रीवः प्रताप-वान् ।　　[४
४] कस्येदं भवनं सौम्यं मेरु-कन्दर-सन्निभम्[19] ॥ ४ ॥

---

१. अ $ल_2$-प्रविष्टः । ब-विश्राव्यं । २. च-वर्जं-पद्मसंभवः । ३. च-तद्लं ते वृथा वीर परिश्रम्य नृपे गते । ४. च-येऽत्र । ५. च-नादान् । ६. अ $ल_2$ $ल_3$-समसृजन् । प्र-सुविसृजन् । ७. $ल_1$ $ल_3$ ब प्र-संजुष्टो । ८. च-°सेश्वरः । ९. च-तेनैव तं ग° । १०. अ $ल_2$-योधास् । ११. च-सुविनिः-सृताः । १२. च-लंकामभिमुखा हृष्टा नभस्तलकृतेक्षणाः । १३. च-रसातलविजयो । १४. इतः पूर्वमधिकः पाठः—च-पाषाणनगरं हृष्टास्ततस्ते प्रययुर्द्रुतम् । पुरस्तादास्थिता रौद्रा वरदत्तस्य रक्षसः ॥ १५. च $भ_1$ $रा_1$-विचेरुः । १६. च-°णीजालशोभितं । $भ_1$ $भ_2$-°णीजालसं° । $रा_1$-°णीजालभूषितं । १७. च-बद्धास° । $भ_1$-महास° । १८. च-तत्र । १९. $ल_1$ ब-महेन्द्रभवनोपमं ॥

गच्छ प्र-हस्त शीघ्रं त्वं जानीष्व भवनोत्तमम् । [५
५] एवम् उक्तः प्र-हस्तस् तु प्र-विवेश गृहोत्तमम् ॥ ५ ॥ [६
शून्यं सम्प्रेक्ष्य तद्-द्वारं पुनः कक्षाऽन्तरं[1] ययौ ।
६] सप्त-कक्षाऽन्तरं[2] गत्वा ततो ज्वालाम् अपश्यत ॥ ६ ॥ [७
तेन[3] दृष्टः[3] पुमांस् तत्र हृष्टो[4] हास्यम् अमुञ्चत[4] ।
७] श्रुत्वा तु स महा-हास्यम् ऊर्ध्व-रोमाऽभवत् तदा ॥ ७ ॥ [८
ज्वाला-मध्ये स्थितस् तत्र हेम-माली[5] वि-मोहनः[5] ।
८] आदित्य इव दुष्-प्रेक्ष्यः साक्षाद् इव[6] यमः प्र-भुः[6] ॥ ८ ॥ [९
तथा[7] दृष्ट्वाऽद्भुतं तत्र[7] प्र-हस्तोऽथ[8] विनिर्-गतः ।
९] विनि-वृत्याऽब्रवीत्[9] सर्वं रावणाय निशा-चरः ॥ ९ ॥ [१०
अथ[10] राम[10] दश-ग्रीवः पुष्पकाद् अव-रुह्य[11] सः ।
१०] प्रवेष्टु-कामो वेश्माऽथ भिन्नाऽञ्जनचयोपमः ॥१०॥ [११
बद्ध-मौलिर् धनुष्-मांश्[12] च पुरुषोऽस्याऽग्र-तः स्थितः ।
११] द्वारम् आ-वृत्य सहसा ज्वाला-जिह्वो[13] भयानकः[14] ॥११॥ [१२
श्वेताऽक्षश्[15] चारु-दशनो वि-मुखोऽप्रिय-दर्शनः ।
१२] महा-भीषण-नासश् च कम्बु-ग्रीवो महा-हनुः ॥१२[16]॥ [१३
गूढ-श्मश्रुर् निगूढाऽस्थिर्[16] दंष्ट्रालो[17] लोम-हर्षणः ।
१३] गृहीत्वा लोह-मुसलं[18] द्वारं वि-ष्टभ्य तिष्ठति[19] ॥१३॥ [१४
अथ सं-दर्शनात् तस्य ऊर्ध्व-रोमा बभूव[20] सः[20] ।
१४] हृदयं कम्पते चाऽस्य वेपथुश् च व्य्-अजायत[21] ॥[22]१४॥ [१५
निमित्तान्य्[23] अ-मनोज्ञानि[23] दृष्ट्वा राम[24] व्य्-अचिन्तयत्[24] ।[25]
१५] अथ चिन्तयतस् तस्य स एव पुरुषोऽब्रवीत् ॥१५॥ [१६

---

१. अ ल$_1$ ल$_2$ ल$_3$ प्र-कक्ष्यांतरं । २. ल$_3$ ब प्र-°क्ष्यांतरं । ३. अ भ$_2$ ल$_1$-तेन हृष्टः । च-ज्वालामध्ये । ४. अ भ$_2$ ल$_1$ ल$_2$-दृष्टो हा° । च-°ष्टो हासं मुमोच सः । अत आरभ्य ल$_3$ ब प्र-८-मश्लोकस्य प्रथमपादं यावन्नास्ति । ५. अ ल$_2$-९-मश्लोकस्य च प्रथमपादं यावन्नास्ति । ६. भ$_1$ भ$_2$-दिवसकृत्प्रभः । ७. च भ$_1$ भ$_2$ रा$_1$ ल$_1$-ततो दृष्ट्वा तु वृत्तांतं । ८. च भ$_1$ भ$_2$ रा$_1$ ल$_1$-त्वरमाणो । ९. च-विनिर्गत्या° । १०. च-अवगम्य । ११. च-अवतीर्य । १२. च भ$_2$-वपुष्मांश् । १३. च-ज्वलज्जिह्वो । १४. च-नास्ति । १५. रा$_1$-रक्ता° । १६. च-नास्ति । १७. भ$_1$-दंष्ट्रागो । १८. च-वज्रं-मुसुलं । १९. च रा$_1$-धिष्ठितः । २०. च-व्यजायत । २१. ब-विजायते । २२. च-नास्ति । २३. अ भ$_2$ ल$_3$ प्र-°त्तानि म° । २४. च-तान्यपश्यचि° । २५. रा$_1$-नास्ति ॥

किं त्वं चिन्तयसे रक्षो वि-स्रब्धं[1] ब्रूहि मा चिरम्[1] ।
१६] युद्धाऽऽतिथ्यं महा-वीर[2] करिष्ये रजनी-चर ॥१६॥ [१७
रावणो हि ततो भूय ऊर्ध्व-रोमा व्य्-अजायत ।[3]
१८] अथ धैर्यं समा-लम्ब्य रावणो वाक्यम् अब्रवीत् ॥१७॥ [१९
गृहेऽत्र[4] तिष्ठते[4] को वै ब्रूहि[5] मे[5] वदतां वर ।
१९] अनेन सार्धं योत्स्यामि यथा वा मन्यते भवान् ॥१८॥ [२०
२०पू] स एनं[6] पुनर् एवाऽऽह दानवेन्द्रोऽत्र तिष्ठति । [२१
एवम् उक्त्वा तु तद् रक्षः कथयामास वीर्य-वान् ।[7]
१७] योत्स्यसे बलिना सार्धं तत्[8] सर्वं सं-विधीयताम्[8] ।।[9]१९॥ [१८
२०उ] एष वै परमोदारः शूरः सत्य-पराक्रमः ।
वीरो बहु-गुणोपेतः पाश-हस्त इवाऽन्तकः ॥[10]२०॥ [२२
२१] बालाऽर्क इव तेजस्-वी सम्-अरेष्व् अ-निवर्तकः ।
अ-मर्षी दुर्-जयो जेता बल-वान् गुण-सागरः ॥२१॥ [२३
२२] प्रियं-वदः संवि-भागी गुरु-प्रिय-करः सदा ।
कालाऽऽकाङ्क्षी महा-सत्त्वः सत्य-वाक् सौम्य-दर्शनः[11] ॥२२॥[२४
२३] दक्षः सर्वगुणोपेतो गूढः स्वाध्याय-तत्परः ।
एष गर्जति वात्य् एष ज्वलते तपते[12] तथा[12] ॥२३॥ [२५
२४] देवैश् च भूत-सङ्घैश्[13] च पन्न-गैश् च पतत्रिभिः[14] ।
भयं यो नाऽभि-जानाति तेन त्वं योद्धुम्[15] इच्छसि ॥२४॥ [२६
२५] बलिना यदि ते सार्धं रोचते राक्षसेश्वर ।
प्र-विश त्वं महा-बाहो सं-ग्रामं कुरु मा चिरम् ॥२५॥ [२७

---

१. च-ब्रूहि विस्रब्धमानसः । २. च भ$_1$ रा$_1$-अहं वीर । ३. च-वर्जं-नास्ति । ४. ल$_3$ ब प्र-गृहे प्रति° । ५. च-तद् ब्रूहि । ६. अ च-वर्जं-एवं । ७. अतः परमधिकः पाठः—भ$_1$ ल$_1$ प्र-योत्स्यसे बलिना सार्धं मया वा मन्यसे कथम् । रावणोभिहितो भूय ऊर्ध्वरोमा व्यजायत ॥ अथ संदिश्य भगवान् रक्षो वचनमब्रवीत् । ८. च-मया वा तं वि° । ब प्र-मया वा मन्यसे कथं । ९. अतः परमधिकः पाठः—प्र-स एनं पुनरेवाह यः पुमान् द्वारमास्थितः । १०. अत आरभ्य अ-२२-शश्लोकं यावन्नास्ति । ११ भ$_1$-सौम्यविक्रमः । १२. अ ल$_2$ ल$_3$ ब-तप्यते यथा । १३. च-वर्जं-सर्पसं° । १४. च-सपक्षिभिः । १५. अ ल$_2$ ल$_3$-युद्धम् ॥

२६] एवम् उक्तो दश-ग्रीवः प्र-विवेश यतो बलिः ।
प्रवि-लोक्याऽथ[1] लङ्केशं जहास दहनोपमः । [२८
२७] आदित्य इव दुष्-प्रेक्ष्यः स्थितो दानव-सत्तमः ॥[2]२६॥
अथ सं-दर्शनाद् एव बलिना विश्व-रूपिणा ।[3] [२९
२८] समुद्-गृहीतं[4] रक्षो वै उत्-सङ्गे स्थाप्य चाऽब्रवीत् ॥२७॥
दश-ग्रीव महा-बाहो किं ते कर्म[5] करोम्य् अहम् ।
२९] किम् आगमन-कृत्यं ते ब्रूहि त्वं राक्षसेश्वर ॥२८॥ [३०
एवम् उक्तस् तु बलिना रावणो वाक्यम् अब्रवीत् ।
३०] श्रुतं मया महा-भाग बद्धस् त्वं विष्णुना पुरा । [३१
३१पू] सोऽहं मोचयितुं शक्तो बन्धनात् त्वां न सं-शयः ॥२९॥ [३२पू
कोऽयं तिष्ठति ते द्वारि पुरुषः काल-रूप-धृत्[6] ।[7]
N] एनं[8] तु[9] नाऽभि-जानामि तद् भवान् वक्तुम् अर्हति ॥३०॥ [N
३१उ] एवम् उक्तस् ततो हासं बलिर् मुक्त्वैनम् अब्रवीत् । [३२
श्रूयताम् अभि-धास्यामि यं[9] त्वं पृच्छसि रावण ॥३१॥
३२] य[10] एष पुरुषः[10] श्यामो द्वारि[11] तिष्ठति नित्य-शः । [३३
एतेन दानवेन्द्राश् च[12] तथाऽन्ये बल-दर्पिताः ।
३३] वशं नीता बल-वता पूर्वे पूर्व-तराश् च ये ॥३२[13]॥ [३४
बद्धश् चाऽहम् अनेनैव कृताऽन्तो दुर्-अतिक्रमः ।
३४] क एनं पुरुषं[14] लोके वञ्चयिष्यति रावण ॥३३॥ [३५
सर्व-भूताऽपहर्ता च य एष ह्य् अनु-तिष्ठति ।
३५] कर्ता कारयिता चैव धाता च भुवनेश्वरः ॥३४॥ [३६
न त्वं वेद न वाऽहं[15] वै भूताऽऽत्मानं हि नित्य-दा[15] ।
३६] कलिश् चैवैष[16] कालश् च[16] सर्व-भूताऽपहारकः[17] ॥३५॥ [३७

---

१. च–स वि° । २. अतः परमधिकः पाठः—अ ल$_2$ ल$_3$ प्र–अथ संदर्शनादेव प्रविवेश यतो बलिः । ३. प्र–नास्ति । ४. भ$_1$–°गृह्य तु । ५. च भ$_1$ भ$_2$–कामं । ब ल$_3$ प्र–काले । ६. भ$_1$ रा$_1$–°धृक् । ७ च–नास्ति । ८. अ ल$_1$ ल$_2$–एतं तु । भ$_1$ ल$_3$ ब प्र–एवं तु । रा$_1$–तमेनं । ९. अ प्र ब–यस्तु । १०. अ–स यज्ञपु° । ल$_3$ ब प्र–पुराणपु° । ११. च–वर्जे–हरिस्तु । १२. च–ते । १३. प्र–नास्ति । १४. ल$_1$ ल$_3$ प्र–°षो । १५. अ ल$_2$–°तानि चैव नि° । च भ$_1$ भ$_2$–चाहं भूतभव्यस्य नित्यशः । १६. च–चैव हि कालेशः । १७. अ भ$_1$ भ$_2$ रा$_1$–°पकारकः ॥

३७पू] लोक-त्रयस्य सर्वस्य हर्ता स्रष्टा तथैव च ।
संहरत्य् एष भूतानि स्थावराणि चराणि च । [३८
४७] पुनश् च सृजते विश्वम्[1] अन्-आद्यन्तं[2] महेश्वरः ॥३६॥ [३९पू
इष्टं चैव हि दत्तं च[3] हुतं चैव निशा-चर ।
४८] सर्वस्यैव[4] हि लोकेशो धाता गोप्ता न सं-शयः ॥३७॥ [४०
नैवं-विधं महद् भूतं विद्यते भुवन-त्रये । [४१
४९] अहं त्वं[5] चैव[5] राजेन्द्र ये चाऽन्ये पूर्ववत्-तराः ।
नेता[6] ह्य् एष महा-भूतः[7] पशुं रसनया[7] यथा ॥[8]३८॥ [४२
५०] वृत्रो दनुः शुकः शं-भुर् नि-शुम्भः शुम्भ एव च ।
काल-नेमिश् च प्र-ह्लादः कूटो वैरोचनो मृडः[9] ॥३९॥ [४३
५१] यमलाऽर्जुनौ कंसश् च कैटभो मधुना सह ।
एते तपन्ति द्योतन्ति भान्ति वर्षन्ति चैव हि ॥[10]४०॥ [४५
५२] सर्वैस् त्रिदश-राज्यानि कारितानि महाऽऽत्मभिः ।
युद्धे सुर-गणाः सर्वे निर्-जिताश् च सहस्र-शः ॥[11]४१॥ [५०
५३] प्र-मत्ता भोग-सक्ताश् च बालाऽर्क-सम-तेजसः ।[12] [५१उ
ते हि सर्वे क्षयं नीता बलिना काम-रूपिणा ॥४२॥ [५४उ
५४] सम्-अरे[13] च दुरा-धर्षाः[13] श्रूयन्ते न[14] परा-जिताः[14] ।
५५पू] तेऽपि नीता[15] महा-भूताः कृताऽन्त-बल-नोदिताः[16] ॥[17]४३॥ [५५

---

१. च–सर्वम् । २. च–°द्यं तन् । ३. अ च ल$_2$–वै । ४. च–वर्जं–सर्वमेव । ५. प्र–चैव हि । ६. अ ल$_2$–निस्यो । ७. रा$_1$–महद्भूतं पशुरस° । ल$_1$ ल$_3$ ब प्र–°भूतान्पशून् र° । ८. च–नेता ह्येतान् यथा सिंहः पश्वोघान् यमसादनम् । ९. च–बलिः । भ$_1$ रा$_1$–मृदुः । १०. अतः परमधिकः पाठः—प्र–सर्वैः क्रतुवरैरिष्टं सर्वैस्तप्तं महत्तपः । सर्वे ते सुमहात्मानः सर्वे वै योगधर्मिणः ॥ सर्वैरैश्वर्यमासाद्य भुक्तं भोगैर्महत्तरैः । दत्तमिष्टमधीतं च प्रजाश्च प्रतिपालिताः ॥ स्वपक्षेष्वनुगोप्तारः सर्वे शस्त्रविशारदाः । सर्वे हि गुणसंपन्नाः समरेष्वनिवर्तकाः ॥ ११. अतः परमधिकः पाठः—प्र–देवानामपि ये शक्ताः स्वपक्षपरिपालिताः ॥ १२. अतः परमधिकः पाठः—प्र–यदा देवान्प्रद्विषन्ति तदैषां विष्णुरीश्वरः । स पापपूर्वकं नाशं संचिन्त्य भगवान्हरिः ॥ प्रादुर्भावं च कुरुते येनैतन्निधनं नयेत् । पुनरेवात्मनात्मानमधिष्ठाय स्वधिष्ठितः । एवमेतेन देवेन दानवेन्द्रा महात्मनः ॥ १३. भ$_1$–°रे चैव दुर्धर्षाः । ब ल$_3$ प्र–सर्वे ते च दु° । १४. च–चाप° । १५. च–सर्वे । १६. अ भ$_1$ ल$_1$ ल$_2$ प्र–°बलनोदि° । च–°लमोहिताः । रा$_1$–°लचोदिताः । १७. अतः परमधिकः पाठः—अ च भ$_1$ भ$_2$ रा$_1$ ल$_1$ ल$_2$ ल$_3$ ब–इन्द्राणां च सहस्राणि सुराणामयुतानि च ॥

ऋषीणां चैव मुख्यानां शतान्य् अथ सहस्र-शः ।[1]

३८] वशं नी(?त्वै) तानि सर्वाणि स एव[2] द्वारि तिष्ठति ॥४४॥ [७४उ

तस्य तद् वचनं श्रुत्वा रावणो वाक्यम् अब्रवीत् ।

३९] मया प्रेतेश्वरो दृष्टः कृतान्तः सह मृत्युना ॥४५॥ [७५

पाश-हस्तो महा-ज्वालो ह्य् ऊर्ध्व-रोमा भयानकः ।

४०] दंष्ट्रालो विद्युज्-जिह्वश् च सर्प-वृश्चिक-रोम-वान् ॥४६॥ [७६

रक्ताऽक्षो[3] भीम-वेगश् च सर्व-सत्त्व-भयं-करः ।

४१] आदित्य इव दुष्-प्रेक्ष्यः सम्-अरेष्व् अ-निवर्तकः ।[4] [७७

पापानां शासिता चैव स मया युधि निर्-जितः ॥४७॥

४२] तत्र[5] मे न च[5] भीः का-चिद् यथा वा दानवेश्वर । [७८

एनं[6] तु नाऽभि-जानामि तद् भवान् वक्तुम् अर्हति ॥४८॥

४३] रावणस्य वचः श्रुत्वा बलिर् वैरोचनोऽब्रवीत् । [७९

एष त्रैलोक्य-धाता च हरिर् नारायणः प्र-भुः ॥४९॥ [८०उ

४४] अन्-अन्तः कपिलो जिष्णुर् नर-सिंहो महा-द्युतिः ।

ऋत-धामा सु-धामा च पाश-हस्तो भयानकः ॥[7]५०॥

४५] द्वादशाऽऽदित्य-सदृशः[8] पुराणः पुरुषोत्तमः । [८१

नील-जीमूत-सङ्काशः सुर-नाथः सुरोत्तमः ॥५१॥

४६] ज्वाला-माली महा-नादो योगी भक्त-जन-प्रियः । [८२

५५उ] एष धारयते लोकान् एष वै सृजति[9] प्र-भुः ॥५२॥

एष सं-हरते चैव कालो[10] भूत्वा[10] महा-बलः[11] । [८३

५६] एष यज्वा[12] च याज्यश् च चक्राऽऽयुध-धरो हरिः ॥[13]५३॥

सर्व-देव-मयश् चैव सर्व-भूत-मयस् तथा ।[14] [८५

५७] सर्व-रूपी महा-रूपी बल-देवो महा-भुजः ॥[13]५४॥ [८५उ

वीर-हा वीर-चक्षुष्-मांस् त्रैलोक्य-गुरुर् अ-व्ययः ।

५८] एनं[15] मुनि-गणाः सर्वे चिन्तयन्तीऽह[16] योगिनः[16] ॥५५॥ [८६

---

१. अ प्र ल$_2$–नास्ति । २. च रा$_1$–एष । ३. अ ल$_2$–अक्षोभ्यो । ४. च–नास्ति । ५. च–न च मेऽस्तीह । ६. च–एतत् । ७. अतः परमधिकः पाठः—प्र–विद्युज्जिह्वोऽथ दंष्ट्रातः सर्वविश्वकरो महान् । सर्वलोकमयश्चैव सर्वज्ञानमयस्तथा ॥ ८. च ल$_1$ ल$_3$ ब प्र–°संकाशः । ९. च–°ते । १०. च–सर्वभूतान् । ११. ल$_1$–महाभुजः । १२. च–यष्टा । १३. ल$_1$–नास्ति । १४. अतः परमधिकः पाठः—च–सर्वलोकमयश्चैव सर्वज्ञानमयस्तथा । १५. अ भ$_1$ रा$_1$ ब प्र–एवं । १६. च भ$_1$ भ$_2$ रा$_1$–°न्ति हि मोक्षिणः ॥

य एनं वेत्ति पुरुषं स तु पाशैर्[1] वि-मुच्यते ।
५९] स्मृत्वा स्मृ(?स्तु)त्वा[2] तथेष्ट्वा च सर्वम् अस्माद्[3] अवाऽऽप्नुयात्५६[८९
एवं श्रुत्वा तु वचनं रावणो निर्-ययौ तदा । [८८पू
६०] न च तं पुरुषं तत्र पश्यते रजनी-चरः ॥५७॥ [९०
हर्षान् नादं वि-मुञ्चन् वै निष्-क्रामन् वरुणाऽऽलयात् ।
६१] गत एवाऽऽगतो येन पथा तेन नि-वृत्य तु ॥[3]५८॥ [९०

इत्यार्षे रामायण उत्तर-काण्डे बलि-दर्शनं नाम

सप्तविंशः सर्गः ॥ २७ ॥

---

## [ वं-२८ ]=[ अष्टाविंशः सर्गः ] =[ दा-२३,प्र०-३ ]

अथ सं-चिन्त्य रक्षेन्द्रः सोम-लोकं जगाम ह ।
१] मेरु-शृङ्ग-वरे[4] रम्ये रजनीम् उष्य वीर्य-वान् ॥ १ ॥ [१
अथ स्यन्दनम् आ-रूढो दिव्य-स्रग्-अनुलेपनः[5] ।
२] अप्सरो-गण-मुख्येन सेव्यमानस् तु गच्छति ॥ २ ॥ [२
रति-श्रान्तोऽप्सरोत्सङ्गे[6] चुम्बितः[7] स(?न्[8]) वि-बुध्यते ।
३] स[9] दृष्टः[9] पुरुषस् तेन दृष्ट्वा कौतूहलाऽन्वितः ॥ ३ ॥ [३
अथाऽपश्यद् ऋषिं तत्र दृष्ट्वा चेदम्[10] उवाच ह[11] ।
४] स्व्-आगतं तव देवर्षे कालेनेहाऽऽगतो ह्य् असि ॥ ४ ॥ [४
कोऽयं स्यन्दनम् आ-रूढो ह्य् अप्सरो-गण-सेवितः ।
५] निर्-लज्ज इव सं-याति भय-स्थानं न विन्दति ॥ ५ ॥ [५
रावणेनैवम् उक्तस् तु पर्वतो वाक्यम् अब्रवीत् ।
६] शृणु वत्स यथा-तत्त्वं वक्ष्ये त्वाऽहं महा-द्युते[12] ॥ ६ ॥ [६
एतेन निर्-जिता लोका ब्रह्मा चैवाऽभि-तोषितः ।
७] सैष गच्छति सौख्याय[13] मु(?मो)ख्य(?क्ष)-स्थानम्[14] अन्-उत्तमम् ।७।

---

१. च-पापैर् । २. अ $ल_2$ $ल_3$ ब-तथा दृष्ट्वा स° । च-तथेष्ट्वा च सर्वान् कामान् । ३. $रा_1$-यथा पथागतस्तथा तेनैव निर्ययौ । ४. $भ_1$ $भ_2$ $रा_1$-°शृङ्गे वरे । ५. च-°स्रगन्धले° । ६. टि.-आर्षः सन्धिः । अ $ल_2$ $ल_3$ प्र-°रः संवैः । च-°गेषु । ७. अ$ल_1$ $ल_2$ $ल_3$ ब प्र-श्रावितः । च-चुम्बितैः । ८. टि.-तु. दा. । ९. $भ_1$ $रा_1$-वर्ज-संद° । १०. च-चैवम् । ११. च-तम् । १२. $ल_1$ $ल_3$ ब प्र-महामते । १३. च $भ_1$-मोक्षाय । १४. च $भ_1$ $भ_2$ $रा_1$-सुसुखस्था° ॥

तपसा निर्-जिता यद्-यद् भवता राक्षसाऽधिप ।
८] तथाऽनेन[1] जिता लोकाः[1] सोमं पीत्वा न संशयः ॥८॥ [८
त्वं तु[2] राक्षस-शार्दूल शूरः सत्य-व्रतस् तथा ।
९] नेदृशेषु[3] वि-रुध्यन्ति[3] बलिनो ब्रह्म-चारिषु ॥९॥ [९
अथाऽपश्यद् रथ-वरे[4] महा-कायं महौजसम् ।
१०] जाज्वल्यमानं[5] रूपेण[5] गीत-वादित्र-निःस्वनैः ॥१०॥ [१०
कोऽयं गच्छति देवर्षे शोभ-मानो महा-द्युतिः ।
११] किन्-नरैः[6] सम्प्र-गायद्भिर्[6] नृत्यद्भिश् चाऽप्सरो-गणैः[7] ।११। [११
श्रुत्वैवैनम्[8] उवाचाऽथ पर्वतो मुनि-सत्तमः ।
१२] एष शूरो रणे योद्धा[9] सं-ग्रामेष्व् अ-निवर्तकः ॥१२॥
युध्यमानस् तथा[10] चैष[10] प्र-हारैर् जर्जरी-कृतः । [१२
१३] कृती शूरो रणे जेता स्वाम्य्-अर्थे त्यक्त-जीवितः ।
सं-ग्रामे नि-हतो वीरो हत्वा च सम्-अरे रिपून्[11] ॥१३॥ [१३
१४] इन्द्रस्याऽतिथिर् एवैष अथवा यत्र गच्छति ।
गीत-नृत्य-विलासैश्[12] च[12] सेव्यते नर-सत्तमः ॥१४॥ [१४
१५] पप्रच्छ रावणो भूयः कोऽयं यात्य् अर्क-सन्निभः ।
रावणस्य वचः श्रुत्वा पर्वतो वाक्यम् अब्रवीत् ॥[13]१५॥ [१५
१६] य एष दृश्यते राजन् वि-माने सर्व-काञ्चने ।
अप्सरो-गण-संयुक्ते[14] पूर्णेन्दु-सदृशाऽऽननः ॥१६[15]॥ [१६
१७] सुवर्ण-दो महा-राज विचित्राऽऽभरणाऽम्बरः ।
एष गच्छति शीघ्रेण यानेन स महा-द्युतिः ॥१७[15]॥ [१७

---

१. अ भ$_2$ ल$_1$ ल$_2$-जातः पुण्यक्षयतस्तत् । च-प्रयाति पुण्यकृत्तद्वत् । रा$_1$-स याति पुण्यकृत्तद्वत् । २. भ$_1$-वै । ३. च-°शे न क्रुध्यन्ति । भ$_1$-च सिध्यंति । ४. च °वरं । ५. च-°नवपुषा । ६. च-च प्र° । ७. च-च मनोरमं । भ$_1$ भ$_2$ रा$_1$-च मनोहरम् । ब प्र-च मनोहरैः । ८. च-श्रुत्वा चैवम् । भ$_1$ भ$_2$ रा$_1$ ल$_1$ ब-श्रुत्वा चेदम् । ९. ल$_2$-जेता । १०. च भ$_1$ भ$_2$-तथैवैष । ११. च-बहून् । १२. अ भ$_2$ ल$_1$ ल$_2$ ल$_3$ ब-°नृत्तवि° । च-नृत्यगीतपरैर्लोकैः । ब ल$_1$ ल$_3$ प्र-गानमृत्य° । १३. अत आरभ्य अ ल$_2$-१७-शश्लोकं यावन्नास्ति । १४. रा$_1$-°णसंकीर्णः । भ$_1$ भ$_2$-°संकीर्णे । १५. ब ल$_1$ ल$_3$-एष वीर महाशैवो लिंगार्चनरतः सदा । रुद्राक्षमालया युक्तो नित्यं भस्मांगरागधृत् ॥ अनेन देवदेवस्य शिवस्यानुचरैः सह । अर्केणेव द्वितीयेन गम्यते शिवसन्निधौ ॥

१८] पर्वतस्य[1] वचः श्रुत्वा रावणो[1] वाक्यम् अब्रवीत् ।
य एते यान्ति राजानो ब्रूहि तान्[2] ऋषि-सत्तम ॥१८॥ [१

१९] को ह्य् अत्र याचितो[3] दद्यात् युद्धाऽऽतिथ्यं ममाऽद्य वै ।
तन्[4] ममाऽऽख्याहि[4] धर्म-ज्ञ पिता मे त्वं हि धर्म-तः[5] ॥१९॥ [१

२०] एवम् उक्तः प्रत्य्-उवाच रावणं पर्वतस् तथा[6] ।
स्वर्गाऽर्थिनो[7] महा-राज नैते युद्धाऽर्थिनो नृ-पाः ॥२०[8]॥ [२

२१] वक्ष्यामि त्वां[9] महा-राज[10] यस् ते युद्धं प्र-दास्यति ।
एष राजा[11] महा-तेजाः सप्तद्वीपेश्वरो[12] महान् ॥२१॥

२२] मान्धातेत्य् अभिवि-ख्यातः स ते युद्धं प्र-दास्यति । [२
एवं[13] तस्य[13] वचः श्रुत्वा रावणो वाक्यम् अब्रवीत् ।

२३] कुत्राऽसौ[14] विद्यते राजा तन् ममाऽऽचक्ष्व तत्त्व-तः[15] ॥२२॥ [२
सोऽहं यास्यामि तत्राऽद्य[16] यत्राऽसौ नर-पुङ्गवः ।

२४] रावणस्य वचः श्रुत्वा मुनिर् वचनम् अब्रवीत् ॥२३॥ [२
युवनाश्व-सुतो राजा मान्धाता राज-सत्तमः ।

२५] सप्त-द्वीप-समुद्राऽन्तां जित्वेहाऽद्याऽऽगमिष्यति[17] ॥२४॥ [२
अथाऽपश्यन् महा-बाहुस्[18] त्रैलोक्य-बल-दर्पितः ।

२६] अयोध्याऽधिपतिं[19] वीरं मान्धातारं नृपोत्तमम्[20] ॥२५॥ [२
सप्त-द्वीपाऽधिपं[21] यान्तं स्यन्दनेन वि-राजितम्[22] ।

२७] काञ्चनेन वि-चित्रेण मुकुटेन[23] च[23] भास्-वता ॥२६॥ [२
जाज्वल्यमानं रूपेण दिव्य-वस्त्राऽनुलेपनम्[24] ।

२८] तम् उवाच दश-ग्रीवो युद्धं[25] मे दीयताम् इति[25] ॥२७॥ [२
दश-ग्रीवं प्र-हस्यैवम् उक्तवान् प्रत्य्-उवाच ह ।[26]

२९] यदि ते जीवितं नेष्टं[27] ततो युद्धयस्व राक्षस ॥२८॥ [२८

---

१. ल$_{1}$ ल$_{3}$ ब-ततो राक्षसराजेन्द्रो पर्वतं । २. च-त्वम् । ३. अ ल$_{3}$ प्र-याचतो । ४ ल$_{3}$ ब प्र-इदमा° । ५. भ$_{2}$-पर्वत । ६. च रा$_{1}$ ल$_{3}$ ब प्र-तत ७. च-शर्मार्थिनो । ८. भ$_{1}$-नास्ति । ९. च-च । भ$_{2}$ रा$_{1}$-तु । ल$_{1}$ ल$_{3}$ ब- १०. च-महाभाग । ११. अ च ल$_{2}$-वर्जं-राजन् । १२. भ$_{1}$-श्वेतद्वी° । १३. च पर्वतस्य । १४. अ रा$_{1}$ ल$_{2}$-तत्रासौ वि° । च-कुत्रासौ दृश्यते । भ$_{1}$-क चासौ वि १५. च-सुव्रत । १६. च भ$_{1}$ भ$_{2}$-तत्रैव । १७. च भ$_{1}$-वर्जं-°हाद्य ग° । १८. भ$_{2}$ ल$_{2}$-°हुं । १९. च-°ध्यायाः पतिं । २०. च-नरोत्त° । २१. भ$_{1}$-चतुर्द्वी २२. च भ$_{1}$ भ$_{2}$ रा$_{1}$-°जता । २३. च-महेन्द्राहेंण । २४. दिव्यगन्धानु° २५. रा$_{1}$-युद्धमस्मप्रदीयताम् । २६. च-एवमुक्त्वा दशग्रीवं प्रहस्येदमुवाच ह । भ$_{2}$ रा$_{1}$-°हस्येदमेवमुक्तमुवाच ह । २७. भ$_{1}$ भ$_{2}$ रा$_{1}$ ल$_{1}$ ल$_{2}$ ल$_{3}$ ब प्र-नहं

मान्धातुर् वचनं श्रुत्वा रावणो वाक्यम् अब्रवीत् ।
३०] वरुणस्य कुबेरस्य यमस्याऽथ[1] न विव्यथे ।
किं पुनर् मानुषात् त्वत्-तो रावणो[2] भयम् आ-विशेत्[3] ॥२९॥ [२९
३१] एवम् उक्त्वा राक्षसेन्द्रः[4] क्रोधात् तं प्र-दहन्[5] इव ।
आ-ज्ञापयामास तदा राक्षसान् युद्ध-दुर्मदान् ॥३०॥ [३०
३२] ततस्[6] तु क्रुद्धाः[6] सचिवा रावणस्य दुर्-आत्मनः ।
ववर्षुः शर-जालानि नाना-युद्ध-विशारदाः[7] ॥३१॥ [३१
३३] अथ राज्ञा[8] बल-वता[8] कङ्क-पत्रैः शिला-शितैः[9] ।
इषुभिस् ताडिताः सर्वे प्रहस्त-शुक-सारणाः ।
३४] स-महोदर-धूम्राऽक्षा[10] ह्य् अकम्पन-पुरो-गमाः[11] ॥३२॥ [३२
अथ प्र-हस्तो नृ-पतिम्[12] इषु-वर्षैर्[12] अवाऽकिरत्[13] ।
३५] अ-प्राऽऽप्तान् एव सर्वांस् तान् प्र-चिच्छेद नृपोत्तमः ॥३३॥ [३३
भुशुण्डीभिश्[14] च भल्लैश् च भिण्डिपालैः स-तोमरैः ।
३६] नर-राजेन दह्यन्ते शल-भा[15] इव तेऽग्निना[15] ॥३४॥ [३४
ततो नृप-वरस्[16] तूर्णं[17] पञ्चभिः प्र-बिभेद तम् ।
३७] तोमरैः सु-महावेगैः पुरा क्रौञ्चम् इवाऽग्नि-जः ॥३५॥ [३५
ततो मुहुर् भ्रामयित्वा मुद्गरं यम-सन्निभम् ।
३८] प्राऽहरच् चाऽति-वेगेन राक्षसस्य रथं प्रति ॥३६॥ [३६
स पपात महा-वेगो मुद्गरो वज्र-सन्निभः ।
३९] सं-चूर्ण्य[10] रावणस् तेन पातितः शक्र-केतु-वत् ॥३७॥ [३७
तदा स नृ-पतिः प्रीत्या हर्षोद्धतबलो बभौ ।
४०] सकलेन्दु-कर-स्पृष्टं[18] यथाऽम्बु लवणाऽम्भसः ॥३८॥ [३८
ततो रक्षो-बलं सर्वं हाहा-भूतम् अ-चेतसम्[19] ।
४१] परि-वार्याऽथ[20] तत्[20] तस्थौ राक्षसेन्द्रं समन्त-तः ॥३९॥ [३९

---

१. च रा$_1$–°स्यापि । २. अ भ$_1$ भ$_2$ रा$_1$ ल$_2$–°णं । ३. ल$_2$–आविशत् । ४. च–तु रक्षेन्द्रः । ५. अ ल$_1$ ल$_2$ ल$_3$ ब प्र–प्रहसन्न् । च–प्रज्वलन्न् । ६. च–अथ क्रुद्धास्ते । ७. च–क्रुद्धा यु° । ८. अ ल$_2$ ल$_3$ ब–राजा बलवतां । ९. अ भ$_1$ ल$_2$–शिलाशतैः । ल$_3$ ब प्र–शिलाचितैः । १०. च–°रविरूपाक्षा । ११. अ ल$_2$–°मैः । १२. च–तु नृपं शरव° । १३. अ ल$_2$–अवाक्षिपत् । भ$_1$ रा$_1$–°रन् । १४. रा$_1$–वर्जं–भुसुंडी° । १५. च–तृणभारा इवाग्निना । १६. च–क्रुद्धः । १७. च–स तूर्णं । भ$_1$–संयुगे । १८. च–°न्दुकलाः स्पृष्ट्वा । १९. अ ल$_2$ ब–वर्जं–°तमं । २०. ल$_1$ ल$_3$ ब प्र–°र्यांग्रतस ॥

ततश् चिरात् समा-श्वास्य रावणो लोक-रावणः ।
४२] मान्धातुः पीडयामास देहं लङ्केश्वरो भृशम् ।
रथं साऽश्वयुगाऽऽक्षेपं[1] बभञ्ज च महा-बलः ॥४०॥ [४०
४३] वि-रथः स रथात् प्राऽऽप्य शक्तिं घण्टाऽट्टहासिनीम् ।
मान्धाता प्रवि-चिक्षेप तां बलाद् रावणं प्रति ॥४१॥ [४१
४४] मरीचिम् इव चाऽर्कस्य चित्र-भानोः शिखाम् इव ।
दीप्यन्तीं रुचिराऽऽभासां[2] मान्धातुः कर-विच्युताम् ॥४२॥ [४२
४५] ताम् आ-पतन्तीं[3] शूलेन[3] पौलस्त्यो रजनी-चरः ।
ददाह शक्तिं रक्षेन्द्रः[4] पतङ्गम् इव पावकः ॥४३॥ [४३
४६] यम-दत्तं[5] च[6] नाराचं विनिष्-कृष्य[7] दशाऽऽननः ।[8]
पातयामास वेगेन स तेनाऽभि-हतो भृशम् ॥४४॥ [४४
४७] मूर्च्छितं तु नृपं दृष्ट्वा प्र-हृष्टास् ते निशा-चराः ।
चुक्रुशुः सिंह-नादांश्[9] च चिक्ष्वेडुश्[9] च[9] महा-बलाः ॥४५॥ [४५
४८] लब्ध-संज्ञो मुहूर्तेन ह्य् अयोध्याऽधिपतिस्[10] तदा ।
दृष्ट्वा स्वं[11] शत्रुभिः[12] सक्तं[13] पीड्यमानं[13] मुदाऽन्वितैः[14] ॥४६॥ [४६
४९] ततः कोपाद् दुरा-धर्षश् चण्डांऽशु-सदृश-द्युतिः[15] ।
महता शर-वर्षेण(?णाऽ)पीडयन्(?द्) राक्षसं बलम् ॥४७॥ [४७
५०] (चापस्य तु नि-नादेन बाण-शब्देन रावणम्[16] ?)[17]
सं-चचाल ततः सैन्यम् उद्-भूत[18] इव सागरः । [४८
५१] तद् युद्धम् अभवद् घोरं नर-राक्षस-सङ्कुलम् ॥४८॥ [४९
अथाऽऽविष्टौ महाऽऽत्मानौ नर-राक्षस-सत्तमौ[19] ।
५२] कार्मुकाऽसि-धरौ वीरौ वीर-मार्ग-स्थितौ[20] तदा ॥४९॥ [५०

---

१. अ रा$_{1}$ ल$_{2}$-साश्वभुजाक्षेपं । २. भ$_{1}$ रा$_{1}$ ल$_{1}$ प्र-वर्ज-°सं । ३. ल$_{1}$ ल$_{3}$ ब प्र-आयांतीं त्रिशू° । ४. टि.-संधिरार्षः । ५. प्र-°दंडं । ६. च भ$_{1}$ भ$_{2}$-तु । ७. अ रा$_{1}$ ल$_{2}$-विनिष्टभ्य । ८. ल$_{1}$ ल$_{3}$ ब-यमदंडं तुमुलारावं विनिष्कृष्य दशानन. । ९. च-तु प्रज्वलतो । ल$_{1}$ ब प्र-°डुः सु° । १०. भ$_{1}$ ल$_{1}$ ब-वर्ज-°ध्यायाः प° । ११. ल$_{3}$ ब प्र-वर्ज-तं । १२. च-मन्त्रिभिः । १३. च भ$_{1}$-शत्रुं पूज्यमानं । १४. च भ$_{1}$-°न्वितं । १५. च-चन्द्रार्कस° । १६. च भ$_{1}$ भ$_{2}$-वर्ज-°णः । टि.-=संभ्रान्त- । १७. च-मांधातुस्तु निनादेन राक्षसस्य रवेण च । भ$_{1}$-°न तस्य बाणरवेण च । १८. च भ$_{1}$-वर्ज-मुहूर्तम् । १९. च-°ससंकुलौ । २०. च भ$_{1}$ भ$_{2}$ ल$_{1}$ प्र-वर्ज-वरमा° । च-वीरासनगतौ ॥

मान्धाता रावणं चैव रावणश्[1] चैव तं नृ-पम् ।
५३] क्रोधेन महताऽऽविष्टौ शर-वर्षम् अमुञ्चताम्[2] । [५१
तौ परस्पर-संक्षोभात् प्र-हारैः क्षत-विक्षतौ ॥५०॥ [५२
५४] कार्मुके ऽस्त्रं[3] तु सं-धाय[3] रौद्रम् अस्त्रम् अयुङ्क्त[4] सः ।
आग्नेयेन तु मान्धाता तद् अस्त्रं पर्य्-अवारयत् । [५३
५५] गान्धर्वेण दश-ग्रीवो वारुणेन[5] च राज-राट् ॥५१॥ [५४
गृहीत्वा स तु स(?श)र्वाऽस्त्रं[6] सर्व-भूत-भयाऽऽवहम् ।
५६] तोलयामास[7] मान्धाता[8] दिव्यं पाशुपतं महत्[9] ॥५२॥ [५५
तद् अस्त्रं घोर-रूपं तु[10] त्रैलोक्य-भय-वर्धनम् ।
५७] दृष्ट्वा त्रस्तानि भूतानि स्थावराणि चराणि च ।
वर-दानात् तु रुद्रस्य तपसा[11] साधितं[11] महत् ॥५३॥ [५६
५८] ततः स्म कम्पते सर्वं[12] त्रैलोक्यं स-चराऽचरम्[12] ।
देवाः प्र-कम्पिताः सर्वे भयान्[13] नागाश् च सं-गताः ॥५४[14]॥ [५७
५९] अथ[15] तौ[15] मुनि-शार्दूलौ ध्यान-योगाद् अपश्यताम् ।[15]
पुलस्त्यो गालवश् चैव वारयामासतुर् नृ-पम् ।
६०] उपा-लब्धश् च वि-विधैर् वाक्यै राक्षस-सत्तमः[16] ॥५५॥ [५८
तौ च[17] कृत्वा परां प्रीतिं नर-राक्षसयोस् तदा ।
६१] सम्प्र-स्थितौ सु-संहृष्टौ पथा येनेह[18] चाऽऽगतौ ॥५६॥ [५९

इत्यार्षे रामायण उत्तर-काण्डे मान्धातृ-रावण-युद्धं नामाऽष्टाविंशः सर्गः ॥ २८ ॥

---

## [ वं-३० ] = [ एकोनात्रिंशः सर्गः ] = [ दा-२३, प्र०-४ ]

गताभ्याम् अथ विप्राभ्यां रावणो राक्षसाऽधिपः ।
१] दश-योजन-साहस्रं[19] प्रथमं तु मरुत्-पथम् । [१
यत्र तिष्ठन्ति नित्य-स्था हंसाः सर्व-गुणाऽन्विताः ॥ १ ॥ [२

---

१. भ$_1$ भ$_2$-राक्षसश् । २. च-मुमोचतुः । ३. °केषुं समाधाय । ल$_3$-°केषुं तु सं° । ४. च-अमुंचत । ५. अ रा$_1$ ल$_2$ ल$_3$ ब प्र-वरु° । ६. च भ$_1$ प्र-ब्रह्मास्त्रं । ७. च-योजया° । ८. अ रा$_1$ ल$_2$ ल$_3$ ब-धर्मात्मा । ९. च-तदा । १०. अ ल$_2$-च । ११. अ ल$_2$ ल$_3$-°सासादितं । १२. अ रा$_1$ ल$_3$-तच्चरा° । १३. भ$_1$-लयं । रा$_1$ ल$_1$ ल$_3$ ब प्र-भये । १४. च-नास्ति । १५. भ$_1$ रा$_1$-अथातो । १६. प्र-°स पुंगवः । १७. च-तु । १८. च-येनैव । १९. अ भ$_1$ भ$_2$ रा$_1$ ब-°सहस्रं ॥

२] अत[1] ऊर्ध्वं तु गत्वा वै मरुत्-पथम् अनु-उत्तमम् ।
दश-योजन-साहस्रं तद् एव परि-गण्यते ॥ २[2]॥ [३

३] तत्र सन्नि-हिता मेघास् त्रि-विधा नित्य-शः स्थिताः ।
आग्नेयाः पक्ष-जा राम ब्रह्माऽऽद्यास् त्रि-विधाः स्मृताः ॥[3]३॥ [४

४] अथ गत्वा तृतीयं तु वायोः पन्थानम् उत्-तमम् ।
नित्यं यत्र स्थिताः सिद्धाश् चारणाश् च मनस्-विनः ।

५] दशैव तु सहस्राणि योजनानां तथैव च[5] ॥ ४ ॥ [५
चतुर्थं वायु-मार्गं च शीघ्रं गत्वा परं-तप ।

६] वसन्ति तत्र नित्य-स्था भूतास् तु स-विनायकाः ॥ ५ ॥ [६
अथ गत्वा तु[6] शीघ्रं वै पञ्चमं वायु-गोचरम् ।

७] दशैव तु सहस्राणि योजनानां तथैव च ॥ ६ ॥ [७
गङ्गा यत्र सरिच्-छ्रेष्ठा नागा ये कुमुदाऽऽदयः[7] ।

८] कुञ्जरास् तत्र तिष्ठन्ति ये च मुञ्चन्ति शीकरम् ।
गङ्गा-तोयेषु क्रीडन्ति[8] पुष्पं वर्षन्ति सर्व-तः[9] ॥ ७ ॥ [८

९] ततः करि-कराद् भ्रष्टं वायुनाऽथ[10] लवी-कृतम्[10] ।
जलं पुष्पेषु पतति हिम-वर्षं तु राघव ॥ ८ ॥ [९

१०] ततो जगाम षष्ठं स वायु-मार्गं महा-द्युते ।
योजनानां सहस्राणि तावन्त्य्[11] एव[11] स रावणः[12] ।

११] यत्राऽऽस्ते गरुडो नित्यं ज्योतिषां[13] चैव सं-वृतः[13] ॥ ९ ॥ [१०
दशैव[14] च[14] सहस्राणि योजनानां तथोपरि ।

१२] सप्तमं[15] वायु-मार्गं[15] तु[16] यत्रैते ऋषयः स्थिताः ॥१०॥ [११
तत ऊर्ध्वं तु गत्वा वै सहस्राणि दशैव तु ।

१३] अष्टमं वायु-मार्गं तु गङ्गा यत्र प्रति-ष्ठिता ॥११॥ [१२

---

१. भ$_1$ भ$_2$ रा$_1$ ल$_3$ ब-तत । २. अ-नास्ति । अत आरभ्य ल$_2$-१०-मश्लोकं यावन्नास्ति । ३. च-आग्नेयाः पक्षिणो ब्राह्माश्चिविधास्तत्र तु स्थिताः । ४. भ$_1$ रा$_1$ ल$_1$ ल$_3$ ब प्र-हि । ५. अ ल$_2$-नास्ति । ६. च भ$_1$ भ$_2$ ल$_1$ ल$_3$ प्र-सर्वं । ७ अ रा$_1$ ब-°दालयाः । ८. भ$_1$ रा$_1$ ल$_1$ ल$_3$ ब प्र-वर्षतः । ९. अ ल$_1$ ल$_3$-वर्जं-सर्वशः । १०. च भ$_1$ भ$_2$-°नापलवी° । प्र-°ना विकली । ११. च-दशैव तु । १२. च-राक्षसः । भ$_1$ भ$_2$ ल$_1$ प्र-राघव । १३. च रा$_1$-°षा चैव सं° । भ$_1$-जातिबांधवसं° । ल$_1$-°वसंयुतः । १४. भ$_1$ भ$_2$-°व तु । प्र-दश चैव । १५. च-°मे वायुमार्गे । १६. अ रा$_1$-तं । च-च ॥

आकाश-गङ्गा वि-ख्याता आकाश-पथ-संस्थिता[1] ।
१४] वायुना धार्यमाणा सा[2] महा-वेगा[3] महा-स्वना ॥१२॥ [१३
अत ऊर्ध्वं प्र-वक्ष्यामि चन्द्रमा यत्र तिष्ठति । [१४
१५] अशीतिस् तु सहस्राणि योजनानां तथोपरि[4] ।
चन्द्रमास् तिष्ठते यत्र[5] ग्रह-नक्षत्र-संयुतः ॥[6]१३॥ [१५
१६] शतं[7] शत-सहस्राणां रश्मयश् चन्द्र-मण्डलम् ।
प्र-काशयन्ति लोकानि(?नां)[8] सर्व-सत्त्व-सुखाऽऽवहम्[9] ॥१४॥ [१६
१७] ततो दृष्ट्वा दश-ग्रीवं चन्द्रमा निर्-ददाह[10] तम्[10] ।
स[11] तु[11] शीताऽग्निना शीघ्रं प्राऽतपद्[12] रावणस् तदा ॥१५॥ [१७
१८] नाऽसहंस् तस्य सचिवाः शीतांऽशु-भय-पीडिताः ।
रावणं जय-शब्देन प्र-हस्तो वाक्यम् अब्रवीत् ॥१६॥ [१८
१९] राजञ् छीतेन वध्याम(?मो) नि-वृत्ताः[13] स्म[13] इतो वयम् ।
चन्द्र-रश्मि-प्रतापेन रक्षसां भयम् आऽविशत् । [१९
२०] स्व-भावेनैष[14] राजेन्द्र शीतांऽशुर् दहनाऽऽत्मकः ॥[15]१७॥ [२०
एतच् छ्रुत्वा प्र-हस्तस्य रावणः क्रोध-मूर्च्छितः ।
२१] वि-स्फार्य[16] धनुर् उद्-यम्य शरैश्[17] चन्द्रम्[17] अताडयत्[18] ॥१८[15]॥ [२१
अथ ब्रह्मा समाऽगच्छत् सोम-लोकं त्वराऽन्वितः ।
२२] दश-ग्रीव महा-बाहो साक्षाद्[19] वि-श्रवसः सुत ॥१९॥ [२२
गच्छ शीघ्रम्[20] इतः सौम्य मा चन्द्रं पीडयस्व वै ।
२३] लोकस्य हित-कामोऽयं द्विज-राजो महा-द्युतिः ॥२०॥
मन्त्रं च ते प्र-दास्यामि[19] प्राणाऽत्यय-गतिर् यदि । [२३
२४] यस् त्व् इमं सं-स्मरेन् मन्त्रं नाऽसौ मृत्युम् अवाऽऽप्नुयात् ॥२१॥

---

१. अ ल3-आवृत्य पथि सं° । च-°पथमास्थिता । भ1 ल1 प्र-आदित्यप° । भ2 रा1 ब-°शपथि सं° । २. अ ल2-तु । ३. अ रा1 ल2 ल3 व-महामेघा । च-महाभागा । ४. अ रा1 ल2 ल3 ब-यथा दश । ५. भ1-नित्यं । ६. अतः परमधिकः पाठः--अ-तत ऊर्ध्वं तु गत्वा वै सहस्राणि दशैव तु । ७. अ रा1 ल2 ल3 ब प्र-तथा । ल1-ततः । ८. प्र-वर्जं-लोकांस्तु । ९. च भ1-वर्जं-°हः । १०. च-निर्दहन्निव । ११. ल1-हतः । १२. च-प्रदहद् । भ2 ल1 प्र-प्रापतद् । रा1 ल3 ब-प्रपतद् । १३. च-निवर्ताम । १४. च भ1-स्वभाव एव । १५. ल2-नास्ति । १६. च-विस्तीर्य । १७. च-नाराचैस् । १८. च भ1 भ2-अपीड° । १९. च-नास्ति । २०. अ भ2 ल2-चन्द्रम् ॥

एवम् उक्तो दश-ग्रीवः प्राऽञ्जलिर् वाक्यम् अब्रवीत् ।[1] [२४
२५] यदि तुष्टोऽसि मे देव लोक-नाथ महा-द्युते ॥२२॥
यदि मन्त्रश् च मे देयो दीयतां मम धार्मिक । [२५
२६] यं जप्याऽहं[2] महा-भाग सर्व-देवेषु निर्-भयः ॥२३॥
असुरेषु च सर्वेषु दानवेषु पतत्रिषु ।
२७] यत्-प्रसादाच् च देवेश अ-जेयः[3] स्यां[3] न सं-शयः ॥२४[4]॥ [२६
एवम् उक्तो दश-ग्रीवं ब्रह्मा वचनम् अब्रवीत् ।[5]
२८] प्राणाऽत्ययेषु[6] ते दद्मि[6] न नित्यं राक्षसाऽधिप[7] ॥२५॥ [२७
अक्ष-सूत्रं गृहीत्वा च[8] जप[9] मन्त्रम् इमं सदा[10] ।
२९] जप्त्वा च[11] राक्षस-पते[11] त्वम् अ-जेयो भविष्यसि । [२८
अ-जप्त्वा राक्षस-श्रेष्ठ न ते सिद्धिर् भविष्यति ॥२६॥
३०] शृणु मन्त्रं प्र-वक्ष्यामि येन राक्षस-पुङ्गव ।
मन्त्रस्य कीर्तनाद् एव प्राऽऽप्स्यसे परमं[12] जयम् ॥२७॥ [२९
३१] नमस् ते देव-देवेश सुराऽसुर-नमस्कृत ।
भूत-भव्य महा-देव हरि-पिङ्गल-लोचन ॥२८॥ [३०
३२] बालस् त्वं वृद्ध-रूपी च वैयाघ्र-परिवारण[14] ।
अर्हणीयोऽसि[15] देव त्वं त्रैलोक्य-प्रभुर् ईश्वरः ॥२९॥ [३१
३३] हरो हरित-नेमी[16] च युगाऽन्त-कर-लोचनः ।
गणेशो लोक-शम्भुश् च लोक-पालो महा-भुजः ॥३०[17]॥ [३२
३४] महा-योगी महा-शूली महा-दण्डः महेश्वरः ।
कालश् च काल-रूपी च नील-ग्रीवो महोदरः[18] ॥३१[17]॥ [३३
३५] वेदाऽन्त-गस्[19] तपोऽन्तश्[19] च पशूनां पतिर् अ-व्ययः ।
शूल-पाणिर् बृहत्-केतुर् नेता गोप्ता हरो[20] हरिः[20] ॥३२॥ [३४

---

१. अत आरभ्य भ$_1$–२४-शश्लोकं यावन्नास्ति । २. च–जप्त्वा तु । भ$_2$–जप्त्वाहं । ३. अ भ$_2$ ल$_3$–°योऽहं । ४. ल$_1$–नास्ति । ५. ल$_3$–ब्रह्मप्रोक्तमिदं पुण्यं नामाष्टशतमुत्तमम् । ६. च–°षु जप्तव्यो । ल$_1$ प्र–°ये जपेदेतन् । ७. प्र–राक्षसेश्वर । ८. च–तु । ९. च ल$_1$ प्र–जपेन् । १०. च–प्रभो । ११. च–यं । १२. ल$_1$ प्र–°सैतेन । १३. च–समरे । १४. च–°प्रवसनच्छदः । १५. च–अर्चनीयोसि । १६. भ$_1$ भ$_2$–°तरोमा । ब–°तलोमा । १७. अ ल$_2$–नास्ति । १८. ब–महोरगः । १९. अ ल$_2$–देवतागस्त° । भ$_1$–देवानां वै त° । प्र–सुदेवो वातकेतुश् । च–देवांतकस्त° । २०. अ ल$_2$–हरिप्रभः । रा$_1$ ल$_1$ ब–हरिहरः । ल$_3$–हरिप्रियः ॥

३६] जटी मुण्डी शिखण्डी च लगुडी[1] च महा-यशाः ।
प्रेतेश्वरो[2] गणाऽध्यक्षः सर्वाऽऽत्मा भूत-भावनः[3] ॥३३॥ [३५

३७] सर्व-गः सर्व-हारी च स्रष्टा च गुरुर् अ-व्ययः ।
कमण्डलु-धरो देवः पिनाकी झर्झरी[4] तथा ॥३४॥ [३६

३८] माननीयोऽर्चनीयश् च ओं-कारोऽप्य्[5] अथ साम-गः[5] ।[6]
मृत्युश् च मृत्यु-दूतश् च पारिजातश्[7] च सु-व्रतः ॥३५॥ [३७

३९] ब्रह्म-चारी गुहा-वासो वीणा-पणव-तूर्य-वान्[8] ।
अ-मरो दर्शनीयश् च बाल-सूर्य-निभस् तथा ॥३६॥ [३८

४०] श्मशान-चारी भग-वान् उमा-पतिर् अरिं-दमः[9] ।
भगस्याऽक्षि-निपाती च पूष्णो दशन-नाशनः ॥३७[10]॥ [३९

४१] ज्वर-कर्ता पाश-हस्तः प्र-लयः काल एव च ।
उल्का-मुखोऽग्नि-केतुश् च मुनिर् दीप्तो विशां पतिः ॥३८॥ [४०

४२] उन्-मादो विमदाऽऽकारश् चतुर्थो लोक-सत्तमः ।
वामनो वाम-देवश् च प्रादक्षिण्यश् च वामनः[11] ॥३९॥ [४१

४३] भिक्षुश् च भिक्षु-रूपी च त्रि-जटी जटिलः स्वयम् ।
शस्त्र-हस्त-प्रविष्टम्भी[12] चमू-स्तम्भन[13] एव च[13] ॥४०॥ [४२

४४] ऋताऽनृत-करः[14] कालो मधुर् मधुक-लोचनः ।
वानस्पत्यो वाज-सनिर्[15] नित्यम् आश्रम-पूजितः ॥४१॥ [४३

४५] जगद्-धाता च कर्ता च पुरुषः शाश्वतो ध्रुवः ।
धर्माऽध्यक्षो विरूपाऽक्षस् त्रि-वर्त्मा भूत-भावनः ॥४२॥ [४४

४६] त्रि-नेत्रो बहु-रूपश् च सूर्याऽयुत-सम-प्रभः ।
देव-देवोऽति-देवश् च चन्द्राऽङ्कित-जटस् तथा ॥४३॥ [४५

४७] नर्तको[16] लासकश् चैव पूर्णेन्दु-सदृश-च्छविः[17] ।
ब्रह्मण्यश् च शरण्यश् च सर्व-बीज-मयस् तथा ॥[18]४४॥ [४६

---

१. अ ब–लगुटी । च–मुकुटी । २. च–भूते° । ३. च भ$_1$ भ$_2$ ल$_1$ प्र–सर्वभा° । ४. च–त्रिशरी । भ$_2$–मर्मरी । ल$_2$–जर्हुस् । ब ल$_3$–जर्जरी । ५. भ$_1$ भ$_2$–°रो ज्येष्ठसामगः । ६. च–माननीयश्च ओंकारो वरिष्ठो ज्येष्ठसामगः । ७. च–पारिपात्रश् । ८. च प्र–वर्जं–वाणीप° । ल$_1$–वीणापणववेणुवान् । ९. च–अनिंदितः । १०. ल$_3$–नास्ति । ११. ल$_3$–वासवः । १२. च–वर्जं–शक्रह° । रा$_1$ ल$_1$ ल$_3$ ब प्र–°प्रतिष्टम्भी । १३. च–चमूनां स्तम्भनस्तथा । प्र–चतुस्तं° । १४. च–मत्तो ऋतुकरः । १५. च भ$_1$ भ$_2$–वाजिसनो । रा$_1$ ल$_1$ प्र–वाजिसना । १६. भ$_1$ भ$_2$ रा$_1$ ल$_1$–नृत्तको । १७. च भ$_1$ भ$_2$–°दृशाननः । ल$_1$–°दृशप्रभः । १८. रा$_1$ ल$_1$ ल$_2$ ब अ–नास्ति ॥

४८] सर्व-रूपी[1] नि-नादी[1] च सर्व-बन्ध-विमोचकः[2] ।
मोहनो बन्धनश्[3] चैव सर्व(?र्प)-धारी नरोत्तमः ॥४५॥ [४७

४९] पुष्प-दन्तो विश्व-पाश्[4] च मुख्यः सर्व-हरस् तथा ।
हरि-श्मश्रुर्[5] धनुर्-धारी भीमो भीम-पराक्रमः ॥४६॥ [४८

५०] ब्रह्म-प्रोक्तम्[6] इदं पुण्यं नामाऽष्टशतम् उत्-तमम् ।
जप्यम् एतद् दश-ग्रीव कुर्याच् छत्रु-विनाशनम्[7] ॥४७॥ [४९

इत्यार्षे रामायण उत्तर-काण्डे ब्रह्म-प्रोक्तो[8] महादेवाऽष्टशतस्तवो[8]
नामैकोनत्रिंशः सर्गः ॥२९॥

---

## [ वं-३१,३२ ]= [ त्रिंशः सर्गः ] =[ दा-२३, प्र०-५,२४ ]

दत्त्वा च[9] रावणस्येदं वरं स कमलोद्भवः ।
१] पुनर् एवाऽगमत् क्षिप्रं ब्रह्म-लोकं सनातनः[10] ॥ १ ॥

२पू] रावणस् तु वरं लब्ध्वा पुनर् एवाऽगमद् गृहम्[11] । [१

ं-३२] हत्वाऽरीन् बहु-शश् चैव देव-गन्धर्व-कन्यकाः । [दा-२४
१] स प्र-गृह्याऽहरत्[12] क्रुद्धाः[13] क्रोशमानास्[14] ततस् ततः ॥[15]२॥ १]

दर्शनीया राक्षसेन्द्रः स्त्रियो या यत्र पश्यति ।
२] हत्वा बन्धु-जनं तासां वि-माने चाऽध्य्-अरोपयत् ॥ ३ ॥ [२

एवं पन्नग-कन्याश् च राक्षस्योऽसुर-मानुषीः ।
३] दैत्य-दानव-कन्याश् च वि-माने शतशोऽभवन् ॥ ४ ॥ [३

दीर्घ-केश्यः सुचार्व्-अङ्ग्यः पूर्ण-चन्द्र-निभाऽऽननाः ।
७] पीन-स्तन-तटा मध्ये वज्र-वेदि-सम-प्रभाः ॥ ५ ॥ [७

रथ-कूबर-सङ्काशैः श्रोणी-सूत्रैर् मनो-हरैः ।
८] स्त्रियः सुराऽङ्गना-प्रख्या निष्टप्त-कनक-प्रभाः[16] ॥६[17]॥ [८

---

१. च ल$_3$–सर्वभूतनि° । भ$_2$ ल$_1$ प्र–सर्वतूर्यनि° । २. च–°विमोक्षणः । ३. अ ल$_2$–वर्धनश् । ४. च भ$_1$ भ$_2$–विभागश् । रा$_1$ ल$_1$ प्र–विश्रवाश् । ५. ल$_1$ प्र–हरिश्रेष्ठो । ६. च–मया प्रोक्तं । ७. प्र–भयवि° । ८. च भ$_1$ भ$_2$–°कस्तवो । ल$_1$ प्र–°क्तो महेश्वरस्तवो । ल$_2$–अष्टशतस्तवो । ९. च भ$_1$ भ$_2$–तु । १०. अ प्र–°नम् । ११. च भ$_1$ भ$_2$ ल$_1$ प्र–तदा । १२. च भ$_1$ भ$_2$–प्रसह्या° । १३. अ रा$_1$ ल$_1$ ल$_2$–क्रुद्धः । च भ$_1$ भ$_2$–रक्षः । प्र–तत्र । १४. प्र–रुदमानास् । १५. अतः परमधिकः पाठः—च भ$_1$ भ$_2$ ल$_1$ प्र–राजर्षिनागकन्याश्च अप्सरोमुनिकन्यकाः । निवर्ततस्तु हृष्टस्य रावणस्य दुरात्मनः । पुष्पके याः स्त्रियो रुद्धास्तेन ता रुरुदुर्भृशम् ॥ १६. रा$_1$ ब ल$_2$ ल$_3$ प्र–संतप्तकनक° । १७. अ भ$_2$ ल$_1$–नास्ति ॥

सर्वास् ताः श्रम-दुःखाऽऽर्ता[1] मुमुचुः शोक-जं जलम् ।
४] तुल्यम् अग्नि-त्विषा तत्र पुष्पकं तद्(?तं)धि(?व्य)दीपयन् ॥७॥ [४
९उ] तासां विनिः-श्वसन्तीनां[2] निः-श्वासैः सम्प्र-दीपितः[3] ।
अग्नि-होत्र इवाऽऽभाति निहिताऽग्निः स पुष्पकः ॥८॥ [९
१०] दशग्रीव-वशं प्राऽऽप्तास् तास् तु शोकाऽऽकुलाः स्त्रियः ।
११पू] दीन-वक्त्रेक्षणाः श्यामा मृग्यः सिंह-वशा इव ॥९॥ [१०
का-चिच् चिन्तयते दुःखाद् धनिष्यति च मां ध्रुवम्[4] । [११उ
१२] पितॄन् मातॄंश् चिन्तयन्त्यस् ताः स्त्रियः शोक-पीडिताः ।
दुःख-शोक-समाविष्टा वि-लेपुर् असितेक्षणाः ॥१०॥ [१२
१३] कथं नु खलु मे पुत्रः करिष्यति मया विना ।
कथं माता कथं भ्राता नि-मग्नाः शोक-सागरे ॥११॥ [१३
१४] हा कथं नु भविष्यामि भर्तारं दैवतं विना ।
मृत्यो प्र-सीद याचेऽहं नय मां यम-सादनम् ॥१२॥ [१४
१५] किं नु नो दुष्-कृतं पापं कृतं देहाऽन्तरे पुरा ।
येन स्मः कृपणाः सर्वाः पतिताः शोक-सागरे ॥१३॥ [१५
१६] न खल्व् इदानीं पश्यामो दुःखस्याऽन्तम् इमं पुनः ।
अहो धिङ् मानुषाल्[5] लोकान् नाऽस्ति खल्व् अधमः परः ॥१४॥ [१६
१७] यद् दुर्-बला बल-वता बान्धवा रावणेन नः ।
सूर्येणोदयता काले न-क्षत्राणीऽव नाशिताः ॥१५॥ [१७
१८] अहो सु-बलवद् रक्षो वधोपायेषु रज्यते[6] ।
अहो दुर्-वृत्तम् आत्मानं स्वयम् एव न विन्दति ॥१६॥ [१८
१९] सर्वथाऽधि-कृतस तावद् वि-क्रमोऽस्य दुर्-आत्मनः[7] ।
नाऽनु-रूपम् इदं चाऽस्य पर-दाराऽभिमर्षणम् ॥१७॥ [१९
२०] यस्माद् एष पर-स्त्रीषु रज्यते राक्षसाऽधिपः ।
२१पू] तस्माद् वै स्त्री-कृतेनैव वधं प्राऽऽप्स्यति दुर्-मतिः ॥१८॥ [२०
सतीभिर् वर-नारीभिर् एवं वाक्यैर् उद्-ईरितैः ।
N] नेदुर् दुन्दुभयश् चैवं[8] पुष्प-वृष्टिः पपात च ॥१९॥ [२१

---

१. च भ$_1$ भ$_2$ रा$_1$ ल$_1$-समदु° । प्र-बंधुदु° । २. प्र-त्रिनिश्वयं स्त्रीणां ३. अ भ$_1$ रा$_1$ ल$_2$-°ताम् । च भ$_2$ ल$_3$ ब-°तम् । ४. ल$_1$ प्र-क्रुधा । ५. च मानुषान् । रा$_1$-मानुषं । ६. अ ल$_2$-रध्यते । ७. प्र-सुदुर्लभः । ८. भ$_1$ भ$_2$ प्र वर्जे-नास्ति । ९. भ$_1$-खस्थाः ॥

२२पू] पति-व्रताभिर् नारीभिः स तु दुष्टो दशाऽऽननः ।
२१उ] स हतौजास् तथा भाति यथा शान्तो हुताऽशनः ॥२०॥ [२२
२२उ] स्त्रीष्व् एवं वि-लपन्तीषु रावणो राक्षसाऽधिपः ।
प्र-विवेश पुरीं लङ्कां पूज्यमानो निशा-चरैः ॥२१॥ [२३
२३] ततः शूर्प-नखा नाम भगिनी तस्य रक्षसः ।
पादयोः पतिता तूर्णं पति-घाताऽभिमूर्च्छिता ॥२२॥ [२४
२४] स स्वसारं शूर्प-नखां रावणः परि-सान्त्वयन् ।
अब्रवीत् किम् इदं भद्रे वक्तुम् अर्हसि मे[1] द्रुतम्[1] ॥२३॥ [२५
२५] द्रुतं[2] सा बाष्प-पूर्णाऽक्षी[2] राक्षसी वाक्यम् अब्रवीत् ।
हताऽस्मि वि-धवा राजंस् त्वया बल-वता कृता ॥२४॥ [२६
२६] ये ते राजंस् त्वया युद्धे दैतेया विनि-पातिताः ।
कालकेया इति ख्याताः सहस्राणि त्रयोदश ॥२५॥ [२७
२७] तत्र मे दयितो भर्ता प्राणेभ्योऽप्य् अधिक-प्रियः[3] ।
स त्वया नि-हतो युद्धे भर्ता प्राण-समो वि-भुः ॥[4]२६॥ [२८
२८] सा[5] हताऽस्मि त्वया राजन् स्वयम् एवेह बन्धुना ।
वैधव्य-शब्दं भोक्ष्ये च त्वत्-कृते राक्षसेश्वर ॥२७॥ [२९
२९] ननु नाम त्वया रक्ष्यो जामाता सम्-अरेषु हि ।
स त्वया नि-हतो युद्धे स्वयम् एव न लज्जसे[6] ॥२८॥ [३०
३०] एवम् उक्तो दश-ग्रीवो भगिन्या क्रोशमानया ।
अब्रवीत् सान्त्वयित्वा[7] तां साम-पूर्वम् इदं वचः ॥२९॥ [३१
३१] अलं वत्से रुदित्वा ते न भेतव्यं च सर्व-था[8] ।
दान-मान-विभागैस्[9] त्वां तोषयिष्यामि[10] सर्व-दा ॥३०॥ [३२
३२] युद्धे प्र-मत्तो व्या-क्षिप्तो युद्धाऽऽकाङ्क्षी क्षिपन् शरान् ।
नाऽव-गच्छामि युद्धेषु स्वान् परान् विजयाऽऽतुरः ॥३१॥ [३३
३३] जामातरं नाऽभि-जाने प्र-हरन् युद्ध-दुर्मदः ।
तेन[11] मे[11] नि-हतः सं-ख्ये तव भर्ता च हि स्वयम् ॥३२[12]॥ [३४

---

१. अ ल$_1$ ल$_3$–मे वद । रा$_2$ ब–मामिति । २ भ$_1$ भ$_2$ ल$_1$ प्र–सा बाष्पपरिपूर्णाक्षी । ३. च–°कः प्रियः । भ$_1$–°कः प्रभुः । ४. भ$_1$–त्वया विनिहतो राजन् भ्रात्रा प्राणसमेन मे । ५. रा$_1$ ब ल$_1$ ल$_3$–हा । ६. ल$_1$ प्र–वर्जं–°सि । ७. च भ$_1$–शांत° । प्र–क्षप° । ८. भ$_1$–°शः । ९. प्र–°गां । १०. ल$_1$ प्र–मानयि° । ११. प्र–तेनासौ । १२. भ$_1$ प्र–वर्जं–नास्ति ॥

३४] अस्मिन् काले तु यद् युक्तं तत् करिष्यामि मा रुद ।
भ्रातुर् ऐश्वर्य-युक्तस्य खरस्य त(१भ)व पार्श्व-तः ।।३३।। [३५
३५] चतुर्-दशानां भ्राता ते सहस्राणां भविष्यति ।
३६पू] प्र-भुः प्रदान-मानेन राक्षसानां महा-बलः ।।३४।। [३६
३७उ] शीघ्रं गच्छत्व् अयं शूरो दण्डकान् परि-रक्षितुम् ।
दूषणस् च बलाऽध्यक्षो भविष्यति महा-बलः ।।३५[1]।। [३८
३८] स हि शप्तो वनोद्देशः क्रुद्धेनोशनसा[2] स्वयम्[3] ।
३९पू] राक्षसानाम् अधी-वासो[4] भवितेति द्रुतं व्रज[4] ।।३६।। [३९
३६उ] तत्र मातृ-ष्वसेयस् ते भ्राता स हि खरः प्र-भुः ।
३७पू] भविष्यति सदा कुर्वंस् तत्राऽऽदेशं निशा-चरः ।।३७[5]।। [३७
४०उ] एवम् उक्त्वा दश-ग्रीवः सैन्यं तस्याऽऽदिदेश ह ।
चतुर्दश-सहस्राणि रक्षसां काम-रूपिणाम् ।।३८।। [४१
४१] ततः[6] स तैः परि-वृतो[6] राक्षसैर् घोर-दर्शनैः ।
प्र-ययौ[7] च[7] खरः शीघ्रं दण्डकान् अ-कुतोभयः ।।३९।। [४२
स तत्र[8] राज्यं[8] कुर्वाणः खरो निहत-कण्टकः ।
४२] सा च शूर्प-नखा[9] प्रीता वसन्ती दण्डका-वनम्[10] ।।४०।। [४३

इत्यार्षे रामायण उत्तर-काण्डे वर-प्रदानिको नाम
त्रिंशः सर्गः ॥ ३० ॥

---

## [ वं-३३ ]= [ एकत्रिंशः सर्गः ] =[ दा-२५ ]

स तु दत्त्वा वनं घोरं दश-ग्रीवः खरस्य तु[11] ।
१] भगिनीं च समा-श्वास्य हृष्टः स्व-स्थोऽभवत् तदा ॥ १ ॥ [१
ततो निकुम्भिला नाम लङ्कायां तु महा-वनम् ।
२] तन् महाऽऽत्मा दश-ग्रीवः प्र-विवेश महा-भुजः ।।[12]२।। [२

---

१. ल$_1$-नास्ति । २. अ रा$_1$ ल$_1$ ल$_2$-क्रोधेनो° । ३. च-पुरा । ४. च-अथाध्यक्षो भवेति स महात्मनाम् । ५. च-तत्र ते वचनं शूरः करिष्यति सदा खरः। रक्षसां कामरूपाणां प्रभुरेष भविष्यति ॥ ६. च-स तैः परिवृतः सर्वैः । ७. च भ$_1$ ल$_1$ प्र-अगच्छत्स । भ$_2$-आगच्छत्स । ८. च-तंत्रा° । ९. च भ$_2$-शूर्पणखी । १०. अ ल$_2$-सोदकं वनम् । भ$_1$-°ण्डकं वनम् । ल$_1$ प्र-°ण्डके वने । ११. अ ल$_3$-च । १२. च-नास्ति ॥

ततो यूप-शताऽऽकीर्णं[8] सौम्यं(?म्य) चैत्योपशोभितम् ।
३] ददृशे धि-ष्ठितं यज्ञे[1] श्रिया परमया युतम् ॥ ३ ॥ [३
ततः कृष्णाऽजिन-धरं कमण्डलु-शिखा-ध्वजम् ।
४] ददर्श रावणः पुत्रम् इन्द्र-जेतारम् आ-हवे ॥ ४ ॥ [४
तं समा-साद्य रक्षस् तु समा-श्लिष्य च बाहुभिः[2] ।
५] अब्रवीत् किम् इदं वत्स वर्तते तद् ब्रवीहि मे ॥ ५ ॥ [५
उशना त्व् अब्रवीत् तत्र गुरुर् योऽत्र सम्-ऋद्धये ।
६] रावणं राक्षस-श्रेष्ठं द्विज-श्रेष्ठो महा-तपाः ॥ ६ ॥ [६
सु-प्रियं तव हे राजञ् छ्रूयतां सर्वम् एव हि ।
७] यज्ञास् ते सप्त पुत्रेण प्राऽऽप्ताः[3] पुम्भिः सु-दुर्लभाः ॥ ७ ॥ [७
अग्नि-ष्टोमोऽश्व-मेधश् च यज्ञो बहु-सुवर्णकः ।
८] राज-सूयस् तथा यज्ञो गो-सु(?स)वो वैष्णवस् तथा ॥ ८ ॥ [८
माहेश्वरः प्र-वृत्तस् तु[3] प्राऽऽप्ताः पुम्भिः सु-दुर्लभाः ।
९] वरांस् ते लब्धवान् पुत्रः साक्षात् पशु-पतेर् इह ॥ ९ ॥ [९
काम-गं स्यन्दनं दिव्यम् अन्तरिक्ष-चरं ध्रुवम् ।
१०] मायां च तामसीं नाम यस्यां प्र-भवते तमः ॥१०॥ [१०
एतया किल सं-ग्रामे मायया राक्षसोत्तम[4] ।
११] प्र-युद्धस्य गतिर्[5] बोद्धुं[6] न शक्या वै सुराऽसुरैः ॥११॥ [११
अ-क्षयान्[8] इषु-धीन्[8] बाणांश् चाऽपि[7] युद्धे[9] सु-दारुणान्[1] ।
१२] अस्त्राणि वि-विधान्य् एवं शत्रु-विध्वंसनानि च ॥१२॥ [१२
एवं सर्वान् वरांल् लब्ध्वा ततश् चाऽयं दशाऽऽनन ।
१३] अद्य यज्ञ-समाप्तौ तु त्वत्-प्रतीऽऽक्षः स्थितोऽभवत्[10] ॥१३॥ [१३
ततोऽब्रवीद् दश-ग्रीवो न शोभनम् इदं कृतम् ।
१४] पूजिताः शत्रवो मह्यं देवा इन्द्र-पुरः-सराः[11] ॥१४॥ [१४
इहेदानीं कृतं यत् तु तच्[12] च कर्तुं[12] न शक्यते ।
१५] आ-गच्छ वत्स गच्छामः स्वम् एव भवनं प्रति ॥१५॥ [१५

---

१. भ$_{१}$-यज्ञं । २. प्र-राक्षसः । ३. च भ$_{१}$ भ$_{२}$-वर्जं-नास्ति । ४. अ ल$_{२}$-°माः । ५. रा$_{१}$ ल$_{३}$ ब प्र-गतिं । ६. च भ$_{१}$ भ$_{२}$-वेत्तुं । रा$_{१}$ ब-वोढुं । प्र-वक्तुं । ७. अ-वर्जं-°याविषुधी । ८. च भ$_{१}$ प्र-चापं । ९. च-युद्धसु° । भ$_{१}$ प्र-°रुणम् । १०. अ ल$_{२}$-स्थितोऽब्रवीत् । ११. अ ल$_{२}$ प्र-°पुरोगमाः । १२. च भ$_{१}$ भ$_{२}$-तदकर्तुं ॥

ततो गत्वा दश-ग्रीवः स-पुत्रः स-विभीषणः ।
१६] अव-तारयितुं चक्रे ताः स्त्रियो बाष्प-विक्लवाः[1] ॥१६॥ [१६
पृथिव्यां[2] यानि[2] रत्नानि दैत्य-गन्धर्व-रक्षसाम् ।
१७] तेजसा ज्वलमानानि नाना-प्रहरणानि च ॥१७॥ [१७
सिंहीनां राज-सिंहीनां सरितां कोकिलास्व् अपि ।
N] तुल्य-वेशाः[3] स्त्रियस् तत्र ददर्शाऽथ वि-भीषणः ॥१८॥ [N
मध्ये क्षामाऽभवत् सिंही राज-सिंही कुचोन्नता[4] ।
N] सरिद् विस्तीर्ण-जघना कोकिला मञ्जु-भाषिणी ॥१९[5]॥ [N
वि-भीषणश् च ता दृष्ट्वा नारीः शोक-समाकुलाः ।
१८] पापं भ्रातुर् मतं ज्ञात्वा[6] स धर्मात्[7] त्व्[7] इदम् अब्रवीत् ॥२०॥ [१८
ईदृक्-पाप-समाचारैर्[8] यशो-बल-विनाशनैः[9] ।
१९] परान् धर्षयतो राजन् धर्षणेयम्[10] उप-स्थिता[11] ॥२१॥ [१९
परान् हि धर्षयित्वेमास् त्वयाऽऽनीता वराऽङ्गनाः ।
२०] तवाऽप्य् आ-क्रम्य मधुना[12] राजन् कुम्भी-नसी हृता ॥२२॥ [२०
रावणस् त्व् अब्रवीद् वाक्यम् इदानीं नाऽव-गम्यते[13] ।
२१] कोऽयं पापस् त्वयाऽऽख्यातो मधुर्[14] इत्य् एव राक्षसः ॥२३॥ [२१
वि-भीषणस् तु स-क्रोधो[15] रावणं वाक्यम् अब्रवीत् ।
२२] श्रूयताम् अस्य पापस्य कर्मणः फलम् आ-गतम् ॥२४॥ [२२
योऽस्मन्-मातामहस् तस्य ज्येष्ठो भ्राता निशा-चरः ।
२३] माल्य-वान् इति वि-ख्यातो[14] देवानाम् अपि दर्प-हा ॥२५॥ [२३
सु-मालिनः स्वसा ज्येष्ठा अस्माकं तु स आर्यकः ।
२४] तस्य कुम्भी-नसी नाम दुहितुर् दुहिताऽभवत् ॥२६॥ [२४
मातृ-ष्वसेया त्व् अस्माकं जाता पुष्पोत्कटा सुता[16] ।
२५] भवतो(?ति) धर्म-तोऽस्माकं सर्वेषां नः स्वसा हि सा ॥२७॥ [२५

---

१. प्र-°विह्वलाः । २. भ$_2$-रक्षणीयानि । ३. च भ$_1$ भ$_2$-°वेषाः । ४. रा$_1$ ल$_1$ ल$_2$ ल$_3$ प्र-°चोज्ज्वला । ५. च भ$_1$-नास्ति । ६. च भ$_1$ भ$_2$ रा$_1$ ल$_1$ ल$_3$ प्र-दृष्ट्वा । ७. अ रा$_1$ ब ल$_1$ ल$_2$ ल$_3$-धर्मस्त्व् । ८. च भ$_1$ भ$_2$-ईदृशैस्ते स° । रा$_1$ ल$_3$ ब-ईदृशैः पा° । ल$_1$ प्र-ईदृशैर्दुरिताचारैर् । ९. च भ$_1$-यशो वः कुलना° । भ$_2$-यशोऽर्थकुलना° । १०. च-वर्ज-°णीयम् । ११. ल$_1$-°तम् । १२. च भ$_1$-वर्ज-बंधूनां । १३. प्र-वर्ज-°गच्छसि । १४. अ रा$_1$ ब ल$_3$ प्र-नास्ति । १५. भ$_1$ भ$_2$-सक्रोधात् । १६. च-शुभा ॥

सा हृता मधुना राजन् पापेन[1] सु-दुरात्मना[1] ।
२६] यज्ञे प्र-वृत्ते पुत्रे ते मयि चाऽन्तर्-जलोषिते ॥२८॥ [२६
नि-हत्य राक्षस-श्रेष्ठ सचिवांस् तव सं-मतान् । [२७उ
२७] धर्षयित्वाऽऽहृतं[2] तेन गुप्तम् अन्तः-पुरं तव ॥२९॥
श्रुत्वा चेदं मया सर्वं क्षान्तं तस्य हतो[3] न सः[3] । [२८
२८] यस्माद् अवश्यं दातव्या सेयं धर्मेण वै हृता ।
२९उ] अस्मिन्न् एवाऽभिसम्प्राऽऽप्ते लोके विदितम् अस्तु वः ॥३०॥ [२९
विभीषण-वचः श्रुत्वा राक्षसेन्द्रः स रावणः ।
N] दौरात्म्येनाऽऽत्मनोद्धूतस्[4] तपोऽन्तेनेव सागरः ॥३१॥ [३०
ततोऽब्रवीद् दश-ग्रीवः क्रोधात् संरक्त-लोचनः ।
३०] सं-कल्प्यतां रथः[5] शीघ्रं शूराः सज्जी-भवन्तु नः । [३१
N] वर्मभिश् चित्र-सन्नाहैर् प्रा-ब्रियन्तां[6] गजोत्तमाः ॥३२॥ [N
पुत्रो मे कुम्भ-कर्णश् च मुख्या ये वै निशा-चराः ।
३१] वाहनान्य् अव-रुह्याऽऽशु निर्-यान्त्व् एते ममाऽऽज्ञया ॥[7]३३॥ [३२
अद्य तं सम्-अरे हत्वा मधुं रावण-निर्भयम्[8] ।
३२] इन्द्र-लोकं गमिष्यामि युद्धाऽऽकाङ्क्षी सुहृद्-वृतः ॥३४॥ [३३
ततो वि-जित्य त्रि-दिवं स्थाप्य[9] चेन्द्रं बलाद् वशे[9] ।
३३] नि-वृत्तो वि-हरिष्यामि त्रैलोक्यैश्वर्य-दर्पितः ॥३५॥ [३४
अक्षौहिणी-सहस्राणि दश[10] तस्य तु रक्षसः[10] ।
३४] नाना-प्रहरणा[11] हृष्टा निर्-ययुर् युद्ध-काङ्क्षिणः ॥३६॥ [३५
इन्द्र-जिच् चाऽग्र-तस् तस्य रक्षः-सैन्यस्य सोऽभ्य्-अयात् ।
३५] रावणः पृष्ठ-तो वीरः कुम्भ-कर्णश् च वीर्य-वान्[12] ॥३७॥ [३६
वि-भीषणस् तु धर्माऽऽत्मा लङ्कायां[13] धर्मम् आऽचरत्[13] ।
३६] एते राक्षस-शार्दूला गताः सुर-पुरं प्रति ॥३८॥ [३७
रथैर् नागैर् खरैर् उष्ट्रैर् हयैर् दीप्तैर्[14] महोरगैः[14] ।
३७] राक्षसा निर्-ययुः सर्वे कृत्वाऽऽकाशं निर्-अन्तरम् ॥३९॥ [३८

---

१. ल$_1$–वर्जं–प्राणेन च दुरा° । २. च भ$_2$–°त्वा हृतं । भ$_1$–°हृता । प्र–दर्शयि° । ३. अ–हतौजसः । ४. अ रा$_1$ ब ल$_1$ ल$_2$–°नो धूतः । ५. ल$_1$–रथाः । ६. अ ब ल$_2$ ल$_3$ प्र–ध्या° । ७. च–नानाप्रहरणाः सर्वे वाहनान्यवरोहत । ८. भ$_2$–सर्वत्र नि° । ९. च–वशे कृत्वा पुरंदरम् । १०. च–तत्र चत्वारि रक्षसाम् । ११. अ–प्रहार° । १२. च–राक्षसः । १३. च–धर्ममेव समाच° । १४. च–चैव महारथैः । ब–°हैर्मनोरथैः । प्र–दांतैर्महो° ॥

दैत्याश् च शत-शस्[1] तत्र बद्ध-वैराः[1] सुरैः सह ।
३८] रावणं प्रेक्ष्य गच्छन्तं पृष्ठ-तोऽनु-ययुस्[2] तदा[2] ॥४०॥ [३९
स तु गत्वा मधु-पुरं प्र-विश्य च दशाऽऽननः ।
३९] अपश्यद् भगिनीं तत्र मधुं न तत्र दृष्टवान् ॥[3]४१॥ [४०
भ्रातुः सा प्राऽञ्जलिर् भूत्वा पादयोः शिरसा गता ।
४०] तस्य राक्षस-राजस्य भयात् कुम्भी-नसी शुभा ॥४२॥ [४१
स ताम् उत्थापयामास न भेतव्यम् इति ब्रुवन् ।
४१] उवाच[4] राक्षस-श्रेष्ठः[4] किं ददामि तवेप्सितम् ॥४३॥ [४२
साऽब्रवीद् यदि मे राजन् प्र-सन्नोऽसि महा-बल ।
४२] भर्ता[5] मे मधुर् एषोऽद्य न हन्तव्यो ह्य्[5] अरिं-दम ॥४४॥ [४३
सत्य-वाग् भव राजेन्द्र माम् अवेक्षस्व याचतीम् ।
४३] त्वया ह्य् उक्तं महा-राज न भेतव्यम् इति स्वयम्[6] ॥४५॥ [४५
रावणस् त्व् अब्रवीद् वाक्यं ततः कुम्भी-नसीं बली ।
४४] क्व गतो राक्षसेन्द्रोऽसौ[7] तव कान्तो नि-वेद्यताम्[8] ॥४६॥ [४६
सह तेन गमिष्यामि[9] सुर-लोकं जयाय वै ।
४५] तव कारुण्य-सौहार्दान्[10] नि-वृत्तोऽस्मि मधोर् वधात् ॥४७॥ [४७
शयानं शयने तं तु समुत्थाप्य निशा-चरम् ।
४६] अब्रवीत् सा प्र-हृष्टेव राक्षसी सु-विपश्चिता[11] ॥४८॥ [४८
एष प्राऽऽप्तो दश-ग्रीवो मम भ्राता निशा-चरः[12] ।
४७] देव-लोक-जयाऽऽकाङ्क्षी सहायं त्वां वृणोति सः ॥४९॥ [४९
तस्य[13] त्वं हि[13] सहायाऽर्थं[14] रक्षः सं-बन्धिनो व्रज ।
४८] स्निग्धस्य भजमानस्य युक्तम् अर्थाय रक्षितुम्[15] ॥५०॥ [५०

---

१. अ ल$_2$–°शश्चैव बद्ध° । च–बहवस्तत्र कृतवैराः । २. च–तत्तेप्यत्र समीयिरे । ३. च–नापश्यत्तं मधुं तत्र भगिनीमेव चैक्षत । ४. च भ$_2$–रावणो रा° । भ$_1$–रावणो रक्षसां श्रेष्ठः । ५. अ रा$_1$ ल$_2$ ल$_3$ ब प्र–भर्तारं मधुरं मह्यं न हंतव्यम् । च भ$_1$ भ$_2$–भर्तारं मधुनं मह्यं न हन्तव्यम् । ६. च–ब्रुवन् । ७. अ ल$_2$–°न्द्रो वा । ल$_1$ ल$_3$ ब प्र–°न्द्रो वै । ८. अ ल$_2$ ल$_3$ ब–निबोध्यताम् । ९. ल$_1$–प्रया° । १०. ल$_1$–वर्जं–°ण्यमोहात्मा । ११. टि.–°ता->–ता द्र. । १२. भ$_1$–°र । १३. रा$_1$–वर्जं–तदस्य त्वं । १४. रा$_1$–सहार्थेन । ल$_1$–साहाय्येन । १५. च–कल्पितुम् ॥

पत्न्यास्[1] तु[1] वचनं श्रुत्वा तथेत्य् उक्त्वा मधुस् तदा । [५१

४९] दृष्ट्वा[2] स रावणं तत्र सं-मान्य[2] च यथा-वयः ।

पूजयामास धर्मेण राक्षसं[3] राक्षसर्षभः[3] ॥५१॥ [५२

५०] प्राऽऽप्यैव तु दश-ग्रीवो मधोर् गृहम् अनू-उत्तमम् ।[4]

तत्र[5] चैकां निशाम् उष्य[5] गमनायोप-चक्रमे ॥५२॥ [५३

ततः कैलासम्[6] आ-साद्य शैलं वैश्रवणाऽऽलयम् ।

५१] राक्षसेन्द्रो महेन्द्राऽऽभः सैन्यम्[7] उपन्य्-अवेशयत्[7] ॥५३॥ [५४

इत्यार्षे रामायण उत्तर-काण्डे सैन्योपनिवेशनो[8]

नामैकत्रिंशः सर्गः ॥ ३१ ॥

---

## [ वं– ३४]= [ द्वात्रिंशः सर्गः ] =[ दा–२६ ]

तस्मिन् गिरौ दश-ग्रीवः सह सैन्येन वीर्य-वान् ।

१] अस्तं गते दिन-करे नि-वासं समू-अरोचयत् ॥ १ ॥ [१

उद्-इते वि-मले चन्द्रे तुङ्गे पर्वत-मूर्धनि ।

२] प्र-सुप्ते च महा-सैन्ये नाना-प्रहरणैर् युते ।[9] २ ॥ [२

रावणः सु-महावीर्यो वि-चरन् शैल-मूर्धनि ।[9]

३] अपश्यत् सु-बहून् भावान् प्र-दोषे वि-मले[10] गिरौ[10] ॥ ३ ॥ [३

कर्णिकार-वनैर्[11] दिव्यैः कदम्ब-गहनैस् तथा ।

४] पद्मिनीभिः सरिद्भिश् च मन्दाकिन्य्-आदिभिर् युतैः[12](?ते)।[12]४॥[४

प्र-ववौ सु-सुखो वायुः पुष्प-गन्ध-वहस् तथा ।[13] [११उ

५] तस्मिन् गिरि-वरे रम्ये चन्द्र-पादोपशोभिते ॥ ५ ॥ [N

घण्टानाम् इव सं-नादः शुश्रुवे मधुरः[14] पटुः ।

६] गायन्तीनाम् अप्सरसां शब्देनाऽऽपूरयन्[15] गिरिम् ॥ ६ ॥ [९

पुष्प-वर्षाणि वर्षन्तो न-गाः पवन-ताडिताः ।

७] शैलं तं वासयन्तीऽव मधु-माधव-गन्धिनः ॥ ७ ॥ [१०

---

१ च–तस्यास्तद् । २. च–मधुस्तु रावणं दृष्ट्वा समेत्य । ३. च–रावणं राक्षसेश्वरम् । ४. च–नास्ति । ५. च–उषित्वैकां निशां तत्र । ६. भ$_1$ भ$_2$ रा$_1$ ल$_1$ ल$_3$–कैलाशं । ७. भ$_1$ भ$_2$ रा$_1$ ल$_1$ प्र–सैन्याम्युप° । ८. च प्र–°शनं । ९. अ ल$_1$ ल$_3$–नास्ति । १०. अ ल$_2$ ल$_3$ ब–°लेऽम्बरे । ११. प्र–° रैर्वनैर् । १२. भ$_1$–युतम् । रा$_1$–युतः । १३. ल$_1$–नास्ति । १४. च भ$_2$–समधुः । १५. भ$_1$–°यद् ॥

स[1] तु पुष्प-समृद्ध्या[1] च वातस्य शिशिरस्य च ।
८] प्र-वृत्तायां रजन्यां च चन्द्रस्योद्-अयनेन तु ॥ ८ ॥ [१२
रावणः सु-महावीर्यः काम-बाण-वशं-गतः ।
९] विनि-श्वस्य विनि-श्वस्य चन्द्रं मुहुर् उद्-ऐक्षत ॥ ९ ॥ [१३
एतस्मिन्न् अन्तरे तत्र दिव्य-पुष्प-विभूषिता ।
१०] सर्वाऽप्सरो-वरा रम्भा गच्छन्ती तेन लक्षिता ॥१०॥ [१४
११पू] कृतैर् विशेष-कैर् हृद्यैः[2] सर्वर्तुकुसुमोज्ज्वलैः ।
नील-तोयद-सङ्काशैर् वस्त्रैः समव-गुण्ठिता ॥११॥ [१७
१२] यस्या वक्त्रं शशि-निभं गात्रं[3] चामीकर-प्रभम्[3] ।
ऊरू[4] करिकरोदग्रौ करौ कमल-कोमलौ[5] ॥१२॥ [१८पू
१३] वज्रमध्योपमं मध्यं श्रोणी पुलिन-विस्तृता ।
पादौ फुल्लाऽरविन्दाऽऽभौ स्व्-अङ्गुली-तल-लक्ष्मणौ ॥१३॥ [N
१४] रुते वीणा गतौ हंसी कुन्द-पुष्प-निभा द्वि-जाः ।
इत्य् एषा ह्य् उपमा स्त्रीणां स्वर्गेऽपि वर-वर्णिनाम्[6] ॥१४॥ [N
१५] द्वितीया श्रीर् इवोद्-अग्रा श्रीर्[7] इवोदग्र-गामिनी ।
सैन्य-मध्ये च सा रम्भा गङ्गेव त्वरिता ययौ ॥१५॥ [N
१६] तां समुत्थाय रक्षेन्द्रः काम-बाण-बलाऽर्दितः[8] ।
करे गृहीत्वा गच्छन्तीं वदनं वीऽऽक्ष्य सोऽब्रवीत् ॥१६॥ [१९
१७] क्व गच्छसि वराऽऽरोहे रम्भे तत् त्वं ब्रवीहि मे ।
१८पू] कस्याऽभ्युदय-कालोऽयं यस् त्वां समुप-भोक्ष्यते ॥१७॥ [२०
य[9] इदं[9] पूर्ण-चन्द्राऽऽभं निरवद्योपलक्षणम् ।
N] मुखाऽमृतं पास्यते को ह्य् अ-मृतं देव-राड् इव ॥१८॥ [२१
स्वर्ण-कुम्भ-निभौ पीनाव् उभाव् अपि निर्-अन्तरौ ।
N] कस्योरु-कर-संस्पर्शं सम्प्राऽऽप्स्येते कुचौ तव ॥१९॥ [२२
स्वर्ण-चक्र-प्रतीकाशं स्वर्ण-दाम्ना परिष्-कृतम् ।
N] अध्या-रोहयते कस् ते जघनं स्वर्ण-रूपिणम् ॥२०॥ [२३

---

१. अ ब ल$_2$--स च पु° । ल$_1$-मधुपु° । २. भ$_1$-सांद्रैः । रा$_1$-सद्ये । ३. च-मध्यं चापि लतोपमम् । ४. च भ$_1$-वर्ज-कुचौ । ५ च-कोमळपल्लवौ । भ$_1$ भ$_2$ रा$_1$ ब ल$_3$-पल्लवकोमलौ । ल$_1$-पद्मसुको° । ६. अ च भ$_1$ भ$_2$ ल$_2$-°र्णिनी । ७. च भ$_1$ भ$_2$-ह्रीर् । ८. ल$_1$-°णवशंगतः । ९. अ रा$_1$ ल$_2$ ल$_3$ ब-यश्चेदं ॥

१८उ ] मद्-विशिष्टः पुमान् कोऽन्य इन्द्रोऽग्निर् वरुणो यमः ।
माम् अतीऽत्य[1] तु कस्य[1] त्वं गच्छसीऽन्दु-निभाऽऽनने ॥२१॥[२४

१९] वि-श्राम्य[2] त्वं[2] वराऽऽरोहे[3] शिला-तलम्[4] इदं शुभम्[5] ।
त्रिषु लोकेषु[6] न ह्य् अस्ति यो मे तुल्य-बलो भवेत् ॥२२॥ [२५

२०] तद् एष प्राऽञ्जलिर् भूत्वा याचते त्वां दशाऽऽननः ।
यः प्र-भुश् चैव भर्ता च त्रैलोक्यस्य भजस्व माम् ॥२३॥ [२६

२१] एवम् उक्ता तु सा रम्भा वेपन्ती प्राऽञ्जलिः स्थिता ।
अब्रवीन् नाऽर्हसे राजन् याचितुं त्व गुरुर् हि मे ॥ २४॥ [२७

२२] स्नुषाऽहं तव राजेन्द्र तत्त्वम् एतद् ब्रवीमि ते ।
N] अन्येभ्योऽपि त्वया रक्ष्या[7] नाऽर्हसे वक्तुम् ईदृशम् ॥२५॥ [२८

N] अब्रवीत् तां दश-ग्रीवश् चरणाऽधोमुखीं स्थिताम् । [२९पू
२३पू] सुतस्य कस्य मे भार्या येन त्वं मत्-स्नुषाऽप्सराः[8] ॥२६॥ [३०पू

N] इन्द्र-जित् त्व् अति-कायो वा यो वाऽन्यः स नि-गद्यताम् [N
२३उ] बाढम् इत्य् एव तं चाऽऽह रम्भा कमल-लोचना ॥२७॥ [३०उ

धर्म-तस् ते सुतस्याऽहं भार्या राक्षस-पुङ्गव ।
२४] पुत्रः प्रिय-तरः[9] प्राणैर् भ्रातुर् वैश्रवणस्य ते ।
ख्यातोऽयं त्रिषु लोकेषु नल-कूबर इत्य् असौ ॥२८॥ [३१

२५] धर्म-तो यो भवेद् विप्रः क्षत्रियो वीर्य-तो भवेत् ।
क्रोधेनाऽस्त्य्[10] अग्निना[10] तुल्यः क्षान्त्या च वसुधोपमः ॥२९॥[३२

२६] तस्याऽस्मि कृत-सङ्केता लोकपाल-सुतस्य वै ।
तम् उद्-दिश्य हि मे सर्वं वि-भूषणम् इदं कृतम् ॥३०॥ [३३

२७] तथा तत्र हि नाऽन्यत्र सर्वं[11] मे प्रति-तिष्ठति ।
हेतुनाऽनेन[12] मां[13] राजन् मोक्तुम् अर्हस्य् अरिं-दम ॥३१॥ [३४

२८] स हि सम्प्रति धर्माऽऽत्मा मत्-प्रतीऽऽक्षोऽव-तिष्ठते ।
तन् न वि-घ्नं सुतस्येह कर्तुम् अर्हसि मुञ्च माम् ॥३२॥ [३५

---

१. च भ$_1$--°त्य तु प्रश्य । ल$_1$-°स्यैव यस्य । २. अ रा$_1$ ल$_2$ ल$_3$ ब-°म्यतु । प्र-विश्रामय । ३. ल$_1$-°रोहा । ४. अ रा$_1$ ल$_1$ ल$_2$ ल$_3$ ब-°तटम् । ५. च-शुभे । ६. ब-वर्जं-कालेषु । ७. च-नास्ति । ८. च-°षा भवेत् । ९. अ च ल$_2$-°तरैः । १०. अ भ$_2$ ल$_2$-वर्जं-क्रोधो यस्याग्निना । ११. भ$_1$-भात्रो । १२. च भ$_1$ भ$_2$ प्र-तेन सत्येन । ल$_1$-धर्मेण तेन । १३. अ रा$_1$ ब ल$_2$ ल$_3$-मे ॥

२९] सद्भिर् आ-चरितं मार्गं[1] गच्छ राक्षस-पुङ्गव ।
मानवीयो मया हि त्वं लाडनीया तथाऽस्मि ते ॥३३॥ [३६
३०] एवं ब्रुवाणां रम्भां तां धर्माऽर्थ-सहितं वचः । [३९पू
निर्-भर्त्स्य राक्षसो मोहात् प्रति-गृह्य[2] बलाद् बली । [N
३१] काम-मोहाऽभिसन्तप्तो मैथुनायोपचक्रमे ॥३४॥ [३९उ
सा वि-मुक्ता भयाद् रम्भा भ्रष्ट-माल्याऽन्तराऽम्बरा ।
३२] गजेन्द्राऽऽक्रीड-मथिता वापीवाऽऽकुलतां[3] गता ॥३५॥ [४०
सा वेपमाना लज्जन्ती रम्भा कृत-कराऽञ्जलिः ।
३४] पादयोः पतिता गत्वा ततो वैश्रवणाऽऽत्मजम् ॥३६॥ [४२
तदा[4] ध्वस्तां[4] तु तां दृष्ट्वा महाऽऽत्मा नल-कूबरः ।
३५] अब्रवीत् किम् इदं भद्रे पादयोः पतिताऽसि मे[5] ॥३७॥ [४३
सा तु निः-श्वसमाना च वेपमाना[6] कृताऽञ्जलिः[6] ।
३६] तत्र तस्य यथा-तथ्यम् आ-ख्यातुम् उप-चक्रमे ॥३८॥ [४४
एष देव दश-ग्रीवः प्राऽऽप्तो गन्तुं त्रि-विष्टपम् ।
३७] तेन सैन्य-सहायेन निः-शेषं[7] परि-णेष्यते[8] ॥३९॥ [४५
आ-यान्ती तेन दृष्टाऽस्मि त्वत्-सकाशम् अरिं-दम ।
३८] गृहीत्वा चाऽपि[9] पृष्टाऽस्मि कस्य त्वम् इति रक्षसा ॥४०॥ [४६
मया तु तथ्यं कथितं पृच्छतो रावणस्य ह ।
३९] काम-मोहात् तु तत् सर्वं न[10] स वाक्यं शृणोति मे ॥४१॥ [४७
याच्यमानो मया देव स्नुषाऽहं तव चेति वै[11] ।
४०] तत् सर्वं पृष्ठ-तः कृत्वा बलात् तेनाऽस्मि धर्षिता ॥४२[10]॥ [४८
एतद्[11] विदित्वा तत् सर्वं[12] मम क्षन्तुम् इहाऽर्हसि ।
४१] नाऽपि तुल्यं बलं देव स्त्रियाश् च पुरुषस्य च[13] ॥४३॥ [४९
एतच् छ्रुत्वा तु सं-क्रुद्धस् तदा वैश्रवणाऽऽत्मजः ।
४२] धर्षणां तां परां श्रुत्वा ध्यानं सम्प्र-विवेश ह ॥[14]४४॥ [५०

---

१. भ$_1$-वर्ज-पूर्वं । २. भ$_1$-अभिगृह्य । ३. अ रा$_1$ ल$_2$ ल$_3$ ब-बाष्प-व्याकु० । ४. ल$_1$-तद्राधस्तां । ५. ब-किम् । ६. भ$_1$-प्रांजलिस्तत्र सा सती । च भ$_2$ रा$_1$ प्र-°ना च प्रांजलिः । ७. अ-क्रूरेण । ८. अ रा$_1$ ल$_3$ ब-परिनेष्यते । च-परिशास्यते । भ$_1$ भ$_2$ ल$_1$ प्र-परिणस्यते । ९. अ ल$_2$-चास्मि । १०. च-नास्ति । ११. अ रा$_1$ ल$_2$ ल$_3$ ब प्र-च । १२. च-नास्ति । भ$_1$-°त्वा सर्वं त्वं । ल$_1$-एतच्छ्रुत्वा तु° । १३. च भ$_1$ भ$_2$ प्र-ह । १४. प्र-नास्ति ॥

गुरोस् तत् कर्म वि-ज्ञाय तदा वैश्रवणाऽऽत्मजः ।[1]
४३] मुहूर्तं[2] रोष-रक्ताऽक्षस् तोयं जग्राह पाणिना ॥४५॥ [५१
गृहीत्वा सलिलं दिव्यम् उप-स्पृश्य यथा-विधि ।
४४] शापं तस्योत्-ससर्जाऽथ राक्षसस्य सु-दारुणम् ॥४६॥ [५२
अ-कामा तेन यस्मात् त्वं बलाद् भद्रे प्र-धर्षिता ।
४५] तस्मात् स युवतीः सर्वा नाऽकामा धर्षयिष्यति ॥४७॥ [५३
यदा ह्य् अ-कामा दुष्टाऽऽत्मा धर्षयिष्यति योषितः ।[3]
४६] तदाऽस्य सप्त-धा मूर्धा फलिष्यति[4] न सं-शयः ॥४८॥ [५४
तस्मिन् प्र-मुक्ते शापे तु ज्वलिताऽग्नि-सम-प्रभे[5] ।
४७] देव-दुन्दुभयो नेदुः पुष्प-वृष्टिः पपात ह[6] ॥४९॥
ब्रह्मणा च वि-मुक्तोऽत्र ह्रासस् तुष्टाश् च देवताः । [५५
४८] ज्ञात्वा लोक-गतीः सर्वास् तस्य मृत्युं च रक्षसः ॥५०॥ [५६पू
श्रुत्वा तु स दश-ग्रीवस् तं शापं लोम-हर्षणम् ।
४९] नारीषु मैथुनी-भावं नाऽकामास्व् अभ्य्-अगच्छत ॥५१॥ [५७

इत्यार्षे रामायण उत्तर-काण्डे रावण-शापो नाम

द्वात्रिंशः सर्गः ॥ ३२ ॥

---

## [ वं-३५ ]= [ त्रयस्त्रिंशः सर्गः ] =[ दा-२७ ]

कैलासं[7] लङ्घयित्वा[8] तु[9] दश-ग्रीवः स राक्षसः ।
१] आ-ससाद महा-तेजा इन्द्र-लोकं निशा-चरः ॥ १ ॥ [१
तस्य राक्षस-सैन्यस्य समन्ताद् उप-यास्यतः ।
२] देव-लोकं गतः शब्दो भिद्यमानाऽर्णवोपमः ॥ २ ॥ [२
श्रुत्वा तु रावणं प्राऽऽप्तम् इन्द्रश् चलित आसनात् ।
३] स देवान् अब्रवीच् छक्रः सर्वान् एव समा-गतान् ॥ ३ ॥ [३
आदित्या वसवो रुद्राः साध्याश् च स-मरुद्गणाः ।
४] सज्जी-भवन्तु युद्धाय रावणस्य दुर्-आत्मनः ॥ ४ ॥ [४

---

१. प्र-नास्ति । २. च भ$_1$ भ$_2$-°र्ताद् । ३. च भ$_2$-नास्ति । ४. च-स्फुटिष्यति । भ$_1$ ल$_1$-फटिष्यति । ५. च भ$_2$ रा$_1$-°प्रभः । ६. भ$_1$ भ$_2$ ल$_1$ ब-च । ७. च भ$_1$ भ$_2$-कैलाशं । ८. ल$_1$-तं लंघयित्वा । प्र-वर्जं-°त्वा स । ९. अ रा$_1$ ल$_1$ ल$_2$ ल$_3$ ब-नास्ति ॥

त एवम् उक्ताः शक्रेण देवाः शक्र-समा युधि ।
५] अनह्यन्त महा-सत्त्वा युद्ध-श्रद्धा-समन्विताः ॥ ५ ॥ [५
इन्द्रोऽपि दीनः सं-त्रस्तः स[1] ययौ[1] रावणं प्रति ।
६] विष्णोः समीपम् आ-गम्य इदं वचनम् अब्रवीत् ॥ ६ ॥ [६
विष्णो कथं करिष्यामो रावणं राक्षसं प्रति ।
७] असौ हि बल-वान् रक्षो युद्धाऽर्थम् अनु-वर्तते ॥ ७ ॥ [७
वर-दानेन बल-वान् न खल्व् अन्येन हेतुना ।
८] स च सत्यो वरः कार्यो यो दत्तो वै स्वयं-भुवा ॥ ८ ॥ [८
तद् यथा न-मुचिर् वृत्रो बलिर् नरक एव च ।
९] त्वद्-बलं[2] समव-ष्टभ्य मया दग्धास् तथा कुरु ॥ ९ ॥ [९
न ह्य् अन्यो देव-देवेश त्वाम् ऋते मधु-सूदन ।
१०] गतिः पराऽयणं वाऽस्ति त्रैलोक्ये स-चराऽचरे[3] ॥१०॥ [१०
त्वं हि नारायणः श्री-मान् पद्म-नाभः सनातनः ।
११] त्वया मे स्थापिता लोकाः शक्रश् चाऽहं प्र-भुः कृतः ॥११॥ [११
तथाऽऽख्याहि यथा-तत्त्वं देव-देव[4] मयि[4] स्वयम् ।
१२] असि-चक्र-सहायस् त्वं योत्स्यसे[5] रावणं प्र-भो ॥१२॥ [१३
एवम् उक्तः स शक्रेण देवो नारायणः प्र-भुः ।
१३] अब्रवीन् न परि-त्रासः कर्तव्यः श्रूयतां च मे ॥१३॥ [१४
न तावद् एष दुष्टाऽऽत्मा शक्यो जेतुं सुराऽसुरैः ।
१४] हन्तुं युधि समा-साद्य वर-गुप्तः स्वयं-भुवा ॥१४॥ [१५
सर्व-था तु महत् कर्म करिष्यति रणोत्कटः ।
१५] राक्षसः पुत्र-सहितो दृष्टम्[6] एतत् पुरा-तनैः[7] ॥१५॥ [१६
यत् तु मां भाषसे शक्र युध्यस्वेति सुरोत्तम ।
१६] नाऽहं तु प्रति-योत्स्येऽद्य[8] रावणं राक्षसं युधि ॥१६॥ [१७
नाऽहत्वा सम्-अरे शत्रून् विष्णुः प्रति-निवर्तते ।
१७] दुर्-लभश् चैव कामोऽद्य वर-गुप्ताद् धि रावणात् ॥१७॥ [१८
प्रति-जानामि देवेश त्वत्-समीपे शत-क्रतो ।
१८] राक्षसस्याऽहम् एवाऽत्र भविष्ये मृत्यु-कारणम् ॥१८॥ [१९

---

१. च-संययौ । २. ल$_1$-वर्जं-तद् बलं । ३. अ ल$_2$-च चरा° । ४. ल$_1$ प्र-देवदेवो ह्यसि । ५. भ$_1$-वर्जं-योत्स्येऽहं । ६. भ$_1$-दिष्टम् । ७. भ$_1$-°तनम् । ८. अ ल$_2$-प्रतिपत्स्येद्य ॥

अहम् एनं नि-हत्याऽऽशु राक्षसं स-पुरःसरम् ।
१९] देवान्[1] आ-नन्दयिष्यामि[1] लोक-पालैः[2] समन्वितान्[2] ॥१९॥ [२०
एतत् ते कथितं तत्त्वं देव-राज शची-पते ।
२०] युध्यस्व विगत-त्रासः सुरैः सह महाऽऽत्मभिः ॥२०[3]॥ [२१
ततो रुद्राः सहाऽऽदित्या वसवो मरुतोऽश्विनौ ।
N] सं-नद्धा निर्-ययुस् तूर्णं राक्षसान् अभि-तः पुरा(?रः)॥२१॥ [२२
एतस्मिन्न् अन्तरे नादः शुश्रुवे रजनी-क्षये ।
२१] तत्र रावण-सैन्यस्य प्र-बुद्धस्य[4] समन्त-तः ॥[5]२२॥ [२३
ततः सम्-अभवद् युद्धं देव-दानव-रक्षसाम् ।
२४] घोरं तुमुल-निर्ह्रादं नानाप्रहरणोद्यतम् ॥२३॥ [२६
एतस्मिन्न् अन्तरे शूरा राक्षसा भीम-विक्रमाः ।
२५] युद्धाऽर्थम् अभ्य्-अवर्तन्त सचिवा रावणस्य[6] ते ॥२४॥ [२७
मारीचश् च प्र-हस्तश् च महापार्श्व-महोदरौ ।
२६] अ-कम्पनो नि-कुम्भश् च शुकः सारण एव च ॥२५॥ [२८
सं-ह्रादिर् धूम-केतुश् च महा-दन्तो[7] महाऽऽननः ।
२७] जम्बु-माली महा-नासो विरूपाऽक्षश् च राक्षसः ॥[8]२६॥ [२९
ते[9] दैवत-बलं सर्वं[9] नाना-प्रहरणैः शितैः ।
२९] व्य्-अध्वंसयन्त[10] सं-क्रुद्धाः[11] सह[11] तैः क्षणदा-चरैः[12] ॥२७॥ [३२उ
तद् दैवत-बलं राम हन्यमानं निशा-चरैः ।[13]
N] प्र-णुन्नं सर्व-तो दिग्भ्यः सिंह-नुन्ना यथा मृगाः ॥२८॥ [३४
एतस्मिन्न् अन्तरे राम वसूनाम् अष्टमो वसुः[14] ।
३०] सावित्र इति वि-ख्यातः प्र-विवेश रणाऽजिरम्[15] ॥२९॥ [३५

---

१. अ प्र-वर्जं-देवता नंद° । २. अ-वर्जं-ज्ञात्वा कालमुपागतम् । ३. अ ल$_1$-नास्ति । ४. ल$_2$-वर्जं-प्रयुद्धस्य । ५. अतः परमधिकः पाठः—प्र-ते प्रयाता महावीर्या अन्योन्यमभिवीक्ष्य च । संग्रामे चाभिमुखा अभ्यवर्षंत वृष्टिवत् ॥ ततो देवतासैन्यं संक्षोभ्य समजायत । तदा स्वयं महासैन्यं दृष्ट्वा परमर्द्धगम् । ६. भ$_1$ भ$_2$-राक्षसस्य । ७. च भ$_1$ भ$_2$-°दंष्ट्रो । ८. अतः परमधिकः पाठः—च भ$_1$ भ$_2$ प्र-सुप्तघ्नो यज्ञकोपश्च दुर्मुखो दूषणः खरः । त्रिशिराः करवीराक्षः सूर्यपुत्रश्च राक्षसः । एतैः सर्वैर्महावीर्यैर्वृतो राक्षसपुंगवः ॥ अतोऽधिकश्च-भ$_2$ प्र-रावणस्यार्यकः सैन्यं सुमाली प्रविवेश ह । ९. भ$_1$ भ$_2$-स । १०. रा$_1$ ल$_2$ प्र-वर्जं-°यत । ११. च भ$_1$ भ$_2$-°द्धैः । १२. च भ$_1$ भ$_2$-वर्जं-संगताः क्षणदाचराः । १३. च-नास्ति । १४. प्र-विभुः । १५. अ-°रे ॥

देवैः परि-वृतो हृष्टैर् नानाप्रहरणोद्यतैः ।
३१] त्रासयन् शत्रु-सैन्यानि प्र-विवेश[1] रणाऽजिरम्[1] ॥३०॥[2] [३६
ततो युद्धं सम्-अभवत् सुराणां सह[3] राक्षसैः ।
३३] क्रुद्धानां जयम् इच्छूनां सम्-अरेष्व्[4] अ-निवर्तिनाम् ॥३१॥ [३८
ततस् ते राक्षसाः शूरा देवानां प्र-मुखे स्थिताः ।
३४] नाना-प्रहरणैर् देवाञ् जघ्नुः शत-सहस्र-शः ॥३२॥ [३९
राक्षसान् अपि ते देवा महा-वीर्याः स्व-तेजसा ।
३५] समेत्य नि-शितैः शस्त्रैर् नयन्ति यम-सादनम् ॥३३॥ [४०
एतस्मिन्न् अन्तरे राम सु-माली स तु राक्षसः ।
३६] नाना-प्रहरणः क्रुद्धो रणम् एकोऽभ्य्-अवर्तत ॥३४॥ [४१
स दैवत-बलं सर्वं दिव्यैः प्र-हरणैः शतैः ।[5]
३७] वि-ध्वंसयति वै[6] देवान्[6] वायुर् जल-धरान्[7] इव[7] ॥३५॥ [४२
ते महा-दानवा (?वै)श् चैव शूल-वर्षैः सु-दारुणैः ।
३८] पात्यमानाः सुराः[8] संख्ये व्य्-अतिष्ठन्त वि-भीषणाः ॥३६॥ [४३
ततो वि-द्राव्यमानेषु तेषु देवेषु मालिना ।
३९] वसूनाम् अष्टमः संख्ये सावित्रः पर्यव-स्थितः ॥३७॥ [४४
स ततोऽस्त्रैर् अनेकैश् च प्र-हरन्तं निशा-चरम् ।
४०] वि-क्रम्य स वसुः क्रुद्धो वारयामास राक्षसम् ॥३८॥ [४५
ततो युद्धं महत् तत्र राक्षसाऽमर-मुख्ययोः ।
४१] सु-मालिनो वसोश् चैव भीरूणां[9] भय-वर्धनम् ॥३९॥ [४६
ततस् तस्य महा-बाणैर् वसुना सु-महाऽऽत्मना ।
४२] सु-महान् सन्-नाग-रथः[10] क्षणे तस्मिन् नि-पातितः ॥४०॥ [४७
तं हत्वा सं-युगे तस्य रथं बाण-शतैस् तथा[11] ।
४३] गदाम् अस्य[12] वधाऽर्थाय वसुर् जग्राह पाणिना ॥४१॥ [४८

---

१. प्र–प्रजाकाल इवान्तकः । भ$_1$–प्रजाकाल इवातुरः । भ$_2$–°जिरे । २. अ रा$_1$ ल$_1$ ल$_3$ ब–नास्ति । अतः परमधिकः पाठः—प्र भ$_1$–अथापरौ महावीर्यौ त्वष्टा पूषा च दंशितौ । निर्भयौ सह सैन्येन प्रविष्टौ तु ततो युधि ॥ ३. च भ$_1$ भ$_2$–अथ । ४. भ$_1$ भ$_2$–संयुगेष्व् । ५. भ$_1$ प्र–वर्जं–नास्ति । ६. च भ$_1$ भ$_2$ प्र–रक्षेन्द्रो । ७. भ$_1$–°नि च । ८. अ भ$_1$ ल$_1$ ल$_2$ ल$_3$ ब–सुरैः । ९. अ–भृगूणां । १०. भ$_1$ भ$_2$ ब–पन्नगरथः । ११. च भ$_1$ भ$_2$–ततः । प्र–तदा । १२. च भ$_1$ भ$_2$–तस्य ॥

तां प्र-दीप्तां महा-वेगां काल-दण्ड-निभां[1] गदाम्[1] ।
४४] तस्य मूर्धनि सावित्रः पातयामास रक्षसः ॥४२॥ [४९
स तस्योपरि चोल्काऽऽभा नि-पतन्ती[2] तदा बभौ ।
४५] इन्द्र-प्रयुक्ता राजन्ती गिरेर् इव महाऽशनिः[3] ॥४३॥ [५०
तस्य नैवाऽस्थि[4] कायो वा मांसं रुधिरम् एव च ।
४६] दृश्यते गदया भस्म-कृतः[5] स[6] नि-पपात[6] ह ॥४४॥ [५१
सु-मालिनं हतं दृष्ट्वा वसुना राक्षसा भयात् ।
४७] दुद्रुवुः सहिताः सर्वे क्रोशमानाः समन्त-तः ॥४५॥ [५२

इत्यार्षे रामायण उत्तर-काण्डे सुमालि-वधो नाम
त्रयस्त्रिंशः सर्गः ॥ ३३ ॥

---

## [ वं-३६ ]= [ चतुस्त्रिंशः सर्गः ] =[ दा-२८ ]

सु-मालिनं हतं दृष्ट्वा वसुना भस्म-सात् कृतम् ।
१] वि-द्रुतं चाऽपि तत् सैन्यं लक्षयित्वाऽर्दितं शरैः[7] ॥ १ ॥ [१
ततः स बल-वान्[8] क्रुद्धो रावणस्य सुतस् तदा ।
२] नि-वर्त्य राक्षसान् सर्वान् मेघ-नादो व्यव-स्थितः ॥ २ ॥ [२
स रथेन महाऽर्हेण[9] काम-गेन महा-रथः ।
३] अभि-दुद्राव तत् सैन्यम् अग्निः कक्षम् इव ज्वलन् ॥ ३ ॥ [३
ततः प्र-विशतस् तस्य विविधाऽऽयुध-धारिणः ।
४] व्य्-अद्रवन्त दिशः सर्वा दर्शनाद् एव देवताः ॥ ४ ॥ [४
न त्व्[10] अस्य[10] कश्-चित् प्र-मुखो[11] बभूवाऽन्यो[12] युयुत्सतः ।
५] दृष्ट्वा तु देवान् सं-त्रस्तांस् ततः[13] शक्रोऽब्रवीत् सुरान्[14] ॥५॥ [५
न भेतव्यं न भेतव्यं नि-वर्तध्वं रणे सुराः ।
६] एष गच्छति मे पुत्रो युद्धाऽर्थम् अ-पराजितः ॥ ६ ॥ [६

---

१. च भ$_1$ भ$_2$ ल$_1$ प्र-°भाननाम् । २. भ$_1$ भ$_2$-पतंतीव ! ३. अ ल$_2$-वर्जं-यथाशनिः । ४. प्र-वर्जं-नैवास्ति । ५. टि.-°दृश्यभाव आर्षः । ६. च भ$_2$-सन्निप° । ७. च भ$_1$ भ$_2$-सुरैः । ८. अ ल$_2$-भगवान् । ९. अ रा$_1$ ल$_2$ ल$_3$-महाश्वेन । १०. च भ$_1$ भ$_2$-तस्य । ११. भ$_1$ भ$_2$-°खे । १२. अ ल$_2$-बभौ चान्यो । १३. च भ$_1$ भ$_2$ ब ल$_1$ प्र-तत्र । १४. भ$_1$-वचः ॥

ते शक्र-वचनं श्रुत्वा देवाः शत्रु-बलाऽर्दिताः ।
N] पुनर् नि-वृत्ता युद्धाय नानाप्रहरणोद्यताः ॥ ७ ॥ [N
ततः शक्र-सुतो देवो जयन्त इति वि-श्रुतः ।
७] रथेनाऽद्भुत-युक्तेन सं-ग्रामं सोऽभ्य्-अवर्तत ॥ ८ ॥ [७
ततस् ते त्रि-दशाः सर्वे परि-वार्य शची-सुतम्[1] ।
८] रावणस्य सुतं युद्धे समा-साद्याऽव-तस्थिरे ॥ ९ ॥ [८
तेषां युद्धं सम्-अभवद् देव-दानव-रक्षसाम् ।
९] शक्र-पुत्रस्य शूरस्य राक्षसेन्द्र-सुतस्य च ॥१०॥ [९
ततो मातलि-पुत्रस्य गो-मुखस्य स रावणिः ।
१०] सारथेर् अथ कायात् तु क्षणेनाऽपातयच्[2] छिरः[2] ॥११॥ [१०
शची-पुत्रस् त्व् अपि तथा जयन्तस् तस्य सारथेः[3] ।
११] तं चैव रावणिं क्रुद्धः समन्तात् प्रत्य्-अविध्यत ॥१२॥ [११
स तु[4] क्रोधात् सु-संरब्धो[4] रक्ताऽन्त-नयनस् ततः ।
१२] रावणिः शक्र-पुत्रं तं शर-वर्षैर् अवाऽकिरत् ॥१३॥ [१२
१३पू] ततो नानाऽऽयुधान्य् आशु शित-धाराणि सं-युगे । [१३पू
नाना-प्रहरणान्य् आशु गदा-खड्ग-परश्वधान्[5] ।
१४] शैल-शृङ्गाणि च तदा पातयामास रावणिः ॥१४॥ [१४
ततः प्र-व्यथिता लोकास् तमश् च महद् आऽविशत्[6] ।
१५] अस्य रावण-पुत्रस्य[7] शक्र-सैन्यानि नि-घ्नतः ॥१५॥ [१५
ततस् तद् दैवत-बलं समन्तात् स-शची-सुतम् ।
१६] बहु-प्रहार-मध्य-स्थं[8] समन्ताच् छर-पीडितम् ॥१६॥ [१६
नाऽभ्य्-अजानात् तदाऽन्योऽन्यं रक्षो वा देवताऽपि वा ।
१७] तत्र तत्र विपर्य्-अस्तं समन्तात् पर्य्-अधावत ॥१७॥ [१७
देवा देवान् नि-जघ्नुश् च राक्षसा राक्षसांस् तथा ।
१८] ते[9] मोह-तमसाऽऽच्छन्ना[9] नि-वर्तन्ते तथाऽपरे ॥१८॥ [१८
एतस्मिन्न् अन्तरे वीरः पुलोमा नाम वीर्य-वान् ।
१९] दैतेयस्[10] तेन सं-गृह्य पुलोम्ना चाऽति-वाहितः ॥१९॥ [१९

१. अ रा$_{१}$ ल$_{२}$ ल$_{३}$ ब प्र-शचीपतिम् । २. च भ$_{१}$ भ$_{२}$ प्र-शिरः कांचनकुंडलम् । ३. च भ$_{१}$ भ$_{२}$-वर्जं-°थिं । ४. भ$_{१}$-च क्रोधात्सुसंरब्धात् । ५. भ$_{१}$-नानास्त्र° । ६. अ ल$_{२}$-वर्जं-आभवत् । ७. च भ$_{१}$ भ$_{२}$-°णसैन्यस्य । ८. अ ल$_{२}$-बाहुप्र° । च भ$_{१}$ भ$_{२}$-°रमध्यस्थं । ९. भ$_{१}$-संमोहात्तु समाच्छन्ना । १०. अ भ$_{१}$ ल$_{२}$ ल$_{३}$ प्र-दैत्येयस् ॥

स सं-गृह्य तु दौहित्रं प्र-विष्टः सागरं तदा ।
२०] आर्ता(?र्यको)ऽथ स[1] हि तेनाऽऽसीत् पौलोमीत्येन(?व)[2] सा शची॥२०॥
व्रणान् सम्-ईक्ष्य[3] च तदा जयन्तस्याऽति-दारुणान् ।
२१] व्यथिताश् चाऽप्रहृष्टाश् च व्य्-अद्रवन्त भयाऽर्दिताः ॥२१॥ [२१
रावणिश् चाऽपि सं-हृष्टो बलैः परि-वृतः स्व-कैः ।
२२] अभ्य्-अधावत् ततो देवान् मुमोच स महा-स्वनम् ॥२२॥ [२२
ज्ञात्वा प्र-णाशं पुत्रस्य देवतानां च वि-क्रियाम् ।
२३] मातलिं प्राऽऽह देवेन्द्रो रथः[4] समुप-नीयताम् ॥२३॥ [२३
स तु दिव्यो महा-भीमः सज्ज एव महा-रथः ।
२४] उप-स्थितो मातलिना वाह्यमानो महा-रथः ॥२४॥ [२४
ततो मेघा[5] रथे[5] तस्मिंस् तडिद्-गुण-धराः स्वयम् ।
२५] अग्र-तो वायु-चपला गच्छन्ति च नदन्ति च ॥२५॥ [२५
नाना-वाद्यान्य् अवाद्यन्त स्तुतयश् च समा-हिताः ।
२६] नृत्यद्भिश् चाऽप्सरः-सङ्घैर् निर्-यातस्[6] त्रिदशेश्वरः ॥२६॥ [२६
रुद्रैर् वसुभिर् आदित्यैर् ऋषिभिः स-मरुद्गणैः[7] ।
२७] वृतो नाना-प्रहरणैर् निर्-ययौ त्रिदशाऽधिपः ॥२७॥ [२७
निर्-याणे चाऽपि शक्रस्य परुषः पवनो ववौ ।
२८] भास्-करो निष्-प्रभश् चाऽऽसीन् महोल्काश् च प्र-पेदिरे ॥२८॥ [२८
एतस्मिन्न् अन्तरे शूरो दश-ग्रीवः प्रताप-वान् ।
२९] आ-रुरोह रथं दिव्यं निर्-मितं विश्व-कर्मणा ॥२९॥ [२९
पन्न-गैः स-महानागैर वेष्टितं लोम हर्षणम् ।
३०] येषां निःश्वास-वातेन[8] दीप्यते[9] स-चराऽचरम्[9] ॥३०॥ [३०
दैत्यैर् निशा-चरैः शूरैः[10] रथः स परि-वारितः ।
३१] समराऽभिमुखो दिव्यो महेन्द्रं चाऽभ्य्-अवर्तत ॥३१॥ [३१
पुत्रं तं वारयित्वा च स्वयम् एव व्यव-स्थितः ।
३२] सोऽपि युद्धाद् विनिष्-क्रम्य रावणिः समुपाऽविशत् ॥३२॥ [३२

---

१. अ भ$_1$ रा$_1$-वर्जं-सा । २. अ-वर्जं-पौलोमी येन । ३. अ-वर्जं-सम्प्रेक्ष्य । ४. अ$_1$ रा$_1$ ल$_3$ प्र-रथं । ५. अ रा$_1$ ल$_2$ ल$_3$ ब-°घरवे । ६. ल$_3$-निर्ययौ । ७. च भ$_1$ भ$_2$ प्र-च म° । ८. रा$_1$ ल$_1$ प्र-वर्जं-निश्वास° । ९. च भ$_1$ भ$_2$ प्र-प्रदीप्त इव सर्वतः । १०. भ$_1$-सर्वैः ॥

ततो[1] युद्धं प्र-वृत्तं तु[1] सुराणां राक्षसैः सह ।
३३] नाना-शस्त्र-विवर्षूणां मेघानाम् इव सं-युगे ॥३३॥ [३३
कुम्भ-कर्णश् च[2] दुष्टाऽऽत्मा नानाप्रहरणोद्यतः ।
३४] समुपाऽयात् तदा युद्धे गच्छन्न् एवाऽप्य् असौ बली ॥३४॥ [३४
हस्त-पादैः शिला-वृक्षैः शक्ति-तोमर-सायकैः ।
३५] येन तेनैव सं-क्रुद्धस् ताडयामास वै परान् ॥३५॥ [३५
स तु रुद्रैः समा-गम्य वसुभिश् च तथा वि-भो ।
३६] प्र-युद्धं तैश् च सं-ग्रामे कृतम् अस्त्र-निरन्तम्[3] ॥३६॥ [३६
असृग्-व्याप्तः कुम्भ-कर्णस् तदा शस्त्राऽऽचितो[4] बभौ ।
N] सहैव[5] विद्युत्-स्तनितो[5] धाराभिर् इव तोय-दः ॥३७॥ [३७
ततस् तद् राक्षसं सैन्यं दैवतैः स-मरुद्गणैः ।
३७] रणे व्य्-अद्राव्यत[6] मुहुर् नाना-प्रहरणैस् तदा ॥३८॥ [३८
के-चिद् विनि-हता भूमौ व्य्-अचेष्टन्त[7] तथा परे ।
३८] वाहनेष्व् अव-सक्ताश् च स्थिता[8] एवाऽऽयते रणे[8] ॥३९॥ [३९
यथा नागान् खरान् उष्ट्रान् पन्न-गांस् तुर-गांस् तथा ।
३९] शिशु-मारान् वराहांश् च पिशाच-वदनांस् तथा ॥४०॥ [४०
आ-लिङ्ग्य बाहुभिस् तांस् तान् वि-ष्टब्धाः के-चिद् आ-हवे ।
४०] दैवतैः सह सं-रब्धा राक्षसा वि-ललम्बिरे ॥४१॥ [४१
चित्र-कर्म इवाऽऽभाति स तेषां रण-संप्लवः[9] ।
४१] नि-हतानां प्र-विद्धानां राक्षसानां मही-तले ॥४२॥ [४२
तोय-शोणित-विस्यन्दा[10] कङ्क-कूर्म-समाकुला ।
४२] प्र-वृत्ता संयुग-तले शस्त्र-ग्राह-वती नदी ॥४३॥ [४३
एतस्मिन्न् अन्तरे क्रुद्धो दश-ग्रीवः प्रताप-वान् ।
४३] निर्-ईक्ष्य तद् बलं सर्वं दैवतैर् विनि-पातितम् ॥४४॥ [४४
सोऽथ तत् प्रति-गृह्याऽऽशु प्र-वृद्धं सैन्य-सागरम् ।
४४] देवताः समभि-घ्नंश् च शक्रम् एवाऽभ्य्-अवर्तत[11] ॥४५॥ [४५

---

१. अ $ल_2$–ततो युद्धे प्रवृत्ते तु । प्र–युद्ध प्रवृत्तं तु तदा । २. अ $भ_1$ $भ_2$ $ल_1$ ब प्र–तु । ३. च $भ_1$ $भ_2$–शस्त्रं नि° । ४. $भ_1$–शस्त्रार्दितो । $ल_3$ ब शस्त्रादिभिर् । ५. च $भ_1$ $भ_2$–सहार्कवि° । टि. = बस. । ६. अ–विद्रावितं ७. अ $रा_1$ $ल_1$ $ल_2$ $ल_3$–व्याचे° । ८. च $भ_2$–स्थिता एवापरे रणे । $भ_1$–स्थिता चैवोपपेदिरे । ९. च $भ_1$ $भ_2$–वर्जं–°संभवः । १०. $भ_1$ $भ_2$–°विस्पन्दा । ११. $भ_1$–°अधावत ॥

ततः शक्रो महच् चापं व्य्-अस्फारयद् अन्-उत्तमम् ।
४५] यस्य विस्फार-शब्देन स्वनन्तीऽत्र दिशो दश ॥ ४६ ॥ [४६
तद् वि-कृष्य महच् चापम् इन्द्रो रावण-वक्षसि ।
४६] नि-पातयामास तदा शरान् पावक-सन्निभान् ॥ ४७ ॥ [४७
तथैव च महा-बाहुर् दश-ग्रीवो व्यवस्थितः ।
४७] शक्रं कार्मुक-निर्मुक्तैः शर-वर्षैर् अवाऽकिरत् ॥ ४८ ॥ [४८
ततस् तेषां प्र-वृद्धानां बाण-वर्षैः समन्त-तः ।
४८] नाऽज्ञायत तदा किं-चित् सर्वं हि तमसाऽऽवृतम् ॥ ४९ ॥ [४९

इत्यार्षे रामायण उत्तर-काण्ड इन्द्र-रावण-समागमो नाम
चतुस्त्रिंशः सर्गः ॥ ३४ ॥

---

## [ वं-३७ ] = [ पञ्चत्रिंशः सर्गः ] = [ दा-२८ ]

ततस् तस्मिंस् तमो-भूते राक्षसा दैवतैः सह । [१पू
१] प्र-युद्धान् स्वान् परांश् चैव पोथयन्तो वि-चक्रमुः ॥ १ ॥ [N
चक्र-शूल-गदा-बाणास् तोमराऽशनि-शक्तयः । [N
N] राक्षसाऽमर-निर्मुक्ताः सूदयन्तीऽतरेतरम् ॥ २ ॥ [१उ
ततो दैवत-सैन्येन राक्षसानां महद् बलम् ।
N] दिशः[3] प्र-द्रावितं[3] युद्धे सर्वं नीतं यम-क्षयम् ॥ ३ ॥ [२
तस्मिंस् तमसि दुर्-धर्षे मग्ना दैवत-राक्षसाः ।
२] अन्योऽन्यं न प्र-पश्यन्ति त्रीञ्[4] जनान् वर्ज्य केवलम्[4] ॥ ४ ॥ [३
शक्रं च रावणं चैव रावणिं च महा-बलम् ।[5]
३] सर्वं[6] तद् धि च[6] ते[6] तत्र पश्यन्ति स्म स्व-तेजसा ॥ ५ ॥ [४
स तु दृष्ट्वा बलं[7] सर्वं दैवतैर् विनि-पातितम् ।
४] क्रोधम् आऽहारयत् तीव्रं दश-ग्रीवो ननाद च ॥ ६ ॥ [५
स क्रोधात् सूतम् आहेदं स्यन्दनं सूत वाहय ।
५] पर-सैन्यस्य मध्येन यावद् अन्तं न याम्य् अहम् ॥ ७ ॥ [६

१. अतः परमधिकः पाठ.—प्र-उग्रं परमधृष्टं च भयदं सर्वविद्विषाम् ।
२. च $भ_1$ $भ_2$—°कविभ्रष्टैः । प्र—°कविस्रस्तैः । ३. च $भ_1$ $भ_2$—दिशं प्रस्थापितं ।
४. च $भ_1$ $भ_2$—केवलं तु जनास्त्रयः । ५. च $भ_1$ $भ_2$—इन्द्रस्तु रावणश्चैव रावणिः सुमहाबलः । ६. च $भ_1$ $भ_2$—तमस । ७. अ—तदा ॥

अथैतान् दैवतान् सर्वान् सम्-अरे वि-क्रमेण ह[1] ।
६] शर-वर्ष-महावर्षैर् नयामि यम-सादनम् ॥ ८ ॥ [७
अहम् इन्द्रो भविष्यामि धन-दो वरुणोपमः ।
७] देवता विनि-यम्याऽहं[2] स्थापयिष्यामि चाऽपरान् ॥ ९ ॥
वि-षादो न च कर्तव्यः शीघ्रं वाहय मे रथम् । [८
८] द्विः खलु त्वां ब्रवीम्य् एष यावद् अन्तं न याम्य् अहम् ॥१०॥ [९
अयं हि नन्दनोद्देशो यत्र वर्तामहे वयम् ।
९] नयस्व मां सूत-वर उद्-अयो यत्र पर्वतः ॥११॥ [१०
स सूतस् तद्-वचः श्रुत्वा सद्-अश्वान्[3] वात-रंहसः[3] ।
१०] आ-दिदेशाऽथ शत्रूणां मध्येनैव स सारथिः ॥१२॥ [११
तस्य तं निश्चयं मत्वा शक्रो देव-वरस्[4] तदा[4] ।
११] रथ-स्थः समर-स्थाः[5] स देवता[5] इदम् अब्रवीत् ॥१३॥ [१२
सुराः[6] शृणुत मे सर्वे यन् मह्यम् इह रोचते ।
१२] रावणो जीवमानोऽयं साधु रक्षो नि-गृह्यताम् ॥१४॥ [१३
एष ह्य् अति-रथः सैन्यं रथेन[7] पवनौजसा ।
१३] गमिष्यति प्र-वृद्धोर्मिः सम्-उद्र इव पर्वसु ॥१५॥ [१४
नह्य्[8] एष[8] हन्तुं शक्योऽद्य वर-दानात्[9] स्वयं-भुवः[9] ।
१४] तद् ग्रहीष्यामहे[10] रक्षः सज्जी-भवत भो सुराः ॥१६॥ [१५
यथा[11] बलिं नि-गृह्यैतत्[11] त्रैलोक्यं भुज्यते मया ।
१५] तथैवाऽप्य्[12] अस्य[12] पापस्य नि-ग्रहो मम रोचते ॥१७॥ [१६
ततोऽन्यं देशम् आ-स्थाय शक्रः सं-त्यज्य रावणम् ।
१६] अयुध्यत महा-तेजा[13] राक्षसान् नाशयन् रणे[13] ॥१८॥ [१७
उत्-तरेण दश-ग्रीवः प्र-विवेशोत्तरं[14] द्रुतम् ।
१७] दक्षिणेन तु पार्श्वेन प्र-विवेश शत-क्रतुः ॥१९॥ [१८

---

१. च भ$_1$ भ$_2$–हि । २. च भ$_1$ भ$_2$–वै निहत्याहं । ३. च भ$_1$ भ$_2$–तुरगांस्तान् मनोजवान् । ४. च भ$_1$ भ$_2$–देवेश्वरस्तथा । ५. च भ$_1$ भ$_2$–°स्थांस्तान् दैवतान् । ६. च भ$_1$ भ$_2$–देवाः । ७. ल$_1$–निगृह्य । ८. च भ$_1$ भ$_2$–न चैव । ९. च भ$_1$ भ$_2$–°दानेन दर्पितः । ल$_1$ प्र–°नात्सुनिर्भयः । १०. अ ल$_2$–°ष्याम्यहं । ११. अ रा$_1$ ल$_1$ ल$_2$ ल$_3$ ब–यथाबलं नि° । च भ$_1$ भ$_2$–यथैव बलिमागृह्य । १२. च भ$_1$ भ$_2$–एवमस्य हि । १३. च भ$_1$ भ$_2$–महायुद्धे राक्षसं नाशयन् बलं । १४. च भ$_1$ भ$_2$–°वेशानिवर्तकः । ल$_1$ प्र–°वेशान्तरं द्रुतं ॥

ततः स योजन-शतं प्र-विष्टो राक्षसाऽधिपः ।
१८] देवानां[1] तद्[2] बलं कृत्स्नं बाण-वर्षैर् अवाऽकिरत् ॥२०॥ [१९
ततः शक्रो निर्-ईक्ष्याऽथ प्र-तिष्ठन्तं[3] स्व-कं बलम् ।
१९] न्य्-अवर्तयद् अ-सम्भ्रान्तस्[3] तम् आ-वृत्य[3] निशा-चरम् ॥२१॥[२०
एतस्मिन्न् अन्तरे नादो मुक्तो दानव-राक्षसैः ।
२०] हा हताः स्मेति तं दृष्ट्वा ग्रस्तं शक्रेण रावणम्[4] ॥२२॥ [२१
ततो रथं समा-रुह्य रावणिः क्रोध-मूर्च्छितः ।
२१] तत् सैन्यम् अति-संक्रुद्धः[5] प्र-विवेश सु-दारुणम्[6] ॥२३॥ [२२
स तां प्र-विश्य मायां तु दत्तां गो-पतिना[7] पुरा ।
२२] अ-दृश्यः सर्व-भूतानां तत् सैन्यं समवाऽकिरत् ॥[8]२४॥ [२३
ततः[9] स देवान् सं-त्यज्य[9] शक्रम् एवाऽभ्य्-अधावत[10] ।
२३] महेन्द्रश् च महा-तेजा न[11] ददर्श[11] सुतं रिपोः ॥२५॥ [२४
विमुक्त-कवचस् तत्र वध्यते चाऽपि रावणिः[12] ।
२४] दैवतैः सु-महावीर्यैर् न चकार स किं-चन ॥२६॥ [२५
स मातलिं हयांश् चैव लोडयित्वा शरोत्तमैः ।[13]
२५] महेन्द्रं[14] बाण-वर्षेण शीघ्र-हस्तो[15] ह्य् अवाऽकिरत्[15] ॥२७॥ [२६
ततः शक्रो रथं त्यक्त्वा वि-सृज्य च स मातलिम् ।
२६] ऐरावतं[16] समा-रुह्य मृगयामास रावणिम् ॥२८॥ [२७
२७पू] स तु माया-बलो रक्षः प्र-हरंश् चाऽभ्य्-अवर्तत[17] । [२८पू
N] ह्रियमाणं शरौघेन महेन्द्रम् अ-मितौजसम् ॥[18]२९॥[N
N] ततस्[19] तु मायया युद्धं दृष्ट्वैकं[19] रहितं रिपुम् । [N
२७उ] इन्द्रं माया-परिक्षिप्तं कृत्वा तं[20] प्राऽहरच्[20] छरैः ॥३०॥ [२८उ

---

१. च भ$_1$ भ$_2$–देवतानां । २. च भ$_1$ भ$_2$–प्रभग्नं तत् । रा$_1$ ल$_2$ प्र–प्रविष्टं तं । ३. च भ$_1$ भ$_2$–°न्तो दधार च । ४. च भ$_1$–राक्षसं । ५. च भ$_1$ भ$_2$–अभिसं° । ६. च भ$_1$ भ$_2$–°णः । प्र–हुताशनम् । ७. च भ$_1$ भ$_2$–रुद्रेण वै । ८. च भ$_1$ भ$_2$–प्रविवेश सुसंरब्धस्तच्च सैन्यमभिद्रवत् । ९. च भ$_1$ भ$_2$–स सर्वान्दैवतांस्त्यक्त्वा । १०. प्र–°भ्यवर्तत । ११. च भ$_2$–नापश्यत । भ$_1$–नाव-मृश्यद् । १२. च भ$_1$ भ$_2$ ल$_1$ ल$_2$ प्र–°णः । १३. च भ$_1$ भ$_2$–इन्द्रजित्ताडयामास महेन्द्रं सहसारथिम् । १४. च भ$_1$ भ$_2$–सुरेंद्रं । १५. रा$_1$ ल$_1$ ल$_2$ ल$_3$ प्र–°स्तोऽभ्यवाकि° । १६. अ च भ$_1$ भ$_2$ ल$_2$–°वणं । १७. ल$_1$ ब–चाभिवर्तते । १८. च भ$_1$ भ$_2$–नास्ति । १९. च भ$_1$ भ$_2$–स तत्र मायी बलवान् वीक्ष्यैकं । २०. अ ल$_2$ ल$_3$ ब–तु प्रा° । च भ$_1$ भ$_2$–सम्प्राद्रवच् ॥

स तं तदा परि-श्रान्तम् इन्द्रम् एको[1] हि[1] रावणिः ।
२८] तयैनं[2] मायया बद्ध्वा स्व-सैन्यम् अभि-तोऽनयत्[3] ॥३१॥ [२९
तं तु दृष्ट्वा बलात् तस्मान्[4] नीयमानं महा-बलम्[5] ।
२९] महेन्द्रम् अ-मराः सर्वे किम् एतद् इति चुक्रुशुः ॥[6]३२॥ [३०
दृश्यते न स मायावी जित्वेन्द्रो[7] येन नीयते ।
३०] बलं रोदिति[8] तत् सर्वं[9] शक्रो दैव-बलाद् धृतः ॥३३॥ [३१
एतस्मिन्न् अन्तरे घोरे[1] सर्वे सुर-गणास्[1] तदा ।
३१] अभ्य्-अद्रवंस् तु सं-क्रुद्धा रावणिं (?णं) क्रोध-मूर्च्छिताः ।[10] [३२
N] नाना-प्रहरणाः सर्वे बल-वन्तः सुरोत्तमाः ॥[11]३४॥ [N
रावणस् तु समा-साद्य वस्व्-आदित्य-मरुद्गणान् ।[11]
३२] न शशाक बले[12] स्थातुं न योद्धुं शत्रु-पीडितः[12] ॥३५॥ [३३
तं तु दृष्ट्वा परि-श्रान्तं प्र-हारैर् जर्जर-च्छविम्[13] ।
३३] रावणिः पितरं युद्धेऽदर्शन-स्थोऽब्रवीद् इदम् ॥३६॥ [३४
आ-गच्छ तात गच्छामो नि-वृत्य[14] रण-कर्म-तः[15] ।
३४] जितोऽयं[16] विदितं तेऽस्तु स्व-स्थो भव गत-ज्वरः ॥३७॥ [३५
अयं हि सुर-सैन्यस्य[17] त्रैलोक्यस्य च यः प्र-भुः ।
३५] स[18] गृहीतो[18] मया शक्रो भग्न-मानाः सुराः कृताः ॥३८॥ [३६
यथेष्टं भुङ्क्ष्व भोगांस् त्वं नि-गृहीतो रिपुस् तव ।
३६] वृथा किं ते श्रमेणेह[19] युद्धेनाऽद्य न वै फलम्[19] ॥[20]३९॥ [३७
ततस् तद् दैवत-बलं नि-वृत्तं रण-कर्म-तः[21] ।
३७] तच् छ्रुत्वा रावणेर् वाक्यं स्व-स्थ[22] एव दशाऽऽननः[22] ॥४०॥ [३८

---

१. च भ$_1$ भ$_2$–जित्यैऽथ । २. च भ$_1$ भ$_2$–वर्जं–तथैव । ३. च भ$_1$ भ$_2$–अभिनीतवान् । ४. च भ$_1$ भ$_2$–तेन । ५. च भ$_1$ भ$_2$–महारथम् । ६. च भ$_1$ भ$_2$–महेंद्रं देवताः सर्वाः किमिदं त्वित्यचिंतयन् । ७. च–वर्जं–त्विंद्रजिद् । ८. च भ$_1$ भ$_2$–तदभिमतः शूरः । ९. च भ$_1$ भ$_2$–क्रुद्धः सर्वं देवबलं । १०. च भ$_1$ भ$_2$–रावणिं विमुखीकृत्य शरवर्षैरवाकिरन् । ११. च भ$_1$ भ$_2$–नास्ति। १२. च भ$_1$ भ$_2$– स संग्रामे योद्धुं शत्रुभिरर्दितः । १३. च भ$_1$ भ$_2$–जर्जरीकृतम् । १४. अ रा$_1$ ल$_1$ ल$_2$ ब–निवर्तं । च भ$_2$–निर्वत्य । १५. च भ$_1$ भ$_2$–°कर्मणः । १६. च भ$_1$ भ$_2$–जितं नो । १७. अ–रणसै° । १८. च भ$_1$ भ$_2$–निगृ° । १९. च भ$_1$–श्रमं कृत्वा युद्धमेतन्निरर्थकम् । २०. अतः परमधिकः पाठः—च भ$_1$ भ$_2$–वर्जं–एह्यागच्छ दशग्रीव कृतकृत्योसि मामद । २१. च भ$_1$ भ$_2$ ल$_1$–°र्मणः । २२. च भ$_1$ भ$_2$–गता देवा यथागतम् ॥

अथ[1] रण-विगत-ज्वरः[1] प्र-भुर्
३८पू] वि-जयम् अवाऽऽप्य निशाचराऽधिपः[2] ।
N] स्व-शिविरम्[3] उप-गम्य रावणः[3]
३८उ] स्व-सुतम्[4] अवेक्ष्य[5] च[5] वाक्यम् अब्रवीत् ॥४१॥ [३९

अति-बल-सदृशैः पराऽऽक्रमैर्
मम कुल-मान-विवर्धन[6] प्र-भो ।
तव हि सुत गुणेन वीर्य-वांस्
३९] त्रिदश-पतिस् त्रि-दशाश् च निर्-जिताः[7] ॥४२॥ [४०

नय रथम् अधि-रोप्य वासवं
नगरम् इतोऽथ व्रज सैन्य-संवृतः ।
अयम्[8] अहम् अपि पृष्ठ-तः स्वयं[8]
४०] सह सचिवैर् उप-यामि हृष्ट-वत् ॥४३॥ [४१

अथ[9] स बल-वृतः[9] स-वाहनस्
त्रिदश-पतिं परि-गृह्य रावणिः ।
स्व-भवनम् उप-गम्य वीर्य-वान्
४१] मुदित-मना[10] वि-ससर्ज राक्षसान् ॥४४॥ [४२

इत्यार्षे रामायण उत्तर-काण्डे महेन्द्र-ग्रहणं[11] नाम
पञ्चत्रिंशः सर्गः ॥ ३५ ॥

---

## [ वं–३८ ]= [ षट्त्रिंशः सर्गः ] =[ दा–३० ]

जिते महेन्द्रेऽति-बले रावणस्य सुतेन तु[12] । [१पू
१] प्रजा-पतिं पुरस्-कृत्य गता लङ्कां सुरास्[13] ततः[13] ॥ १ ॥ [५उ
२पू] ते रावणं समा-साद्य[14] पुत्र-भ्रातृ-समावृतम्[14] । [६पू
N] वि-मानैश् छादितं देशम् अव-तस्थुस् तदाऽम्बरे ॥[15] २ ॥ [N

१. च $भ_1$ $भ_2$–अयमथ वि° । २. च $भ_1$ $भ_2$–°चरेश्वरः । ३. च $भ_1$ $भ_2$–स्वनगरमभितो जगाम विक्रमी । ४. $ल_3$–स सु° । ५. च $भ_1$ $भ_2$–अवाप्य स । ६. च $भ_1$ $भ_2$–कुलवंशवि° । ७. च $भ_1$ $भ_2$–मे जिताः । ८. च $भ_2$–अहमधिपृष्ठतो नु ते वै । $भ_1$–अहमधिपृष्ठतस्तु सर्वैः । ९. च $भ_1$ $भ_2$–स्वबलपरिवृतः । १०. च $भ_2$–शक्रसमरान् । $भ_1$–कृतसमरान् । ११. च $भ_1$ $भ_2$–इन्द्रग्रहणम् । १२. च $भ_1$ $भ_2$–वर्जं–ते । १३. च $भ_1$ $भ_2$–वर्जं–दुरत्ययाम् । १४. च $भ_1$ $भ_2$–°सेदुः पुत्रभ्रातृभिरावृतम् । १५. च $भ_1$ $भ_2$–नास्ति ॥

२३] अथाऽब्रवीद्[1] विमान-स्थः[1] सान्त्व-पूर्वं[2] प्रजा-पतिः[1] ।  [६उ
वत्स रावण तुष्टोऽस्मि पुत्रस्य तव सं-युगे ।
३] अहोऽस्य विक्रमौदार्यं[3] त्वया तुल्योऽधिकोऽपि वा ॥ ३ ॥ [७
जितं हि भवता सर्वं त्रैलोक्यं स्वेन तेजसा ।
४] कृता प्रति-ज्ञा स-फला प्रीतोऽस्मि स-सुतस्य ते ॥ ४ ॥ [८
अयं च[4] पुत्रोऽति-बलस्[4] तव रावण वीर्य-वान् ।
५] इन्द्र-जिच्[5] चेति वि-ख्यातो जगत्य् एष[5] भविष्यति ॥ ५ ॥ [९
बल-वान् दुर्-जयश् चैव भविष्यत्य् एष राक्षसः ।
६] यम् आ-श्रित्य[6] त्वया[6] राजन् स्थापितास् त्रि-दशा वशे ॥[7] ६ ॥ [१०
तन् मुञ्चस्व महा-बाहो महेन्द्रं पाक-शासनम् ।
७] किं चाऽस्य मोक्षणाऽर्थाय प्र-यच्छन्तु[8] दिवौकसः ॥ ७ ॥ [११
अथाऽब्रवीन् महा-तेजा इन्द्र-जित् समितिं-जयः ।
८] अमर-त्वम् अहं देव वृणुयाम्[10] अस्य मोक्षणे[10] ॥ ८ ॥ [१२
तद् दद्यास् त्व् अमर-त्वं मे यावद् एष प्र-मुच्यताम् ।
N] त्वत्-तो नाऽन्यम् अहं देव लब्धुम् इच्छामि वै वरम् ॥९[11]॥ [N
अथाऽब्रवीद्[12] इन्द्र-जितं[12] देवः[13] कमल-सम्भवः[13] ।
९] नाऽस्ति पुत्राऽमरत्वं[14] हि कस्य-चित्[15] प्राणिनो[15] भुवि ॥१०॥
अप्सरसां चैव गणा ये च सत्त्वाश् चतुष्-पदः ।  [१५
१०] यथा चाऽन्यानि सत्त्वानि स्थावराणि चराणि च ॥११[16]॥ [१६पू
अथाऽब्रवीत् स तत्र-स्थम् इन्द्र-जित्[17] पद्म-सम्भवम्[17] ।
११] श्रूयतां या भवेत् सिद्धिस्[18] तां ब्रवीमि पिता-मह[18] ॥१२॥ [१७उ

---

१. च भ$_{1}$ भ$_{2}$–अब्रवीद्गगने तिष्ठन् । २. च भ$_{1}$ भ$_{2}$–वर्जं–इदं वचः । ३. च भ$_{1}$ भ$_{2}$–°मैश्वर्यं । ४. च भ$_{2}$–तु पु° । भ$_{1}$–पु गेतिबलवांस् । ५. च भ$_{1}$ भ$_{2}$- जगतींद्रजिदित्येष परिख्यातो । ६. च भ$_{1}$ भ$_{2}$–समाश्रित्य ते । ७. अतः परमधिकः पाठः—च भ$_{1}$ भ$_{2}$–वर्जं–बलवाञ्छत्रुनिर्जेता भवितायं रणाजिरे । ८. अ–°च्छंति । ९. च–अत आरभ्य १०-मश्लोकस्य प्रथमपादं यावन्नास्ति । १० भ$_{1}$ भ$_{2}$–वृणे यद्येष मुच्यते । ११. भ$_{1}$ भ$_{2}$–नास्ति । १२. भ$_{1}$ भ$_{2}$–ततोऽब्रवीन्महातेजा । १३. अ ल$_{1}$ ल$_{2}$ ल$_{3}$ प्र–देवः सलिलसं° । च भ$_{1}$ भ$_{2}$–मेघनादं प्रजापतिः । १४. प्र–वर्जं–सर्वाम° । १५. च भ$_{1}$ भ$_{2}$–वर्जं–केषांचित् प्राणिनां । १६. च भ$_{1}$ भ$_{2}$–चतुष्पदां खेचराणामन्येषां च महौजसाम् । वृक्षगुल्मक्षुपलतातृणोपलमहीभृताम् । अतः परमधिकश्च पाठः—श्रुत्वा पितामहेनोक्तमिन्द्रजित्प्रभवाव्ययम् । १७. च भ$_{1}$ भ$_{2}$–मेघनादः पितामहम् । १८. च भ$_{1}$ भ$_{2}$–सिद्धिर्मम जीवितसिद्धये ॥

ममेष्टं हवनं नित्यं मन्त्र-वद् वह्नि-पूजनम् ।
१२] सं-ग्रामम् अव-ततुं[१] च शत्रोर् निधन-काङ्क्षया ॥१३[२]॥ [१८
अश्व-युक्तो मम रथ उत्-तिष्ठतु विभा-वसोः ।
N] तत्-स्थस्याऽमरता मे स्याद् एष मे निश्-चितो वरः ॥[२]१४॥ [१९
तस्मिंश् चैव(?वा)समाप्ते[३] तु जातु[३] होमे विभा-वसौ[४] ।[२]
१३] युद्धेयं[५] देव सं-ग्रामे तदा[६] मे[६] स्याद् वि-नाशनम्[७] ॥१५॥ [२०
सर्वो हि तपसा देव वृणोत्य् अमर-तां पुमान्[८] ।
१४] वि-क्रमेण[९] मया चेदम्[९] अमर-त्वं प्र-वर्तितम्[१०] ॥१६॥ [२१
एवम् अस्त्व् इति तं[११] प्राऽऽह वाक्यं देवः प्रजा-पतिः ।
१५] मुक्तश् चेन्द्र-जिता शक्रो गताश् च त्रि-दिवं सुराः ॥१७॥ [२२
एतस्मिन्न् अन्तरे राम[१२] दीनो भ्रष्टाऽम्बर-स्रजः[१२] ।
१६] इन्द्रश् चिन्ता-परो देवो ध्यान-तत्परतां गतः ॥[१३]१८॥ [२३
अमरेन्द्र मया बह्व्यः प्र-जाः सृष्टाः पुरा प्र-भो ।[१४] [२५पू
१७] शत-क्रतो किं[१५] न कथां[१५] करोषि स्मर दुष्-कृतम् ॥१९॥
तं तु[१६] दृष्ट्वा तथा-भूतं[१६] प्राऽऽह देवः पिता-महः । [२४
१८] एकवर्ण-(?र्णाः) समानास् ता ह्य् एक-रूपाश् च सर्व-शः ॥[१७]२०॥
तासां नास्ति वि-शेषो हि दर्शने[१८] लक्षणेऽपि[१८] च ।[१९] [२५उ
१९] ततोऽहम् एकाऽग्र-मनाश् चिन्तयामास[२०] ताः प्र-जाः ॥२१॥ [२६
सोऽहं तासां वि-शेषाऽर्थं[२१] स्त्रियम् एकां विनिर्-ममे ।
२०] यद् यत् प्र-जानां प्रत्य्-अङ्गं वि-शिष्टं तत् तद्[२२] उद्-धरन्[२२] ॥२२॥ [२७

---

१. च भ$_1$ भ$_2$–वर्जं-नास्ति । २. च भ$_1$ भ$_2$–नास्ति । ३. अ रा$_1$ ल$_1$ ल$_2$ ल$_3$ ब–°क्षो तु जाते होमे । ४. अ ल$_1$ ल$_3$ ब प्र–°वसोः । ५. च भ$_1$ भ$_2$–गच्छेयं । ६. अ रा$_1$ ल$_3$ ब–तद्यत्र । ल$_2$–तद्यथा । ७ च भ$_1$ भ$_2$–विपर्ययः । ८ च भ$_1$ भ$_2$–प्रभो । ९. च भ$_1$ भ$_2$–°मेणार्जितं चैतद् । १०. अ ल$_2$–प्रतिष्ठितम् । च भ$_1$ भ$_2$–मया विभो । ११. च भ$_1$ भ$_2$–स । १२. च भ$_1$ भ$_2$–शक्रो दीनो भ्रष्टस्रगम्बरः । १३. च भ$_1$ भ$_2$–व्रीडाचिंतापरिग्लानो ध्यानमूकत्वमागतः । १४. च भ$_1$–पुरा सुरेन्द्र बह्व्यो हि मया सृष्टाः शतक्रतो । भ$_2$ पुरा सुरेन्द्र ब्रह्मणा मया सृष्टाः शतक्रतो । १५. च भ$_1$ भ$_2$–मूकतां किं । १६. च भ$_1$ भ$_2$–तथाभूतं तु तं शक्रं । १७. च भ$_1$ भ$_2$–°र्णवयोपेता रूपतश्चैकदर्शनाः । १८. रा$_1$ ब ल$_1$ ल$_3$–°नेऽपीक्ष° । १९. च भ$_1$ भ$_2$–तासां नाम विशेषश्च दर्शनं लक्षणं समम् । २०. च भ$_1$ भ$_2$–°यामि स्म । २१. च भ$_1$ भ$_2$–°षार्थी । २२. अ ब ल$_1$ ल$_2$–तु तद्धृतम् ॥

ततो मया रूप-गुणैर्[1] अहल्या[1] स्त्री विनिर्-मिता ।
२१] अहल्येत्य् एव च मया तस्या नाम विनिर्-मितम्[2] ।।[3]२३।। [२९उ
निर्-मितायां तु देवेन्द्र तस्यां नार्यां सुरर्षभ ।
२२] भविष्यतीऽति कस्येयं मम चिन्ता समाऽभवत् ।।[4]२४।। [३०
त्वं तु शक्र तदा तां स्त्रीं जानीषे[5] मनसा प्र-भो[5] ।
२३] रूपाऽधिकतया[6] पत्नी ममैषेति सुरेश्वर[7] ।।२५।। [३१
सा मया न्यास-भूता तु गौतमस्य महाऽऽत्मनः ।
२४] ततो[8] बहूनि वर्षाणि तेन निर्-यातिता च[9] सा[9] ।।२६।। [३२
ततो मया परि-ज्ञाय[10] तस्य धैर्यं महा-मुनेः[11] ।
२५] ज्ञात्वा धैर्यस्य[12] सिद्धिं च पत्न्य्-अर्थं[13] प्रति-पादिता ।।२७।। [३३
स तया सह धर्माऽऽत्मा रमते च[14] महा-मुनिः[14] ।
२६] आसन् निर्-आशास् त्रि-दशा गौतमे दत्तया तया ।।[15]२८।। [३४
त्वं क्रुद्धस्[16] त्रि-दिवान् मायी गत्वा[16] तस्याऽऽश्रमं मुनेः ।
२७] दृष्टवांश् च तदा तां स्त्रीं दीप्ताम् अग्नि-शिखाम् इव ।।२९।। [३५
सा त्वया धर्षिता शक्र कामाऽऽर्त्तेन[17] स-मन्युना[17] ।
२८] दृष्टश् च त्वं तदा तेन महेन्द्र परमर्षिणा ।।३०।। [३६
ततः क्रुद्धेन तेनाऽसि शप्तः परम-तेजसा ।
२९] वि-कलोऽसि[18] कृतो देव[18] तदा मेष-वृषोऽभवत्(?:)[19] । [३७
३०उ] तस्मात् त्वं सम्-अरे शक्र[20] शत्रु-हस्तं गमिष्यसि ।।३१।। [३८उ
अयं तु[21] भावो[21] दुर्-बुद्धे यस् त्वयेह[22] प्र-वर्तितः ।
३१] मानुषाण्य् अपि सत्त्वानि गमिष्यति[23] न सं-शयः ।।३२।। [३९

---

१. च भ$_1$ भ$_2$–°णादह° । २ च– प्रकाशितम् । ३. भ$_1$ भ$_2$–अहल्येति मया वीर नाम तस्याः प्रतिष्ठितम् । ४. च भ$_1$ भ$_2$-°ष्यति तु कस्यैषेत्येवं चिन्ता ममाभवत् । ५. च भ$_1$ भ$_2$–मन्यसे मनसा विभो । ६. च भ$_1$ भ$_2$–स्थानाधि° । ७. ल$_1$–सुरोत्तम । ८. च भ$_1$ भ$_2$–न्यस्ता । ९. च भ$_1$ भ$_2$–बर्जं–मया । १०. च भ$_1$ भ$_2$–वर्जं–°तं । ११. च भ$_1$ भ$_2$–महात्मनः । १२. च भ$_1$ भ$_2$–तपसि । १३. च भ$_1$ भ$_2$–वर्जं–यदर्थं । १४. च भ$_1$–स्म तपोवने । भ$_2$–स्म म° । १५. च भ$_1$ भ$_2$–निराशाश्चाऽभवन् देवा दत्तायां गौतमस्य ह । १६. च भ$_1$ भ$_2$–तु लुब्धश्च कामात्मा गतः । १७. च भ$_1$ भ$_2$–विमानश्च कृतो मुनिः । १८. च भ$_1$ भ$_2$–विफलश्च कृतस्तेन । १९. च भ$_1$ भ$_2$–बर्जं–°षो भवान् । २०. च भ$_1$ भ$_2$–राजन् । २१. च भ$_1$ भ$_2$–वर्जं–त्वसाधो । २२. च भ$_1$ भ$_2$–वर्जं–त्वमेवं । २३. च भ$_1$ भ$_2$–स यास्यति । रा$_1$ ल$_1$ ब–गमिष्यंति ।।

तत्राऽधर्मस्[1] तु बल-वान्[1] यः समुत्थास्यते[2] महान् । [N
३२] तस्याऽर्धं[3] लभतां कर्ता[3] तव[4] चाऽर्धं भविष्यति[4] ।।३३।।
न चैतद् अ-सतः स्थानं भविष्यति सुरेश्वर । [४०
३३] एतेनाऽधर्म-योगेन यस् त्वयेह प्र-वर्तितः ।।३४।। [N
यश् च यश् च सुरेन्द्रश् च ध्रुवो न स भविष्यति ।[5]
३४] एष शापो मया मुक्तस् त्वद्-अर्थं[6] च सुरेश्वर[6] ।।३५।। [४१
तां तु भार्यां विनिर्-भर्त्स्य सोऽब्रवीत् सु-महातपाः[7] ।
३५] दुर्-विनीते वनाद्[8] ध्वंस[8] मम चाऽपि समीप-तः ।।३६।। [४२
रूप-यौवन-सम्पन्ना यस्मात् त्वम् अन्-अवस्थिता ।
३६] तस्माद् रूप-वती न त्वम् एका लोके भविष्यसि ।।३७।। [४४
रूपं चैतत्[9] प्र-जाः सर्वा गमिष्यन्ति[9] सु-दुर्लभम्[10] ।
३७] माम्[11] इह[11] त्वं सु-दुर्वृत्ते यद् आ-श्रित्याऽव-मन्यसे[12] ।।[13]३८।। [४५
प्र-सादयामास[14] च सा[14] महर्षिं गौतमं तदा । [४६उ
३९] अ-जानती[15] धर्षिताऽस्मि[15] त्वद्-रूपेण दिवौकसा ।
न काम-काराद् विप्रर्षे[16] प्र-सादं कर्तुम् अर्हसि[16] ।।[17]३९।। [४७
४०] अहल्यया त्व् एवम् उक्तः प्रत्य्-उवाच स गौतमः ।
उत्-पत्स्यति महा-तेजा इक्ष्वाकूणां महा-रथः ।।४०।। [४८
४१] लोके[18] राम इति ख्यातो[18] वनं चाऽप्य् उप-यास्यति ।
ब्राह्मणाऽर्थे महा-बाहुर् विष्णुर् मानुष-रूपवान्[19] ।।४१।। [४९
४२] तं द्रक्ष्यसि यदा भद्रे तदा पूता[20] भविष्यसि ।
स हि पावयितुं शक्तस् त्वया यद् दुष्-कृतं कृतम् ।।४२।। [५०

---

१. अ ल$_2$–तत्र धर्मः स भगवान् । रा$_1$ ब ल$_1$ ल$_3$ प्र–तत्र धर्मः स बलवान् । २. च भ$_1$ भ$_2$–वर्जं–°स्थाप्यते । ३. च भ$_1$ भ$_2$–वर्जं–समाप्तेन स्वयं दत्तां । ४. प्र–तवार्थं न यतिष्यति । ५. भ$_1$ भ$_2$–वर्जं–यस्तु यस्तु महेन्द्रः स्याद् ध्रुवः स स भविष्यति । ६. च भ$_1$ भ$_2$–इति वाक्यमथाब्रवीत् । ७. भ$_1$–सुमहामुनिः । ८. च भ$_1$ भ$_2$–वर्जं–गता ध्वंस । ९. च भ$_1$ भ$_2$–प्रजास्वपि ह्येतद्गमिष्यति । १०. ब–सुरेश्वर । ११. अ ल$_2$–ममेह । १२. च भ$_2$–अवष्टभ्याव° । भ$_1$–एवमेवाव° । १३. अतः परमधिकः पाठः—च भ$_1$ भ$_2$–वर्जं–तदाप्रभृति भूयिष्ठाः प्रजा रूपसमन्विताः । शापात्स सर्जयामास पुनः सत्त्वमुपासते ॥ १४. च भ$_1$ भ$_2$–सा तं प्रसादयामास । १५. च भ$_1$ भ$_2$–अज्ञानाद्धर्षिता विप्र । १६. च भ$_1$ भ$_2$ प्र-वर्जं–विप्र प्रसादं क° । प्र–विप्रर्षिराजगाम स्वमाश्रमम् । १७. अतः परमधिकः पाठः—प्र–बद्ध्वांजलिपुटं प्राह प्रसादं कर्तुमर्हसि । १८. च भ$_1$ भ$_2$–रामो नाम श्रुतो लोके । १९. च भ$_1$ भ$_2$–°षविग्रहः । २०. भ$_1$ भ$_2$–वर्जं–मुक्ता ॥

४३] समेष्यसि मया सार्धं तदा-प्रभृति भामिनि ।[1] [५१उ
एवम् उक्त्वा स विप्रर्षिर् आ-जगाम स्वम् आ-श्रमम् ।
४४] तपश् चचार सु-महत् साऽपि[2] तत्र धृत-व्रता[3] ॥४३॥ [५२
तदा-प्रभृति देवेन्द्र[3] प्र-जा रूप-गुणाऽन्विताः । [N
३८] शापोत्सर्गाद्[4] धि[4] तस्यैतन् मुनेः सर्वम् उपाऽऽगतम् ॥४४॥
तत् स्मरस्व महा-बाहो यत्[5] त्वया दुष्-कृतं[5] कृतम् ।
४५] येन त्वं ग्रहणं शत्रोर् गतो नाऽन्येन[6] वासव ॥४५॥ [५३
स[7] शीघ्रं यज[7] यज्ञेन वैष्णवेन समा-हितः ।
४६] ततस् त्रि-दिवम् आ-क्राम धूत-पाप्मा जितेन्द्रियः ॥४६॥ [५४
पुत्रश् च तव देवेन्द्र न[8] वि-नष्टो महाऽऽहवे ।
४७] आर्य-केन स नीतश् च नि-हितश् च महोदधौ ॥[9]४७॥ [५५
ततः श्रुत्वा महेन्द्रः स यज्ञेनेष्ट्वा च वीर्य-वान् ।
४८] ततस् त्रि-दिवम् आऽक्रामद् देव-देवो जगत्-प्रभुः ॥४८[9]॥ [५६
एतद् इन्द्र-जितो राम बलं यत् कीर्तितं[10] मया ।
४९] निर्-जितस् तेन देवेन्द्रः[6] किम् उताऽन्यान्[11] न जेष्यति ॥४९॥[५७
एवं राम समुद्-भूतो रावणो देव-कण्टकः ।
N] स-पुत्रो येन सं-ग्रामे जितः शक्रः सुरेश्वरः ॥५०॥ [६१

इत्यार्षे रामायण उत्तर-काण्डे अहल्या-शापवर्णनं नाम
षट्त्रिंशः सर्गः ॥ ३६ ॥

---

## [ वं-३१ ]= [ सप्तत्रिंशः सर्गः ] =[ दा-२३,प्र०-५ ]

२उ] केन-चित् त्व् अथ कालेन रावणः प्र-ययौ गृहात् ।
पश्चिमाऽर्णवम् आऽगच्छत् सचिवैः सह राक्षसः ॥ १ ॥ [२

---

१. च भ$_1$ भ$_2$–वत्स्यसि त्वं मया सार्धं तदेह वरवर्णिनि । २. च भ$_1$ भ$_2$–सा पत्नी ब्रह्मवादिनः । ३. च भ$_1$ भ$_2$–वर्जं-राजेंद्र । ४. च भ$_2$–°र्गाच्च । भ$_1$–°र्गात्तु । ५. च भ$_1$ भ$_2$–दुष्कृतं त्वं पुरा । ६. अ भ$_1$ ल$_2$–नान्यत्र । ७. भ$_1$–शीघ्रं यजस्व । ८. अ रा$_1$ ल$_3$ ब–नास्ति । ९. ल$_1$ ल$_2$ प्र–नीतश्चैव सुगुप्तश्च पुलोम्नार्यकेन तु । एतच्छ्रुत्वा महेन्द्रस्तु यष्ट्वा यज्ञेन वीर्यवान् । पुनस्त्रिदिवमागम्य दैवतैः सह मोदते ॥ १०. ल$_1$ ल$_2$ प्र–कथितं । ११. ल$_1$ ल$_2$ प्र–उतान्यं ॥

३] द्वीप-स्थं पश्यते तत्र पुरुषं पावक-प्रभम् ।
महान्तं कनकाऽऽकारम्[1] एकम् एव व्यव-स्थितम् ॥ २ ॥ [३
४] यदा(?था)[2] दृश्येत[2] भय-दो युगाऽन्ताऽनल[3] उत्थितः[3] ।
देवानाम् इव देवेशो ग्रहाणाम् इव भास्-करः ॥ ३ ॥ [४
५] शर-भाणां[4] यथा सिंहो हस्तिष्व् ऐरावणो यथा ।
पर्वतानां यथा मेरुः पारिजातश् च शाखिनाम् ॥ ४ ॥ [५
६] तथा तं पुरुषं दृष्ट्वा स्थितं मध्येऽनलं यथा । [६पू
अब्रवीत् तं दश-ग्रीवो युद्धं मे दीयताम् इति ॥ ५ ॥ [११उ
७] अभवत् तस्य सा दृष्टिर् ग्रह-माला इव[5] स्थिता[5] ।
दन्तानां दशतः[6] शब्दो यन्त्रस्येव[7] प्र-पीडि(?ड)तः[7] ॥ ६ ॥ [१६
८] जगर्ज चोच्चैर् बल-वान् सहाऽमात्यैर् दशाऽननः । [१२पू
स गर्जन् वि-विधैर् नादैर् लम्ब-हस्तं[8] भयानकम् ॥ ७ ॥ [६उ
९] दंष्ट्रा-लं वि-कटं चैव[9] कम्बु-ग्रीवं स-रोमशम्[10] ।
मण्डूक-कुक्षिं पिङ्गाऽक्षं कैलासशिखरोपमम् ॥ ८ ॥ [७
१०] पद्म-पाद-तलं भीमं रक्त-तालुं[11] कराऽम्बु-जम्[11] ।
महा-कायं महा-नादं मनोऽनिल-समं जवे ॥ ९ ॥ [८
११] भीमम् आबद्ध-तूणीरं स-शरं[12] बद्ध-चामरम्[12] ।
ज्वाला-माला-परिक्षिप्तं किङ्किणी-कृत-निःस्वनम् ॥१०॥ [९
१२] मालया स्वर्ण-पद्मानां कटि-देशाऽवलम्बया[13] ।
ऋग्-वेदम् इव साऽऽभासं[14] पद्म-माला-विभूषितम् ॥११॥ [१०
१३] अञ्जनाऽचल-सङ्काशं[15] कनकाऽचल-संनिभम्[16] ।
प्राऽहरद् राक्षस-पतिः शूल-शक्त्य्-ऋष्टि-तोमरैः[17] ॥१२॥ [१२
१४] स द्वीपिना सिंह इव शर-भेणेव[18] कुञ्जरः ।
सु-मेरुर् इव नागेन नदी-वेगैर् इवाऽर्णवः ॥१३॥ [१३

---

१. च भ$_1$ भ$_2$–हाटका° । २. च भ$_2$ रा$_1$–यदादृश्यत । ३. च भ$_1$ भ$_2$–°लवस्थितः । ४. अ ब ल$_1$–वानराणां । च भ$_2$–ऋक्षाणां च । ५. च भ$_1$ भ$_2$–इवाद्भुता । ६. अ–दशतां । ७. च भ$_1$ भ$_2$–°वातिवाधतः । ८. अ ल$_2$–लब्धहस्तं । रा$_1$ ल$_1$ ल$_3$ ब–लघुहस्तं । ९. च भ$_1$ भ$_2$–वर्जं–चैकं । १०. च भ$_1$ भ$_2$–अरोम° । ११. अ ब ल$_2$ ल$_3$ प्र–°लुं वरा° । च भ$_2$–°तालतलाम्बु° । रा$_1$ ल$_1$–°लुर्वरा° । १२. च भ$_1$ भ$_2$–सघंटाब° । १३. च भ$_1$ भ$_2$–वक्षोदे° । १४. च भ$_1$ भ$_2$–शोभंतं । १५. च भ$_1$ भ$_2$–कांचना° । १६. च भ$_1$ भ$_2$–कांचनाच° । १७. च भ$_1$ भ$_2$–°ष्टिपट्टिशैः । १८. च भ$_1$ भ$_2$–करभे ॥

१५] अ-कम्प्यमानः पुरुषो राक्षसं वाक्यम् अब्रवीत् ।
युद्ध-श्रद्धां हि ते रक्षो नाशयिष्यामि दुर्-मते ॥१४॥ [१४

१६] रावणस्य च यो वेगः सर्व-लोक-भयाऽऽवहः ।
तथा वेग-सहस्राणि सं-श्रितानि तम् एव हि ॥१५॥ [१५

१७] धर्मस्[1] तस्य[1] तपश् चैव जगतः[2] सिद्धि-हेतुकौ[3] ।
ऊरू सं-श्रित्य तस्थाते मन्मथः शिश्नम् आ-स्थितः ॥१६॥ [१७

१८] विश्वे देवाः कटी-भागे मरुतो वस्ति-शीर्षयोः ।
मध्येऽष्टौ वसवस् तस्य सम्-उद्राः कुक्षि-संस्थिताः[4] ॥१७॥ [१८

१९] पार्श्वाऽस्थिषु[5] दिशः सर्वाः सर्व-सन्धिषु मारुताः[6] ।
पितरश् चाऽऽस्थिताः[7] पृष्ठे हृदये[7] च पिता-महः[8] ॥१८॥ [१९

२०] गो-दानानि पवित्राणि भूमि-दानानि यानि च ।
सु-वर्णस्य च दानानि यत्[9] तद्-रोमाणि यानि वै[9] ॥[10]१९॥ [२०

२१] हिम-वान् हेम-कूटश् च मन्दरो मेरुर् एव च ।[10]
नरं तं तु समा-साद्य ह्य् अस्थि-भूता व्यव-स्थिताः ॥[11]२०॥ [२१

२२] मणिर् वज्रोऽभवत् तस्य शरीरे द्यौर् इव स्थिता ।
कृकाटिकायां सन्ध्या च जल-वाहाश् च मेहने ॥२१॥

२३] बाहू धाता वि-धाता च भगः पूषा च तौ करौ । [२२
शेषश् च वासुकिश् चैव विशालाऽक्ष इरावतः ॥२२॥

२४] कम्बलाऽश्वतरौ चोभौ कर्कोटक-धनञ्जयौ[12] । [२३
सर्वे घोर-विषा नागास् तक्ष-कश् चोप-तक्षकः[13] ॥२३॥

२५] कर-जान् आ-श्रितास् तस्य विष-वीर्यं मुमुक्षवः । [२४
अग्निर् आस्यम् अभूत् तस्य स्कन्धौ रुद्रैर् अधि-ष्ठितौ ॥२४॥

२६] अब्दा[14] मासर्तवश् चैव दंष्ट्रयोर् उभयोः स्थिताः ।
नासे कुहूर्[15] अमावास्या तच्-छिद्रेषु च वायवः ॥२५॥ [२५

---

१. अ ल$_2$—धर्मश्चैव। २. अ ल$_2$ ल$_3$ प्र—तपसः। ३. अ ल$_1$ ल$_3$ ब प्र—सिद्धहेतुके। ४. च भ$_1$ भ$_2$—कुक्षिमाश्रिताः। ५. च भ$_1$ भ$_2$—वर्जं—पार्श्वादिषु। ६. अ रा$_1$ ल$_2$ ब—°तः। ७. च भ$_1$ भ$_2$ प्र—चाश्रिताः पृष्ठं हृदयं। ८. ल$_1$—°हाः। ९. च भ$_1$ भ$_2$—सत्क्रियाश्चास्य वै तथा। १०. च भ$_1$ भ$_2$ प्र—वर्जं—नास्ति। ११ च भ$_1$ भ$_2$—वर्जं—तानि सर्वाणि पाण्योश्च सर्वभूता व्य°। १२. च—वर्जं—कार्को°। १३. भ$_1$ भ$_2$—वर्जं—°क्षकाः। १४. च भ$_1$ भ$_2$—दंता। १५. प्र—ऊरूर॥

२७] ग्रीवा तस्याऽभवद् देवी[1] वाणी चाऽपि सरस्वती ।
नासत्यौ श्रवणौ चोभौ नेत्रे च शशि-भास्करौ ॥२६॥ [२६

२८] वेदाऽङ्गानि यज्ञाश्[2] च[2] तारा-रूपाणि यानि च ।
सु-वृत्तानि[3] च वाक्यानि[3] तेजांसि च तपांसि च ।

२९] एतानि नर-रूपस्य तस्य देहं श्रितानि वै[4] ॥२७॥ [२७
तेन वज्र-प्रभावेण[5] तल-मात्रेण[6] लीलया ।

३०] पाणिना पीडितं रक्षो नि-पपात मही-तले ॥२८॥ [२८
पतितं राक्षसं ज्ञात्वा[7] वि-द्राव्य च निशा-चरान् ।

३१] ऋग्वेद-प्रतिमः सोऽथ पद्म-माला-विभूषितः ।
प्र-विवेश च पातालं[8] नृत्यन् पर्वत-सन्निभः[8] ॥२९॥ [२९

३२] उत्थाय च दश-ग्रीव आ-हूय सचिवान् स्वयम् ।
क्व गतः सहसा ब्रूत प्रहस्त-शुक-सारणाः ॥[9]३०॥ [३०

३३] एवम् उक्ता रावणेन राक्षसास् तम् अथाऽब्रुवन् ।[9]
प्र-विष्टः स नरोऽत्रैव देव-दानव-दर्प-हा ॥३१॥ [३१

३४] अथाऽसिं[10] गृह्य[10] वेगेन गरुत्-मान् इव पन्न-गम् ।
शीघ्रं[11] स च[11] विल-द्वारं[12] प्र-विवेश सु-दुर्मतिः ॥३२॥ [३२

३५] सम्प्र-विश्य[13] च तद् द्वारं रावणो वर-निर्भयः ।
अपश्यत् स[14] नरांस् तत्र नीलाऽञ्जनचयोपमान् ॥३३॥ [३३

३६] केयूर-धारिणः शूरान् रक्त-माल्याऽनुलेपनान् ।
अङ्गुलीयक-वज्राऽऽद्यैर् वि-विधैर्[15] अपि भूषितान्[15] ॥३४॥ [३४

३७] दृश्यन्ते तत्र नृत्यन्त(?न्त्य)स् तिस्रः कोटयो महाऽऽत्मनाम् ।
नित्योत्सवाः शान्त-भया वि-मलाः पावक-प्रभाः ॥३५॥ [३५

३८] क्रीडन्तीः पश्यते तत्र राक्षसो भीम-विक्रमः ।
द्वार-स्थो रावणस् तेषां तिस्रः कोटय(?टो)स् तु निर्-भयाः ॥३६॥ [३६

---

१. च भ$_1$ भ$_2$–वेदी । २. च भ$_1$ भ$_2$–सर्वाणि । ३. च भ$_1$ भ$_2$–गायत्र्यादीनि वा° । ल$_3$–संवृत्तानि च भूतानि । ४. अ ल$_2$–च । ५. अ–व्रतप्र° । च भ$_1$ भ$_2$–मुष्टिप्रहारेण । ६. अ रा$_1$ ल$_2$ ल$_3$ ब–नरमा° । ७. च भ$_1$ भ$_2$–दृष्ट्वा । ८. च भ$_1$ भ$_2$–वर्ज–°ले गृहं पातालसन्निभम् । ९. रा$_1$ ल$_3$ ब–नास्ति । १०. च भ$_1$–अथ संगृह्य । ११. च भ$_1$ भ$_2$–स तु शीघ्रं । १२. भ$_1$–बलिद्वारं । १३. च भ$_1$ भ$_2$–वर्ज–स प्र° । १४. च भ$_1$ भ$_2$–च । १५. च भ$_1$ भ$_2$–°धैश्च विभू° ॥

३९] यथा दृष्टः स तु नरस् तुल्यास् ते तस्य सर्व-शः ।
एक-वर्णान् एक-बलान् एक-रूपान् महौजसः । [३७
४०] चतुर्-भुजान् महोत्साहांस् तत्राऽपश्यत् स राक्षसः ॥३७॥
तांस्[1] तु दृष्ट्वा[1] दश-ग्रीव ऊर्ध्व-रोमा बभूव ह । [३८
४१] स्वयं-भुवा दत्त-वरस् ततः शीघ्रं विनिर्-ययौ ॥३८॥ [३९
अथाऽपश्यत् परं तत्र पुरुषं शयने[2] स्थितम् ।
४२] पाण्डुरेण महाऽर्हेण शयनीयेन[3] सं-वृतम्[3] । [४०
शेते स पुरुषस् तत्र पावकेनाऽव-गुण्ठितः[4] ॥३९॥
४३] दिव्य-स्रग्-अनुलेपा[5] हि[5] दिव्याऽऽभरण-भूषिता । [४१
दिव्याऽम्बर-धरा साध्वी त्रैलोक्यस्येव भूषणम् ॥४०॥
४४] वाल-व्यजन-हस्ता च देवी तत्र व्यव-स्थिता ।
लक्ष्मीर् देवी स-पद्मा वै भ्राजन्ती लोक-सुन्दरी ॥४१॥ [४२
४५] प्र-हृष्टः स तु रक्षेन्द्रो दृष्ट्वा तां चारु-हासिनीम् ।
जिघृक्षुः सहसा साध्वीं सिंहाऽऽसनम् उप-स्थिताम्[6] ॥४२॥ [४३
४६] विना[7] तु[7] सचिवैस् तत्र रावणो दुर्-मतिस् तदा ।
हस्ते ग्रहीतुं[8] ताम् ऐच्छन् मन्मथेन वशी-कृतः ।
४७] सुप्तम् आशीविषं यद्-वद् रावणः काल-चोदितः[9] ॥४३॥ [४४
अ-सुप्तः[10] स[10] महा-बाहुः पावकेनाऽव-गुण्ठितः ।
४८] ग्रहीतु-कामं तं ज्ञात्वा व्यप-विध्य पटं तदा[11] ॥४४॥
जहासोच्चैर् भृशं देवो दृष्ट्वा तं राक्षसाऽधिपम्[12] । [४५
४९] तेजसा तस्य सं-दीप्तो रावणो लोक-रावणः ॥४५॥
कृत्त-मूलो यथा शाखी[13] नि-पपात मही-तले । [४६
५०] पतितं राक्षसं[14] ज्ञात्वा[15] वचनं चेदम् अब्रवीत् ॥४६॥
उत्-तिष्ठ राक्षस-श्रेष्ठ मृत्युस् ते नाऽद्य वर्तते[16] । [४७
५१] प्रजा-पतेर्[17] वरो रक्षो(?क्ष्यो)[17] येन जीवसि राक्षस ॥४७॥

---

१. च भ₁ भ₂–तान्दृष्ट्वा स । २. अ ब–°नं । ३. च भ₁ भ₂–°यनासनवेश्मना । ४. च भ₁ भ₂–वर्जं–°नेव गु° । ५. च भ₂–°नुलिप्तांगा । भ₁–°लिप्ता च । ६. ल₁ प्र–उपाश्रिताम् । ७. च भ₁–°ना च । भ₂–°नाऽपि । ८. ल₂–वर्जं–गृहीतुं । ९. अ ल₂–वर्जं–कालनोदितः । १०. च भ₁ भ₂–अथ सुप्तो । ११ च–वर्जं–तथा । १२. च भ₁ भ₂–°सर्षभम् । १३. च भ₁ भ₂–वृक्षो । १४. अ ल₂–रावणं । १५. च भ₁ भ₂–दृष्ट्वा । १६. च भ₁ भ₂–विद्यते । १७. च भ₁ भ₂–वर्जं–°पतिवरो दत्तो ॥

गच्छ रावण वि-स्रब्धं[1] नाऽधुना मरणं तव । [४८
५२] लब्ध-संज्ञो मुहूर्तेन रावणो भयम् आऽविशत् ॥४८॥ [४९
एवम् उक्तस् तथोत्थाय रावणो देव-कण्टकः ।
५३] लोम-हर्षणम् आ-पन्नो ह्य्[2] अब्रवीत् तं महा-द्युतिम् ॥४९॥ [५०
को भवाञ् छौर्य-सम्पन्नो[2] युगाऽन्ताऽनल-सन्निभः[3] ।
५४] ब्रूहि त्वं को भवान् देवो भूतो[4] वेह[5] यतः[5] स्थितः ॥५०॥ [५१
एवम् उक्तः स तेनाऽथ रावणेन दुर्-आत्मना ।
५५] प्रत्य्-उवाच हसन् देवो[4] मेघ-गम्भीरया गिरा ॥५१॥
किं ते मया दश-ग्रीव वध्योऽसि न चिरान् मम । [५२
५६] एवम्[6] उक्तो[6] दश-ग्रीवः प्राऽञ्जलिर् वाक्यम् अब्रवीत् ॥५२॥
प्रजा-पतेस् तु वचनान् नाऽहं मृत्यु-वशं[7] गतः । [५३
५७] न स जातो जनिष्यो वा मत्-तुल्यो वाऽसुरेष्व् अपि ॥५३॥
प्रजापति-वरं यो हि लङ्घयेद् वीर्यम् आ-श्रितः । [५४
५८] न तत्र परि-हारोऽस्ति[8] प्र-यत्नश् चाऽपि दुर्-लभः[9] ॥५४॥
न तं पश्यामि त्रैलोक्ये यो मे कुर्याद् वृथा वरम् । [५५
५९] अ-मरोऽहं सुर-श्रेष्ठ येन मे नाऽविशद् भयम् ॥५५॥
अथ[10] चाऽपि[10] भवेन् मृत्युस् त्वद्-धस्तान् नाऽन्य-तः प्र-भो । [५६
६०] यशस्यं[11] श्लाघनीयं[11] च त्वद्-धस्तान् मरणं मम ॥५६॥ [५७
अपश्यद् अथ गात्रेषु[12] रावणो भीम-विक्रमः ।
६१] देवस्यैकस्य[13] सकलं त्रैलोक्यं[14] स-चराऽचरम्[14] ॥५७॥ [५८
आदित्या वसवो रुद्रा[16] मरुतोऽथाऽश्विनाव् अपि ।
६२] साध्याश्[15] च पितरश् चैव यमो वैश्रवणस् तथा ॥५८॥

---

१. च भ$_1$ भ$_2$-°श्रब्धो । २. च-नास्ति । ३. च भ$_1$ भ$_2$-कल्पांता° । ४. अ रा$_1$ ब ल$_3$-नास्ति । ५. ल$_1$ ल$_2$-वैकचरः । च-°ह यत्र । भ$_1$ भ$_2$-°ह च यत् । ६. च भ$_1$ भ$_2$-एतच्छ्रुत्वा । ७. च भ$_2$-मृत्युपथे । भ$_1$-मृत्युपथं । ८. भ$_1$ भ$_2$-वर्जे-°हासोऽस्ति । ९. अ भ$_1$ ल$_2$ प्र-दुर्बलः । १०. च भ$_1$ भ$_2$-अथवा मे । ११. च भ$_1$ भ$_2$-भविष्यति कथंचिच् । १२. च भ$_1$ भ$_2$ रा$_1$-गात्रेभ्यो । १३. अ ल$_2$ ल$_3$ प्र-दैव° । च भ$_1$ भ$_2$-देवदेवस्य । १४. च भ$_1$ भ$_2$-सदेवासुरपन्नगम् । १५. च भ$_1$ भ$_2$ ल$_1$ प्र-साध्या । १६. च भ$_1$ भ$_2$ ल$_1$ प्र-रुद्राश् ॥

समु-उद्रा[1] गिरयो[1] नद्यो वेद-विद्यास्[2] त्रयोऽग्नयः । [५९
६३] ग्रहास् तारा-गणा व्योम सिद्ध-गन्धर्व-चारणाः[3] ॥५९॥
महर्षयो वेद-विदो[4] गरुडोऽथ[4] भुजं-गमाः । [६०
६४] ये चाऽन्ये दैवता[5] यक्षाः[5] सं-स्थिता दैत्य-राक्षसाः[6] ।
गात्रेषु शयन-स्थस्य दृश्यन्ते सूक्ष्म-मूर्तयः ॥६०॥ [६१
६५] आह[7] रामोऽथ धर्माऽऽत्मा ह्य् अगस्त्यं मुनि-सत्तमम्[8] ।
द्वीप-स्थः पुरुषः कोऽसौ तिस्रः कोटयश् च[9] तास् तु काः[9] ॥६१॥ [६२
६६] शयानः पुरुषः कश्[10] च[10] दैत्य-दानव-दर्प-हा ।
रामस्य वचनं श्रुत्वा ह्य् अगस्त्यो वाक्यम् अब्रवीत् ॥६२॥ [६३
६७] श्रूयताम् अभि-धास्यामि देव-देवं सनातनम् ।
६८पू] भग-वान् कपिलो नाम[11] द्वीप-स्थो नर उच्यते ॥६३॥ [६४
स च नारायणो देवः शङ्ख-चक्र-गदा-धरः ।
N] वि-धाता चैव भूतानां सं-हर्ता च तथैव सः ॥६४[12]॥
N] अन्-आदिर् अ-च्युतो विष्णुः प्र-भवः शाश्वतोऽव्ययः ।[12] [६५
६८उ] ये तु नृत्यन्ति वै तत्र सुतास्[13] ते तस्य धी-मतः ॥६५॥
तुल्य-तेजः-प्रभावास्[14] ते ऋषेस्[15] तस्य[15] नरस्य वै । [६६
६९] नाऽसौ क्रुद्धेन दृष्टस् तु राक्षसः पाप-निश्चयः ॥६६॥
न बभूव तदा तेन भस्म-साद् राम रावणः । [६७
७०] खिन्न-गात्रो[16] नग-प्रख्यो रावणः पतितो भुवि ।[17]॥६७॥ [६८पू
अथ शीघ्रेण[18] कालेन लब्ध-संज्ञः स राक्षसः ।
७१] आ-जगाम महा-तेजाः[19] यत्र ते सचिवाः स्थिताः ॥६८॥ [६९पू

इत्यार्षे रामायण उत्तर-काण्डे महापुरुष-दर्शनं[20] नाम सप्तत्रिंशः सर्गः ॥ ३७ ॥

---

१. च भ$_1$ भ$_2$–गधर्वाप्सरसो । २. भ$_1$–वेदा त्रि° । ३. अ ब–°रिणः । ४. च भ$_1$ भ$_2$–मुनिगणास्तथान्ये च । ५. रा$_1$ ल$_1$ प्र–देव° । च भ$_1$ भ$_2$–देवतापक्षे । ६. च भ$_1$ भ$_2$–वर्जं–देवरा° । ७. च भ$_1$ भ$_2$–प्राह । ८. च भ$_1$ भ$_2$–वर्जं–°सेवितम् । ९. च भ$_1$ भ$_2$–तु का हि ताः । १०. च भ$_1$ भ$_2$–कोऽसौ । ११. च भ$_1$ भ$_2$–राम । १२. च भ$_1$ भ$_2$–नास्ति । १३. अ ल$_1$ ल$_2$ ब वृतास् । १४. ल$_1$–°जाः प्र° । १५ च भ$_1$ भ$_2$–कपिलस्य । १६. च भ$_1$ भ$_2$–वर्जं–छिन्न° । च भ$_2$–स्विन्न° । १७. अतः परमधिकः पाठः—च भ$_1$ भ$_2$ प्र–वाक्शरैस्तं बिभेदाशु रहस्यं पिशुनो यथा । १८. च भ$_1$ भ$_2$–अथादीर्घेण । १९. च भ$_1$ भ$_2$–महौजाश्च । २०. ल$_1$ प्र–पुरुषोत्तमद° ॥

५०पू] श्रुत्वैतत्[1] तु ततो राम आश्चर्यम्[2] इति चाऽब्रवीत् ।
N] पूज्यमानाः स्थितास् तत्र ये रामस्य समीप-तः ।
५०उ] तेऽप्य्[3] आश्चर्यम् इति प्राऽऽहुर् वानरा राक्षसास्[3] तथा[3] ॥ १ ॥ [७०
वि-भीषणश् च[4] धर्माऽऽत्मा[4] पार्श्व-स्थो वाक्यम् अब्रवीत् ।
५१] आश्चर्यं[6] स्मारितोऽस्म्य्[7] अद्य यत् तद्[5] वृत्तं[6] पुरा-तनम् ॥२॥ [७१
अगस्त्योऽथाऽब्रवीद् रामं सर्वम् एतच्[6] छ्रुतं[6] त्वया ।
N] दृष्टः सभाजितश् चाऽसि[8] राम गच्छामहे[8] वयम् ॥ ३ ॥ [७२
अ-पृच्छत्[9] तं ततो रामो दक्षिणाऽऽशाऽऽलयं मुनिम् । [दा-३५
५२] प्राऽञ्जलिर् विनयोपेत[10] इदम् आह वचोऽर्थ-वत् ॥ ४ ॥ [१
एतयोर् अ-तुलं वीर्यं रावणे रावणस्य च[11] ।
५३] न त्व्[11] एतौ[12] हनुमद्-वीर्ये समाव् इति मतिर्[13] मम ॥ ५ ॥ [२
शौर्यं तेजो[14] बलं[14] धैर्यं प्र-ज्ञा च नय-संयुता[15] ।
५४] वि-क्रमश् च प्र-भावश् च सर्वम् एतस्य सं-स्थितम्[16] ॥ ६ ॥ [३
सागरं प्रेक्ष्य सीदन्तीं दृष्ट्वैव[17] कपि-वाहिनीम् ।
५५] एष वीरः समा-श्वास्य योजनानां शतं प्लुतः ॥ ७ ॥ [४
धर्षयित्वा पुरीं लङ्कां रावणाऽन्तःपुरं[18] तथा ।
५६] दृष्ट्वा सं-भाषिता सीता पृष्ट्वा वि-श्वासिता तथा ॥[19] ८ ॥ [५
सेनाऽग्र-गा[20] मन्त्रि-पुत्राः किं-करा रावणाऽऽत्मजाः[21] ।
५७] एते हनु-मता तत्र एकेन[22] नि-हता[22] रणे[23] ॥ ९ ॥ [६

---

१. च भ$_1$ भ$_2$-श्रुत्वैवं । २. भ$_1$-तथाश्चर्यम् । ३. च भ$_1$ भ$_2$-सैः सह । ४. च भ$_1$ भ$_2$-तु रामस्य । ५. च-तद्भुतं । भ$_1$ भ$_2$-भूतं । ६. च भ$_1$ भ$_2$-वर्जं-एतत्कृतं । ७. अ च ल$_2$ व-चापि । रा$_1$ ल$_1$ ल$_3$ प्र-चास्मि । ८. च भ$_1$ भ$_2$-यास्यामहे । ९. च भ$_1$ भ$_2$ रा$_1$ ल$_2$-आपृ° । १०. च भ$_2$-°तम् । ११. भ$_1$ भ$_2$-हि । १२. भ$_2$-चैनौ । १३. ल$_1$-मतं । १४. च भ$_1$ भ$_2$-दाक्ष्यं श्रुतं । १५. च भ$_1$ भ$_2$-नयसाधनम् । १६. भ$_1$-°तः । च भ$_2$-संश्रितम् । ब-संयुतम् । १७. अ रा$_1$ ल$_1$ ल$_3$ ब प्र-°वं । १८. अ ल$_2$-णस्यांतरं । १९. च भ$_1$ भ$_2$-वर्जं-नास्ति । २०. च भ$_1$ भ$_2$-वर्जं-°ग्रस्था । २१. अ रा$_1$ ल$_2$ ल$_3$ ब-°त्मजः । २२. च भ$_2$-सूदिता । भ$_1$-ताडिता । २३. च भ$_1$ भ$_2$-रावणाऽऽलये ॥

भूयो बन्ध-विमुक्तेन[1] सं-भाष्य[2] च[2] दशाऽऽननम् ।
५८] लङ्का भस्मी-कृता तेन पावकेनेव मेदिनी ॥१०॥ [७
न कालस्य न शक्रस्य न विष्णोर्[3] वित्त-पस्य[3] च[4] ।
५९] कर्माण्य्[5] एतानि श्रूयन्ते[5] यानि युद्धे हनू-मतः ॥११॥ [८
एतस्य[6] बाहु-वीर्येण[7] लङ्का सीता च लक्ष्मणः ।
६०] प्राऽऽप्तो मया जयश्[8] चैव राज्यं मित्राणि बान्धवाः ॥१२॥ [९
हनु-मान् यदि मे न स्याद् वानराऽधिपतेः सखा ।
६१] प्र-वृत्ताव् अपि कश् चाऽस्या जानक्याः शक्ति-मान् भवेत् ॥१३[9]॥ [१०
वाली किम्-अर्थम् एतेन सुग्रीव-प्रिय-काम्यया[10] ।
६२] तदा वैरे समुत्-पन्ने न नीतो[11] यम-सादनम्[11] ॥१४॥ [११
नहि[12] वेदितवान्[12] मन्ये हनू-मान् आत्मनो बलम् ।
६३] यद्[13] दृष्टवाञ् जीवितेष्टं[13] क्लिश्यन्तं वानराऽधिपम् ॥१५॥ [१२
एतन् मे भग-वन् सर्वं हनू-मति[14] महा-मुने ।
६४] वि-स्तरेण यथा-तत्त्वं कथयाऽमर-पूजित[15] ॥१६॥ [१३
रामस्य[16] वचनं[16] श्रुत्वा हेतु-युक्तम् ऋषिस् ततः ।
६५] हनू-मतः[17] सम्-अक्षं तम् इदं वचनम् अब्रवीत् ॥१७[18]॥ [१४
सत्यम् एतद् रघु-श्रेष्ठ यद् ब्रवीषि हनू-मतः ।[18]
६६] न[19] बले विद्यते तुल्यो न गतौ न मतौ[20] परः[20] ॥१८॥ [१५
अमोघ-शापैः शापस् तु दत्तोऽस्य मुनिभिः पुरा ।
६७] न च[21] वेद[21] बलं येन बलिनां[22] बल-मर्दनम्[22] ॥१९॥ [१६

---

१. च भ$_{1}$ भ$_{2}$ प्र–वर्जं–वधाद्विमु° । २. च भ$_{1}$ भ$_{2}$–वर्जं–संभाषित्वा । ३. च भ$_{1}$ भ$_{2}$–वायोर्वित्तदस्य । ४. भ$_{1}$ भ$_{2}$–वा । ५. च भ$_{1}$ भ$_{2}$–श्रूयंते तानि कर्माणि । ६. प्र–एतेन । ७. च भ$_{1}$ भ$_{2}$–वर्जं–वीर्येण मया । ८. च भ$_{1}$ भ$_{2}$–वर्जं–नयश् । ९. च भ$_{1}$ भ$_{2}$–सखायं वानरपतिमुक्त्वैनं हरिपुंगवं । प्रवृत्तिमपि जानक्याः को वेत्तुं शक्तिमान्भवेत् । १०. च भ$_{1}$ भ$_{2}$–°वहितका° । ११. च भ$_{1}$ भ$_{2}$–दग्धस्तृणवन्मुने । १२. च भ$_{1}$ भ$_{2}$–नायं विदि° । १३. च भ$_{1}$ भ$_{2}$–उपेक्षितं च यन्मित्रं । १४. अ–हनु° । १५. च भ$_{1}$ भ$_{2}$–वर्जं–निखिलं कथयस्व मे । १६. भ$_{1}$ भ$_{2}$–राघवस्य वचः । १७. अ रा$_{1}$ ल$_{2}$ ब–हनु° । १८. च–नास्ति । १९. अ ब ल$_{3}$–यद् । २०. अ–मतोमरः । च भ$_{1}$ भ$_{2}$–मतावपि । २१. च भ$_{1}$ भ$_{2}$–ज्ञातं हि । २२. च भ$_{1}$ भ$_{2}$–°ना वालिमर्दने ॥

बाल्येऽप्य्[1] अनेन[1] यत् कर्म कृतं वै[1] सु-महाऽऽत्मना[1] ।
६८] तन्[3] न वर्णयितुं[3] शक्यम् एतस्य बलिनो महत् ॥२०॥ [१७
यदि चाऽप्य्[4] अस्त्य् अभिप्राऽयस्[4] तच् छ्रोतुं तव[5] राघव ।
६९] समा-धाय[6] मतिं राम[6] नि-शामय वदाम्य् अहम् ॥२१॥ [१८
सूर्य-दत्त-वरः पूर्वं[7] सु-मेरुर् नाम पर्वतः ।
७०] यत्र[8] राज्यं प्र-शास्त्य्[8] अस्य केसरी नाम वै पिता ॥२२॥ [१९
तस्य भार्या बभूवेष्टा ह्य् अञ्जनेति[9] परि-श्रुता[10] ।
७१] जनयामास तस्यां[11] वै पवनः पुरुषोत्तम[11] ॥२३॥ [२०
शालि-शूक-समाऽऽभासं प्राऽसूतेमं तदाऽञ्जना ।[12]
७२] फलान्य् आहर्तु-कामा सा निष्-क्रान्ता गहने-चरा[13] ॥२४॥ [२१
एष मातुर् वि-योगाच्[14] च क्षुधया च भृशाऽर्दितः[14] ।
७३] रुरोद शिशुर् अत्य्-अर्थं यथैव[15] शर-भः शिशुः[15] ॥२५॥ [२२
अथोद्-यन्तं वि-वस्वन्तं जपापुष्पोत्करोपमम् ।
७४] ददृशे फल-लोभाच् च उत्-पपात रविं प्रति ॥[16]२६॥ [२३
बालाऽर्काऽभिमुखो बालो बालाऽर्क[17] इव मूर्ति-मान्[17] ।
७५] ग्रहीतु-कामो बालाऽर्कं पुप्लुवेऽम्बर-मध्य-गः[18] ॥२७॥ [२४
एतस्मिन् प्लवमाने तु शिशु-भावे[19] हनू-मति[19] ।
७६] देव-दानव-सिद्धानां वि-स्मयः सु-महान् अभूत् ॥२८॥ [२५
नाऽप्य् एवं वेग-वान् वायुर् गरुडो वा मनोऽथ[20] वा[20] ।
७७] यथाऽयं वायु-पुत्रो वै क्रमतेऽम्बरम् उत्-तमम् ॥[21]२९॥ [२६

---

१. च भ$_1$ भ$_2$–बालेनानेन । २. च भ$_1$ भ$_2$–राम म° । ३. च भ$_1$ भ$_2$–न तत्कथयि° । ४. च–वा स्निह्यति प्रायः । भ$_1$ भ$_2$–वास्ति ह्यभि° । ५. भ$_1$–ते तु । ६. च भ$_1$ भ$_2$–°यैकभावेन । प्र–°तिं वीर । ७. च भ$_1$ भ$_2$–स्वर्णः । ८. च भ$_1$ भ$_2$–तत्रास्ते बलवान् । ९. ल$_3$–°नीति । १०. भ$_1$–पतिव्रता । ११ च भ$_1$ भ$_2$–तत्रैनं पवनो बलवांस्तथा । १२. च भ$_1$ भ$_2$–पावकार्कनिभाभासं सूत्वा क्षेत्रजमंजना । १३. च भ$_1$ भ$_2$–च वनं तदा । प्र–वने वने । १४. च भ$_1$ भ$_2$–°गेन क्षुधया भृशमार्दितः । १५. च भ$_1$ भ$_2$–शिशुः शरभराडिव । १६. च भ$_1$ भ$_2$–ददर्श फललाभाय ह्युत्पपात च तं प्रति । १७. रा$_1$ ब ल$_3$–°र्कातपमू° । १८. भ$_1$–पुप्लावांऽब° । ब ल$_3$ प्र–°वऽसुरम° । १९. च भ$_1$ भ$_2$–°वेन वै तदा । २०. च भ$_1$ भ$_2$–वर्जे–पतत्रवान् । २१. च भ$_1$ भ$_2$–यदि तद्वीर्यमासाद्य क्रामत्यम्बरमुत्तमं ॥

यदि तावच् छिशोर् अस्य त्व् ईदृशो गति-विक्रमः ।
७८] यौवनं बलम् आ-साद्य कथं[1] वेगो भविष्यति ॥३०॥ [२७
७९पू] तम् अनु-प्लवते वायुः प्लवन्तं पुत्रम् आत्मनः । [२८पू
N] तस्मात् सर्वेषु वीरेषु[2] हनु-मान्[3] बलवत्-तरः ॥३१॥ [N
N] स्थैर्याद् धैर्यात् तु गाम्भीर्यान् न समोऽस्तीऽति[4] कश्-चन । [N
७९ उ] सूर्य-दाह-भयाद् रक्षत्य्[5] एनं वायुस् तु शीतलः[5] ॥३२॥ [२८उ
बहु-योजन-साहस्रं क्रमत्य् एष ततोऽम्बरे ।[6]
८०] पितुर्[7] बलाच्[7] च बाल्याच् च भास्-करेण समा-गतः ॥३३॥ [२९
शिशुर् एष ह्य् अ-दोषज्ञ इति मत्वा दिनेश्वरः ।
८१] सूर्य[8] एवं समा-यान्तम्[8] इत्य् एवं न ददाह तम्[9] ॥३४॥ [३०
यम् एव दिवसं ह्य् एष ग्रहीतुं भास्-करं प्लुतः[10] ।
८२] तम् एव दिवसं राहुर् जिघृक्षति[11] दिवा-करम् ॥३५॥ [३१
अनेन तु परा-मृष्टो राम[12] सूर्यरथोपरि[12] ।
८३] अप-क्रान्तस् तदा[13] त्रस्तो[13] राहुश् चन्द्राऽर्क-मर्दनः ॥३६॥ [३२
N] स चेन्द्र-भवनं गत्वा स-रोषः[14] सिंहिका-सुतः ।
८४उ] अब्रवीद् भ्रुकुटिं[15] कृत्वा देवं[16] देव-गणैर् वृतम् ॥३७॥ [३३
क्षुधाऽपनोदनं[17] कृत्वा[17] चन्द्राऽर्कौ मम वासव ।
८५] किम् इदानीं त्वया दत्तो वरोऽन्यस्मै सुरेश्वर ॥[18]३८॥ [३४
अद्याऽहं पर्व-काले तु जिघृक्षुः सूर्यम् आ-स्थितः[19] ।
८६] अथाऽन्यो[20] राहुर् आ-साद्य सूर्य[21] ग्रसति पर्वणि[21] ॥[22]३९॥ [३५

---

१. च भ$_1$ भ$_2$ ब–कीदृग् । २. अ ल$_2$–देवेषु । च भ$_1$ भ$_2$–भूतेषु । रा$_1$ ल$_3$–प्राणेषु । ३. रा$_1$ ल$_2$ ब प्र–हनू° । ४. च भ$_1$ भ$_2$–°स्तीह । ५. च भ$_1$ भ$_2$–रक्षन् वायुस्तुहिनशी° । प्र–रक्षन् वायुस्तु हिमशी° । ६. च भ$_1$ भ$_2$–वायुर्योजन-साहस्रं क्रामत्येष नभस्तलं । ७. अ ल$_1$ ल$_2$ ल$_3$ प्र–दुर्बलत्वाच् । ८. च भ$_1$ भ$_2$–कार्यं चात्र समापन्नम् । ९. च भ$_1$ भ$_2$ प्र–सः । १०. च भ$_1$ भ$_2$–गतः । ११. च भ$_1$ भ$_2$–वर्जं–जिघ्रासति । प्र–जिघ्रसति । १२. च भ$_1$ भ$_2$–°हे राहुस्तूर्णं र° । १३. अ ल$_1$ ल$_2$ ल$_3$ ब–तदा तस्थौ । च भ$_1$ भ$_2$–च तत्रस्थो । प्र–ततस्तस्थौ । १४. च भ$_1$ भ$_2$–°षं । १५. भ$_1$–भ्रू° । ल$_2$ ल$_3$ ब–भ्रु° । १६. च भ$_1$ भ$_2$–शक्रं । १७. च भ$_1$ भ$_2$–वर्जं–भक्ष्यामीमौ हि नैवास्तां । ल$_1$ प्र–भक्ष्याविमौ हि नैवास्तां । १८. च भ$_1$ भ$_2$–वर्जं–किमिदं यत्त्वया दत्तं विन्यस्य बलवृत्रहन् । १९. च भ$_1$ भ$_2$–आगतः । २०. अ रा$_1$ भ$_2$–अथान्यो । २१. च भ$_1$ भ$_2$–जग्राह सहसा रविं । २२. ल$_3$–नास्ति ॥

राहोस्[1] तु[1] वचनं श्रुत्वा वासवः सम्भ्रमाऽन्वितः ।[2]
८७] उत्-पपाताऽऽसनं हित्वा उद्-वहन्[3] काञ्चनीं[4] स्रजम्[4] ॥४०॥ [३६
ततः कैलास-कूटाऽऽभं चतुर्-दन्तं मद-स्रवम्[5] ।
८८] शुक्लं[6] दन्त(?न्ति)-वरं चैव[6] स्वर्ण-घण्टाऽट्ट-हासिनम्[7] ॥४१॥ [३७
इन्द्रः करीऽन्द्रम् आ-रुह्य राहुं कृत्वा पुरः-सरम् ।
८९] प्राऽयाद् यत्राऽभवत् सूर्यः सहाऽनेन[8] हनू-मता ॥४२॥ [३८
अथाऽति-रभसेनाऽयाद्[9] राहुर् उत्-सृज्य वासवम् ।
९०] अनेन च स वै दृष्टो[10] ह्य् अधावत्[10] शैल-कूट-वत् ॥४३॥ [३९
ततः सूर्यं समुत्-सृज्य राहुं स्थूलम् अवेक्ष्य च[11] ।
९१] उत्-पपात पुनर् व्योम ग्रहीतुं सिंहिका-सुतम् ॥४४॥ [४०
उत्सृष्टाऽर्कम् अमुं[12] राम ह्य् आ-धावन्तं प्लवं-गमम् ।
९२] दूराद्[13] राहुः[14] परि-वृ(?प)त्य(?श्य)[15] मुख-शेषः[16] पराङ्-मुखः४५[४१
इन्द्रं प्र-क्रोशमानश् च त्रातारं सिंहिका-सुतः ।
९३] इन्द्रेन्द्रेति[17] च[17] सं-त्रासान् मुहुर्-मुहुर् अभाषत ॥४६॥ [४२
राहोर् वि-क्रोशमानस्य प्राग् एवाऽऽलक्षितं स्वरम् ।
९४] श्रुत्वेन्द्रः[18] प्राऽऽह[18] मा भैस् त्वम् अहम् एनं नि-षूदये ॥४७॥ [४३
ऐरावणं ततो[19] दृष्ट्वा महद् अन्यद्[19] उपाऽऽगतम्[20] ।
९५] बलिनं[21] हस्ति-राजानम् अभि-दुद्राव मारुतिः ॥४८॥ [४४
तद्[22] अस्य धाव-तो[22] रूपम् ऐरावण-जिघृक्षया ।
९६] मुहूर्तम् अभवद् घोरं कालाऽग्नेर् इव मूर्च्छितम् ॥४९॥ [४५

---

१. च भ$_1$ भ$_2$-स राहोर् । २. ल$_3$-नास्ति । ३. च भ$_1$ भ$_2$-सव्यूढं । ४. च भ$_1$ भ$_2$ ल$_1$ ल$_3$ प्र-°नस्रजं । ५. च भ$_2$-महागजं । भ$_1$-मदाश्रुतं । ६. च भ$_1$ भ$_2$-श्रृङ्गारधारिणं प्रांशुं । रा$_1$-शुक्लं वरगजं चैव । ल$_1$ ल$_3$ ब प्र-शुक्लं गजवरं चैव । ७. च भ$_2$-स्वर्णश्रृङ्गाट्ट° । ८. च भ$_1$ भ$_2$-सह तत्र । ९. च भ$_1$ भ$_2$-°रभसः प्रायाद् । १०. च भ$_1$ भ$_2$-वर्जे-युद्धे धावंतं । ११. च भ$_1$ भ$_2$-सः । १२. च भ$_1$ भ$_2$-इमं । १३. अ रा$_1$ ल$_1$ ल$_2$ ल$_3$ ब प्र-द्रुतं । १४. अ-राहुं । १५. भ$_1$-वर्जं-परावृत्य । च भ$_2$-परावृत्तो । १६. च भ$_1$ भ$_2$-वर्जे-°शोषः । १७. च भ$_1$-वर्जे-इन्द्रमिन्द्रेति । १८. भ$_1$ भ$_2$-श्रुत्वेन्द्रोऽप्याह मा भैषीस् । १९. अ ल$_2$-समारुह्य ततो देव । च भ$_1$ भ$_2$ ल$_3$ प्र-ततो दृष्ट्वा महांतमिमं । २०. च भ$_1$ भ$_2$-इत्यपि । २१. च भ$_1$ भ$_2$-बलार्त्तं । २२. अ रा$_1$ ल$_1$ ल$_2$ ल$_3$-ब प्र-अथास्य चाभवद् ॥

तं[1] दृष्ट्वा धावमानं तु[1] नाऽति-क्रुद्धः शची-पतिः ।[2]
९७] हनुं[3] तेनाऽभि-मुक्तेन[3] कुलिशेनाऽभ्य्-अताडयत्[4] ॥५०॥ [४६
ततो गिरौ पपातैष इन्द्र-वज्राऽभिताडितः[5] ।
९८] पतमानस्य चैवाऽस्य वामो हनुर् अभज्यत ॥५१॥ [४७
तस्मिंस्[6] तु पतिते बाले वज्र-ताडित-विह्वले[7] ।
९९] चुक्रोधेन्द्राय[8] पवनः[8] प्र-जानाम् अ-शिवाय च ॥५२॥ [४८
ततः[9] प्र-चारं सं-गृह्य[9] प्र-जास्व् अन्तर्-गतः प्र-भुः । [४९पू
१००] रुरोध[10] सर्व-भूतानि मातरिश्वाऽथ[11] राघव[11] ॥५३॥ [५०उ
वायु-प्रकोपाद्[12] भूतानि निर्-उच्छ्वासानि[13] सर्व-शः[13] ।[14]
१०१] सं-धिभिर् भज्यमानानि[15] काष्ठ-भूतानि जज्ञिरे ॥[16]५४॥ [५१
निः-स्वधं निर्-वषट्कारं निष्-क्रियं धर्म-वर्जितम् ।[16]
१०२] वायु-प्रकोपात्[17] त्रैलोक्यं निरय-स्थम् इवाऽभवत्[18] ॥५५॥ [५२
ततः प्र-जाः स-गन्धर्वाः स-देवाऽसुर-मानवाः ।[19]
१०३] प्रजा-पतिं समाऽधावन्[20] अ-सुखा[21] वै सुखैषिणः[21] ॥५६॥ [५३
N] प्रजा-पतिं प्र-जास् तास् तु सुख-हीनाः सु-दुःखिताः[22] ।
N] ऊचुः[23] प्राऽञ्जलयो देव[24] ब्रह्माणं जगतः पतिम् ।
त्वया स्मो भग-वन् सृष्टाः प्र-जा[25] नाम[25] चतुर्-विधाः ॥५७॥ [५४

१. च भ$_2$-एवमाधावतस्तस्य । २. अतः परमधिकः पाठः—भ$_1$-वज्रमेवाभिमुक्तं तु देवेन्द्रेण महात्मना । ३. अ भ$_1$ भ$_2$ ल$_2$-हंतानेना° । च-हनुस्तस्याभियुक्तेन । ल$_3$ प्र-हंतुं तेना° । ४. च-वर्जे-°शेन व्यता° । ५. च-शक्रवज्राभिपीडितः । ६. च-अस्मिंस् । ७. च-°ताडनवि° । ८. च-चुकोपेन्द्राय प° । भ$_1$-चुकोप पवनाश्वासौ । ९. च भ$_1$-प्रचारं स तु संहृत्य । १०. अ रा$_1$ ल$_1$ ल$_2$ ब-निरोध्य । ११. अ भ$_2$-व्रजमानानि सर्वतः । च-वायुर्वर्षमिवाम्बरे । १२ च-वायोः प्र° । १३. ल$_1$ ल$_2$ ल$_3$ ब प्र-व्रज्यमानानि सर्वतः । १४ अ रा$_1$-नास्ति । १५. च भ$_2$-°मानैश्च । १६. रा$_1$-नास्ति । १७ च भ$_1$ भ$_2$-वायोः प्र° । १८. च भ$_1$ भ$_2$-इवाबभौ । १९. च भ$_1$-ततोऽमराः सगन्धर्वाः सयक्षासुरमानुषाः । २०. अ भ$_1$ भ$_2$ ब ल$_2$ प्र-समाध्यायन् । रा$_1$ ल$_3$-समाख्यायन् । २१. अ ल$_1$ ब-बहुधा हितकाम्यया । च भ$_2$-सु(?दु.)खार्ता वैसु° । २२. च-भृशातुराः । २३. च भ$_2$-वर्जे-ऊर्ध्वं । २४. च-देवा । २५. च-प्रजानाथ ॥

१०४] सृष्ट्वा[1] चैव कृतोऽस्माकम्[1] आयुषः पवनः पतिः ।
सोऽस्मत्प्राणेश्वरो भूत्वा क्व वसत्य् अद्य सत्तमः[2] । [५४
१०५] बाधयत्य् एष किं चाऽस्मांस् तद् भवान् ज्ञातुम् अर्हति ॥[3]५८॥
त्वाम् एव शरणं प्राऽऽप्ता वायुनोप-हता भृशम्[4] ।
१०६] वायोः सं-रोष-जं दुःखं नुद नः परमेश्वर ॥[5]५९॥ [५६
एतच् छ्रुत्वा[6] प्र-जानां तु प्रजा-नाथः प्रजा-पतिः ।
१०७] कारणाद्[7] इति चाऽप्य् उक्त्वा[7] प्र-जाः पुनर् अभाषत ॥६०॥ [५७
यस्मिंश् च कारणे वायुश् चुकोप च रुरोध च ।
१०८] प्र-जाः शृणुध्वं तत् सर्वं[8] श्रूयतां[8] चाऽऽत्मनः क्षमम् ॥६१॥ [५८
पु-त्रस् तस्याऽमरेशेन शक्रेणाऽद्य नि-सूदितः ।
१०९] राहोर् वचनम् आ-ज्ञाय तेन[9] वः कुपितोऽनिलः ॥६२॥ [५९
अ-शरीरः शरीरेषु वायुश् चरति पालयन् ।
११०] शरीरं हि विना[10] वायुं[10] समतां याति दारुभिः[11] ॥६३॥ [६०
वायुः प्राणाः सुखं वायुर् वायुः सर्वम् इदं जगत् ।
१११] वायुना सम्परि-त्यक्तं न[12] सुखं[12] विन्दते जगत्[13] ॥६४॥ [६१
अद्यैव[14] सम्परि-त्यक्तं[14] वायुना[15] जगद् आयुषा[15] ।
११२] अद्यैव च[16] निर्-उच्छ्वासाः[16] काष्ठकुड्योपमाः स्थिताः ॥६५॥[६२
तद् यामस् तत्र यत्राऽऽस्ते मारुतोऽत्य-उत्कटो[17] हि यः[17] ।
११३] मा वि-नाश गमिष्यध्वं प्र-सादान्[18] मे(?वै) सदा-गतिम्(?तेः)[18]।६६।
ततः प्र-जाभिः स-हितः[19] प्रजा-पतिः[19]
स-देव-गन्धर्व-भुजङ्ग-गुह्यकः[20] ।
जगाम यत्र[21] त्व् अभवत् स मारुतः[21]
११४] सुतं हि वज्राऽभिहतं प्र-गृह्य तम् ॥६७॥ [६४

१. च भ$_1$ भ$_2$–त्वया च दत्तः सोस्माकम् । २ च भ$_1$ भ$_2$–वर्जं–कस्मादद्य पितामह । ३. च भ$_1$ भ$_2$–रुणद्धि दुःखं जनयन्नंतःपुर इव स्त्रियः । ४. च–वयं । ५. च–वायुसंरोधजं दुःखं सत्वानां त्रिदशेश्वर । ६. च भ$_1$ भ$_2$–वर्जं–ज्ञात्वा । ७. च भ$_1$ भ$_2$–कारणं कारणात्मा स । ८. च भ$_1$ भ$_2$–कुरुध्वं । ९. च भ$_2$–ततो । १० च भ$_1$ भ$_2$–यथावायुः । ११. च भ$_1$ भ$_2$–दारुणः । १२. च भ$_1$ भ$_2$–वर्जं–सुखं नो । १३. च भ$_1$ भ$_2$–जनः । १४. च भ$_1$ भ$_2$–अद्य यूयं परित्यक्ता । १५. प्र–नास्ति । १६. अ ल$_2$–निरनुच्छ्वासं । रा$_1$ ब ल$_3$ प्र–तु निरुच्छ्वासाः । १७. च भ$_1$ भ$_2$–°तो नः प्रजाहितः । १८ च भ$_1$ भ$_2$–°दास्तु तथास्य वै । १९. च भ$_1$ भ$_2$–सह देवगुह्यकैः । २०. च भ$_1$ भ$_2$–गन्धर्वयक्षोरगराक्षसोत्तमः । २१. च भ$_1$ भ$_2$–वर्जं–तत्राशु स यत्र गुह्यकः ॥

ततोऽर्क-वैश्वानर-काञ्चन-प्रभं[1]
सुतं तम्[2] उत्सङ्ग-गतं[2] सदा-गतेः[3] ।
चतुर्-मुखं(?खः)[4] प्रेक्ष्य कृपाम् अथाऽकरोत्[4]
११५] स देव-गन्धर्व-महर्षि-राक्षसैः[5] ॥६८॥ [६५

इत्यार्षे रामायण उत्तर-काण्डे वायुप्रदर्शनं[6]
नामाऽष्टात्रिंशः सर्गः ॥ ३८ ॥

---

## [ वं–३६,४० ] = [ एकोनचत्वारिंशः सर्गः ] = [ दा–३६ ]

ततः पिता-महं दृष्ट्वा वायुः पुत्र-वधाऽर्दितः ।
१] शिशु-कं[7] पुत्रम्[7] आ-दाय ह्य्[8] उत्-तस्थौ वेगवत्-तरः[8] ॥ १ ॥ [१
चलत्-कुण्डल-मौलिः स तपनीय-विभूषणः[9] ।
२] पादयोर् न्य्-अपतद् वायुः शिरोऽव-स्थाप्य वेधसः ॥ २ ॥ [२
तं तु वेद-वता[10] तेन[10] लम्बाऽऽभरण-शोभिना ।
३] वायुम् उत्थाप्य हस्तेन शिशुं तं परि-स्पृष्टवान्[11] ॥ ३ ॥ [५
स्पृष्ट-मात्रस्[12] तु देवेन स[13] तदा[13] पद्म-योनिना ।
४] जल-सिक्तं यथा सस्यं पुनर् जीवितम्[14] आप्तवान्[14] ॥ ४ ॥ [६
प्राण-वन्तं सुतं[15] दृष्ट्वा प्राणो गन्ध-वहो मुदा ।
५] चचार सर्व-भूतेषु ह्य्[16] अ-विरुद्धं[16] यथा पुरा ॥ ५ ॥ [७
मरुद्-रोग-विनिर्मुक्ताः[17] प्र-जा[18] वै मुदिता भवन्[18] ।
६] शीताऽऽतप-विनिर्मुक्ताः[19] पद्मिन्य इव पुष्पिताः[20] ॥ ६ ॥ [८

---

१. अ रा$_1$ ल$_1$ ल$_2$ ल$_3$ ब–हि वैश्वानरकांचनार्चिषं । २. अ ल$_2$ ल$_3$–अथोत्सं° । च–समुत्सं° । ३. भ$_1$–°गतिः । ४. अ रा$_1$ ल$_2$ ल$_3$ ब–°मुखो-द्दिष्टकृ° । ल$_1$ प्र–°मुखोद्दिश्य । च भ$_1$ भ$_2$–°क्ष्य मुदं यथा° । ५. च भ$_1$ भ$_2$–वर्जं–घृतं सगंधर्वसयक्षराक्षसैः । ६. च भ$_1$ भ$_2$–हनुमज्जन्मवर्णनं । रा$_1$–वायुपुत्रदर्शनं । ७ च भ$_1$ भ$_2$–शिशुं पुत्रकम् । ८. च भ$_1$ भ$_2$–वर्जं–उत्तस्थौ वायुरुत्तमः । ९. च भ$_1$ भ$_2$–वर्जं–°मौलीयस्तपनीयविभूषितः । १०. च भ$_1$ भ$_2$–धौतपटांतेन । ११. च ल$_1$ ब–परिमृष्ट° । १२. च–परिमृष्टस् । भ$_1$ भ$_2$–परिस्पृष्टस् । १३. च भ$_1$ भ$_2$–पाणिना । १४. अ–°समाप्नुयात् । च भ$_2$–°तवांस्तदा । भ$_1$–°तवांस्तथा । १५. च भ$_1$ भ$_2$–वर्जं–तु तं । १६. च भ$_1$ भ$_2$–वर्जं–अवि° । १७. च भ$_1$ भ$_2$–°क्रोधाद्वि° । ल$_1$–°क्रोगाद्वि° । १८. च भ$_2$–ताः प्रजाः सुखिता भ° । भ$_1$–नास्ति । १९. च भ$_2$–शीतदाहवि° । भ$_1$–नास्ति । २०. च भ$_1$ भ$_2$–वर्जं–साम्बुजाः ॥

ततस् त्रि-युग्मस् त्रि-ककुत्[1] त्रि-धामा त्रि-घृतोऽच्युतः ।

७] उवाच[2] देवता ब्रह्मा[3] मारुत-प्रिय-काम्यया[3] ॥७॥ [९

भो महेन्द्राऽग्नि-वरुण-महेश्वर-धनेश्वराः ।

८] जानताम्[4] अपि वः सर्वं[5] हितं वक्ष्यामि[5] श्रूयताम् ॥८॥ [१०

अनेन शिशुना कार्यं[6] भवतां[6] सं-भविष्यति[6] ।

९] तद् ददाम[7] वरान् सर्वे मारुतस्याऽस्य[8] तुष्टये[8] ॥९॥ [११

ततः सहस्र-नयनः पीत-रक्तांऽशु-भासुराम्[9] ।

१०] कुशेशय-मयीं मालां समुत्-क्षिप्येदम् अब्रवीत् ॥१०॥ [१२

मत्-करोत्सृष्ट-वज्रेण गिरौ[10] हन्वा व्यव-स्थितः[10] ।

११] नाम्नैष कपि-शार्दूलो हनु-मांस् तु भविष्यति ॥[11]११॥ [१३

अहम् एवाऽस्य[12] दास्यामि[12] परमं वरम् उत्-तमम्[13] ।

१२] अद्य-प्रभृति वज्रस्य ममाऽवध्यो भविष्यति ॥[14]१२॥ [१४

मार्तण्डस् त्व् अब्रवीत् तत्र भग-वांस् तिमिराऽपहः[15] ।

१३] तेजसोऽस्य मदीयस्य ददामि शतम् अंश-कम् ॥१३॥ [१५

यदा तु शास्त्रम् अध्येतुं मतिर्[16] अस्य भविष्यति ।

१४] तदा[17] शास्त्रं तु[17] दास्यामि येन वाग्मी भविष्यति ॥१४॥ [१६

वरुणोऽस्य[18] वर प्राऽदान् नाऽस्य[18] मृत्युर् भविष्यति[18] ।

१५] वर्षाऽयुत-शतेनाऽपि मत्-पाशाद् उदकाद् अपि ।

यम-दण्डाद् अवध्य-त्वम् अरोगि-त्वं च नित्य-शः ॥१५॥ [१७

---

१. अ ल$_2$ प्र–त्रिगुणस् । २. अ ल$_2$–तदा च । ३. च भ$_1$ भ$_2$–वर्जं–प्राप्ता मारुतेः प्रि° । ४. च भ$_1$ भ$_2$–सर्वेषां वः परं देवा । ५. च भ$_1$ भ$_2$–वर्जं–सर्वत्र । ६. च भ$_1$ भ$_2$–कर्तव्यं वो भ° । ल$_1$–सर्वेषां नो भ° । ७. च–अथास्य । भ$_1$ भ$_2$–दद्मोऽस्य । ८. च भ$_1$ भ$_2$–°तेर्मुदिता वयं । ९. च भ$_1$ भ$_2$–रक्ताम्बर-धरः प्रभुः । १०. च भ$_1$ भ$_2$–यस्मादेष हनौ ततः । ११. च भ$_1$ भ$_2$–वर्जं–नामैतत्कपिशार्दूल भवताद्धनुमानिति । १२. अ ल$_2$–°वानुयास्यामि । ल$_3$ ब– °व प्रदा° । १३. च भ$_1$ भ$_2$–अद्भुतम् । १४. टि.–च भ$_1$ भ$_2$–भिक्षेष्वयमर्भोऽस्मिन् भ्रष्ट इव सत्यधिकः पा । च भ$_1$ भ$_2$–वर्जं–नामुं वज्राधिकं चास्त्रं प्रहरिष्यति मारुतिम् । अधिकश्च पाठः–अवध्योयमवध्योयमजरोऽमर एव च । १५. च भ$_1$ भ$_2$–°हा । १६. च भ$_1$ भ$_2$–शक्तिर् । १७. च भ$_1$ भ$_2$ ल$_1$ प्र–तदाऽस्य शास्त्रं । १८. च भ$_1$ भ$_2$–°णश्च । १९. अत आरभ्य अ ल$_2$–१६शश्लोकस्य ३-यपादं यावन्नास्ति ॥

१६] दिदेशाऽस्य[1] वरं तुष्टो ह्य् अ-विषादं च सं-युगे ।
गदेयं मामकी[2] चैव सं-युगे न हनिष्यति ॥१६॥
१७] इत्य् एवं वर-दः[3] प्राऽऽह तदा ह्य् एकाऽक्ष-पिङ्गलः । [१८
मत्-तो गदाऽऽयुधा(त्)[4] पाशाद्[4] अ-वध्योऽयं भविष्यति॥१७॥[१९पू
१८] इत्य् एवं शं-करेणाऽपि[5] दत्तोऽस्य[5] परमो वरः । [२०उ
सर्वेषां च त्रि-शूलानाम् अ-वध्योऽयं भविष्यति ॥[6]१८॥ [१९उ
सर्वेषां ब्रह्म-दण्डानाम् अ-वध्योऽयं भविष्यति ।[7]
१९] दीर्घाऽऽयुः सु-महाऽऽत्मा च इति ब्रह्माऽब्रवीद् वचः ॥१९॥ [२१
विश्व-कर्मा तु दृष्ट्वैनं[8] बालसूर्योपमं[9] शिशुम् ।
२०] शिल्पिनां प्र-वरः प्राऽदाद् वरम् अस्य[10] महा-मतिः[10] ॥२०॥ [२२
विनिर्-मितानि दैवानि देवानाम् आ-युधानि[11] च[11] ।[12]
२१] तेषां सङ्ग्राम-काले तु अ-वध्योऽयं भविष्यति ॥[13]२१॥[२४
ततः सुरैस् तु स-हितो दृष्ट्वा ह्य् एनम् अलं-कृतम् ।[14]
२२] चतुर्-मुखो[15] हृष्ट-मुखो[15] वायुम् आह जगद्-गुरुः ॥२२॥ [२५
अ-मित्राणां[16] भयं कर्ता[16] मित्राणाम् अभय-प्रदः ।
२३] अ-जेयो भविता पुत्रस् तव मारुत मारुतिः ॥२३॥ [२६
रावणोत्सादनाऽर्थानि राम-प्रिय-कराणि च ।[17]
२४] रोम-हर्ष-कराण्य् एष कर्ता कर्माणि सं-युगे ॥२४॥ [२८
वं४०,] एवम् उक्त्वा समासेन[18] त्रि-दशास् ते सम्-ईरणम्[18] ।
१] यथाऽऽगतं ययुः सर्वे पितामह-पुरो-गमाः ॥२५॥ [२९
सोऽपि गन्ध-वहस् तत्र प्र-गृह्य सुतम् आत्मनः ।
२] अञ्जनायास् तम् आ-ख्याय वर-दानं विनिः-सृतः ॥२६[19]॥ [३०

१. रा$_1$ ल$_3$-दिदेश तस्य । प्र-वित्तेशोऽस्य । २. रा$_1$ ल$_3$ ब प्र-मामका । ३. रा$_1$ ल$_3$ ब प्र-धनदः । ४ च भ$_1$ भ$_2$ प्र-°धानां च । ल$_1$ ब-°धानां तु । ५. च भ$_1$ भ$_2$-°णास्य दत्तो वै । ६. च भ$_1$ भ$_2$-नास्ति । ७. ल$_1$-नास्ति । ८. अ भ$_1$ भ$_2$ ल$_2$ दृष्ट्वैव । ९. च भ$_1$ भ$_2$-°सूर्यमिभं । १०. च भ$_1$ भ$_2$-अस्मै महात्मने । ११. ल$_1$-°धान्यपि । १२. च भ$_1$ भ$_2$-मन्निमित्तानि देवानामायुधानीह यानि तु । १३ च भ$_1$ भ$_2$-°लेऽयमवध्यो भविता सदा । १४. च भ$_1$ भ$_2$-ततः सुराणां प्रवरो दृष्ट्वा वरसमन्वितं । १५. च भ$_1$ भ$_2$-°मुखस्तुष्टमना । १६. च भ$_1$ भ$_2$-एषोऽमित्रभयंकारी । १७. च भ$_1$ भ$_2$-°र्थाय राघवप्रीणनाय च । १८. च भ$_1$ भ$_2$-तमामन्त्र्य मारुतं तेऽमराः शुभाः । १९. च भ$_1$ भ$_2$-सोऽपि गंधवहः पुत्रं प्रगृह्य गृहमानयत् । अजंनायै तदाचख्यौ वरं दत्तमिति प्रभुः ॥

प्राऽऽप्य[1] नाऽति-वयस्[1] त्व् एष वर-दान-बलाऽन्वितः ।
३] बलेनाऽऽत्मनि सं-स्थेन ह्य्[2] अपूर्यत[2] इवाऽर्णवः ॥२७॥ [३१
आ-पूर्यमाणस् तरसा ह्य्[3] एष वानर-पुङ्गवः[3] ।[4]
४] आ-श्रमेषु महर्षीणाम् अप-राध्यति निर्-भयः ॥२८॥ [३२
स्रुग्-भाण्डं दहनाऽऽज्यं[5] च वल्कलान्य् अजिनानि च ।
५] भग्न-विच्छिन्न-विध्वस्त-संशीता(?र्णा)नि[6] करोत्य्[6] अयम् ॥२९॥[३३
सर्वेषां ब्रह्म-दण्डानाम् अ-वध्यो ब्रह्मणा कृतः । [३४उ
६] जानन्त[7] ऋषयस् ते वै[7] क्षमन्ते तस्य शक्ति-तः ॥३०॥ [३५
यदा केसरिणा ह्य् एष वायुनाऽञ्जनया[8] तथा[8] ।
७] प्रति-षिद्धोऽपि मर्यादां लङ्घयत्य् एष वानरः ॥३१॥ [३६
तदा महर्षयः क्रुद्धा भृग्व्-अङ्गिरस-वंश-जाः ।
८] शेपुर् एनं रघु-श्रेष्ठ[9] नाऽति-क्रुद्धाऽति-मन्यवः[9] ॥३२॥ [३७
बाधसे यत् समा-श्रित्य बलम् अस्मान् प्लवं-गम ।
९] न[10] दीर्घ-कालं वेत्ताऽसि तस्मात्[11] त्वं शाप-मोहितः[11] ॥३३॥ [३८
१०उ] ततस् तु[12] हत-तेजौजा[12] महर्षि-वचनौजसा ।
तान्य्[13] एव आ-श्रमाण्य् एष[13] मृदु-भाव-गतोऽचरत्[14] ॥३४॥ [३९
११] अथर्क्षो[15] विरजा नाम वालि-सुग्रीवयोः पिता ।
सर्व-वानर-राजाऽऽसीत् तेजसाम् इव भास्-करः ॥[16]३५॥ [४०
१२] स तु राज्यं चिरं कृत्वा वानराणां हरीऽऽश्वरः[17] ।
तदर्क्षो[18] विरजा नाम काल-धर्मम् उपाऽऽगतः ॥३६॥ [४१
१३] तस्मिन्न् अस्तम्-इते वाली[19] मन्त्रिभिर् मन्त्र-कोविदैः ।
पित्र्ये[20] पदे कृतो राम[21] सु-ग्रीवो वालिनः पदे ॥३७॥ ४२]

---

१. च भ$_1$ भ$_2$-वर्जं-प्राप्यैव निर्दयस् । २. च भ$_1$ भ$_2$-वर्जं-आपू° । ३. अ-बलवानेष वानरः । ४. भ$_1$-नास्ति । ५. भ$_1$ भ$_2$-वर्जं-°नाद्यं । टि.-पूप° =दधन*->=दधि-? । ६. च भ$_1$ भ$_2$-°विध्वंसं समंतादकरोद् । ७. च भ$_1$ भ$_2$-°न्तो मुनयस्तद्धि । ८. च-°याऽपि च । भ$_1$ भ$_2$-°याऽपि वा । ९. च भ$_1$ भ$_2$-नरश्रेष्ठ तेऽपि क्रुद्धाति° । १०. च भ$_1$ भ$_2$-तद् । ११. च भ$_1$ भ$_2$-नास्मच्छापविमो° । १२. भ$_1$-तस्य तु तत्तेजो । १३. च भ$_1$ भ$_2$-अथाश्रमाणि तान्येषां । प्र-एष आश्रमाणि तान्येव । १४. च भ$_1$ भ$_2$-°गतिश्चरन् । १५. च भ$_2$-अथाक्षि । १६. च भ$_1$ भ$_2$-सर्ववानरतेजस्वी दीप्तिमान्भास्करो यथा । १७. च भ$_1$ भ$_2$-महेश्वरः । १८. च भ$_2$-तदाक्षि । प्र-तदक्षो । १९. च भ$_1$ भ$_2$-राम । २०. च भ$_1$ भ$_2$-पैत्रे । २१. अ रा$_1$ ल$_2$ ल$_3$ ब प्र-नाम । च भ$_1$ भ$_2$-वाली ॥

१४] सुग्रीवेण समं त्व् अस्य अ-द्वेष्यं[1] छिद्र-वर्जितम्[1] ।
अ-पार्य[2] सख्यम् अभवद् अनिलस्य यथाऽग्निना ॥३८॥ [४३
१५] एष शाप-वशाद् एव न वेद बलम् आत्मनः ।[3]
१६पू] वालि-सुग्रीवयोर् वैरं यदा[4] राम समुत्थितम् ॥३९॥ [४४
N] न क्षमे(?च) चैष सु-ग्रीवं वध्यमानं हि वालिना ।[5]
१६ उ] [6]यद्य् अवौ(?भो)त्स्यद् अयं धी-मान्[6] बलम् आत्मनि मारुतिः ४० [४५
ऋषि-शापाद्[7] बल-वतस् तद्[7] एष कपि-सत्तमः ।
N] सिंहः पिञ्जर-बन्ध-स्थो यथा तत् सहते रणे ॥[8]४१॥ [४६
पराऽऽक्रमोत्साह-मति-प्रभावैः[9]
सौशील्य-माधुर्य-नयाऽनयैश् च ।
गाम्भीर्य-चातुर्य-सुवीर्य-धैर्यैर्
१७] हनू-मतो[10] नाऽभ्य्-अधिकोऽस्ति लोके[10] ॥४२॥ [४७
अयं[11] पुनर्[11] व्या-करणं ग्रहीष्यन्
सूर्योन्मुखः पृष्ठ-गतः[12] कपीऽन्द्रः ।
उद्यद्-गिरेर्[13] अस्त-गिरिं जगाम
१८] ग्रन्थं महद् धारयद्[14] अ-प्रमेयम्[15] ॥४३॥ [४८
यथाऽनिल-क्षोभित-सागरस्य[16]
लोकान्[17] दिधक्षोर् इव पावकस्य ।
लोकक्षयोत्थस्य[18] यथाऽन्त-कस्य[18]
१९] हनू-मतः स्थास्यति कः पुरस्-तात् ॥४४॥ [५१

---

१. भ$_1$ भ$_2$–द्वेषछिद्रविव° । २. भ$_1$–अजयं । भ$_2$–अक्षयं । ३. च–नास्ति । ४. अ रा$_1$ ल$_2$ ल$_3$ ब–यथा । ५. च भ$_1$ भ$_2$–तथैव राम सुग्रीवस्तदाऽक्लिश्यत वालिना । प्र–नास्ति । ६. अ ल$_1$ ल$_2$ ल$_3$ ब प्र–अबोत्सीदयं । च भ$_1$ भ$_2$–तदावेत्स्यत् कपिश्चैष । ७. च भ$_1$ भ$_2$–°शापवशान्मूढो यद् । ८. च भ$_1$ भ$_2$–°रुद्धो वा ह्यसाध्य स हतो भवेत् । ९. च भ$_1$ भ$_2$–°मतिप्रतापैः । १०. च–°तः को ह्यधि° । भ$_1$–°तः को ह्यस्ति परं हि लोके । भ$_2$–°तः स्थास्यति कः पुरस्तात् । ११. च भ$_1$ भ$_2$–पुराह्यसौ । १२. च भ$_1$ भ$_2$–°गतिः । १३. च भ$_2$ प्र–उदग्गिरेर् । १४. ल$_1$–°यन् । १५ च भ$_1$ भ$_2$–°मेयः । १६. च भ$_1$ भ$_2$–वायोरिव क्षो° । १७ अ ब–रूपं । १८. च भ$_1$ भ$_2$–प्रजा जिहीर्षोरिव चान्तकस्य ॥

एषो[1] य(?अ)थाऽन्ये च तथा[1] कपीऽन्द्राः
सुग्रीव-मैन्द-द्विविदाः स-नीलाः ।
स-तार-तारेय-नलाः स-रम्भास्
२०] त्वत्-कारणाद् राम सुरैस् तु[2] सृष्टाः[2] । [५२
महीं गता देव-गणाः सम्-अग्रा[3]
N] महा-बला रावण-नाश-हेतोः ॥[4]४५॥ [५४पू
एतत् ते देव कथितं यन् मां पृच्छसि राघव ।[5]
२१] हनू-मतोऽस्य बाल-त्वे कर्मणा(?णो)ऽद्भुत-कर्मणः[6] ॥४६[7]॥ [५५

१. च भ१ भ२-एतेपि चान्येपि महाक° । २. अ ल२-विसृष्टाः । च भ२-हि सृष्टाः । ३. अ ल१ ल२-महीन्द्र । ४. भ१-नास्ति । ५. अ रा१ ल२ ल३ ब-°यथा पृ° । च भ२-तदेतत्कथितं तुभ्यं यन्मा त्वं परिपृच्छसि । ६. च भ१ ल१-कर्माण्यद्भु° । भ२ प्र-वर्ज-कर्मण्यद्भु° ।

७. अतः परमधिकः पाठः—च भ२-एतत्पुरा राम हरीश्वरस्य वृत्तं शिशोश्चैव यदद्भुतं विभो । हनूमत्यतिबलप्रदानं बलं च वीर्यं च पराक्रमं च ॥
इत्यार्षे रामायण उत्तर-काण्डे हनूमदुत्पत्तिर्नाम सर्गः ॥

[ दा-३७, प्र०-१ ]

एतच्छ्रुत्वा तु निखिलं राघवोऽगस्त्यमब्रवीत् । य एषर्क्षराजो नाम वालिसुग्रीवयोः पिता ॥ जननी काऽस्य भवनं तत्त्वया परिकीर्तितम् । वालिसुग्रीवयोर्ब्रह्मन्माता का नामतः स्मृता ॥ एतद्ब्रह्मन्समाचक्ष्व कौतूहलमिदं हि नः । सम्प्रोक्तो राघवेणैवमगस्त्यो वाक्यमब्रवीत् ॥ शृणु राम कथामेतां यथापूर्वं समागतः । नारदः कथयामास ममाश्रयमुपागतः ॥ कदाचिदटमानोसावतिथिर्मामुपाऽऽगतः । अर्चितस्तु यथान्यायं विधिदृष्टेन कर्मणा ॥ सुखाऽऽसीनः कथामेतां मया पृष्टः स कौतुकात् । कथयामास धर्माऽऽत्मा महर्षे श्रूयतामिति ॥ मेरुर्नगवरः श्रीमाञ्जाम्बूनदमयः शुभः । तस्य यन्मध्यमं शृङ्गं सर्वदैवतपूजितम् ॥ तस्मिन्दिव्या सभा रम्या ब्रह्मणः शतयोजना । तस्यामास्ते यदा देवः पद्मयोनिश्चतुर्मुखः ॥ योगमभ्यसतस्तस्य नेत्रेभ्यो यद्रसोऽस्रवत् । तद्गृहीतं भगवता पाणिना चाऽर्चितं तु तत् ॥ निक्षिप्तमात्रं तद्भूमौ ब्रह्मणा लोककर्तृणा । तस्मिन्नश्रुकणे राम वानरः सम्बभूव ह ॥ उत्पन्नमात्रस्तु तदा वानरः स नरोत्तम । समाश्वास्य प्रियैर्वाक्यैरुक्तः किल महात्मना ॥ पश्य शैलं सुविस्तीर्णं सुरैरध्युषितं सदा । अस्मिन्रम्ये गिरिवरे बहुमूलफलाऽशनः ॥ ममाऽन्तिकचरो नित्यं भव वानरपुंगव । कंचित्कालमिहाऽऽस्व त्वं ततः श्रेयो भविष्यति ॥ एवमुक्तः स वै तेन ब्रह्मणा वानरोत्तमः । प्रणम्य शिरसा पादौ देवदेवस्य राघव ॥ उक्तवान् लोककर्तारमादिदेवं प्रजापतिम् । यथाऽऽज्ञापयसे

देव स्थितोऽहं तव शासने ॥ एवमुक्त्वा हरिर्देवं ययौ हृष्टमनास्तदा । स तदा द्रुमषण्डेषु फलपुष्पवनेषु च ॥ भ्रमन्नतिबलः शीघ्रं वने फलकृताऽशनः । चिन्वन्मधूनि मुख्यानि चिन्वन्पुष्पाण्यनेकशः ॥ दिने दिने च सायाह्ने ब्रह्मणोऽतिकमागमत् । गृहीत्वा राम मुख्यानि पुष्पाणि च फलानि च ॥ ब्रह्मणो देवदेवस्य पादमूले न्यवेदयत् । एवं तस्य गतः कालो बहुः पर्यटतो गिरिम् ॥ कस्यचित्त्वथ कालस्य समतीतस्य राघव । ऋक्षराड् वानरवृषस्तृष्णया परिपीडितः ॥ उत्तरं मेरुशिखरं गतस्तत्र च दृष्टवान् । नानाविहङ्गसंघुष्टं प्रसन्नसलिलाऽऽशयम् ॥ चलत्केसरमात्मानं कृत्वा तस्य तटे स्थितः । ददर्श तस्मिन्सरसि वक्त्रच्छायामथात्मनः ॥ कोऽयमस्मिन् मम रिपुर्वसत्यंतर्जले महान् । रूपं चांतर्गतं तत्र वीक्ष्य तत्पश्यतो हरेः ॥ क्रोधाऽऽविष्टमना ह्येष नियतं माऽवमन्यते । तदस्य दुष्टभावस्य करिष्यामि विनिग्रहम् ॥ एवं संचिंत्य मनसा स वै वानरचापलात् । आप्लुत्य चापतत्तस्मिन्ह्रदे वानरसत्तमः ॥ उत्प्लुत्य तस्मात्स ह्रदादुत्थितः प्लवगः पुनः । तस्मिन्नेव क्षणे राम स्त्रीत्वं प्राप स वानरः ॥ मनोज्ञरूपा सा नारी लावण्यललिता शुभा । विस्तीर्णजघना सुभ्रूर्नीलकुंचितमूर्धजा ॥ मुग्धा सस्मितवक्त्रा च पीनस्तनतटा शुभा । ह्रदतीरे स्थिता भाति ऋजुयष्टिलता यथा ॥ त्रैलोक्यसुन्दरी कांता सर्वचित्तप्रमाथिनी । लक्ष्मीव पद्मरहिता पद्मज्योत्स्नेव निर्मला ॥ रूपेणाऽभ्यभवत्सा तु श्रियं देवीमुमा यथा । द्योतयंती दिशः सर्वास्तत्राभूत्सा वरांगना ॥ एतस्मिन्नंतरे देवो निवृत्तः सुरनायकः । पादावुपास्य देवस्य ब्रह्मणस्तेन वै पथा ॥ तस्यामथ च वेलायामादित्योऽपि परिभ्रमन् । तस्मिन्नेव पदे सोऽभूद्यस्मिन्सा तनुमध्यमा ॥ युगपत्सा तदा दृष्टा देवाभ्यां सुरसुन्दरी । कंदर्पवशगौ तौ तु दृष्ट्वा तां सम्बभूवतुः ॥ ततः क्षुभितसर्वाऽगौ सुरेन्द्रौ पन्नगाविव । तद्रूपमद्भुतं दृष्ट्वा त्याजितौ धर्म(?धैर्य)मात्मनः ॥ ततस्तस्याः सुरेन्द्रस्य स्कन्नं शिरसि पातितम् । अनासाद्यैव तां नारीं स निवृत्तमदोऽभवत् । ततः सा वानरपतिं जज्ञे वानरमीश्वरम् ॥ अमोघरेतसस्तस्य वानर(?सव)स्य महात्मनः । वालेषु पतितं वालं(?बीजं) वाली नाम्ना बभूव सः ॥ भास्करेणापि तस्यां वै कंदर्पवशवर्तिना । बीजं निसि(?षि)क्तं ग्रीवायां विधानमनुवर्तिना ॥ तेनाऽपि सा वरतनुः प्रोक्ता किंचिद्वचः शुभम् । निवृत्तमदनश्चाऽथ सूर्योऽपि समपद्यत । ग्रीवायां पतिते बीजे सुग्रीवः समजायत ॥ एवमुत्पाद्य तौ वीरौ वानरेन्द्रौ महाबलौ । दत्त्वा तु काञ्चनीं मालां वानरेन्द्रस्य वालिनः । अक्षयां गुणसम्पूर्णां शक्रस्तु त्रिदिवं ययौ ॥ सूर्योऽपि स्वसुतस्यैनं निरूप्य पवनाऽऽत्मजम् । कृत्येषु व्यवसायेषु जगाम सविताऽम्बरम् ॥ तस्यां रजन्यां व्युष्टायामुदिते च दिवाकरे । स तद्वानररूपं तु प्रतिपेदे पुनर्नृप । स एव वानरो भूत्वा पुत्रौ स्वस्य प्लवङ्गमौ ॥ पिङ्गेक्षणौ हरिवरौ बलिनौ कामरूपिणौ । मधून्यमृतकल्पानि पायितौ तेन तौ तदा ॥ गृहीत्वर्क्षरजास्तौ तु ब्रह्मणोऽन्तिकमागमत् । दृष्ट्वर्क्षरजसं

पुत्रं ब्रह्मा लोकपितामहः । बहुशः सान्त्वयामास पुत्राभ्यां सहितं हरिम् ॥ सान्त्वयित्वा ततः पश्चाद् देवदूतमथादिशत् । गच्छ मद्वचनाद् दूत किष्किन्धां नाम वै शुभाम् ॥ सा ह्यस्य गुणसम्पन्ना महती च पुरी शुभा । तत्र वानरयूथानि सुबहूनि वसन्ति च । बहुरत्नसमाकीर्णा वानरैः कामरूपिभिः ॥ पण्यापण्यवती दुर्गा चातुर्वर्ण्यपुरस्कृता । विश्वकर्मकृता दिव्या मन्नियोगाच्च शोभना ॥ तत्रर्क्षरजसं दृष्ट्वा सपुत्रं वानरर्षभम् । यूथपालान् समाहूय यांश्चाऽन्यान्प्राकृतान्हरीन् ॥ तेषां सम्भाव्य सर्वेषां मदीयं जनसंसदि । अभिषेचय राजानमारोप्य महदासने ॥ दृष्टमात्राश्च ते सर्वे वानरेण च धीमता । अथर्क्षरजसो नित्यं भविष्यन्ति वशाऽनुगाः ॥ इत्येवमुक्ते वचने ब्रह्मणा तं हरीश्वरम् । पुरतःकृत्य दूतोऽसौ प्रययौ तां गुहां शुभाम् ॥ स प्रविश्याऽनिलगतिस्तां गुहां वानरोत्तमः । स्थापयामास राजानं पितामहनियोगतः ॥ राज्याभिषेकविधिना स्थापितोऽभ्यर्चितस्तदा । स बद्धमुकुटः श्रीमानभिषिक्तः स्वलंकृतः ॥ आज्ञापयामास हरीन्सर्वान्मुदितमानसः । सप्तद्वीपसमुद्रायां पृथिव्यां ये प्लवङ्गमाः ॥ वालिसुग्रीवयोरेवाऽस्त्वेष त्वृक्षरजाः पिता । जननी चैष तु हरिरित्येतद्भद्रमस्तु ते । यश्चैतच्छ्रावयेद् विद्वान्यश्चैतच्छृणुयान्नरः । सिध्यन्ति सर्वकार्यार्था मनसो हर्षवर्धनाः ॥ एतच्च सर्वं कथितं मयाऽपि प्रविस्तरेणेह यथाऽर्थतस्तत् । उत्पत्तिरेषा रजनीचराणामुक्त्वा तथैवेह हरीश्वराणाम् ॥

इत्यार्षे रामायण उत्तरकाण्ड अष्टात्रिंशः सर्गः ॥ ३८ ॥

[ दा, ३७, प्र०-२ ]

एतां श्रुत्वा कथां दिव्यां पौराणीं राघवस्तदा । भ्रातृभिः सहितो वीरो विस्मयं परमं ययौ ॥ राघवोऽथ ऋषेर्वाक्याद्धृष्टो वचनमब्रवीत् । कथेयं महती पुण्या त्वत्प्रसादाच्छ्रुता मया ॥ बृहत्कौतूहलेनास्मि संवृतो मुनिपुङ्गव । उत्पत्तिर्यादृशी दिव्या वालिसुग्रीवयोर्द्विज ॥ किं चित्रं मम ब्रह्मर्षे सुरेन्द्रतपनावुभौ । जातौ वानरशार्दूलौ बलिनौ बलिनां वरौ ॥ एवमुक्ते तु रामेण कुम्भयोनिरभाषत । एवमेतन्महाबाहो वृत्तमासीत्पुरा किल ॥ अथाऽपरां कथां दिव्यां शृणु राजन्पुरातनीम् । यदर्थं राम वैदेही रावणेन ह(?हृ)ता पुरा ॥ तत्राऽहं कीर्तयिष्यामि समाधिं श्रवणे कुरु । पुरा कृतयुगे राम प्रजापतिसुतं प्रभुम् ॥ सनत्कुमारमासीनं रावणो राक्षसाऽधिपः । ददर्श सूर्यसंकाशं ज्वलितमिव[1] तेजसा ॥ विनयाऽवनतो भूत्वा त्वभिवाद्य कृतांजलिः । उक्तवान्रावणो राम तमृषिं सत्यवादिनम् ॥ को ह्यस्मिन्प्रवरो लोके देवानां बलवत्तरः । यं समाश्रित्य विबुधा जयंति समरे रिपून् ॥ कं यजंति द्विजा नित्यं कं ध्यायंति च योगिनः । एतन्मे शंस भगवन्विस्तरेण तपोधन ॥ विदित्वा हृद्गतं तस्य ध्यानदृष्टिर्महायशाः ।[2] यस्य नाभ्युद्भवो ब्रह्मा विश्वस्य जगतः पतिः ॥

---

१. भ$_2$-ज्वलंतमिव । २. अतः परमधिकः पाठः-भ$_2$-उवाच रावणं प्रेक्ष्य श्रूयतामिति पुत्रक । यो वै भर्ता जगत्कृत्स्नं यस्योत्पत्तिर्न विद्महे । सुरासुरैर्नतो नित्यं हरिर्नारायणः प्रभुः ॥

येन सर्वमिदं सृष्टं विश्वं स्थावरजङ्गमम् । ते समाश्रित्य विबुधा विधिना हरिमध्वरे । पिबंति ह्यमृतं चैव मानवाश्च यजंति तम् ॥ पुराणैश्चैव वेदैश्च पंचरात्राऽऽगमैरपि । ध्यायंति योगिनो नित्यं क्रतुभिश्च यजंति तम् ॥ दैत्यदानवरक्षांसि ये चाऽन्ये चाऽमरद्विषः । सर्वान् जयति सङ्ग्रामे सदा सर्वैः स पूज्यते ॥ श्रुत्वा महर्षेस्तद्वाक्यं रावणो राक्षसाऽधिपः । उवाच प्रणतो भूत्वा पुनरेव महामुनिम् । दैत्यदानवरक्षांसि ये हताः समरे पुरा ॥ कां गतिं प्रतिपद्यन्ते किं वा ते हरिणा हताः ॥ रावणस्य वचः श्रुत्वा प्रत्युवाच महामुनिः । दैवतैर्निहता नित्यं प्राऽऽप्नुवन्ति नभस्तलम् ॥ पुनस्तस्मात्परिभ्रष्टा जायन्ते वसुधातले । पूर्वाऽर्जितैः सुखैर्दुःखैर्जायन्ते च म्रियन्ति च ॥ ये ये हताश्चक्रधरेण राजन् त्रैलोक्यनाथेन जनार्दनेन । ततो गताः स्वं निलयं नरेन्द्राः क्रोधोऽपि देवस्य वरेण तुल्यः ॥ श्रुत्वा ततस्तद्वचनं निशाचरः सनत्कुमारस्य मुखाद्विनिर्गतम् । तथा प्रहृष्टः स बभूव विस्मितः कथं नु यास्यामि हरिं महाहवे ॥

इत्यार्षे रामायण उत्तरकाण्डे सर्गः ॥३९॥

[दा-३७, प्र०-३]

एवं चिन्तयतस्तस्य रावणस्य दुरात्मनः । पुनरेवापरं वाक्यं व्याजहार महामुनिः ॥ मनसश्चेप्सितं यत्तु भविष्यति तदाहवे । सुखी भव महाबाहो किंचित्कालमुदीक्षय ॥ एवं श्रुत्वा महाबाहुस्तमृषिं प्रत्युवाच ह । कीदृशं लक्षणं तस्य ब्रूहि सर्वमशेषतः ॥ राक्षसेशवचः श्रुत्वा स मुनिः प्रत्युवाच तम् । श्रूयतां सर्वमाख्यास्ये तव राक्षसपुङ्गव ॥ स हि सर्वगतो देवः सूक्ष्मोऽव्यक्तः सनातनः । तेन सर्वमिदं व्याप्तं त्रैलोक्यं सचराऽचरम् ॥ स भूमौ दिवि पाताले पर्वतेषु वनेषु च । ओङ्कारश्चैव सत्यं च सावित्री पृथिवी च सः ॥ धराधरधरो देवो ह्यनन्त इति विश्रुतः । अहश्च रात्रिश्च उभे च सन्ध्ये दिवाकरश्चैव यमश्च सोमः । स एव कालो ह्यनिलोऽनलश्च ब्रह्मेन्द्ररुद्राश्च स एव चापः ॥ विद्योतति विज्वलति भाति च वाति लोकान् सृजत्ययं संहरति प्रशास्ति । क्रीडां करोति जगति प्रथितो महाऽऽत्मा विष्णुः पुराणः पुरुषोऽघनाशनः ॥ अथवा बहुनाऽनेन किमुक्तेन दशाऽऽनन । तेन सर्वमिदं व्याप्तं त्रैलोक्यं सचराऽचरम् ॥ नीलोत्पलदलश्यामः किञ्जल्काऽरुणवाससः । प्रावृट्काले यथा व्योम्नि सतडित्तोयदो यथा ॥ श्रीमान्मेघवपुः श्यामः शुभपङ्कजलोचनः । श्रीवत्सेनोरसा युक्तः शशाङ्ककृतलक्षणः ॥ तस्य नित्यं शरीरस्था मेघस्येव शतह्रदा । समग्रा रूपिणी लक्ष्मीर्देहमावृत्य तिष्ठति ॥ न स शक्यः सुरैर्द्रष्टुं नाऽसुरैर्न च पन्नगैः । यस्य प्रसादं कुरुते स वै तं द्रष्टुमर्हति ॥ न च यज्ञफलैस्तात न तपोभिश्च सञ्चितैः । शक्यते भगवान्द्रष्टुं न दानेन न चेज्यया ॥ तद्भक्तैस्तद्गतप्राणैस्तच्चित्तैस्तत्परायणैः । शक्यते भगवान्द्रष्टुं ज्ञाननिर्दग्धकिल्बिषैः ॥ अथवा पृच्छ राजेन्द्र यदि तं द्रष्टुमिच्छसि । कथयिष्यामि ते सर्वं श्रूयतां यदि रोचते ॥ कृते युगे

व्यतीते तु मुख्ये त्रेतायुगस्य तु । हितार्थं देवमर्त्यानां भविता नृपविग्रहः ॥ इक्ष्वाकूणां च यो राजा भाव्यो दशरथो भुवि । तस्य सूनुर्महातेजा रामो नाम भविष्यति ॥ महातेजा महाबुद्धिर्महाबलपराक्रमः । महाबाहुर्महासत्त्वः क्षमया पृथिवीसमः ॥ आदित्य इव दुष्प्रेक्ष्यः समरे शत्रुभिः सदा । भविता हि तदा रामो नरो नारायणः प्रभुः ॥ पितुर्नियोगात्स विष्णुर्दण्डके विविधे वने । विचरिष्यति धर्मात्मा सह भ्रात्रा महात्मना ॥ तस्य पत्नी महाभागा लक्ष्मीः सीतेति विश्रुता । दुहिता जनकस्यैषा उत्थिता वसुधा-तलात् ॥ रूपेणाऽप्रतिमा लोके सर्वलक्षणलक्षिता । छायेवाऽनुगता रामं निशाकरमिव प्रभा ॥ शीलाऽऽचारगुणोपेता साध्वी धैर्यसमन्विता । सहस्रांऽशो रश्मिरिव ह्येका मूर्तिरिव स्थिता ॥ एवं ते सर्वमाख्यातं मया रावण विस्तरात् । महतो देवदेवस्य शाश्वतस्याऽव्ययस्य च ॥ एवं श्रुत्वा महाबाहू राक्षसेन्द्रः प्रतापवान् । त्वया सह विरुद्धेच्छुश्चिन्तयामास राघव ॥ सनत्कुमारात्तद्वाक्यं चिन्त्यमानो मुहुर्मुहुः । रावणो मुमुदे श्रीमान्युद्धाऽर्थी विचचार ह ॥ श्रुत्वा शुभां कथां रामो विस्मयोत्फुल्ललोचनः । शिरसश्चालनं कृत्वा विस्मयं परमं गतः ॥ श्रुत्वा तु वाक्यं स नरेश्वरस्तदा मुदा युतो विस्मयमानचक्षुः । पुनश्च तं ज्ञानवतां प्रधानमुवाच वाक्यं वद मे पुरातनम् ॥

इत्यार्षे रामायण उत्तरकाण्डे सर्गः ॥४०॥

[ दा-३७, प्र०-४ ]

ततः पुनर्महातेजाः कुम्भयोनिर्महायशाः । उवाच रामं प्रणतं पितामह इवेश्वरम् ॥ श्रूयतामिति प्रोवाच रामं सत्यपराक्रमम् । कथा-शेषं महातेजा कथयामास स प्रभुः ॥ यथाऽऽख्यानं श्रुतं चैव यथावृत्तञ्च तत्तथा । प्रीताऽऽत्मा कथयामास राघवाय महामतिः ॥ एतदर्थं महाबाहो रावणेन दुरात्मना । सुता जनकराजस्य हृता राम महामते ॥ एतां कथां महाबाहो मेरौ गिरिवरोत्तमे । देवगन्धर्वसिद्धानामृषीणां च महात्मनाम् ॥ कथाशेषं पुनः सोऽथ कथयामास राघवम् । नारदः सुमहातेजाः प्रहसन्निव मानदः ॥ तां कथां शृणु राजेन्द्र महापापप्रणाशिनीम् । यां तु श्रुत्वा महाबाहो ऋषयो दैवतैः सह । ऊचुस्तं नारदं सर्वे हर्षपर्याकुलेक्षणाः ॥ यश्चेमां श्रावयेन्नित्यं शृणुयादपि भक्तितः । स पुत्रपौत्रवान्राम स्वर्गलोके महीयते ॥

इत्यार्षे रामायण उत्तरकाण्डे सर्गः ॥४१॥

[ दा-३७, प्र०-५ ]

ततः स राक्षसो राम पर्यटन्पृथिवीमिमाम् । विजयाऽर्थं महाघोरै राक्षसैः परिवारितः ॥ दैत्यदानवरक्षःसु यं शृणोति बलाधिकम् । तमाऽह्वयत युद्धाऽर्थं रावणो बलदर्पितः ॥ एवं स पर्यटन्सर्वां पृथिवीं पृथिवीपते । ब्रह्मलोकान्निवर्तन्तं समासाद्य स रावणः ॥ व्रजन्तं मेघसृष्टं तमंशुमन्तमिवाम्बुदः । तमभिद्रुत्य प्रीताऽऽत्मा ह्यभिद्रु (?वा)त्य (?द्य)कृता-ऽञ्जलिः । उवाच हृष्टमनसा नारदं रावणस्तदा ॥ आब्रह्मभवनाल्लोकास्त्वया

दृष्टा ह्यनेकशः । कस्मिंल्लोके महाभाग मानवास्तपवत्तराः ॥ योद्धुमिच्छामि तैः सार्धं यथाकामं यदृच्छया । चिन्तयित्वा मुहूर्तं तु नारदः प्रत्युवाच तम् । अस्ति राजन्महाद्वीपं क्षीरोदस्य समीपतः ॥ यत्र ते चन्द्रसङ्काशा मानवाः सुमहाबलाः । महाकाया महावीर्या मेघस्तनितनिःस्वनाः ॥ महामात्रा धैर्यवन्तो महापरिघबाहवः । श्वेतद्वीपे मया दृष्टा मानवा राक्षसाधिप ॥ बलवीर्यबलोपेता यादृशांस्त्वमिहेच्छसि । नारदस्य वचः श्रुत्वा रावणः प्रत्युवाच ह ॥ कथं नारद जायन्ते तस्मिन्द्वीपे महाबलाः । श्वेतद्वीपे कथं वासः प्राप्तस्तैस्तु महाऽऽत्मभिः ॥ एतन्मे सर्वमाख्याहि प्रभो नारद तत्त्वतः । त्वया दृष्टं जगत्सर्वं हस्तामलकवत्सदा ॥ रावणस्य वचः श्रुत्वा नारदः प्रत्युवाच ह । अनन्यमनसो नित्यं नारायणपरायणाः ॥ तदाराधनसक्ताश्च तच्चित्तास्तत्परायणाः । एकान्तभावाऽनुगतास्ते नरा राक्षसाधिप ॥ तच्चित्तास्तद्गतप्राणा नरा राक्षस ते तदा । श्वेतद्वीपे तु तैर्वास अर्जितस्तु महात्मभिः ॥ ये हता लोकनाथेन शार्ङ्गमानस्य संयुगे । चक्राऽऽयुधेन देवेन तेषां वासस्त्रिविष्टपे ॥ न हि यज्ञफलैस्तात न तपोभिर्न संयमैः । न च दानफलैः संख्ये स लोकः प्राऽऽप्यते सुखम् ॥ नारदस्य वचः श्रुत्वा दशग्रीवः सुविस्मितः । ध्यात्वा तु सुचिरं कालं तेन योत्स्यामि संयुगे । आपृच्छ्य नारदं प्रायाच्छ्वेतद्वीपाय रावणः ॥ नारदोऽपि चिरं ध्यात्वा कौतूहलसमन्वितः । दिदृक्षुः परमाऽऽश्चर्यं तत्रैव त्वरितं ययौ । स हि केलिकरो विप्रो नित्यं च समरप्रियः ॥ रावणोऽपि ययौ तत्र राक्षसैः सह राघव । महता सिंहनादेन नादयन् स दिशो दश ॥ गते तु नारदे तत्र रावणोऽपि महायशाः । प्राप्य श्वेतं महाद्वीपं दुर्लभं यत्सुरैरपि । द्वीपस्य तेजसा राम रावणस्य बलीयसः । तत्तस्य पुष्पकं यानं वातवेगसमाहतम् । अवस्थातुं न शक्नोति वाताऽऽहत इवाम्बुदः ॥ सचिवा राक्षसेन्द्रस्य द्वीपमासाद्य दुर्दशम् । अब्रुवन्रावणं भीता राक्षसा जातसाध्वसाः ॥ राक्षसेन्द्र वयं मूढा भ्रष्टसंज्ञा विचेतसः । अवस्थातुं न शक्ष्यामो युद्धं कर्तुं कथञ्चन । एवमुक्त्वा दुद्रुवुस्ते सर्व एव निशाचराः ॥ रावणोऽपि च तद्यानं पुष्पकं हेमभूषितम् । विसर्जयामास तदा सह तैः क्षणदाचरैः ॥ गते तु पुष्पके राम रावणो राक्षसाऽधिपः । कृत्वा रूपं महाभीमं सर्वराक्षसवर्जितः ॥ प्रविवेश तदा तस्मिन् श्वेतद्वीपे स राक्षसः । प्रविशन्नेव तत्राशु नारीभिरुपलक्षितः ॥ एकया सस्मितं कृत्वा हस्ते गृह्य दशाननः । पृष्टश्चाऽऽत्मानं ब्रूहि किमर्थमिह चाऽऽगतः ॥ को वा त्वं कस्य वा पुत्रः केन वा प्रहितो वद । इत्युक्तो रावणो राजन्क्रुद्धो वचनमब्रवीत् ॥ अहं विश्रवसः पुत्रो रावणो राक्षसाधिपः । युद्धार्थमिह सम्प्राऽऽप्तो नो च पश्यामि कञ्चन ॥ एवं कथयतस्तस्य रावणस्य दुरात्मनः । प्राहसंस्तास्(?स्ते)ततः सर्वाः(?र्वे) सुस्वनं युवतीजनाः ॥ तासामेका ततः क्रुद्धा बलवद् गृह्य लीलया । भ्रामितस्तु सखीमध्ये मध्ये गृह्य दशाऽऽननम् ॥ सखीमन्यां समागृह्य पश्य त्वं कीटकं धृतम् । दशाऽऽस्यं विंशतिभुजं कृष्णाऽञ्जनसमप्रभम् ॥ हस्ताद्धस्तं

स च क्षितो भ्राम्यते भ्रमलालसः ॥ भ्राम्यमानेन बलिना राक्षसेन विपश्चिता । पाणावेकाङ्गना दृष्टा रोषेण बलिना शुभा ॥ मुक्तस्तयाऽशुभः कीटो धुन्वन्त्या हस्तवेदनात् । गृहीत्वाऽन्या तु रक्षेन्द्रमुत्पपात विहायसा ॥ ततस्तामभिसंक्रो(?क्रु)द्धो विददार नखैर्भृशम् ॥ तया स च विनिर्धूतः सहसैव निशाचरः । पपात सोऽम्भसो मध्ये सागरस्य भयाऽऽतुरः ॥ पर्वतस्येव शिखरं यथा वज्रविदारितम् । प्रापतत्सागरजले तथाऽसौ विनिपातितः ॥ एवं स रावणो नाम श्वेतद्वीपनिवासि(?)भिः । युवतीभिर्विगृह्याऽऽशु भ्रामितश्च ततस्ततः ॥ विस्मयं परमं गत्वा प्रजहास ननर्त च ? एतदर्थं महाबाहो रावणेन दुरात्मना । विजयाय हृता सीता त्वत्तो मरणकाङ्क्षया ॥ भवान्नारायणो देवः शङ्खचक्रगदाधरः । शार्ङ्गपद्माऽऽयुधो वज्री सर्वदेवनमस्कृतः ॥ श्रीवत्साऽङ्को हृषीकेशः सर्वदेवाऽभिपूजितः ॥ पद्मनाभो महायोगी भक्तानामभयप्रदः । वधाऽर्थं रावणस्य त्वं प्रविष्टो मानुषीं तनुम् ॥ किं न वेत्सि त(?त्व)मात्मानं यथा नारायणो ह्यहम् । मा मुह्यस्व महाभाग स्मर चात्मानमात्मना ॥ गुह्याद् गुह्यतरस्त्वं हि ह्येवमाह पितामहः । त्रिगुणश्च त्रिवेदी च त्रिधामा त्रिचराऽऽगमः ॥ त्रिकालकर्मा त्रिविद्यो त्रिदशाऽरिप्रमर्दनः । त्वया क्रान्तास्त्रयो लोकाः पुराणैर्विक्रमैस्त्रिभिः ॥ त्वं महेन्द्राऽनुजः श्रीमान्बलिबन्धनकारणात् । आदित्यगर्भसम्भूतो विष्णुस्त्वं हि सनातनः ॥ लोकाननुग्रहीतुं वै प्रविष्टो मानुषीं तनुम् । तदिदं साधितं कार्यं सुराणां सुरसत्तम ॥ निहतो रावणः पापः सपुत्रः सपशुबान्धवः । प्रहृष्टाश्च सुराः सर्वे ऋषयश्च तपोधनाः ॥ प्रशान्तं च जगत्सर्वं त्वत्प्रसादात्सुरेश्वर । सीता लक्ष्मीर्महाभागा सम्भूता वसुधातलात् ॥ तदर्थमियमुत्पन्ना जनकस्य गृहे प्रभो । लङ्कामानीय यत्नेन मातेव परिरक्षिता ॥ एवमेतत्समाख्यातं तव राम महायशाः । ममाऽपि नारदेनोक्तमृषिणा दीर्घजीविना ॥ तथा सनत्कुमारेण व्याख्यातं तस्य रक्षसः । तेनाऽपि च तदेवाऽऽशु कृतं सर्वमशेषतः ॥ यश्चैतच्छ्रावयेच्छ्राद्धे विद्वान्ब्राह्मणसन्निधौ । अन्नं तदक्षयं नित्यं पितॄणामुपतिष्ठते ॥ एतां श्रुत्वा कथां दिव्यां रामो राजीवलोचनः । परं विस्मयमापन्नो भ्रातृभिः सह राघवः ॥ वानराः सहसुग्रीवा राक्षसाः सविभीषणाः । राजानश्च सहाऽमात्या ये चाऽन्येऽपि समागताः ॥ ब्राह्मणाः क्षत्रिया वैश्याः शूद्रा धर्मसमन्विताः । सर्वे चोत्फुल्लनयनाः सर्वे हर्षसमन्विताः ॥ राममेवाऽनुपश्यन्ति भृशमत्यन्तहर्षिताः । ततोऽगस्त्यो महातेजा राघवं चेदमब्रवीत् ॥

दृष्टः सभाजितश् चाऽसि राम गच्छामहे वयम् ।           [५७उ
२२] एवम् उक्त्वा गताः सर्वे ऋषयस्[1] ते यथाऽऽगतम् ॥४७[2]॥ [६५उ
ततोऽस्तं भास्-करे प्राऽऽप्ते वि-सृज्य नर-वानरान् ।
N] प्रवृत्तायां रजन्यां तु सोऽन्तः-पुर-परोऽभवत् ॥४८[3]॥ [६६

इत्यार्षे रामायण उत्तर-काण्डे ऋषि-प्रयाणो नामैकोन-

चत्वारिंशः सर्गः ॥ ३९ ॥

---

## [ वं-४१,४२]= [ चत्वारिंशः सर्गः ] =[दा-३७,३८ ]

अभि-षिक्ते तु काकुत्स्थे धर्मेण विदिताऽऽत्मनि ।[4]
१] व्यति-याता[5] निशा पूर्वा पौराणां हर्ष-वर्धिनी ॥ १ ॥ [१
तस्यां निशायां[6] व्य्-उष्टायां प्रातर् नृपति-बोधकाः ।
२] वन्दिनः पर्युपाऽतिष्ठन् सौम्या नृपति-वेश्मनि ॥ २ ॥ [२
वीर सौम्य वि-बुध्यस्व[7] कौशल्या सु-प्रजा त्वया ।
३] जगद् धि सर्वं स्वपिति त्वयि सुप्ते नराऽधिप[8] ॥ ३ ॥ [४
वि-क्रमस् ते यथा विष्णो रूपं ते[9] ह्य् अश्विनोर्[9] इव ।
४] बुद्ध्या बृहस्पतेस् तुल्यः प्रजापति-समो ह्य्[10] असि[10] ॥ ४ ॥ [५
क्षमया पृथिवी-तुल्यस् तेजसा भास्करोपमः ।
५] वेगस् ते वायुना तुल्यो गाम्भीर्यम् उदधेर् इव ॥ ५ ॥ [६
अ-कम्प्यो हि[11] यथा स्थाणुश् चन्द्रः सौम्य(?म्ये) तथा भवान्[12] ।[७पू
८] दानं धन-पतेस् तुल्यं सम-त्वं च स्वयं-भुवा ॥ ६ ॥ [N
नेदृशाः पार्थिवाः पूर्वे भवितारो न[13] वा पुनः[13] ।           [७उ
६] यादृक् त्वम् असि दुर्-धर्ष धर्म-नित्यो नराऽधिप ॥ ७ ॥
जहाति न त्वां कीर्तिश् च लक्ष्मीश् च पुरुषर्षभ[14] ।           [८
७] श्रीश्[15] च धर्मश् च काकुत्स्थ त्वयि नित्यं प्र-तिष्ठितौ ॥ ८ ॥

---

१. च भ१ भ२–मुनयस । २. अतः परमधिकः पाठः—भ१–राघवश्च तमेवार्थं चिन्तयामास विस्मितः । ३. च भ१ भ२–वर्जं–नास्ति । ४. अ रा१ ल१ ल२ ल३ ब–अत आरभ्य ३४–शश्लोकं यावन्नास्ति । ५. च भ१ भ२–या प्रवृत्ता । ६. प्र–रजन्यां । ७. प्र–विवर्धस्व । ८. प्र–नराधिपे । ९. प्र–अथाश्वि° । १०. प्र–नये । ११. प्र–ऽसि । १२. प्र–तथा । १३. च भ१ भ२–कदाचन । १४. च भ१–°भं । १५. च भ१ भ२–ह्रीश् ॥

एताश् चाऽन्याश् च मधुरा वन्दिभिः परि-कीर्तिताः । [९
९] स्तुतयः स्तुति-काल-ज्ञैस् ततोऽबुध्यत राघवः ॥ ९ ॥ [१०पू
तम् उत्थितं महा-बाहुं दृष्ट्वा प्राऽञ्जलयो नराः ।
११] गृहीत्वा भाजनैस् तोयम् उप-तस्थुः सहस्र-शः ॥१०॥ [१२
कृतोदकः शुचिर् भूत्वा स्नातो हुत-हुताऽशनः ।
१२] वेदी-गृहं जगामाऽथ पुण्यम् इक्ष्वाकु-सेवितम् ॥११॥ [१३
देवान् पितॄन् गुरून् विप्रान् अर्चयित्वा यथा-विधि ।
१३] बाह्यं कक्ष्याऽन्तरं[1] रामो निर्-जगाम जनाऽऽवृतम्[2] ॥१२॥ [१४
१४उ] सम्-उत्थिता महाऽऽत्मानो मन्त्रिणः[3] स-पुरोहिताः ।
१५पू] वसिष्ठ-प्रमुखाः सर्वे दीप्यमाना इवाऽग्नयः ॥१३॥ [१५
१४पू] सभाम् एवाऽभि-जग्मुस् ते पुण्याम् इक्ष्वाकु-सेविताम्[4] । [N
१५उ] क्षत्रियाश् च महाऽऽत्मानो[3] नानाजनपदेश्वराः ॥१४॥
रामस्योपाऽविशन् पार्श्वे शक्रस्येवाऽमराः प्र-भोः[5] । [१६
१६] भरतो लक्ष्मणश् चाऽपि[6] शत्रु-घ्नश् चैव[7] ते त्रयः ॥१५॥ [१७पू
१७उ] ते तु साऽञ्जलयः प्राऽऽप्ताः किं-कराः समुपाऽविशन् । [१८पू
वानराश् च महाऽऽत्मानो[8] विविशुः[9] काम-रूपिणः ।
१८] सुग्रीव-प्रमुखाः सर्वे ते[10] रामं[10] पर्युपाऽऽसते ॥१६॥ [१९
वि-भीषणश् च धर्माऽऽत्मा चतुर्भिः सचिवैर् वृतः[11] ।
१९] तम्[12] उपाऽऽस्त[12] महाऽऽत्मानं राघवं राक्षसेश्वरः ॥१७[13]॥ [२०
तथा निगम-वृद्धाश् च कुल-वृद्धाश् च वानराः ।
२०] प्र-णम्य शिरसा रामं राजानं पर्युपाऽऽसते ॥१८[13]॥ [२१
ततः परि-वृतो वीरो[14] महद्भिः स[14] महा-यशाः । [२२पू
२१] शुशुभे वि-मलः पूर्णो ग्रहैर् इव निशा-करः ॥१९॥ [N
यथा देवेश्वरो नित्यं देवर्षिभिर् उपाऽऽस्यते । [२३पू
२२] तथा सोपाऽऽस्यते रामस् तैर् महाऽऽत्मा नरेश्वरैः[15] ॥२०॥ [२२उ

---

१. च भ१ भ२-कक्षांतरं । २. प्र-°तः । ३. च-नास्ति । ४. भ१ भ२-°कुशोभितां । ५. प्र-दिवि । ६. च भ१ भ२-चैव । ७. प्र-चेति । ८. भ२ प्र-महावीर्या । ९. च भ१ भ२-विशंतः । १०. प्र-यं तदा । ११. भ१ भ२-सह । १२. भ२-समुपा° । १३. प्र-नास्ति । १४. प्र-रामः सुमहद्भिर् । १५. च भ१ भ२-°रः ॥

तेषां समुप-विष्टानां ततः स-मधुरं बहु[1] ।
२३] कथ्यते धर्म-संयुक्तं पौराणैश् च[2] महाऽऽत्मभिः । [२४
N] अर्थ-युक्तम् अन्-एकाऽर्थं काम-मोक्षं स-विस्तरम् ॥२१॥ [N
वं-४२,] एवम् आस्ते महा-बाहुर् अहन्य्-अहनि राघवः । [दा-३८,
१] पौर-जानपदानां स[3] कुर्वन् कार्याणि सर्व-शः ॥२२[4]॥ [१
ततः कतिपयाऽहस्य वैदेहं मिथिलाऽधिपम् ।
२] राघवः प्राऽञ्जलिर् भूत्वा वाक्यम् एतद् उवाच ह ॥२३॥ [२
३पू] भवान् नो गतिर् अत्य्-उग्रा[5] भवता पालिता वयम् ।
N] भवन्तम् आ-श्रिताश् चैव सम्पदस्[6] त्वद्-गता हि नः॥२४॥ [३
इक्ष्वाकूणां च सर्वेषां वि-देहानां च सर्व-शः ।
४] अ-तुलाः प्रीतयो राजन् सम्बन्धक-पुरस्कृताः[7] ॥२५॥ [४
तद् भवान् स्व-पुरं यातु रत्नान्य् आ-दाय पार्थिव ।
५] भरतेन सहायेन पृष्ठ-तस् त्व् अनु-यायिना ॥[8]२६॥ [५
तथेत्य् उक्त्वा[9] तु[9] जनको राघवं वाक्यम् अब्रवीत् ।
६] प्रीतोऽस्मि भवतो राम दर्शनेन दमेन च ॥२७॥ [६
यान्य् एतानि तु रत्नानि मद्-अर्थं सत्-कृतानि ते ।
७] एतान्य् अहं प्र-यच्छामि तुभ्यम् एव नरर्षभ ॥२८॥ [७
ततः प्र-याते जनके मातुले च[10] युधा-जितम् ।
८] कैकेयं प्राऽञ्जलिर् भूत्वा राघवो वाक्यम् अब्रवीत् ॥२९॥ [९
तव राज्यम् इदं सर्वं भ्रातरश् च वयं प्र-भो ।
९] आर्य-कस्[11] त्वं हि चाऽस्माकं[11] गुरुश् च पुरुषर्षभ ॥३०॥ [१०
राजा हि[12] वृद्धः सं-तापं त्वद्-अर्थम् उप-यास्यति ।
१०] तस्माद् गमनम् अद्यैव रोचते मे तवाऽन्-अघ ॥३१॥ [११
लक्ष्मणश् चाऽनु-याता ते पृष्ठ-तोऽनु-गमिष्यति ।
११] धनम् आ-दाय वि-पुलं रत्नान्य् आ-भरणानि च ॥३२॥ [१२
युधा-जित् तु[13] तथेत्य् उक्त्वा[13] गमनं प्रति राघवम् ।
१२] उवाच धन-रत्नाऽऽद्यं तुभ्यम् एव ददाम्य् अहम् ॥३३॥ [१३

---

१. च भ$_1$ भ$_2$—मुहुः । २. प्र—तैर् । ३. प्र—च । ४. भ$_1$—अत्रैव सर्गसमाप्तिः—प्रकृतिसमागमो नाम । ५. च—इत्युक्त्वा । ६. च भ$_1$ भ$_2$—सर्वार्थास् । ७. प्र—साम्बन्धिक° । ८. च भ$_1$ भ$_2$—नास्ति । ९. प्र—उक्तः स । १०. प्र—स । ११. प्र—अयंता त्वं हि ब्रोस्मा° । १२. च भ$_1$ भ$_2$—तु । १३. प्र—च तथेत्युक्ते ॥

प्र-दक्षिणं तु राजानं कृत्वा कैकेय-वर्धनः[1] ।
१३] रामेण सत्-कृतः पूर्वम् अभि-वाद्य जगाम[2] सः[3] ॥३४॥ [१४
गते[4] तस्मिंस्[4] ततो रामो वयस्यम् अ-कुतोभयम् ।
१४] प्र-तर्दनं काशि-पतिं[5] परि-ष्वज्येदम् अब्रवीत् ॥३५॥ [१६
दर्शिता भवता प्रीतिर् दर्शितं सौहृदं परम् ।
१५] उद्-योगाय त्वया राजन् भरतोऽनु-गतः सदा[6] ॥३६॥ [१७
तत् त्वम् अद्यैव काशीऽऽश गच्छ वाराणसीं पुरीम् ।
१६] रमणीयां त्वया गुप्ताम् इन्द्रेणेवाऽमरा-वतीम् ॥३७॥ [१८
एतावद् उक्त्वा काकुत्स्थ उत्थाय परमाऽऽसनात् ।
१७] परि-ष्वज्य च धर्माऽऽत्मा काशि-राजं प्र-तर्दनम् ॥३८॥ [१९
वि-सृज्य स महा-वीर्यो मही-पालान् सु-दुर्जयान् ।[6]
१८] प्र-हसन् राघवो वाक्यम् उवाच मधुराऽक्षरम्[7] ॥३९॥ [२१
भवन्तो गुण-सम्पन्ना[8] भवतां वीर्यम् उत्-तमम् ।
१९] धर्मश् च नि-यतो नित्यं भवत्स्व् इति च[9] मे मतिः[9] ॥४०॥ [२२
युष्माकं वै प्र-भावेण[10] तेजसा च महाऽऽत्मनाम् ।
२०] हतो[11] दुर्-आत्मा दुर्-बुद्धी रावणो राक्षसाऽधिपः ॥४१॥ [२३
हेतु-मात्रम्[12] अहं तत्र[12] भवतां तेजसा हतः ।
२१] रावणः स-गणो युद्धे स-पुत्रः सह-बान्धवः[13] ॥४२॥ [२४
भवन्तश् च समा-नीता भरतेन महाऽऽत्मना ।
२२] श्रुत्वा जनक-राजस्य रक्षसाऽप-हृतां[14] सुताम् ॥४३॥ [२५
उद्-युक्तानां[15] च सर्वेषां भवतां[16] सु-महाऽऽत्मनाम्[16] ।
२३] कालो ह्य्[17] अतीऽतः[17] सु-महान् गमनं रोचयामि[18] वः ॥४४॥ [२६

---

१. प्र-°नं । २. च भ$_1$ भ$_2$-प्रदक्षिणं । ३. अ रा$_1$ ल$_1$ ल$_2$ ल$_3$ ब-विसृज्य च । ४. च भ$_1$ भ$_2$-वर्जं- स नृपतिं । ५. च भ$_1$ भ$_2$-सह । ६. च भ$_1$ भ$_2$-स विसर्ज्य महावीर्यांस्त्रिशतीन्पृथिवीपतीन् । ७. च भ$_1$ भ$_2$-मधुरं तदा । ८. अ रा$_1$ ल$_2$-वीर्यंस° । ९. च भ$_1$ भ$_2$-मतिर्मम । १०. अ रा$_1$ ल$_1$ ल$_2$ ब प्र-°वेन । च भ$_1$ भ$_2$-प्रसादेन । ११. च भ$_1$ भ$_2$-वर्जं-मया । १२. च भ$_1$ भ$_2$-वर्जं-कृत्वा कर्म हेतुमात्रं । १३. च भ$_1$ भ$_2$-सह मन्त्रिभिः । १४. च भ$_1$ भ$_2$-°सा धर्षितां । १५. अ रा$_1$ ल$_2$ ल$_3$ ब-तदुक्तानां । १६. च भ$_1$ भ$_2$-पार्थिवानां म° । १७. च भ$_1$ भ$_2$-व्यतीतः । १८. च भ$_2$-चोदयामि । भ$_1$-नोदयामि ॥

२४पू] तथेत्य् उक्त्वा[1] नृ-पतयो मुदा परमया युताः ।
ऊचुः स-प्रणयं वाक्यं राघवं नृ-पतिं प्रति ।।[2]४५।। [३२
N] दिष्टया प्रत्या-हृता सीता दिष्टया प्रत्या-हतो[3] रिपुः[3] । [२८पू
२४उ] दिष्ट्याऽसि वि-जयी राम दिष्ट्या[7] राज्ये[7] प्रति-ष्ठितः ।।४६।। [२८उ
दिष्टया ते कमल-निभं[4] सुचारु-नासं[4]
ताम्रोष्ठं मुखम् इदम् अद्य शुक्ल-दन्तम् ।
पश्यामो वि-जयिनम् आ-हवेषु[5] नित्यं[5]
N] राजन्तं[6] नव-शारदीय-पूर्ण-चन्द्रम्[6] ।।४७।। [३३
एष[8] नः परमः काम एषा[9] प्रीतिर् अनु-उत्तमा । [२९उ
२५] यत् त्वां वि-जयिनं राम पश्यामो हत-कण्टकम् ।।४८।।
२६पू] एतत् त्वय्य् उप-पन्नं हि यद्[10] अस्मांस्[10] त्वं प्र-शंससि । [२९
२७पू] हतो हि बाहु-वीर्येण रावणः[11] स महा-बलः[11] ।
N] रावणः स-गणो युद्धे देवैर् अपि दुरा-सदः ।।[12]४९।। [N
२७उ] आ-पृच्छामो गमिष्यामो हृदि-स्थो नः सदा भवान् ।[13] [३०उ
२८उ] अस्माकम् अपि या प्रीतिः सा ते भूयात् तु नित्य-दा ।।[14]५०।। [३१उ

इत्यार्षे रामायण उत्तर-काण्डे राज्ञां प्र-याणं नाम
चत्वारिंशः सर्गः ॥ ४० ॥

---

## [ वं-४२ ]= [ एकचत्वारिंशः सर्गः ] =[ दा-३९ ]

ते प्र-याता महाऽऽत्मानः पार्थिवाः सर्व-तो-दिशम् ।[15]
२९] रथ-वाजि-सहस्रौघैः[16] कम्पयन्ति[17] स्म मेदिनीम् ।। १ ।। [१

---

१. अ ल$_3$ ब प्र-उक्त्वा । च भ$_1$ भ$_2$- ऊचुर् । २. च भ$_1$ भ$_2$-नास्ति । ३. च भ$_1$ भ$_2$-शत्रुः पराजितः । ४. च भ$_1$ भ$_2$-°लदलेक्षणं सुनासं । ५. च भ$_1$ भ$_2$-°हवास्प्रमुक्तं । ६. च भ$_1$ भ$_2$-वर्जं-भ्राजन्तं नवशरदीव पू° । ७. च भ$_1$-वर्जं-राज्ये चैव । ८. च भ$_1$ भ$_2$-अयं । ९. च भ$_1$ भ$_2$-इयं । १०. च भ$_1$ भ$_2$-च योस्मांस् । ११. अ रा$_1$ ल$_2$ ल$_3$ ब प्र-°णो हि म° । च भ$_1$ भ$_2$-रक्षस्तव नरोत्तमः । १२. च भ$_1$ भ$_2$-आमंत्रयामहे वीर हृदि ते नित्यशो वयं । १३. च भ$_1$ भ$_2$-वर्तामहे महाबाहो प्रीतिरस्माकमुत्तमा । १४. च भ$_1$ भ$_2$-नास्ति । १५. अतः परमधिकः पाठः—च भ$_1$ भ$_2$-वर्जं-कथयन्तो महावीरा स्वपुराणि महाबलाः । १६. रा$_1$ ब-गजवा° । १७. अ च ल$_1$ ल$_2$ प्र-कल्पयन्ति ॥

अक्षौहिण्यो हि तत्राऽऽसन् राघवाऽर्थे समुद्-यताः ।
३०] भरतस्याऽऽज्ञयाऽनेकाः प्रहृष्ट-नर-वाहनाः ॥ २ ॥ [२
ऊचुस् ते पृथिवी-पाला बल-दर्प-समन्विताः ।
३१] न राम रावणं युद्धे पश्यामः पुर-तः स्थितम्[1] ॥[2] ३ ॥ [३
३२पू] भरतेन वयं पश्चात् समा-नीता निर्-अर्थकम् । [४पू
N] न चैव रावणोऽस्माभिर् दृष्टः स युधि राक्षसः ।[3] [N
३२उ] हता[4] हि पार्थिवैः क्षिप्रं राक्षसाः[4] स्युर् न सं-शयः ॥ ४ ॥ [४उ
सुखं पारे सम्-उद्रस्य युध्येम[5] विगत-ज्वराः ।
३३पू] रामस्य बाहु-वीर्येण पालिता[6] लक्ष्मणस्य[6] च ॥ ५ ॥ [५
एताश् चाऽन्याश् च राजानः कथास् तत्र[7] सहस्र-शः ।
३४] कथयन्तः स्व-राष्ट्राणि विविशुस्[8] ते महा-बलाः[8] ॥ ६ ॥ [६
पुराणि[9] स्वानि[9] ते गत्वा रत्नानि वि-विधान्य्[10] अथ[10] ।
३५] रामस्य प्रिय-कामाऽर्थम् उप-हारान्[11] नृपा ददुः ॥ ७ ॥ [८
अश्वान्[12] धनानि रत्नानि हस्तिनोऽथ मदोत्कटान् ।
३६] चन्दनानि च मुख्यानि चित्राण्य्[13] आ-भरणानि च ॥ ८ ॥ [९
मणि-मुक्ता-प्रवालं च दासी-जन-समायुतम् ।
N] अजाऽविकांश् च वि-विधान् रथांश् च वि-विधान् बहून् ॥ ९[14] ॥ [१०
भरतो लक्ष्मणश् चैव शत्रु-घ्नश् च महा-बलः[15] ।
३७] आ-दाय तानि रत्नानि स्वां[16] पुरीं[16] पुनर् आ-गताः ॥ १० ॥ [११
आ-गम्य च पुरीं रम्याम् अयोध्यां पुरुषर्षभाः[17] ।
३८] ददुः सर्वाणि रत्नानि राघवाय महाऽऽत्मने ॥[18] ११ ॥ [१२

---

१. अ रा$_1$ ल$_1$ ल$_3$-स्थिताः । २. अतः परमधिकः पाठः—अ रा$_1$ ल$_1$ ल$_2$ ल$_3$ ब-हृष्टाः समुदिताः सर्वे राघवाऽर्थे समुद्यताः । अक्षौहिण्यस्तु तास्तत्र समवेतास्त्वनेकशः ॥ यमुश्च सुमहावीर्या बलदर्पसमन्विताः ॥ ल$_2$-नास्ति । ३ च भ$_1$ भ$_2$-नास्ति । ४. च भ$_1$ भ$_2$-वर्जं-तथा हि राक्षसास्तत्र पार्थिवाः । ५. च भ$_1$ भ$_2$-वर्जं-निवत्स्यामो । ६. च भ$_1$ भ$_2$-रक्षिता लक्ष्मणेन । ७ च भ$_1$ भ$_2$-तस्य । ८ च भ$_1$ भ$_2$-जग्मुर्हर्षसमन्विताः । प्र-°शुस्ते महारथाः । ९. भ$_1$ भ$_2$-वर्जं-यथा पुराणि । १०. अ ल$_2$-°धानि च । ११. च-अभिहारं । भ$_2$-परिहारं । १२. भ$_1$-त्रुटितः । १३. च भ$_1$ भ$_2$-दिव्यान्य् । १४. च भ$_1$ भ$_2$-नास्ति । १५. ल$_2$-°लाः । १६. भ$_1$ भ$_2$-वर्जं-अयोध्यां । १७. च भ$_1$ भ$_2$-वर्जं-वानरर्षभाः । १८. च भ$_1$ भ$_2$-तानि रत्नानि चित्राणि रामाय समुपानयन् ॥

प्रति-गृह्य च[1] तत् सर्वं[2] प्रीति-युक्तः[3] स राघवः[3] ।
३९] सर्वाणि प्र-ददौ तानि सु-ग्रीवाय महाऽऽत्मने ॥[3]१२[4]॥ [१३
वि-भीषणाय ददौ तथाऽन्येभ्योऽपि[5] राघवः[5] ।
४०] राक्षसेभ्यः कपिभ्यस् च यैर् वृतो जयम् आप्तवान् ॥[5]१३॥ [१४
सर्वे ते राम-दत्तानि रत्नानि कपि-राक्षसाः ।[6]
४१] शिरोभिर्[8] धारयामासुर् भुजैश्[9] चाऽपि[9] महा-बलाः ॥१४॥ [१५
हनू-मन्तं च नृ-पतिर् इक्ष्वाकूणां महा-रथः ।
४२] अङ्ग-दं च महा-बाहुर् अङ्कम् आ-रोप्य वीर्य-वान् ।
रामः कमल-पत्राऽक्षः पिङ्गाऽक्षम् इदम् अब्रवीत् ॥१५॥ [१६
४३] अङ्ग-दस् तव[10] पुत्रोऽयं सु-मन्त्री चाऽनिलाऽऽत्मजः ।
वालि-सुग्रीवयोर् वीरौ मम चाऽपि हिते रतौ ।
४४] अर्हतोऽभ्य्-अधिकां[11] पूजां मत्-कृतां च कपीऽऽश्वर ॥१६॥ [१७
इत्य् उक्त्वा[12] सु-महाऽर्हाणि[12] भूषणानि महा-यशाः[13] ।
४५] आ-बबन्ध स[14] ह्य् उभयोर् मारुत्य्-अङ्गदयोः[14] समम् ॥१७॥ [१८
आ-भाष्य च[15] महा-वीर्यान् राघवो यूथपर्षभान् ।
४६] नीलं नलं केसरिणं[16] कुमुदं गन्ध-मादनम् ॥१८॥ [१९
सु-षेणं पनसं[17] चैव[17] मैन्दं द्वि-विदम् एव च ।
४७] जाम्ब-वन्तं गवाऽक्षं च धूम्रं वि-नतम् एव च ॥१९॥ [२०
बली-मुखं प्र-जङ्घं च सम्-नादं च महा-बलम् ।
४८] दरी-मुखं दधि-मुखम्[18] इन्द्र-जानुं च यूथ-पम् ॥२०॥ [२१
मधुरं श्लक्ष्णया वाचा नेत्राभ्यां च पिबन्न् इव ।
४९] भवन्तः सु-हृदो मह्यं शरीरं भ्रातरस् तथा ॥२१॥ [२२

---

१. च भ$_1$ भ$_2$–तु । २. च भ$_1$ भ$_2$–रामः प्रीतिसमन्वितः । ३. च भ$_1$ भ$_2$ प्र–सुग्रीवाय ददौ राज्ञे महात्मा कृतकर्मणे । ४. ल$_2$–नास्ति । अतः परमधिकः पाठः—च भ$_1$ भ$_2$–वर्जे–ततः सर्वं यतो येन आनीतं सुमहद्धनम् । ५. अ रा$_1$ ल$_1$ ल$_2$ ल$_3$ ब प्र–यैं चान्ये ऋक्षवानराः । ६. च भ$_1$ भ$_2$–वर्जं–हनुमत्प्रमुखाः सर्वे राक्षसाश्च महाबलाः । ७. च भ$_1$ भ$_2$–ते सर्वे हृष्टमनसो रामदत्तान्यमानुषाः । ८. च भ$_1$ भ$_2$–शिरःसु । ९. च भ$_1$ भ$_2$–भुजेषु च । १०. भ$_1$–स्त्वथ । ११. भ$_2$–अर्हैतेऽभ्य° । अ रा$_1$ ल$_2$ प्र–°तोऽप्य° । १२. च भ$_1$ भ$_2$–°त्त्वाभ्य-वमुच्यांगाद् । १३. च भ$_1$ भ$_2$–महामनाः । १४. च भ$_1$ भ$_2$ प्र–भुजाभ्यां सह हनुमदंग° । १५. च भ$_2$–वर्जं–हि । १६. अ ल$_2$–कुमुदिनं । १७. च भ$_1$ भ$_2$–वर्जं–च महात्मानं । १८. च भ$_1$ भ$_2$–वर्जं–महाबाहुं ॥

युष्माभिर् उद्-धृतश् चाऽहं व्य्-असनात् काननौकसः ।
५०] धन्यो[1] हि[1] राजा सु-ग्रीवो भवद्भिः सु-हृदां वरैः ॥२२॥ [२३
एवम् उक्त्वा ततस् तेषां ददौ भूषणम् उत्-तमम् ।
५१] वस्त्राणि च महाऽर्हाणि स[2] स्वयं च नरर्षभः[2] ॥२३॥ [२४
बहूनि[3] च[3] सु-गन्धीनि मधूनि वि-विधानि[4] च[4] ।
५२] मांसान्य्[5] एवं[5] सु-मृ(?भृ)ष्टानि भु(?भो)क्तानि[6] स्वाद-वन्ति[6] च ।[7]२४।
एवं तेषां नि-वसतां मासो हैमो ययौ तदा ।[8]
५३] मुहूर्तम् इव तत्[9] सर्वं[9] राम-भक्त्या सम्-अ(?आ)र्थ(?प)यन्[10] २५[२६
रेमे[11] रामोऽपि तैः[11] सार्धं वानरैः काम-रूपिभिः ।
५४] भ्रातृभिश् च महा-वीर्यै राक्षसैश् च महा-बलैः ॥[12]२६॥ [२७
एवं तेषां ययौ मासो द्वितीयः शैशिरः सुखम्[13] ।
५५] वानराणां च सर्वेषां राक्षसानां च सर्व-शः ॥२७[14]॥ [२८
इक्ष्वाकु-नगरे रम्ये परां प्रीतिम् उपेयुषाम्[15] ।[16]
रामस्य प्रीति-करणैः कालस् तेषां ययौ तदा[17] ।[16] [२९
N] न विना वानरै रामो रेमे रामं विना न ते ॥२८॥ [N

इत्यार्षे रामायण उत्तर-काण्डे रत्नाऽऽभरण-दानं
नामैकचत्वारिंशः सर्गः ॥ ४१ ॥

---

## [ वं-४२ ]= [ द्विचत्वारिंशः सर्गः ] =[ दा-४० ]

N] तथा तेषां[18] नि-वसताम्[18] ऋक्ष-वानर-रक्षसाम् ।[19]
१उ] कालो व्यतीऽतः सु-महांस् ततो राजाऽब्रवीत् कपिम् ॥ १ ॥ [१

---

१. च भ$_1$ भ$_2$–धन्यश्च । २. च भ$_1$ भ$_2$–सत्त्वजे च नराधिपः । ३. च–ते पिबन्ति । भ$_1$ भ$_2$–ते पिबन्तः । ४. च भ$_1$ भ$_2$–मधुपिंगलाः । ५. च भ$_1$ भ$_2$–वर्ज–मांसानि च । ६. च भ$_1$ भ$_2$–दिव्यानि रुचिराणि । ७. अतः परमधिकः पाठः—च भ$_1$ भ$_2$–विविधानि सुगन्धीनि फलानि परमानि च । पुष्पाणि च विचित्राणि सुगन्धीनि लघूनि च ॥ ८. च भ$_1$ भ$_2$–एवं तैः समतिक्रान्तं दीर्घकालं सुतर्पितैः । ९. च भ$_1$ भ$_2$–सर्वे ते । १०. च भ$_1$ भ$_2$–वर्ज–समर्पयन् । ११. च भ$_1$ भ$_2$–रामोऽपि रमते । १२. च भ$_1$ भ$_2$–राक्षसैश्च महावीर्यैर्ऋक्षैश्चैव महोत्कटैः । १३. अ ल$_2$ ल$_3$–स्वयं । १४. च भ$_1$ भ$_2$–एवं तेषामुपययौ वसतां तत्र शैशिरः । कालः प्रहृष्टमनसामृक्षवानररक्षसां ॥ १५. प्र–उपागतां । १६. च भ$_1$ भ$_2$–नास्ति । १७. ल$_1$–महान् । १८. च भ$_1$ भ$_2$–स तेषां व° । १९. अतः परमधिकः पाठः—च भ$_1$ भ$_2$–वर्ज–राघवः सुमहातेजा इदं वचनमब्रवीत् ॥

गम्यतां सौम्य किष्किधां दुरा-धर्षा[1] सुरैर् अपि ।
२] पालयस्व महाऽमात्यै[2] राज्यं निहत-कण्टकम् ।। २ ।। [२
अङ्ग-दं[3] च महा-वीर्यं[3] प्रीत्या परमयाऽन्व्-इतः[4] ।
३] सं-पश्यस्व हनू-मन्तं नलं च सु-महाबलम् ।।[5] ३ ।। [३
सु-षेणं श्वशुरं चैव[6] तारं चोत्तम-विक्रमम्[7] ।
४] कु-मुदं चैव दुर्-धर्षं सु-बाहुं[8] चाऽपराजितम्[8] ।। ४ ।। [४
वीरं शत-बलिं चैव मैन्दं द्वि-विदम् एव च । [५पू
५] जाम्ब-वन्तं[9] महा-वीरं[9] गन्ध-मादनम्[10] एव च[10] ।। ५ ।। [६पू
६पू] गजं गवाऽक्षं शरभं गवयं च महा-बलम् । [५उ
N] ऋषभं चाऽति-क्रान्तं च[11] सु-गन्धं[11] च सु-पाटलम् ।। ६ ।। [६उ
६उ] ये चाऽन्ये सु-महाऽऽत्मानो[12] मद्-अर्थे त्यक्त-जीविताः ।
सं-पश्य[13] प्रीति-संयुक्तो मा चैषां[14] वि-प्रियं कृथाः ।। ७ ।। [७
७] एवम् उक्त्वा च सु-ग्रीवं प्र-साद्य[15] च पुनः-पुनः ।
वि-भीषणम् अथोवाच राघवो मधुरं[16] वचः[16] ।। ८ ।। [८
८] लङ्कां प्र-शाधि धर्मेण सं-ग(?म)तो[17] ह्य् असि[17] पार्थिव ।
सुराणां[18] राक्षसानां च[18] भ्रातुर् वैश्रवणस्य च ।। ९ ।। [९
९] मा बुद्धिं[19] स्वाम्[19] अ-धर्मे त्वं राजन् कार्षीः कदा-चन ।
धर्म-युक्ता हि राजानो भुञ्जते मेदिनीं चिरम् ।।१०।। [१०
१०] अहं च नित्य-शो राजन् सुग्रीव-सहितेन च[20] ।
स्मर्तव्यः परया प्रीत्या मित्रैर्[21] एतैः सहैव तु[21] ।।११।। [११

---

१. भ$_1$ भ$_2$–सुदुर्धर्षा । २. च भ$_1$ भ$_2$–च तत्सर्वं । ३. च भ$_1$ भ$_2$–वर्जं–°दश्च महाबाहो । ४. अ रा$_1$ ल$_2$ ल$_3$ ब प्र–°या त्वया । भ$_1$–°यान्वितम् । ५. अ रा$_1$ ल$_1$ ल$_2$ ल$_3$ ब प्र–सखा च मलयश्चैव हनुमांश्च महाबलः । ६. अ रा$_1$ ल$_2$ ल$_3$ ब प्र–शूरं । ल$_1$–भूपं । ७. च भ$_1$ भ$_2$–वर्जं–च समहाद्युतिं । ८. अ–प्लवङ्गं चैव पाटलं । रा$_1$ ल$_1$ ल$_2$ ल$_3$ प्र–प्लवङ्गं चैव पाटलिं । ९. च भ$_1$ भ$_2$–वर्जं–यशःप्रीतिसमायुक्तं । १०. प्र–°नसंयुतं । ११. च भ$_1$ भ$_2$–च सुविक्रान्तं प्लवङ्गं । १२. च भ$_1$ भ$_2$–°न्येऽपि म° । १३. च ल$_3$–°श्येः । भ$_1$ भ$_2$ रा$_1$ ल$_2$ प्र–संपश्येत् । ल$_1$–तान्पश्येः । १४. च भ$_1$ भ$_2$–तेषां । १५. च भ$_1$ भ$_2$–प्रशंस्य । १६. च भ$_1$ भ$_2$–वर्जं–रघुनन्दनः । १७. च भ$_1$ भ$_2$–वर्जं–समेत्यान्यैश्च । १८. च भ$_1$ भ$_2$–देवानां रक्षसां चैव । १९. च भ$_1$ भ$_2$–च बुद्धिम् । २०. च भ$_1$ भ$_2$–तु । २१. च भ$_1$ भ$_2$–सहितो मान्यराक्षसैः ॥

११] राघवस्य वचः श्रुत्वा वानरर्क्षाः[1] स-राक्षसाः[1] ।
साधु साध्व् इति काकुत्स्थं प्र-शंसन्ति स्म[2] नैक-धा[2] ॥१२॥ [१२
१२] तव बुद्धिर् महा-बाहो वीर्यम् अद्भुतम् एव च ।
माधुर्यम् अ-तुलं चाऽपि भुवि चाऽन्-उत्तमं यशः ॥[3]१३॥ [१३
१३] तेषाम् एवं कथयतां हर्य्-ऋक्षाणां स-रक्षसाम् ।
प्र-णम्य मूर्ध्ना हनु-मान् राघवं वाक्यम् अब्रवीत् ॥१४[3]॥ [१४
१४] स्नेहो मे परमो राम त्वयि तिष्ठति सर्व-दा[4] ।
भक्तिश् च नि-यता वीर भवत्य् एषाऽनु-वर्तते ॥[5]१५॥ [१५
१५] यावद् राम-कथा वीर[6] श्रोष्यामि पृथिवी-तले ।
१६पू] तावच् छरीरे वत्स्यन्ति[7] प्राणा मम न सं-शयः ॥१६॥ [१६
यच् चैतच् चरितं दिव्यं कथा[8] च रघु-नन्दन ।
N] तन् ममाऽप्सरसो राम श्रावयेयुर्[9] नरर्षभ ॥१७॥ [१७
तच् छ्रुत्वाऽहं ततो वीर तव वीर्याऽमृतं[10] वि-भो[11] ।
N] उत्-कण्ठां[12] वि-हरिष्यामि मेघ-लेखाम् इवाऽनिलः[13] ॥१८॥ [१८
१६उ] हनू-मति ब्रुवत्य् एवं राघवः पर-वीर-हा ।[14]
उत्थाय सस्वजे तं[15] च[15] वाक्यं चेदम् उवाच ह ॥१९॥ [१९
१७] एवम् एतत् कपि-श्रेष्ठ भविता नाऽत्र सं-शयः । [२०पू
लोका हि यावत् स्थास्यन्ति तावत् स्थास्यति[16] मे कथा ॥२०॥ [२१
१८] चरिष्यति कथा यावल् लोकान् एताम् हि मामकी ।
तावच् छरीरे वत्स्यन्ति प्राणास् तव न सं-शयः ॥२१[17]॥[२०उ
१९] अङ्गेष्व्[18] एव[18] जरा यातु यत् त्वयोप-कृतं कपे ।[19]
नरः प्रत्युप-काराणाम् आपत्सु लभते फलम् ॥२२॥ [२३

---

१. च भ$_1$ भ$_2$-वर्जं-°स ऋक्षरा° । २. अ रा$_1$ ल$_2$ ल$_3$ व-ह्यनेकधा । ३. च भ$_1$ भ$_2$-वर्जं-नास्ति । ४. च भ$_1$ भ$_2$-वर्जं-निरयशः । ५. च भ$_1$ भ$_2$-भक्तिश्च परमा साधो भावश्चैव न गच्छति । ६. प्र-लोके । ७. च भ$_1$ भ$_2$-वर्जं-सततं । ८. भ$_1$ भ$_2$-कथाः । ९. च भ$_1$ भ$_2$-वर्जं-°यन्ति । १०. च भ$_1$ भ$_2$-वर्जं-वाक्यामृतं । ११. च भ$_1$ भ$_2$-प्रभो । १२. ल$_1$ व-उत्कंठं । प्र-°ठो । १३. च-इवाचलः । १४. च भ$_1$ भ$_2$-एवं ब्रुवन्तं रामस्तु हनूमन्तमथाब्रवीत् । १५. च भ$_1$ भ$_2$-स्नेहाद् । १६. च भ$_1$ भ$_2$-वर्जं-वत्स्यति । १७. च भ$_1$ भ$_2$-भविष्यति कथा यावद्देवलोके हि मामकी । तावत् ते भविता कीर्तिः शरीरे ह्यसवस्तथा ॥ १८. अ-अंगेऽप्येवं । १९. अतः परमधिकः पाठः—प्र-भवाद्यपद्यतामर्थं यद्दुर्लभं सुलभतां तथा ॥

२०] ततः[1] स्व-हारं[1] चन्द्राऽऽभं मुक्त्वा कण्ठात् स राघवः ।
वैडूर्य-तरलं कण्ठे बबन्ध च हनू-मतः ॥२३॥ [२४

२१] तेनोरसि नि-बद्धेन रराज[3] स महा-कपिः[2] ।
हारेण[3] काञ्चनः शैलश् चन्द्रेणाऽऽक्रान्त-मस्तकः ॥२४॥ [२५

२२] श्रुत्वा तु[4] राघवस्यैतद्[4] उत्थायोत्थाय वानराः ।
प्र-णम्य शिरसा पादौ निर्-जग्मुस्[5] ते महा-बलाः ॥२५॥ [२६

२३] सु-ग्रीवश् चैव[6] रामेण परि-ष्वक्तो महा-भुजः ।
वि-भीषणश् च धर्माऽऽत्मा सर्वे[8] च हरि-यूथपाः[8] ॥२६॥ [२७

२४] सर्वे च ते बाष्प-गला अस्रु नेत्रैः प्र-सुस्रुवुः ।
२५पू] सं-मूढा इव दुःखेन रामं ते तत्यजुस् तदा ॥२७[7]॥ [२८

इत्यार्षे रामायण उत्तर-काण्डे वानर-ऋक्ष-राक्षस-प्रयाणं[9] नाम

द्विचत्वारिंशः सर्गः ॥ ४२ ॥

---

## [ वं– ४४]= [ त्रिचत्वारिंशः सर्गः ] =[ दा–४१ ]

वि-सृज्य तान् महा-बाहुर् ऋक्ष-वानर-राक्षसान् ।
१] भ्रातृभिः स-हितो रामः[10] प्र-मुमोद सुखं सुखी[10] ॥ १ ॥ [१

अथाऽपराऽह्न-समये[11] भ्रातृभिः[12] सह राघवः[12] ।
२] शुश्राव मधुरां वाणीम् अन्तरिक्षात्[13] प्र-भाषिताम्[13] ॥ २ ॥ [२

सौम्य राम निर्-ईक्षस्व सौम्येन वदनेन माम् ।
३] कैलास-भवनात् प्राऽऽप्तं विद्धि मां पुष्पकं प्र-भो ॥[14] ३ ॥ [३

तव शासनम् आ-ज्ञाय गतोऽहं धनेश्वरम्[15] ।
४] उप-स्थातुं नर-व्याघ्र स च मां प्रत्य्-अभाषत ॥[16] ४ ॥ [४

---

१. अ–वर्जे–ततोऽस्य हारं । २. च भ$_1$ भ$_2$–हारेण महता कपिः । ३. च भ$_1$ भ$_2$–रराज । ४. च भ$_1$ भ$_2$–रामस्य वचनं । ५. च भ$_1$ भ$_2$–प्रययुस् । ६. च भ$_1$ भ$_2$–चापि । ७. च भ$_1$ भ$_2$–वर्जे–निरंतरमनन्तरं । ८. च भ$_1$ भ$_2$–नास्ति । ९. च भ$_1$ भ$_2$–वर्जे–वानरप्रयाणं । १०. च भ$_1$ भ$_2$–रामो विजहार यथासुखं । ११. भ$_1$–सुखेनैवोपतिष्ठन्वै । १२. च भ$_1$ भ$_2$–रामः सर्वैः सहानुगैः । १३. च भ$_1$ भ$_2$–°रिक्षे विभुस्तदा । १४. च भ$_1$ भ$_2$–कैलाशनिलयात् प्राप्तं विमानं पुष्पकं तदा । १५. च भ$_1$ भ$_2$ ळ$_1$–°तो धनदं प्रति । १६. च भ$_1$ भ$_2$–उपस्थाने रघुश्रेष्ठ स च मामिदमब्रवीत् ॥

निर्-जितस् त्वं नरेन्द्रेण राघवेण महाऽऽत्मना ।
५] हत्वा[1] युधि दुरा-धर्षं[1] रावणं[2] राक्षसाऽधिपम्[2] ॥ ५ ॥ [५
ममाऽपि परमा प्रीतिर् हते[3] तस्मिन् दुर्-आत्मनि ।
६] रावणे स-गणे सौम्य स-पुत्राऽमात्य-बान्धवे[4] ॥ ६ ॥ [६
स त्वं रामेण लङ्कायां निर्-जितः परमाऽऽत्मना ।
७] वह सौम्य तम् एव त्वम् अहम्[5] आ-ज्ञापयामि ते[6] ॥ ७ ॥ [७
एष मे परमः कामो यस् त्वं रघु-विवर्धनम् ।[7]
८] वहस्व प्रति-बुद्धस् त्वं तस्मात् तत्रैव गम्यताम् ॥[8] ८ ॥ [८
तच्-छासनम्[9] अहं ज्ञात्वा[9] धन-दस्य महाऽऽत्मनः ।
९] त्वत्-सकाशं पुनः[10] प्राऽऽप्तः[10] शाधि किं करवाणि ते[11] ॥९॥ [९
अ-दृष्टश् चैव[12] भूतानां[12] सर्वेषां धनदाऽऽज्ञया ।
१०] चराम्य्[13] अहं प्र-भावेण[13] तवाऽऽज्ञां परि-पालयन्[14] ॥१०॥ [१०
यदा मे स्मरणे बुद्धिं त्वं करिष्यसि राघव ।
N] तदाऽहम् ईप्सितं ज्ञात्वा उप-स्थास्ये तत्राऽन्तिकम् ॥११[15]॥ [N
१२पू] बाढम् इत्य्-एव काकुत्स्थः पुष्पकं सम्-अपूजयत् । [N
१३पू] लाजाऽक्षतैश्[16] च धूपैश्[16] च पुष्पैश्[17] चैव सु-गन्धिभिः[17] ॥१२॥ [१३पू
गम्यतां च यथा-कामम् आ-गच्छेस्[18] त्वं यदा स्मरे[18] ।
१४] प्रति-घातश्[19] च ते मा भूद् यथेष्टां[20] गच्छतो दिशम्[21] ॥१३॥ [१४
एवं वि-सर्जितस् तेन रामेणाऽक्लिष्ट-कर्मणा ।
१५] अभि-प्रेतां दिशं पूर्वां प्र-यातः पुष्पकस् तदा[22] ॥१४॥ [१५

---

१. अ ल२ ल३ प्र–निहत्य तु दु° । रा१ ल१ ब–निहत्य च सुदुर्धर्ष । २. अ रा१ ल२ ल३ ब प्र–राक्षसं रावणं ततः । ३. च भ१ भ२–जिते । ४. च भ१ भ२–सहपुत्रे सबा° । ५. च भ१ भ२–प्रभुर् । ६. अ ल२ ल३ रा१ ब प्र–वै । ७. च भ१ भ२–परमो हर्षकामो मे यस्त्वमिक्ष्वाकुव° । ८. च भ१ भ२–वर्जं–वहेश्च लोकसंघानां गच्छ त्वं विगतज्वरः । ९. च भ१ भ२–सोहं शासनमाज्ञाय । १०. च भ१ भ२–अनुप्राप्तः । ११. च भ१ भ२–वर्जं–वै । १२. च भ१ भ२–वर्जं–सर्वभू° । १३. च भ१ भ२–वर्जं–°मि चानुभा° । १४. च भ१ भ२–वर्जं–प्रतिपा° । १५. च भ१ भ२–यदा च मे त्वं स्मरणे बुद्धिं नृप करिष्यसि । उपस्थास्याम्यहं वीर तदा तद्विहितां गतिं ॥ १६. च भ१ भ२–लाजोत्करेण पुष्पैश् । १७. च–तथा सौम्य सु° । भ१ भ२–गन्धैश्च सुसुग° । १८. च भ१ भ२–°च्छेथा स्मृतो मया । १९. च भ१ भ२–परिघातश् । २०. च भ१ भ२–°ष्टं । २१. च–दिशि । भ१ भ२–दिशः । २२. रा१ ल१ ल२–तथा ॥

गते तस्मिन् वि-माने तु पुष्पके रुचिराऽऽत्मनि[1] ।
१६] भरतः प्राऽञ्जलिर् भूत्वा[2] रामं वचनम् अब्रवीत्[2] ॥१५॥ [१६
अत्य्-अद्भुतानि दृश्यन्ते त्वयि वीर प्र-शासति ।
१७] अ-मानुषाणां सत्त्वानां व्या-हृतानि पुनः[3]-पुनः[3] ॥१६॥ [१७
अन्-आमयश् च सत्त्वानां[4] साऽग्रो मासो गतो ह्य् अयम्[4] ।
१८] जीर्णानाम् अपि सत्त्वानां मृत्युर् नाऽभ्य्-एति[5] राघव ॥१७॥ [१८
पुत्रान्[6] नार्यः प्र-सूयन्ते वपुः पुष्णन्ति[6] मानवाः ।
१९] हर्षश् चाऽभ्य्-अधिको राजञ्[7] जातश् च पुर-वासिनाम्[7] ॥१८॥ [१९
कालेन वासवो वर्षं[8] जनयत्य् अमृतोपमम् ।
२०] वायवश् चैव वायन्ते स्पर्श-वन्तः सुख-प्रदाः ॥१९[8]॥ [२०
ईदृशो नश् चिरं[9] राजा भवत्व् इति नरेश्वर[10] ।
२१] कथयन्ति पुरे पौरा[11] जना जन-पदेषु च[11] ॥२०॥ [२१
एता वाचः सु-मधुरा भरतेन सम्-ईरिताः ।
२२] शृण्वन्[12] रामो मुदा युक्तः प्र-मुमोद[13] सुखी सुखम्[13] ॥२१॥ [२२

इत्यार्षे रामायण उत्तर-काण्डे पुष्पक-प्रत्यागमनो[14] नाम
त्रिचत्वारिंशः सर्गः ॥४३॥

## [ वं-४५ ]= [ चतुश्चत्वारिंशः सर्गः ] =[ दा-४२ ]

तं[15] वि-सृज्य ततो रामः पुष्पकं हेम-भूषितम् ।
१] प्र-विवेश महा-बाहुर् अशोक-वनिकां शुभाम् ॥ १ ॥ [१
चन्दनाऽगुरु-गन्धैश् च तुङ्ग-कालीयकैर् अपि ।
६] देवदारु-वनैश् चाऽपि शोभितां हेम-सप्रभैः ॥ २[16]॥ [२

---

१. च भ$_1$ भ$_2$–तु कृतात्मनि । २. च भ$_1$ भ$_2$–वाक्यमुवाच रघुनन्दनम् । ३. च भ$_1$ भ$_2$–मुहुर्मुहुः । ४. च भ$_1$ भ$_2$–मर्त्यानां सुखं संवत्सरा ययुः । ५. अ प्र–नात्येति। च भ$_1$ भ$_2$–नायाति । ६. च भ$_1$ भ$_2$–अरोगप्रसवा नार्यो वपुष्मन्तश्च । ७. च भ$_1$ भ$_2$–राम जनस्य पुरवासिनः । ८. च भ$_1$ भ$_2$–काले वर्षति पर्जन्यः पातयन्नमृतं पयः । वाताश्चापि प्रवान्त्येते स्पर्शयुक्ताः सुखाः शिवाः । ९. च भ$_1$ भ$_2$–सदा । ल$_1$–पुरे । १०. भ$_1$ ल$_1$–°रः । ११. च–राजन् पौरा जनपदास्तथा । भ$_1$–राजन्पौरजानपदास्तथा । भ$_2$–राजन् पौरा जानपदास्तथा । १२. च भ$_1$ भ$_2$–श्रुत्वा । १३. च भ$_1$ भ$_2$–बभूव नृपसत्तमः । १४. रा$_1$ ल$_1$–°त्यानयनो । ल$_3$ ब–°त्यानयनं । १५. च भ$_1$ भ$_2$–तद् । १६. च भ$_1$ भ$_2$–तत्राशोकप्रियंगाश्च चम्पका रक्तमल्लिकाः । सुबहूनि सुगन्धीनि माल्यानि विविधानि च ॥

रोध्र-नीपाऽर्जुनैर् नागैः सप्तपत्राऽतिमुक्तकैः ।
८] मन्दार-कदली-गुल्म-लता-जाल-समावृताम् ॥३[1]॥ [४
प्रियङ्गुभिः कदम्बैश् च तथा कारण्ट(?ञ्ज)कैर्[2] अपि ।
९] जम्बूभिः पाटलाभिश् च कोविदारैश् च सं-वृताम् ॥४[3]॥ [५
सर्व-दा कुसुमै रम्यैः फल-वद्भिर् मनो-रमैः ।
१०] चारु-पल्लव-पुष्पाऽऽढ्यां मत्त-भ्रमर-सङ्कुलाम् ॥५[4]॥ [७
कोकिलैर् भृङ्ग-राजैश् च नाना-वर्णैश् च पक्षिभिः ।
१२] शोभितां शत-शश् चित्रैश् चूत-वृक्षाऽवतंसकैः ॥ ६ ॥ [९
शातकौम्भ-निभाः के-चित् के-चिद् अग्निशिखोपमाः ।
१३] नीलाऽञ्जन-निभाश् चाऽन्ये तत्र भान्ति स्म पाद-पाः ॥ ७ ॥[१०
दीर्घिका विविधाऽऽकारा वृक्षाः फल-समन्विताः ।
१४] महाऽर्ह-मणि-सोपानाः स्फटिकाऽन्तर-कुट्टिमाः ॥ ८ ॥ [१२
१५पू] फुल्ल-पद्मोत्पल-भृतश् चक्रवाकोपशोभिताः ।
१६उ] प्रासादैर् विविधाऽऽकारैः शोभिताश् च शिला-तलैः ॥ ९ ॥ [१४
तत्रोद्देशाः सु-रुचिरा वैडूर्य-मणि-शोभिताः[5] ।
१७] शाद्वलैः परमोपेताः[6] शीताऽर्थम् उप-कल्पिताः ॥१०॥ [१५
नन्दनं च यथेन्द्रस्य ब्राह्मं[7] चैत्ररथं यथा ।
१८] तथा-रूपं हि रामस्य[8] काननं सन्-निवेशितम्[9] ॥११॥ [१७
बह्वाऽऽसनगृहोपेतां लता-गृह-समन्विताम् ।
१९] अशोक-वनिकां स्फीतां विवेश[10] रघु-नन्दनः ॥१२[11]॥ [१८
आसने सन्नताऽऽकारे पुष्प-प्रकर-शोभिते ।
२०] कुशाऽऽस्तरण-सङ्कीर्णे रामः सन्-निषसाद ह ॥१३[12]॥ [२०

---

१. च भ$_1$ भ$_2$–अकालजाश्चापि नगाः शिल्पिभिः परिकल्पिताः । पुष्पवन्तोऽतिगन्धाढ्याः पुष्पं मायाकृतं यथा ॥ २. प्र–कारंकटैर् । ३. च भ$_1$ भ$_2$ सङ्कर्षादिव जातानां वृक्षाणां पुष्पशालिनां । स्वास्तराः पुष्पशबला बभुस्तारागणा इव ॥ ४. अत आरभ्य— च भ$_1$ भ$_2$–९-मश्लोकं यावन्नास्ति । ५. च भ$_1$ भ$_2$–°णिसन्निभाः । ६. च भ$_1$ भ$_2$–उपसम्पन्नाः । ७. च भ$_1$ भ$_2$–वनं । ८. च भ$_1$ भ$_2$–राघवस्य तथा रूपं । ९. च भ$_1$ भ$_2$–°वेशने । १०. ल$_1$ प्र–प्रविश्य । ११. च भ$_1$ भ$_2$–नीलजीमूतसंकाशाः पद्मिन्यो विमले जले । हंसकारण्डवाकीर्णाश्चक्रवाकोपशोभिताः ॥ १२. च भ$_1$ भ$_2$–ततस्तत्र शुभे देशे पुष्पप्रस्तरसंस्तृते । अथास्तरणसंस्तीर्णे रामश्च निषसाद ह ॥

सीतां सं-गृह्य[1] बाहुभ्यां[2] मधु मैरेयम्[3] उत्-तमम्[3] ।
२१] पाययामास काकुत्स्थः शचीम् इन्द्रो यथाऽमृतम्[4] ।।१४।। [२१
मांसानि च वि-चित्राणि फलानि वि-विधानि च ।
२२] रामस्याऽभ्यव-हाराऽर्थं किं-करास् तूर्णम्[5] आऽहरन्[5] ।।१५।। [२२
उपाऽनृत्यन्त[6] राजानं नृत्त-गीत-विशारदाः[7] ।
२३] दक्षिणा[8] रूप-वत्यश्[8] च स्त्रियः सर्व-गुणाऽन्विताः[9] ।।१६।। [२४उ
मनोऽभिरामा रामास् ता रामो रमयतां वरः ।[10]
N] रमयामास धर्माऽऽत्मा नित्यं परम-भूषितः[11] ।।१७।। [२५
स तया सीतया सार्धम् आसीनो वि-रराज ह ।
N] अरुन्धत्या सहाऽऽसीनो वसिष्ठ इव तेजसा ।।१८।। [२६
२४उ] एवं रामो मुदा युक्तः सीतां सु-रुचिराऽऽननाम्[12] ।
रमयामास वैदेहीम् अहन्य्-अहन्य् अदेव-वत्[13] ।।[14]१९।। [२७
२५] तथा तां रममाणस्य भार्यां वै शिशिरः शुभः । [२९उ
अत्य्-अक्रामन् नरेन्द्रस्य राघवस्य महाऽऽत्मनः ।।२०[14]।। [२८उ
२६] सीताऽपि[15] देव-कार्याणि कृत्वा पूर्वाऽह्णिकानि च ।
श्वश्रूणाम् अकरोत् पूजां सर्वासाम् अविशेष-तः ।।२१।। [३१
२८] ततो रामम् उपाऽगच्छद् विचित्र-बहु-भूषणा ।[17]
त्रि-विष्टपे सहस्राऽक्षम् उप-विष्टं[18] शची यथा[18] ।।२२।। [३२
२९] दृष्ट्वा तु[19] राघवः पत्नीं[19] शोभमानाम् अ-निन्दिताम् ।
३०पू] प्र-हर्षम् अ-तुलं लेभे साधु साध्व् इति चाऽब्रवीत् ।।२३।। [३३

---

१. च भ$_{2}$–आलम्ब्य । भ$_{1}$–आदाय । २. अ ल$_{2}$–जानुभ्यां । च भ$_{1}$ भ$_{2}$–हस्तेन । ३. च भ$_{1}$ भ$_{2}$–°यकं शुचिः । ४. च भ$_{1}$ भ$_{2}$–इवामृतं । ५. च भ$_{1}$ भ$_{2}$–समुपानयन् । ६. भ$_{1}$ भ$_{2}$–वर्जं–उपानृत्य च । ७. भ$_{1}$ भ$_{2}$–गीतनृत्यवि° । रा$_{1}$–नृत्यगी° । ८. च भ$_{1}$ भ$_{2}$–वर्जं–बालाश्च कामवत्यश् । ९. च भ$_{1}$ भ$_{2}$–वर्जं–किं न वशं गताः । १०. च भ$_{1}$ भ$_{2}$–वर्जं–नास्ति । ११. अ च भ$_{1}$ भ$_{2}$ प्र–°ताः । १२. च भ$_{1}$ भ$_{2}$–सुरसुतोपमां । १३. अ ब ल$_{1}$ ल$_{2}$ ल$_{3}$ प्र–अहनि देव° । च भ$_{1}$ भ$_{2}$–अहनि राघव । १४. अतः परमधिकः पाठः—च भ$_{1}$ भ$_{2}$–तथानयोर्विहरतोः सीताराघवयोश्चिरम् । दशवर्षसहस्राणि गतानि सुमहात्मनोः ॥ १५. च भ$_{1}$ भ$_{2}$–पूर्वाह्णे देवकार्याणि कृत्वा धर्मेण धर्मवित् । शेषं दिवसभागार्धमन्तःपुरचरोऽभवत् ॥ १६. अ रा$_{1}$ ल$_{2}$ ल$_{3}$ ब अ प्र–पूर्वाह्णे । १७. च भ$_{1}$ भ$_{2}$–अभ्यगच्छत्ततो रामं चित्राम्बरविभूषिता । १८. च भ$_{1}$ भ$_{2}$–उपतिष्ठेद्यथा शची । १९. च भ$_{1}$ भ$_{2}$–च राघवः सीतां ॥

अपत्य-कालो वैदेहि तवाऽयं समुप-स्थितः ।
३१] किम् इच्छसि वराऽऽरोहे[1] कः कामः क्रियताम् इति[2] ॥२४[3]॥ [३४
प्र-हसन्ती च वैदेही रामं वाक्यम् अथाऽब्रवीत् ।[4]
३२] तपो-वनानि रम्याणि द्रष्टुम् इच्छामि राघव ॥२५॥ [३५
गङ्गा-तीरे नि-विष्टानाम्[5] ऋषीणाम्[6] अग्र्य-तेजसाम्[7] ।
३३] धन्यानाम्[8] अहम् इच्छामि[8] समीपे परि-वर्तितुम् ॥२६॥ [३६
एष मे नृ-प[9] कामोऽद्य फलमूलीय-भोजने[9] ।
३४] अप्य् एक-रात्रं काकुत्स्थ नि-वसेयं तपो-वने ॥२७॥ [३७
तथेति च प्रति-ज्ञातं[10] रामेणाऽक्लिष्ट-कर्मणा ।
३५] वि-स्रब्धा[11] भव वैदेहि श्वो यास्यसि तपो-वनम्[12] ॥२८॥ [३८
एवम् उक्त्वा तु काकुत्स्थो मैथिलीं[13] जनकाऽऽत्मजाम् ।
३६] मध्य-कक्षाऽन्तरं रामो निर्-जगाम सुहृद्-वृतः । [३९
N] मन्त्रिभिर् मन्त्र-तत्त्व-ज्ञैर्[14] बल-मुख्यैश् च सं-वृतः ॥२९॥ [N

इत्यार्षे रामायण उत्तर-काण्डे सीता-प्रमोदो नाम
चतुश्चत्वारिंशः सर्गः ॥४४[15]॥

## [ वं-४६ ]= [ पञ्चचत्वारिंशः सर्गः ] =[ दा-४३ ]

तत्रोप-विष्टं[16] राजानम्[17] उपाऽऽसांचक्रिरे तदा[17] ।
१] कथानां बहु-जल्पानां[18] कथा-काराः सु-संहिताः[18] ॥ १ ॥ [१
वि-जयो मधु-मत्तश्[19] च कश्यपः[19] पिङ्गलस् तथा[20] ।
२] पशु-राजी कलिर् भद्रो वज्र-दन्तः स-मागधः ॥[21]२[22]॥ [२

---

१. च $भ_1$ $भ_2$–त्वं कल्याणि । २. च $भ_1$ $भ_2$–तव । ३. $ल_3$ ब–नास्ति । ४. च $भ_1$ $भ_2$–सीतापि सस्मितं वाक्यमुवाच मधुराक्षरम् । $ल_3$ ब–नास्ति । ५. अ $ल_2$ ब प्र–प्रवि° । ६. $भ_1$ $भ_2$–मुनीनाम् । ७. च $ल_1$ प्र–अग्रते° । $भ_1$ $भ_2$–उग्रते° । ८. च $भ_1$ $भ_2$–वर्जे–वन्यमाहारमिच्छामि । ब–वन्यमाहारयिष्यामि । ९. च $भ_1$ $भ_2$–परमः कामो यन्मूलफलभोजनम् । १०. अ च $रा_1$ $ल_1$ $ल_2$ $ल_3$ ब प्र–परिज्ञातं । ११. $रा_1$ $ल_2$ $ल_3$–वर्जं–विश्रब्धा । १२. $भ_1$–°वने । १३ च $भ_1$ $भ_2$–जानकीं । १४. च $भ_1$ $भ_2$–तत्त्वज्ञो । १५. च $भ_1$ $भ_2$–नास्त्यत्र सर्गसमाप्तिः । १६. $रा_1$–तथोप° । १७. च $भ_1$ $भ_2$–रामं तु सुहृदः पर्युपासते । १८. च $भ_1$ $भ_2$–बहुरूपाणां शृण्वन्तं सारचित्रतां । १९. च $भ_1$ $भ_2$–°मांश्चैव विशिष्टः । $ल_1$–°त्तश् च काश्यपः । २०. च $भ_1$ $भ_2$–कुहुः । प्र–सुतः । २१. $भ_1$–सुराजीकश्च भद्रश्च वज्रदन्तश्च माग° । च $भ_2$–सुराजीकश्च वज्रश्च वज्रदन्तश्च माग° । २२. $ल_3$ ब–नास्ति ॥

एते कथा बहु-विधाः परिहास-समन्विताः ।
३] कथयन्ति स्म[1] ते हृष्टा[1] राघवस्य महाऽऽत्मनः[2] ॥ ३ ॥ [३
ततः कथायां कस्यां-चिद् राघवः सम्-अभाषत ।
४] का कथा वर्तते भद्र पुरे[3] जानपदे[4] तथा[4] ॥ ४ ॥ [४
माम्[5] आ-श्रितानि कान्य् आहुः[5] पौर-जानपदा जनाः ।
५] किं च सीतां समा-श्रित्य भ्रातॄन्[6] आ-श्रित्य किं च मे[6] ॥५॥ [५
कैकेयीं[7] किं सु-मित्रां च कौशल्यां[7] मातरं च मे ।
६] वक्तव्य-तां हि[8] राजानो नवे राज्ये व्रजन्ति[8] हि ॥ ६ ॥ [६
एवम् उक्तस् तु रामेण भद्रः प्राऽञ्जलिर् अब्रवीत् ।
७] शुभाऽशुभाः कथा राजन् वर्तन्ते[9] पुर-वासिनाम्[9] ॥७[10]॥ [७
अयं च[11] वि-जयः सौम्य दशग्रीव-वधाऽऽश्रितः[12] ।
८] भूयिष्ठं तु[11] पुरे पौरैः कथ्यते पुरुषर्षभ[13] ॥८[10]॥ [८
एवम् उक्तस् तु भद्रेण राघवो वाक्यम् अब्रवीत् ।
९] कथयस्व यथा-तत्त्वं[14] किम् आहुः पुर-वासिनः[14] ॥ ९ ॥ [९
शुभाऽशुभानि वाक्यानि यानि मे गुणदोषतः ।[15]
१०] श्रुत्वेदानीं शुभं कुर्यां[16] वर्जयेयम्[17] अथाऽशुभम्[17] ॥१०॥ [१०
कथयस्व च[18] वि-स्रब्धो[18] निर्-भयो विगत-ज्वरः ।
११] कथयन्ति यथा पौरास् तथा[19] जानपदा जनाः[19] ॥[20]११॥ [११
काकुत्स्थेनैवम् उक्तस् तु भद्रस् तु रुचिरं वचः ।[21]
१२] उवाच प्राऽञ्जलिर् भूत्वा राघवं वाक्य-कोविदः ॥[22]१२॥ [१२

---

१ च भ$_1$ भ$_2$–नरेन्द्रस्य । २. च भ$_1$ भ$_2$–समीपतः । ३. अ रा$_1$ ल$_2$ ल$_3$ ब प्र–वर्तते । ल$_1$–वार्तिकी । ४. अ ल$_2$–विषयेषु ते । रा$_1$ ल$_1$ ल$_3$ ब प्र–विषयेषु च । ५. च भ$_1$ भ$_2$–मय्याश्रिता वा किन्नाहुः । ६. च भ$_1$ भ$_2$–भरतं किञ्च लक्ष्मणम् । ७. च भ$_1$ भ$_2$–वर्जं–किञ्च शत्रुघ्नमाश्रित्य कैकेयीं । ८. च भ$_1$ भ$_2$–नृपतयो वै राज्येन प्रयान्ति । ९. च भ$_1$ भ$_2$–क्रियंते पुरवासिभिः । १०. रा$_1$ ल$_3$ ब–नास्ति । ११. भ$_1$ भ$_2$–तु । १२. च भ$_1$ भ$_2$–°वधस्तथा । १३. च भ$_1$ भ$_2$–कथ्यते पौरैः पौरजानपदैस्तथा । १४. अ ल$_1$ ब प्र–°तथ्यं सर्वं निरवशेषतः । रा$_1$ ल$_2$ ल$_3$–°तथ्यं सर्वमिव विशेषतः । १५. च भ$_1$ भ$_2$–वर्जं–शुभानि वाक्यानि मयि कान्याहुः पुरवासिनः । १६. अ च भ$_1$ भ$_2$ ल$_2$ प्र–वाक्यं । १७. च भ$_1$ भ$_2$–वर्जं–न कुर्यामशुभानि च । १८. च भ$_1$ भ$_2$–सुविश्रब्धं । १९. रा$_1$ ल$_2$ ब–जना जनपदेषु च । २०. अ ल$_1$ ल$_2$–नास्ति । २१. अ ल$_1$ ल$_2$–नास्ति । रा$_1$ ल$_3$ ब–राघवेणैवमुक्तस्तु भद्रः प्रह्वः कृताञ्जलिः । २२. च भ$_1$ भ$_2$–वर्जं–प्रत्युवाच महाबाहुं काकुत्स्थं सुसमाहितः ॥

श्रृणु राजन् यथा पौराः कथयन्ति शुभाऽशुभम्[1] ।
१३] चत्वराऽऽपण-रथ्यासु वनेषूऽप-वनेषु च ॥१३॥ [१३
दुष्-करं[2] कृतवान् रामः सागरे[3] सेतु-बन्धनम्[4] ।
१४] न कृतं पूर्व-कैः कैश्-चित् सम्-उद्रे सेतु-बन्धनम् ॥[5]१४॥ [१४
रावणः सु-दुराधर्षो[6] हतः स-बल-वाहनः[7] ।
१५] वानराश् च वशं नीता ऋक्षाश्[8] च सह राक्षसैः[8] ॥१५॥ [१५
हत्वा च रावणं युद्धे[9] सीताम्[10] आ-दृत्य राघवः[10] ।
१६] अ-मर्षं पृष्ठ-तः कृत्वा स्व-वेश्म पुनर्[11] आऽव्रजत्[11] ॥[10]१६॥[१६
अङ्कम् आ-रोप्य हि[12] तदा[12] रावणेन बलाद् धृता ।
१७] कीदृशं हृदये[13] तस्य सीता-सम्भोग-जं सुखम् ॥१७॥ [१७
लङ्कायाम्[14] अवसच् चाऽपि[14] ह्य् अशोक-वनिकां गता[15] ।
१८] रक्षसां वशम् आ-पन्नां कथं[16] रामो न कुत्सते[17] ॥१८॥ [१८
अस्माभिर्[18] अपि दारेषु[19] सहनीयं भविष्यति ।
१९] यादृग् भवति राजा तु तादृशी भवति प्र-जा ॥[20]१९॥[१९
एवं[21] बहु-विधा वाचो वदन्ति पुर-वासिनः ।
२०] वैदेह्याश् च पुरे राजन् ना(?ज)ना जन-पदेषु च ॥[22]२०॥[२०
तस्यैतद्[23] भाषितं श्रुत्वा[23] राघवः परमाऽर्थ-वित्[24] ।
२१] उवाच सु-हृदः सर्वान् कथम् एतद् ब्रवीत[25] मे[25] ॥२१॥ [२१
ते[26] सर्वे शिरसा भूमाव्[26] अभि-वाद्य प्र-णम्य च ।
२२] प्रत्य्-ऊचु[27] राघवं दीनम्[27] एवम् एतन् न सं-शयः ॥२२॥ [२२

---

१. च भ$_1$ भ$_2$–वर्ज–शुभं त्वयि । २. भ$_1$–दुष्कृतं । ३. च भ$_1$ भ$_2$–समुद्रे । ४. रा ल$_1$ ल$_2$ ल$_3$ व प्र–°ने । ५. अ ल$_1$ ल$_2$–नास्ति । ६. च भ$_1$ भ$_2$–चदु° । ७. अ च ल$_2$ प्र–सुख° । ८. च भ$_1$ भ$_2$–वर्ज–हत्वा रक्षांसि चैव हि । ९. अ ल$_2$–स वै । १०. ल$_1$–नास्ति । ११. च भ$_1$ भ$_2$–प्रत्यपादयत् । ल$_3$ व प्र–पुनरागमत् । १२. च भ$_1$ भ$_2$–याऽरण्ये । १३. अ भ$_1$ भ$_2$ प्र–°यं । १४. च भ$_1$ भ$_2$–लङ्कां चापि पुरीं नीता । १५. च भ$_1$ भ$_2$–शुभां । १६. च भ$_1$ भ$_2$–दृष्ट्वा । १७. च भ$_1$ भ$_2$–कुप्यते । १८. भ$_1$–अस्माकम् । १९. च भ$_1$ भ$_2$–दाराणां । २०. च भ$_1$भ$_2$–वर्ज–यथा हि कुरुते राजा प्रजा तमनुवर्तते । २१. भ$_1$ भ$_2$–एता । २२. च भ$_1$ भ$_2$–जानक्याश्च जनो राजन्पौरजानपदस्तथा । २३. च भ$_1$ भ$_2$–तस्य श्रुत्वाप्रियं वाक्यं । २४. च भ$_1$ भ$_2$–वर्ज–°मार्तवत् । २५. च भ$_1$ भ$_2$–इति प्रभुः । रा$_1$ व–ब्रवीति मे । प्र–°तु मे । २६. च भ$_1$ भ$_2$–सर्वे तु शिरसा भूमिम् । २७. च भ$_1$ भ$_2$–ऊचुर्नरपतिं वीरा ॥

श्रुत्वा तु[1] वाक्यं काकुत्स्थः सर्वैस् तैः[1] समुद्-ईरितम् ।
२३] वि-सर्जयामास तदा[2] सर्वांस् तान् छत्रु-तापनः ॥२३॥ [२३

इत्यार्षे रामायण उत्तर-काण्डे जनाऽपवादो[3] नाम
पञ्चचत्वारिंशः सर्गः ॥४५॥

---

## [ वं–४७ ]= [ षट्चत्वारिंशः सर्गः ] =[ दा–४४ ]

वि-सृज्य च[4] सुहृद्-वर्गं बुद्ध्या निश्-चित्य राघवः ।
१] समीपे द्वाः-स्थम् आसीनम् इदं वचनम् अब्रवीत् ॥ १ ॥ [१
शीघ्रम् आ-नय सौमित्रिं लक्ष्मणं शुभ-लक्षणम् ।
२] भरतं च महा-बाहुं शत्रु-घ्नं चाऽपराजितम् ॥ २ ॥ [२
रामस्य भाषितं श्रुत्वा द्वाः-स्थो[5] मूर्ध्नि कृताऽञ्जलिः ।
३] लक्ष्मणस्य गृहं गत्वा प्र-विवेश त्वराऽन्वितः ॥[6] ३ ॥ [३
उवाच च महाऽऽत्मानं वन्दयित्वा कृताऽञ्जलिः ।[7]
४] द्रष्टुम् इच्छति राजा त्वां गम्यतां तत्र मा चिरम् । [४
यावद् भरत-शत्रुघ्नौ त्वरयामि नृपाऽऽज्ञया ॥ ४ ॥ [N
५] बाढम् इत्य् एव सौमित्रिः श्रुत्वा रामस्य शासनम् ।
प्राऽद्रवद् रथम् आ-स्थाय[8] राघवस्य[9] नि-वेशनम् ॥ ५ ॥ [५
६] प्र-यान्तं लक्ष्मणं दृष्ट्वा द्वाः-स्थो भरतम् अन्तिके ।[10] [६पू
उवाच प्राऽञ्जलिर् वाक्यं राजा त्वां द्रष्टुम् इच्छति ॥ ६ ॥
७] भरतस् तु वचः श्रुत्वा द्वाः-स्थाद्[11] राम-समीरितम्[11] । [७
उत्-पपाताऽऽसनात् तूर्णं पद्भ्याम् एव ततोऽगमत्[12] ॥ ७ ॥
८] दृष्ट्वा प्र-यान्तं भरतं त्वरमाणः कृताऽञ्जलिः । [८
शत्रुघ्न-भवनं गत्वा शत्रु-घ्नं[13] वाक्यम् अब्रवीत्[13] ॥ ८ ॥

---

१. च $भ_1$ $भ_2$–वाक्यं च तत्तेषां काकुत्स्थः । २. च $भ_1$ $भ_2$–ततः । ३. अ $रा_1$ $ल_1$ $ल_2$ $ल_3$ ब प्र–प्रजाप्रमोशो । ४. च $भ_1$ $भ_2$–तं । ५. च $भ_1$ $भ_2$–गत्वा । ६. च $भ_1$ $भ_2$ $ल_1$–नास्ति । ७. च $भ_1$ $भ_2$–अब्रवील्लक्ष्मणं पूर्वं सोभिगम्य विनीतवत् । $ल_1$–नास्ति । ८. च $भ_1$ $भ_2$–आरुह्य । ९. च $भ_1$ $भ_2$–वर्जं–रामस्य च । १०. च $भ_1$ $भ_2$–प्रयाते लक्ष्मणे द्वास्थो भरतं गृहमाश्रितं । ११. च $भ_1$ $भ_2$–द्वास्थेन च स° । १२. च $भ_1$ $भ_2$–ययौ च सः । १३. च $भ_1$ $भ_2$–वर्जं–ततो वाक्यं जगाद च ॥

९] इहाऽऽगच्छ[1] रघु-श्रेष्ठ रामस्[2] त्वां द्रष्टुम् इच्छति । [९
गतो हि लक्ष्मणः पूर्वं[3] भरतश् च महा-यशाः[4] ॥ ९ ॥

१०] श्रुत्वा तु वचनं तस्य शत्रु-घ्नो राम-शासनम्[5] ।
शिरसा प्रति-गृह्याऽऽशु ययौ यत्र स राघवः ॥[6] १० ॥ [१०

११] द्वाः-स्थश्[7] चाऽऽगत्य[7] रामाय सर्वान् एव कृताऽञ्जलिः ।
नि-वेदयामास तदा भ्रातॄंस् तान् समुप-स्थितान् ॥ ११ ॥ [११

१२] कुमारान् आ-गताञ् छ्रुत्वा[8] चिन्ता-व्याकुलितेन्द्रियः ।
अवाक्-शिरा दीन-मना द्वाः-स्थं वचनम् अब्रवीत् ॥ १२ ॥ [१२

१३] प्र-वेशय कुमारांस् त्वं[9] मत्-समीपं त्वराऽन्वितः ।
एतेषु जीवितं चैव प्राणाश् च मम साम्प्रतम् ॥[10] १३ ॥ [१३

१४] आ-ज्ञप्तास् ते नरेन्द्रेण कुमाराः शुक्ल-वाससः[11] ।
प्र-ह्वाः प्राऽञ्जलयः सर्वे[12] विविशुस् ते समा-हिताः[12] ॥ १४ ॥ [१४

१५] एते दृष्ट्वा मुखं तस्य ह्य् अ-प्रभं शशिनं यथा ।[13]
सन्ध्या-गतम् इवाऽऽदित्यं प्र-भया[14] परि-वर्जितम्[14] ॥ १५ ॥ [१५

१६] बाष्प-पूर्णे च नयने दृष्ट्वा रामस्य धी-मतः ।
गत-शोभं यथा पद्मं मुखं वीऽऽक्ष्य च तस्य ते ॥[15] १६ ॥ [१६

१७] ततोऽभि-वाद्य त्वरिताः पादौ रामस्य मूर्धभिः ।[16]
तस्थुः प्राऽञ्जलयः सर्वे रामस् त्व् अश्रूण्य्[17] अवर्तयत् ॥ १७ ॥ [१८

१८] तान् परि-ष्वज्य बाहुभ्याम् उत्थाप्य[18] स महा-भुजः[18] ।
आसनेष्व् आसतेत्य् उक्त्वा ततो वाक्यं जगाद ह ॥[19] १८ ॥ [१९

१९] भवन्तो मम सर्व-स्वं भवन्तो मम जीवितम् ।
भवतां च कृते राज्यं पालयामि नरेश्वराः ॥[20] १९ ॥ [२०

---

१. च भ$_1$ भ$_2$ ल$_1$–एह्याग° । २. च भ$_1$ भ$_2$–राजा । ३. ल$_1$–तूर्णं । ४. च भ$_1$ भ$_2$–महाबलः । ५. च भ$_1$ भ$_2$–°सनात् । ६. च भ$_1$ भ$_2$–शिरसाभिनन्द्य शत्रुघ्नः प्रययौ यत्र राघवः । ७. च भ$_1$ भ$_2$–तत्रागम्य स । ८. च भ$_1$ भ$_2$–दृष्ट्वा । ९. भ$_1$ भ$_2$–तान् । १०. च भ$_1$ भ$_2$–मम जीवितमेते हि प्राणाश्चैव बहिश्चराः । ११. च भ$_1$ भ$_2$–सूक्ष्मवा° । १२. च भ$_1$ भ$_2$–भूत्वा प्राविशन्पुरुषर्षभाः । १३. च भ$_1$ भ$_2$–दृष्ट्वा पूर्णं यथा चन्द्रं राहुणा समभिद्रुतं । १४. च भ$_1$ भ$_2$–अन्तरा तमसावृतं । १५. च भ$_1$ भ$_2$–क्लिष्टपत्रस्य पद्मस्य मुखं च सदृशप्रभं । १६. च भ$_1$ भ$_2$–शिरोभिस्ते तदा राममभिवाद्य नृपात्मजाः । १७. च भ$_1$ भ$_2$–वर्जं–अस्रूण्य् । १८. च भ$_1$ भ$_2$–हर्षेण मनुजाधिपः । १९. च भ$_1$ भ$_2$–आसध्वमिति चोक्त्वा तांस्ततो वाक्यमथाब्रवीत् । २०. च भ$_1$ भ$_2$–नास्ति ॥

२०] भवन्तः कृत-शास्त्राश् च बुद्धौ च परिनि-ष्ठिताः ।[१]
२१पू] सं-भूय च मद्-अर्थोऽयं सर्वैश् चिन्त्यो नरर्षभाः[२] ॥[३]२०॥ [२१

इत्यार्षे रामायण उत्तर-काण्डे कुमाराऽऽह्वानं नाम
षट्चत्वारिंशः सर्गः ॥४६[४]॥

---

## [ वं–४८]= [ सप्तचत्वारिंशः सर्गः ] =[दा–४५]

तेषां समुप-विष्टानां सर्वेषां दीन-चेतसाम्[५] ।
१] उवाच वाक्यं काकुत्स्थो मुखेन परि-शुष्यता ॥[६] १ ॥ [१
इदं शृणुत भद्रं वो मा कुरुध्वं मनो-व्यथाम् ।
N] पौराणां चैव सीताया यादृशी वर्तते कथा ॥ २ [७]॥ [२
पौराऽपवादः सु-महान् तथा जन-पदेषु च ।[८] [३पू
२] चारित्रे[९] प्रति वैदेह्या अ-ज्ञानान् मन्द-बुद्धिभिः ॥ ३ ॥ [N
अ-यशः सु-महत् प्राऽऽप्तं पुरे जन-पदे[१०] तथा । [N
३] वर्तते मम[११] बीभत्सं[१२] तन्[१३] मे[१३] मर्माणि कृन्तति ॥ ४ ॥ [३उ
अहं किल कुले जात इक्ष्वाकूणां महाऽऽत्मनाम् । [४पू
४] सीतां पाप-समाचाराम् आ-नयेयं पर-क्षयात् ॥ ५ ॥ [६उ
जानीषे हि यथा सौम्य दण्डके वि-जने वने ।[१४]
५] रावणेन हृता सीता स च वि-ध्वंसितो मया ॥ ६ ॥ [५
प्रत्य्-अक्षं तव सौमित्रे देवानां[१५] हव्य-वाहनः[१५] ।
६] अ-पापां मैथिलीं प्राऽऽह[१६] वायुश् चाऽऽकाश-गोचरः ॥ ७ ॥ [७उ

---

१. च भ$_1$ भ$_2$–नास्ति । २. प्र–°र्षभैः । ३. च भ$_1$ भ$_2$–भवद्भिश्च सहार्थोऽयमन्वेष्टव्यो नरर्षभाः । अतः परमधिकश्च पाठः—च भ$_1$ भ$_2$–तथा वदति काकुत्स्थे सर्वे ध्यानपराः स्थिताः । चिन्तयन्तोऽपि ते नैव पश्यन्तोद्वेग-कारणम् । वितर्कमनसः सर्वे किं नु राजाभिधास्यति ॥ ४. च भ$_1$ भ$_2$–नास्त्यत्र सर्गसमाप्तिः । ५. च भ$_1$ भ$_2$–चैकश्चे° । ६. च भ$_1$ भ$_2$–अश्रुपूर्णेक्षणो राम इदं वचनमब्रवीत् । ७. च भ$_1$ भ$_2$–नास्ति । ८. च भ$_1$ भ$_2$–सीतापवादः सुमहान्पौरजानपदैः कृतः । ९. ल$_1$–चारित्र्यं । १०. च भ$_1$ भ$_2$–जान° । ११. च भ$_1$ भ$_2$–मयि । १२. च भ$_1$–वर्जे–°त्सः । १३. अ–स मे । रा$_1$ ल$_3$ ब–स च । १४. च भ$_1$ भ$_2$–जानासि त्वं यथा सौम्य विजनाद्दण्डकाद्वनात् । १५. च भ$_1$ भ$_2$–यच्च देवो हुताशनः । १६. च भ$_1$ भ$_2$–आह ॥

शशंसतुश्[1] च चन्द्राऽर्कौ[1] सुराणां सन्नि-धौ तदा[2] ।
७] ऋषीणां चैव[3] सर्वेषाम् अ-पापां जनकाऽऽत्मजाम् ॥ ८ ॥ [८
एवं शुद्ध-समाचारा देव-गन्धर्व-सन्निधौ ।
८] लङ्का-द्वीपे महेन्द्रेण मम हस्ते नि-वेशिता ॥ ९ ॥ [९
अन्तर्-आत्मा[4] च मे[5] वेत्ति सीताया गुण-विस्तरम् ।
९] ततस् ताम् अहम्[6] आ-दाय स्वां पुरीं पुनर् आ-गतः ॥१०॥ [१०
अयं[7] तु मे महाञ् छोको[7] हृदि शल्यम् इवाऽर्पितः[8] ।
१०] घोरोऽप-वादः सीतायाः पौर-जानपदैः कृतः ॥[9]११॥ [११
अ-कीर्तिर् यस्य गीयेत लोके भूतस्य कस्य-चित् ।
११] वसते ह्य् अधमे लोके यावच् छब्दोऽस्य कीर्त्यते ॥[10]१२॥ [१२
कीर्तिर् एवाऽतुला लोके कीर्तिर् देवेषु पूज्यते ।
१२] कीर्तेर् धर्मः प्र-भवति वचो ह्य् एतन् महाऽऽत्मनाम् ॥१३[11]॥
सर्वाऽऽरम्भाश् च कीर्त्य्-अर्थं क्रियन्ते सु-महाऽऽत्मभिः । [१३
N] कीर्त्या सुखम् इहाऽऽप्नोति अमुत्र च महद् यशः ॥१४[12]॥ [N
अप्य्[13] अहं[13] जीवितं जह्यां युष्मान् वा[14] पुरुषर्षभाः[14] ।
१३] अपवाद-भयाद् भीतः किं पुनर् जनकाऽऽत्मजाम् ॥१५॥ [१४
ते मां भवन्तः पश्यन्तु पतितं शोक-सागरे ।
१४] न[15] हि[15] पश्याम्य् अहं[16] भूयः किं-चिद् दुःखम्[17] अतोऽधिकम्[17] [१५
स[18] त्वं प्र-भाते[18] सौमित्रे सुमन्त्राऽधिष्ठितं[19] रथम्[19] ।
१५] आ-रुह्य सीतां चाऽऽरोप्य[20] विषयाऽन्ते परि-त्यज[21] ॥१७॥ [१६

---

१. च भ$_1$ भ$_2$-शंसतुश्चन्द्रसूर्यौ तु । २. च भ$_1$ भ$_2$-तथा । ३. च भ$_1$ भ$_2$-अपि । ४. च भ$_1$ भ$_2$-वर्जं-अहमात्मा । ५. अ ब-ते । ६. च भ$_1$ भ$_2$-वर्जं-पुनर् । ७. च भ$_1$ भ$_2$-वर्जं-जाता तु मे महाशङ्का । ८. भ$_1$-वर्जं-°र्पितम् । ९. च भ$_1$ भ$_2$-वर्जं-पौरापवादः सुमहांस्तथा जनपदस्य च । अतः परमधिकश्च पाठः—च भ$_2$-वर्जं-वर्तते मम बीभत्सः स च मर्माणि कृन्तति । १०. च भ$_1$ भ$_2$-पतत्येवाधमाल्लोकान्यावच्छब्दोस्य गीयते । ११. च भ$_1$ भ$_2$-लोककीर्त्या त्वतुलया पूज्यन्ते त्रिदिवे नराः । कीर्त्या चाप्यसमारम्भा वासः स्वर्गे महात्मनाम् ॥ १२. च भ$_1$ भ$_2$-नास्ति । १३. च भ$_1$ भ$_2$-अवश्यं । १४. च भ$_1$ भ$_2$-वापि नरर्षभाः । १५. च भ$_1$ भ$_2$-न च । रा$_1$ ल$_3$ ब-नेह । १६. च भ$_1$ भ$_2$-अतो । १७. च भ$_1$ भ$_2$-दुःखतरं नृणां । १८. च भ$_1$ भ$_2$-श्वः प्रभाते तु । १९. रा$_1$ ल$_1$ ल$_2$ ल$_3$ ब प्र-°ष्ठिते रथे । २०. भ$_1$ भ$_2$-आरोप्य । २१. च भ$_1$ भ$_2$-समुत्सृज ॥

गङ्गायास् तु परे पारे वाल्मीकेस् तु महाऽऽत्मनः ।
१६] आ-श्रमो[1] दिव्य-सङ्काशस् तपस्वि-जन-सम्प्रियः[2] ॥१८॥ [१७
तत्रैनां[3] वि-जनेऽरण्ये वि-सृज्य[4] रघु-नन्दन ।
१७] शीघ्रम् आ-गच्छ सौमित्रे कुरुष्व वचनं मम ॥१९॥ [१८
न[5] चाऽस्ति[5] प्रति-वक्तव्यं[6] सीतां प्रति कथं-चन । [१९पू
१८] अ-प्रीतिर्[7] हि परा[7] मे स्याद् भवद्भिः प्रति-वारिते ॥२०॥
शापिताश् च मया यूयं[8] भुजाभ्यां जीवितेन च । [२०
१९] ये मां वाक्याऽन्तरं ब्रूयुर् अनु-नेतुं कथं-चन ।[9] [२१पू
N] मानयन्तु भवन्तो मां यदि मच्-छासने स्थिताः ॥[10]२१॥[२२पू
२०उ] यद्य् अहं प्र-भविष्णुर् वा यदि वा मयि गौरवम् । [N
इतोऽद्य[11] नीयतां सीता[11] कुरुष्व वचनं मम ॥२२[10]॥[२२उ
२१] पूर्वम्[12] उक्तोऽहम् अनया[12] गङ्गा-तीरेऽहम् आ-श्रमम्[13] ।
पश्येयम् इति[14] चाऽप्य् अस्याः कामः सं-पाद्यताम् अयम् ॥[15]२३॥[२३
एवम् उक्त्वा तु काकुत्स्थो बाष्पेणाऽपिहितेक्षणः[16] ।
२२] सं-विवेश[17] स धर्माऽऽत्मा भ्रातृभिः परमाऽर्दितः[18] ॥[19]२४॥[२४

इत्यार्षे रामायण उत्तरकाण्डे राम-वाक्यं[20] नाम
सप्तचत्वारिंशः सर्गः ॥[21]४७॥

---

## [ वं-४६ ]= [ अष्टाचत्वारिंशः सर्गः ] =[ दा-४६ ]

ततो रजन्यां व्य्-उष्टायां लक्ष्मणो दीन-मानसः ।
१] सु-मन्त्रम् अब्रवीद् वाक्यं मुखेन परि-शुष्यता ॥ १ ॥ [१

---

१. भ$_1$-°मे । २. च भ$_1$ भ$_2$-तमसातीरमाश्रितः । ३. अ रा$_1$ ल$_1$-अत्रेमां । ४. च भ$_1$ भ$_2$-ह्युत्सृज्य । ५. च भ$_2$ ल$_1$ प्र-न चास्मि । भ$_1$-त्वयास्मि । ६. च भ$_1$ भ$_2$ ल$_1$-°व्यः । ७. च भ$_1$ भ$_2$-°तिः परमा । ८. भ$_1$ भ$_2$-पूर्वं । ९. च भ$_1$ भ$_2$-यो मे वाक्यान्तरं ब्रूयाद्वचोनुनयसंहितं । १०. अ ल$_2$-नास्ति । ११. च भ$_1$ भ$_2$-नीयतां जानकी शीघ्रं । १२ च भ$_1$ भ$_2$-पूर्वं कामो हि वैदेह्या । १३. च भ$_1$ भ$_2$-°मान् । १४. अ ल$_1$ ल$_2$-अपि । १५. च भ$_1$ भ$_2$-द्रष्टुमिच्छेयमित्येवं स कामः क्रियतामिति । १६. च भ$_1$ भ$_2$ रा$_1$-बाष्पेण पिहितेन्द्रियः । १७. भ$_1$-प्रवि° । १८. अ रा$_1$ ल$_2$ ल$_3$ ब-°मार्चितः । १९. अतः परमधिकः पाठः—च भ$_1$ भ$_2$-शोकसंविग्नहृदयो निशश्वास यथा द्विपः । २०. अ ल$_2$ ल$_3$ ब प्र-कुमारवाक्यं । २१. च भ$_1$ भ$_2$-नास्त्यत्र सर्गसमाप्तिः ॥

सारथे शीघ्र-तुरगम् आ-नयस्व[1] रथं मम[1] ।
२] स्व्-आस्तीर्णं[2] राज-भवनात् सीताया ह्य्[2] आसनं[2] शुभम् ।।[3] २।। [२
सीता हि राज-भवनाद्[4] आ-श्रमं पुण्य-कर्मणाम्[4] ।[5]
३] उप-नेया महर्षीणां शीघ्रम् आ-नीयतां रथः ।। ३ ।। [३
सु-मन्त्रस् तु तथेत्य् उक्त्वा रथं परम-वाजिभिः ।
४] युक्तं सु-रुचिर-प्रख्यं स्व्-आस्तीर्णं सुख-शय्यया ।।[6] ४ ।। [४
उवाच शीघ्रम्[7] आ-गम्य[7] सौमित्रिं मित्र-वत्सलम् ।
५] रथोऽयं समनुप्राऽऽप्तो यत् कार्यं[8] क्रियतां तु[8] तत्[8] ।। ५ ।। [५
एवम्[9] उक्तः सु-मन्त्रेण राज-वेश्म स[9] लक्ष्मणः ।
६] प्र-विश्य सीताम् अभ्येत्य[10] व्या-जहार परं-तपः[10] ।। ६ ।। [६
गङ्गा-तीरे[11] ह्य् अहं देवि मुनीनाम् आ-श्रमे[12] शुभे ।
७] शीघ्रं हि त्वां वि-नेष्यामि शासनात् पार्थिवस्य वै ।।७[13]।। [८
एवम् उक्ता तु वैदेही लक्ष्मणेन महाऽऽत्मना ।
८] प्र-हर्षम् अ-तुलं लेभे गमनं[14] चाऽप्य् अरोचयत्[14] ।।[15] ८ ।।[९
१०३] वासांसि च वि-चित्राणि[16] रत्नानि वि-विधानि च[16] ।
सा वै गृहीत्वा वैदेही ततो लक्ष्मणम्[15] अब्रवीत् । [१०
११] अमूनि मुनि-पत्नीनां दास्याम्य् आ-भरणान्य् अहम् ।। ९[17]।। [११पू
सौमित्रिस् तु तथेत्य् उक्त्वा रथम् आ-रोप्य मैथिलीम् ।
१२] प्र-ययौ शीघ्र-तुरगै[18] रामस्याऽऽज्ञाम् अनु-स्मरन्[18] ।।१०।। [१२

---

१. च भ१ भ२-स्यन्दनं समुपानय । २. च भ१ भ२-वर्जं-स्वास° । ३. अतः परमधिकः पाठः—च भ१ भ२-वर्जं-युक्तं सुरुचिरप्रख्यं स्वास्तीर्णं सुखशय्यया । ४. च भ१ भ२-राजवच्चनाद् ह्याश्रमे वनवासिनाम् । ५. अतः परमधिकः पाठः—च भ१ भ२-वर्जं-आशु वै नीयते सूत शासनाद्राघवस्य वै । ६. च भ१ भ२-युक्तमादाय सम्प्राप्तः स्वास्तीर्णं रचितासनं । ७. च भ१ भ२-स महात्मानं । ८. च भ१ भ२-वर्जं-इति । ९. च भ१ भ२-सुमन्त्रेणैवमुक्तस्तु राजवेश्मनि । १०. च भ१ भ२-वर्जं-आसाद्य व्याजहार नरर्षभः । ११. अ ल२ प्र-°रं । १२. अ ब-°मं । १३. च भ१ भ२-त्वं देवि गङ्गापुलिने ह्याश्रमे वनवासिनां । उपनेया मया गत्वा शासनात्पार्थिवस्य तु ।। १४. च भ२-चक्रे च गमनं प्रति । १५. भ१-नास्ति । १६. च-महार्हाणि सौमित्रे वनवासिनां । भ१ भ२ ल१ ल३-महार्हाणि दिव्यान्याभरणानि च । १७. अ ल२-नास्ति । १८. च भ१ भ२-शीघ्रतुरगं रथमारोप्य सुप्रभं ।।

अब्रवीद् अथ सा सीता लक्ष्मणं शुभ-लक्षणम्[1] ।[2]

१४] अ-शुभानि बहून्य् अद्य[3] पश्यामि रघु-नन्दन ।।११।। [१३

नयनं मेऽस्फुरत् सव्यं ममोत्-कण्ठाऽति-जायते ।[4]

१५] अ-स्वस्थम् इव सौमित्रे हृदयं चोप-लक्षये ।।[5]१२।। [१४

औत्सुक्यं परमं[6] चाऽपि अ-धृतिश् च परा मम[6] ।

N] शून्याम्[7] इव च[8] पश्यामि पृथिवीं पृथु-लोचन ।।१३।। [१५

दृष्टं[8] च[9] तस्य देवस्य भ्रातुस्[10] ते भ्रातृ-वत्सल ।

N] स्मरामि चैव[11] मे रामो हृदयाद् अप-सर्पति ।।१४।। [N

कुशलं च भवेत् सम्यग् भ्रातुस् ते भ्रातृभिः सह ।[12]

१६] श्वश्रूणां चैव[13] सौमित्रे सर्वासाम् अविशेष-तः ।।१५।। [१६

१७पू] पुरे जन-पदे चैव कुशलं[14] प्राणिनाम् इह[14] ।

N] इत्य्-अञ्जलिं च[15] सा कृत्वा देवतास् त्व् अभ्य्-अयाचत[15] ।।१६।।[१७

लक्ष्मणोऽथ ततोऽप्य् एवं शिरसा वन्द्य[16] मैथिलीम् ।

N] शिवम् इत्य्-अब्रवीद् धृष्टो हृदयेन वि-दीर्यता[17] ।।१७[18]।। [१८

ततो वासम् उपा-गम्य गो-मत्यास् तीर आ-श्रमे ।[19]

१८] प्र-भाते कल्यम्[20] उत्थाय सौमित्रिः सूतम् अब्रवीत् ।।१८[21]।। [१९

योजयस्व[22] रथं[22] तूर्णम् अद्य भागीरथी-जलम् ।

१९] शिरसा धारयिष्यामि देवः[23] पशु-पतिर्[23] यथा ।।१९[23]।। [२०

अश्वांस् तु स्नापयित्वाऽऽशु रथे युक्त्वा मनो-जवान् ।

२०] आ-रोहस्वेति वैदेहीं ततः प्राऽञ्जलिर् अब्रवीत् ।।२०[24]।। [२१

---

१. अ रा$_1$ ल$_3$ ब-°लक्ष्मणं । ल$_1$ प्र-लक्ष्मिवर्धनं । २. च भ$_1$ भ$_2$-उवाच पथि सीता तु सौमित्रिं मित्रवत्सलं । ३. च भ$_1$ भ$_2$-वर्ज-अत्र । ४. च भ$_1$ भ$_2$-वेपन्तीव हि गात्राणि नेत्रं स्फुरति वै भृशं । ५. च भ$_1$ भ$_2$-वर्ज-हृदयं चैव सौमित्रे अस्वस्थं चैव लक्ष्यते । ६. च-मे न च धृतिः परमा हृदि वर्तते । भ$_1$ भ$_2$ °मं मेद्य ह्यधृतिः परमा च मे । ७. च-तथान्यामिव । ८. अ रा$_1$ ल$_2$ ल$_3$ ब-मुखं । ९. च भ$_1$ भ$_2$-हि । १०. ल$_1$-चारु । ११. भ$_1$ भ$_2$-न च । १२. च भ$_1$ भ$_2$-अपि स्वस्ति भवेत्सौम्य राघवायानुजैः सह । १३. भ$_1$ भ$_2$-चापि । १४. च भ$_1$ भ$_2$-सर्वेषु विषयेषु च । १५. च भ$_1$ भ$_2$-कृता सीता दिवसं प्रययौ तदा । १६. ल$_1$-वर्ज-नन्द्य । १७. ल$_1$-वर्ज-विधूयता । १८. च भ$_1$ भ$_2$-नास्ति । १९. च भ$_1$ भ$_2$-गोमतीतीरमासाद्य ह्युपगम्याश्रमं ततः । २०. भ$_1$ भ$_2$-पुनर् । २१. च-नास्ति । २२. भ$_1$ भ$_2$-°याश्वान्रथे । २३. भ$_1$ भ$_2$ प्र-वर्ज-त्र्यंबकः पततीं । २४. च भ$_1$ भ$_2$-सोऽश्वान् प्रनो(णो)दयित्वा तु रथे युक्त्वा मनोरमान् । आरोहेत्यब्रवीत्सीतां सूतो लक्ष्मणमेव च ॥

सा[1] तु सूतस्य वचनाद्[2] आ-रुरोह रथोत्तमम् ।
२१] सीता सौमित्रिणा सार्धं सु-मन्त्रेण[2] च धी-मता[2] ॥२१॥ [२२
अथाऽर्ध-दिवसं[3] गत्वा भागीरथ्या जलाऽऽशयम् । [२३उ
२२] निर्-ईक्ष्य लक्ष्मणो दीनः प्र-रुरोद महा-स्वनम् ॥२२॥ [२४
सीता हि[4] लक्ष्मणं दृष्ट्वा रुदन्तं परमाऽऽतुरम् ।
२३] उवाच वचनं धर्म-ज्ञा[5] किम् इद रुद्यते त्वया[6] ॥२३॥ [२५
जाह्नवी-तीरम् आ-साद्य चिराऽभि-लषितं[7] मम[8] ।
२४] हर्ष-काले किम्-अर्थं मां[9] वि-षादयसि लक्ष्मण ॥२४॥ [२६
२५पू] नित्यं वर्तयसे भ्रातुः पादयोः पुरुषर्षभ ।
२६उ] कच्-चिन् न तद्-विना-भावात् तवेदं दुःखम् आ-गतम् ॥२५॥[२७
ममाऽपि[10] दयितो राजा[11] जीवितेनाऽपि[11] लक्ष्मण ।
२७] न चाऽहम् अपि[12] शोचामि मा[13] गा वि-क्लवताम् इमाम्[13] ॥[14]२६॥[२८
तारयस्व च मां गङ्गां दर्शयस्व च तापसान् ।
२८] तपो-वनेषु[15] वासांसि[15] दास्याम्य् आ-मरणानि च ॥२७॥ [२९
ततः कृत्वा महर्षीणां यथाऽर्हम्[16] अभि-वादनम् ।
२९] तत्रैकां च निशाम् उष्य यास्यामः स्व-पुरीं ततः ॥[17]२८॥[३०
ममाऽपि पद्म-पत्राऽक्षं सिंहोरस्कं[18] कृशोदरम् ।
N] त्वरते हि मनो द्रष्टुं रामं रमयतां वरम् ॥२९॥ [३१

---

१. च भ$_1$ भ$_2$–सूतस्य मनसाज्ञाय। २. च भ$_1$ भ$_2$–सूतेन च सुमन्त्रिणा। ३. च भ$_1$ भ$_2$–ततोर्धं° । प्र–यथा च दि° । ४. च भ$_1$ भ$_2$–तु । ५. ल$_1$ ल$_2$–°ज्ञ । ६. च भ$_1$ भ$_2$–पथि । ७. च भ$_1$ भ$_2$–प्रीतिर्हि मम विद्यते । ८. अ ल$_2$–मे । च भ$_1$ भ$_2$–त्वं । ९. च भ$_1$ भ$_2$–स्मरसि किं । १०. च भ$_2$–ममाद्य । ११. रा$_1$–रामो जीविताद्दपि । १२. अ ल$_2$ ल$_3$ ब प्र–तव । रा$_1$ ल$_1$–एवं । १३. रा$_1$ ल$_1$–मैवं त्वं विवशो भव । १४. अतः परमधिकः पाठः—अ ल$_2$ ब प्र–न चाहमेवं शोचामि मैवं त्वं विवशो भव। १५. च भ$_2$–तेभ्यो धनानि रत्नानि । भ$_1$–तेभ्यो रत्नानि वस्त्राणि । रा$_1$–ततो मुनिभ्यो वा° । १६. च भ$_1$ भ$_2$–यथावद् । १७. च भ$_1$ भ$_2$–उष्य तत्र निशामेकां यास्यामो नगरं पुनः । १८. च भ$_1$ भ$_2$–सिंहस्कन्धं ॥

ततस्[1] तद् वचनं[1] श्रुत्वा प्र-मृज्य नयने शुभे ।[2] [३२पू

३०] तितीर्षुर् लक्ष्मणो गङ्गां शुभां नावम् उपाऽनयत्[3] ॥[4]३०॥ [३४पू

इत्यार्षे रामायण उत्तर-काण्डे सीता-विवासो[5]

नामाष्टाचत्वारिंश: सर्गः ॥ ४८ ॥

---

## [ वं-४६ ]= [ एकोनपञ्चाशः सर्गः ] =[ दा-४७ ]

अथ[6] नावं सु-विस्तीर्णां[7] नैषादीं राघवाऽनुजः ।

३१] आ-रुरोह सु-संयुक्तां पूर्वम् आ-रोप्य मैथिलीम् ॥[8] १ ॥ [१

सु-मन्त्रं चाऽपि[9] स-रथं स्थीयताम् इति लक्ष्मणः ।

३२] उवाच[10] शोक-सन्तप्तः प्र-याहीऽति वि-नाय (?च नावि)कम् ।[11]२।[२

ततस् तीरं समा-साद्य[12] भागीरथ्याः स लक्ष्मणः ।[13]

३४] उवाच प्राऽञ्जलिर् वाक्यं मैथिलीं बाष्प-गद्गदः[14] ॥ ३ ॥ [३

हृद्-गतो[15] मे महान् शोको[16] यद् आर्योऽपि हि बुद्धि-मान्[16] ।[17]

३५] अस्मिन् निमित्ते[18] वैदेहि[19] लोकस्य वचने[20] स्थितः[20] ॥ ४ ॥ [४

श्रेयो हि मरणं मेऽद्य मृत्योर् वा यत् परं भवेत् ।[21]

३६] न चाऽस्मिन्न्[22] ईदृशे कार्ये नि-योगो[23] लोक-निन्दिते ॥ ५ ॥ [५

---

१. च भ$_1$ भ$_2$-तस्यास्तन्न्नाषितं । २ अत: परमधिकः पाठ:—रा$_1$-नाविकानाह्वयामास लक्ष्मणः परवीरहा । इयं च सज्जा नौश्चेति दाशाः प्राञ्जलयोऽब्रुवन् ॥ ३. रा$_1$-उपाहरत् । ४. च भ$_2$-नास्ति । भ$_1$-गङ्गां संतारयामास लक्ष्मणः परवीरहा । अतः परमधिकः पाठ:—रा$_1$-गङ्गां संतारयामास लक्ष्मणस्तां समाहितः । ५. च भ$_2$ रा$_1$-सीतावनवासो । ६. इतःपूर्वमधिकः पाठः—च भ$_1$ भ$_2$-नाविकानाह्वयामास लक्ष्मणः परवीरहा । इमे स्म सज्जा नौश्चेयमिति ते तमथाब्रुवन् ॥ च भ$_1$ भ$_2$-ततो । ७. अ रा$_1$ ल$_1$ ल$_2$ ल$_3$ ब-सुसंस्तीर्णां । च भ$_1$ भ$_2$-सुखास्तीर्णां । ८. च भ$_1$ भ$_2$-आरोप्य सीतां प्रथमं सोऽभ्यारोहन्महारथः । ९. रा$_1$-चैव । १०. च भ$_1$ भ$_2$ प्र-तथा च । ११. अ ल$_1$ ल$_2$ ल$_3$ ब-नास्ति । १२. रा$_1$-उपागम्य । १३. अ ल$_1$ ल$_2$ ल$_3$ ब-नास्ति । अतः परमधिकः पाठः—च भ$_1$ भ$_2$-अथ व्यवस्थापितवान् कथंचित्सौमित्रिरन्तर्गतबाष्पकण्ठः । औत्पातिकमद्य इवाश्मवर्षं महीपतेः शासनमुज्जहार ॥ १४. रा$_1$-बाष्पसंवृतः । १५. अ ल$_1$ ल$_2$ ल$_3$ ब प्र-त्वद्गतो । १६. च भ$_1$ भ$_2$-वर्जं-दाहो यस्मादार्येण धीमता । १२. रा$_1$-नास्ति । १७ अ ल$_2$ ब-°त्तं । १९. भ$_1$-ते देवि । २०. च भ$_1$ भ$_2$-वर्जं-वचनात् कृतः । २१. च भ$_1$ भ$_2$-ममाद्य मरणं श्रेयो यदन्यद्वा ततोधिकं । २२. च भ$_1$ भ$_2$-त्वस्मिन्न् । २३. च भ$_1$ भ$_2$-विन्यासो ॥

प्र-सीद[1] न च[1] मे रोषं कर्तुम् अर्हसि[2] मैथिलि[2] ।
३७] इत्य् अञ्जलि-कृतो भूमौ नि-पपात मही-तले[3] ॥[4]६॥ [६
रुदन्तं प्राऽञ्जलिं दृष्ट्वा काङ्क्षन्तं मृत्युम् आत्मनः ।
३८] मैथिली भृशम् उद्-विग्ना लक्ष्मणं वाक्यम् अब्रवीत् ॥ ७ ॥ [७
किम् इदं नाऽव-गच्छामि ब्रूहि तत्त्वेन लक्ष्मण ।
३९] पश्यामि हि त्वाम् अ-स्वस्थम् अपि क्षेमं मही-पतेः ॥ ८ ॥ [८
शापितोऽसि मम[5] प्राणैर्[5] यस् त्वं सं-तापम् आत्मनः ।
४०] न ब्रूयाः सन्नि-धौ मेऽद्य[6] अहम्[6] आ-ज्ञापयामि ते ॥ ९ ॥ [९
वैदेह्या नोद्यमानस्[7] तु लक्ष्मणो दीन-मानसः[8] ।
४१] अवाङ्-मुखो बाष्प-कण्ठो[9] वाक्यम् एतद् उवाच ह ॥१०॥ [१०
श्रुत्वा तु पर्षदो मध्ये अप-वादं[10] सु-दारुणम् ।
४२] पुरे जानपदे[11] चैव त्वत्-कृते जनकाऽऽत्मजे ॥११॥ [११
३पू] न तानि[12] वचनीयानि[12] मया देवि तवाऽग्र-तः । [१२पू
N] शक्यं कथयितुं शुद्धे पतिव्रत-समन्विते[13] ।[14] [N
४३उ] यानि[15] राज्ञा हृदि न्य्-अस्य[15] नाऽमर्षः पृष्ठ-तः कृतः ॥१२॥ [१२उ
सा त्वं त्यक्ता नरेन्द्रेण निर्-दोषा मम सन्नि-धौ ।
४४] लोकाऽपवाद-भीतेन तद् ग्राह्यं नाऽन्य-था त्वया ॥१३॥ [१३
आश्रमाऽन्तेषु च मया[16] त्वं त्यक्तव्या भविष्यसि[16] ।
४५] राज-शासनम् आ-ज्ञाय तवैष[17] किल दोह-दः[17] ॥१४॥ [१४
गङ्गा-तीरे महा-पुण्ये आ-श्रमे पुण्य-कर्मणाम् ।
N] त्वं तु नेया मया गत्वा शासनात् पार्थिवस्य तु ॥१५[18]॥[N

१. च भ$_{1}$ भ$_{2}$–°दस्व न । २. भ$_{2}$–°सि शोभने । ल$_{2}$–°र्हस्यनिंदिते । ३. च भ$_{1}$ भ$_{2}$–स लक्ष्मणः । ४. अतः परमधिकः पाठः—च भ$_{1}$ भ$_{2}$–सुखेन लङ्कासमरे मृतं मामजीवयन्मारुतिराप्तवैरः । आर्यां ससत्त्वां विपिने विहातुं श्रोतुं च तस्याः परिदेवितानि ॥ ५. च भ$_{1}$ भ$_{2}$—वर्जं–नरेन्द्रेण । ६. च भ$_{1}$ भ$_{2}$–मह्यं स्वयं । ७. च भ$_{1}$ भ$_{2}$–चोद्यमा° । ८. च भ$_{1}$ भ$_{2}$–दीन-चेतनः । ९. च भ$_{1}$ भ$_{2}$–दुःखवपुर् । १०. च भ$_{1}$ भ$_{2}$–परिवादं । ११. च भ$_{1}$ भ$_{2}$–जन° । १२. च भ$_{1}$ भ$_{2}$–तच्छक्यं कथयितुं । १३. ल$_{3}$ ब प्र–°व्रत्यस° । १४. च भ$_{1}$ भ$_{2}$–नास्ति । १५. च भ$_{1}$ भ$_{2}$–राज्ञा हि हृदये कृत्वा । १६. च भ$_{1}$ भ$_{2}$–वर्जं–तदा त्यक्तवांस्त्वा न संशयः । १७. अ रा$_{1}$ ल$_{1}$ ल$_{2}$ ल$_{3}$ ब प्र–तत्र चैव त्रिदोषतां । भ$_{1}$–°ल दौहृदः । १८. च भ$_{1}$ भ$_{2}$–नास्ति ॥

तद् एतज् जाह्नवी-तीरे महर्षीणां[1] तपो-वनम् ।
४६] पुण्यं च रमणीयं च मा[2] वि-षादं कृथाः शुभे[3] ॥१६॥ [१५
राज्ञो दश-रथस्यैष पितुर् नो[4] मुनि-पुङ्गवः ।
४७] सखा परम-को[4] विप्रो वाल्मीकिः सु-महातपाः[5] ॥१७॥ [१६
पाद-च्छायाम् उपाऽऽगच्छ[6] तस्यैतस्य[6] महाऽऽत्मनः ।
४८] उपवास-परैकाऽग्रा वस[7] त्वं जनकाऽऽत्मजे ॥[7]१८॥ [१७
पतिव्रत-त्वम्[8] आ-स्थाय[8] रामं कृत्वा सदा हृदि ।
४९] श्रेयः परम-कं देवि तदै(?वै)वं हि भविष्यति ।[9] [१८
N] लालिताऽलालितानां हि सत्-स्त्रीणां[10] दैवतं पतिः ॥१९॥ [N

इत्यार्षे रामायण उत्तर-काण्डे लक्ष्मणवाक्यं
नामैकोनपञ्चाशः सर्गः ॥ ४९ ॥

---

## [ वं–५० ]= [ पञ्चाशः सर्गः ] =[ दा–४८ ]

श्रुत्वा तु लक्ष्मणस्यैतद् वाक्यं परम-दारुणम् ।[11]
१] परं वि-षादम् आ-पन्ना वैदेही नि-पपात ह ॥[11]१ ॥ [१
सा मुहूर्तम् इवाऽसंज्ञा शोक-व्याकुलिताऽक्षरम् ।[12]
२] लक्ष्मणं जानकी वाक्यम् उवाच परमाऽर्थ-वत्[13] ॥ २ ॥ [२
मामकीऽयं तनुर् नूनं सृष्टा[15] दुःखाय लक्ष्मण ।
N] धात्राऽस्या यन् न मेऽद्याऽपि दुःखस्याऽन्तः प्र-दृश्यते ॥३[16]॥[३
किं नु पापं कृतं पूर्वं को वा दारैर् विना-कृतः[17] ।
३] याऽहं शुद्ध-समाचारा त्यक्ता नृ-पतिना सती ॥[18]४॥ [४

---

१. च भ$_1$ भ$_2$–राजर्षीणां । २. च भ$_1$ भ$_2$– मुनिसंघैर्वृतं शुभं । ३. च भ$_1$ भ$_2$–वर्जं–मे । ४. भ$_1$–रमणको । ५. च भ$_1$ भ$_2$–वर्जं–°हानृषिः । ६. च भ$_1$ भ$_2$–°गम्य सुखं तस्य । ७. च भ$_1$ भ$_2$–रामस्य स्निग्धहृदया गच्छ त्वं माऽन्यथा कृथाः । ८. अ प्र–°तमुपास्थाय । च भ$_1$ भ$_2$–°त्वमादाय । ९. च भ$_1$ भ$_2$–वर्जं–श्रेयश्चैव परं देवि विशुद्धैवं भविष्यसि । १०. च भ$_1$ भ$_2$–सुस्त्रीणां । ११. च भ$_1$ भ$_2$–नास्त्यत्र सर्गसमाप्तिः । १२. च भ$_1$ भ$_2$–तथा वदन्तमत्यन्तं बाष्पसंदिग्धलोचनं । १३. च भ$_1$ भ$_2$–नास्ति । १४. च भ$_1$ भ$_2$–°मार्त्तवत् । १५. अ ल$_2$ ल$_3$ ब–दृष्टा । १६. च भ$_1$ भ$_2$–नास्ति । १७. च भ$_1$ भ$_2$–वियोजितः । १८. च भ$_1$ भ$_2$–जानन्शुद्धसमाचारां यन्मां संत्यक्तवान् नृपः ॥

पुराऽहम् आ-श्रमे वासं राम-पार्श्वे तु वर्तती[1] ।[2]
४] नाऽचिन्तयं वै सौमित्रे(?त्रौ) वर्तमाने[3] वि-भीषणम्[4] ॥ ५ ॥ [५
सा कथं ह्य् आ-श्रमे पुण्ये वत्स्यामि विजनी-कृता ।
५] किम्-आहारा कथाः काश् च कथयिष्यामि केषु च ॥ ६[5] ॥ [६
किं वा वक्ष्यामि सिद्धेषु किं[6] मयाऽप-कृतं नृ-पे ।
६] कस्मिन्[7] हि[7] कारणे त्यक्ता राघवेणेति-वादिषु ॥ ७ ॥ [७
अहं खल्व् अद्य सौमित्रे स्व-प्राणान् जाह्नवी-जले ।
७] त्यजेयं राज-वंशं तु राघवः परि-हास्यति ॥ ८[8] ॥ [८
न (? तत्) खल्व्[9] अद्यैव[9] सौमित्रे त्यज मां दुःख-भागिनीम् ।
८] नि-देशे[10] स्थीयतां राज्ञः कुरु[11] चेदं वचो मम ॥ ९ ॥ [९
श्वश्रूणाम् अ-विशेषेण[12] प्राऽञ्जलिः[13] प्र-श्रयेण[14] च ।
९] शिरसा वन्द्य चरणौ कुशलं ब्रूहि पार्थिवम् ॥[15] १० ॥ [१०
वि-ज्ञाप्यश्[16] चैव नृ-पतिर् धर्मेण सु-समाहितः[17] ।
१०] यद्-वद् भ्रातृषु वर्तेथास् तद्-वत् पौरेषु नित्य-दा ॥[18] ११ ॥ [१४
एष ते[19] परमो धर्म[19] एषा कीर्तिर् अनु-उत्तमा[20] ।
११] यस् त्वं पौर-जनं राजन् धर्मं (? र्मे) तु (? ण) परि-पालयेः ॥[21] १२ ॥ [१५
अहं[22] तु[22] नाऽनु-शोचामि स्व-शरीरं[23] नरर्षभ[23] ।
१२] यथाऽप-वादं[24] पौरेषु[24] ते[25] चेह[25] रघु-नन्दन ॥ १३ ॥ [१६
एवं ब्रुवत्यां सीतायां लक्ष्मणो दीन-चेतनः[26] ।
१७] शिरसा[27] धरणीं गत्वा[27] व्या-हर्तुं[28] न शशाक ह ॥ १४ ॥ [१९

---

१. अ-वर्तनीं । २. च भ$_1$ भ$_2$-पुरा तदाश्रमवासे रामपादौ समाश्रितौ । ३. अ प्र-वर्जं-°ना । ४. अ-°णे । ५. च भ$_1$ भ$_2$-कथं त्वद्य वने सौम्य वसामि विजने ऋते । किमाहारं विहारं च करिष्यामि नृपात्मज ॥ ६. च भ$_1$ भ$_2$-यन् । ७. च भ$_1$ भ$_2$-यस्मिंस्तु । ८. च भ$_1$ भ$_2$-वर्जं-नास्ति । ९. च भ$_1$ भ$_2$-यथाज्ञां कुरु । १०. अ रा$_1$ ल$_2$ ल$_3$ ब-सन्देशे । ११. च भ$_1$ भ$_2$-शृणु । १२. च-°णां मे वि° । १३. भ$_1$ भ$_2$-साञ्ज° । १४. च भ$_1$ भ$_2$-प्रग्रहेण । १५. च भ$_1$ भ$_2$-शिरसाभिनतो ब्रूयाः सर्वासामेव लक्ष्मण । १६. च भ$_1$ भ$_2$-वक्तव्यश् । १७. च भ$_2$-वर्जं-तु समा° । १८. च भ$_1$ भ$_2$-भ्रातृषु तेषु वर्तेथाः पौरजानपदेष्वपि । १९ च भ$_1$ भ$_2$-धर्मो हि सुमहान् । २०. प्र-सनातनी । २१. च भ$_1$ भ$_2$-यस्त्वां सर्वात्मना राजन्हर्षपूर्णाननस्तु यः । २२. च भ$_1$ भ$_2$-नन्वहं । २३. च भ$_1$ भ$_2$-विप्रयोगं त्वया सह । २४. च भ$_1$ भ$_2$-यदापवादः पौरेभ्यस् । २५. च भ$_1$ भ$_2$-तवापि । ल$_1$-तवेह । २६. च भ$_1$ भ$_2$ प्र-दीनमानसः । २७. च भ$_1$ भ$_2$-मूर्ध्नाभिवाद्य भूयस्तां । २८. अ ल$_2$ ल$_3$ प्र-व्याकर्तुं ॥

प्र-दक्षिणं तु कृत्वा स[1] रोदिति स्म महा-यशाः[1] ।
१८] आ-रुरोह पुनर् नावं नाविकेनाऽनिलोदयाम्[2] ।।१५।। [२२
स गत्वा[3] चोत्तरं[3] कूलं शोक-भार-प्रपीडितः[4] ।
१९] सं-मूढ इव दुःखेन रथम् अध्य्-अरुहद् द्रुतम् ।।[5]१६।। [२३
मुहुर्-मुहुर् अथाऽऽवृत्य पश्यन् सीताम् अथ[6] त्वरन्[6] ।
२०] तिष्ठन्तीं[7] पर-कूल-स्थां[7] लक्ष्मणः प्र-ययौ ततः[8] ।।१७।। [२४
दूर-स्थं रथम् आ-लोक्य लक्ष्मणं च मुहुर्-मुहुः ।
२१] निर्-ईक्ष्य(?क्ष)माणां उद्-विग्नां[9] सीतां शोकः समाऽविशत् ।।१८।।[२५
सा दुःख-भाराऽवनता[10] तपस्विनी[10]
यशो-धना[11] नाथम् अ-पश्यती सती[12] ।
२२] रुरोद वै[13] बर्हिण-नादिते[13] वने
महा-स्वनं दुःख-परायणा[14] तदा ।।१९।। [२६

इत्यार्षे रामायण उत्तर-काण्डे लक्ष्मणोपाऽऽवर्तनं[15] नाम
पञ्चाशः सर्गः ।। ५० ।।

---

## [ वं– ५१ ]= [ एकपञ्चाशः सर्गः ] =[ दा–४६ ]

सीतां प्र-रुदतीं दृष्ट्वा ये तत्र मुनि-दारकाः ।
१] प्राऽद्रवन् यत्र भग-वान् आस्ते वाल्मीकिर् अग्र्य-धीः।।[16] १ ।। [१
तेऽभि-वाद्य[17] मुनेः पादौ वाल्मीकेर्[18] मुनि-दारकाः ।[19]
२] त्रस्ता नि-वेदयामासुस् तस्यास् तं[20] रुदित-ध्वनिम् ।। २ ।। [२

१. च भ$_1$ भ$_2$–तां रुदन्नेव महास्वनं । २. च भ$_1$ भ$_2$–नाविकांश्चाभ्यनोदयत् । ३. च भ$_1$ भ$_2$–तु गत्वोत्तरं । ४. च भ$_1$ भ$_2$–वर्ज–°रसमन्वितः । ५. च भ$_1$ भ$_2$–आरुरोह रथं दीनः सौमित्रिर्व्याकुलेन्द्रियः । ६. च भ$_1$ भ$_2$–अथारुदत् । ७. च भ$_1$ भ$_2$–चेष्टमानां परे तीरे । ८. च भ$_1$ भ$_2$–अथ । ९. च भ$_1$ भ$_2$–सोद्वेगां । १०. च भ$_1$ भ$_2$–°राभिनिपीडिता सती । ११. च भ$_1$ भ$_2$–यशस्विनी । १२. च भ$_1$ भ$_2$–भृशं । १३. च भ$_1$ भ$_2$–तस्मिन्बहुबर्हिणे । १४. च भ$_1$ भ$_2$–बाष्पसमाकुला । १५. च भ$_1$ भ$_2$ रा$_1$ ल$_1$–°तंनो । १६. च भ$_1$ भ$_2$–प्राद्रवन्त स यत्रास्ते वाल्मीकिर्भगवानृषिः । प्र–नास्ति । १७. अ रा$_1$ ल$_1$ ल$_2$ ल$_3$ ब–°वन्द्य । १८. च भ$_1$ भ$_2$–सम्भ्रान्ता । १९. प्र–नास्ति । २०. च भ$_1$ भ$_2$–न्यवेदयन्त तां चैव मुनये ॥

अ-दृष्टपूर्वा[1] भग-वन् कस्याऽप्य्[2] एषा महाऽऽत्मनः[2] ।
३] पत्नी श्रीर् इव सं-मोहाद् वि-रौति विकृत-स्वरा[2] ॥[3] ३ ॥ [३
भग-वन् साधु पश्येमां[4] देवताम्[5] इव प्र-च्युताम्[6] ।
४] न ह्य् एतां (?षा) मानुषीं(?षी)विप्रगमनं प्रति[7] युज्यताम्[8]।४।[६पू
तेषां तद् वचनं श्रुत्वा बुद्ध्या निश्-चित्य वै[9] मुनिः[9] ।
५] वाल्मीकिः[10] सु-महातेजाः[10] प्राऽद्रवद् यत्र मैथिली ॥ ५ ॥ [७
तं[11] प्र-यान्तम् अभिप्रेक्ष्य शिष्या महर्षिम्[12] अन्व्-अयुः । [८ पू
६] अर्घ्यम्[13] आ-दाय रुचिरं[14] जाह्नवी-तीरम्[15] आऽविशन्[15] ।६। [९ पू
स सीतां दुःख-भाराऽऽर्तां[16] वाल्मीकिर् मुनि-सत्तमः[17] ।
७] उवाच[18] मधुरां वाणीं साम्ना[18] प्र-ह्लादयन् इव ॥ ७ ॥[१०
स्नुषा दश-रथस्य त्वं रामस्य[19] महिषी प्रिया[19] ।
८] जनकस्य सुता राज्ञः स्व्-आगतं ते पति-व्रते[20] ॥ ८ ॥ [११
आ-यान्ती चाऽसि वि-ज्ञाता[21] मया धर्म-समाधिना[21] ।
९] कारणं चैव सर्वं[22] मे हृदयेनाऽपिलक्षितम्[22] ॥ ९ ॥ [१२
अ-पापां वेद्मि सीते त्वां तपो-लब्धेन[23] चक्षुषा[23] ।
१०] वि-स्रब्धा[24] भव[24] वैदेहि साम्प्रतं मयि वर्तसे ॥१०॥ [१३
आ-श्रमस्य वि-दूरे मे तापस्यस् तपसि[25] स्थिताः[25] ।
११] तास् त्वां वत्से यथा-वच् च पालयिष्यन्ति सर्व-शः ॥११॥ [१५

---

१. च भ$_1$ भ$_2$–अचिन्त्यरूपा । २. अ रा$_1$ ल$_2$ ल$_3$ ब प्र–कस्य योषिन्महास्वरा । ल$_1$–तन्वी योषिन्महास्वना । ३. च भ$_1$ भ$_2$–भृशमङ्गना । ४. अ ल$_2$–नास्ति । ५. च भ$_2$–पश्यैनां । भ$_1$–पश्यैतां । ६. च भ$_1$ भ$_2$–खाच्च्युतां देवतामिव । ७. टि–कर्मप्रवचनीयः । ८. च भ$_1$ भ$_2$–नह्येनां मानुषीं विद्मो लक्ष्म्या परमया युतां । ९. च भ$_1$ भ$_2$–धर्मवित् । १०. च भ$_1$ भ$_2$–तपसा लब्धचक्षुष्मान् । ११. अ–ते । १२. भ$_1$ भ$_2$–ब्रह्मर्षिं । १३. भ$_1$ भ$_2$ ल$_1$–वर्जं–अर्घम् । १४. भ$_1$–भिक्षेषु–तु चिरं । १५. अ–°शत् । च भ$_1$ भ$_2$–जाह्नव्यास्तीरमागमन् । १६. च भ$_2$–अतिदुःखार्ता । भ$_1$–अतिदुःखार्तो । १७. च भ$_1$ भ$_2$–भगवानृषिः । ल$_1$ प्र–मुनिपुङ्गवः । १८. च भ$_1$ भ$_2$–आबभाषे मधुरया वाचा । १९. च भ$_1$ भ$_2$–पत्नी रामस्य धीमतः । २०. च भ$_1$ भ$_2$–वर्जं–महाव्रते । २१. च भ$_1$ भ$_2$–विदिता मया चित्तस° । २२. च भ$_1$ भ$_2$–तत्सर्वं ध्रुवमेवोपल° । २३. च भ$_1$ भ$_2$–तपसा लब्धदर्शनः । २४. च भ$_1$ भ$_2$–वर्जं–विशुद्धभावा । २५. च भ$_1$ भ$_2$–संशितव्रताः ॥

१२उ] इदम् अर्घ्यं[1] प्रतीऽच्छ[2] त्वं वि-स्रब्धा[2] विगत-ज्वरा ।
यथा-स्व-गृहम् अभ्य्-एहि[3] वि-षादं[4] चैव मा कृथाः[4] ॥१२॥ [१६
१३] श्रुत्वा तु भाषितं सीता मुनेः सा[5] परमाऽद्भुतम्[5] ।
१४पू] प्र-णम्य शिरसा पादौ तथेत्य् आह कृताऽञ्जलिः ॥[6]१३॥ [१७
N] तं तु[7] यातं[7] मुनिं सीता प्राऽञ्जलिः सु-समाहिता ।		[N
१४उ] अन्व्-अगाद्[8] ये(?य,न(?त्र) तापस्यो धर्म-नित्याः[9] समा-हिता[10] १४[१८
तं[11] दृष्ट्वा मुनिम् आ-यान्तं वैदेह्याऽनु-गतं तदा ।
१५] उपाऽऽजग्मुर्[12] मुदा युक्ता वचनं चेदम्[12] अब्रुवन् ॥१५॥ [१९
स्व्-आगतं ते मुनि-श्रेष्ठ चिरस्याऽऽगमनं वि-भो[13] ।
१६] अभि-वादयामः सर्वास् त्वाम् उच्यतां करवाम किम् ॥१६॥ [२०
तासां तद् भाषितं श्रुत्वा वाल्मीकिर् अवदद्[14] वचः[14] ।
१७] सीतेयं समनुप्राऽऽप्ता पत्नी[15] रामस्य धी-मतः[15] ॥१७॥ [२१
स्नुषा दश-रथस्येयं जनकस्याऽऽत्म-सम्भवा ।
१८] अ-पापा पतिना त्यक्ता परि-पाल्या मया सती ॥१८[16]॥ [२२
इमां भवन्त्यः पश्यन्तु स्नेहेन परमेण वै ।
१९] गौरवान्[17] मम वाक्यस्य पूज्या वोऽस्तु[17] विशेष-तः ॥१९॥ [२३
मुहुर्-मुहुश् च[18] वैदेहीं परि-सान्त्व्य महा-यशाः[18] ।
२०] स्वम् आ-श्रमं शिष्य-वृत्तः[19] पुनर् आऽयान् महा-मुनिः ॥[20]२०॥ [२४

इत्यार्षे रामायण उत्तर-काण्डे वाल्मीकि-दर्शनं
नामैकपञ्चाशः सर्गः ॥५१॥

---

१. अ च ल$_2$ ब-अर्घं । २. च भ$_1$ भ$_2$-°च्छस्व मानार्हां । ३. च-भ$_1$ भ$_2$-अभ्येषि । ४. च भ$_1$ भ$_2$-तथा तद्वनमाविश । ५. च भ$_1$ भ$_2$-परममद्भु° । ६. अतः परमधिक पाठः—च भ$_1$ भ$_2$-वर्जं-अन्वगच्छत्तु गच्छन्तं वाल्मीकिं मुनिसत्तमम् । उदारमृषिभिर्जुष्टं श्रीर्धर्ममिव रूपिणी ॥ ७. च भ$_1$ भ$_2$-प्रयान्तं । ८. च भ$_1$ भ$_2$-आगच्छद् । ९. अ रा$_1$ ल$_1$ ल$_2$ ल$_3$ प्र-धर्मानंत्याः । १०. ब-नास्ति । ११. च-तद् । १२. च भ$_1$ भ$_2$-प्रत्युद्गताः प्राञ्जलयस्तापस्यो वाक्यं । १३. अ ल$_2$-प्रति । च भ$_1$ भ$_2$-प्रभो । १४. च भ$_1$ भ$_2$-मुनिरब्रवीत् । १५. च भ$_1$ भ$_2$-वर्जं-परिपाल्या स्वयं मया । १६. च भ$_1$ भ$_2$-वर्जं-नास्ति । १७. च भ$_1$ भ$_2$-गौरवेण मयोक्तस्य वाक्यस्यास्य । १८. च भ$_1$ भ$_2$-ततः सीतां महर्षिः परिसान्त्वयन् । १९. ल$_1$-मुनिवृतः । २०. च भ$_1$ भ$_2$-शिष्यैः परिवृतः प्रीतः पुनरायात्स्वमाश्रमं ॥

१पू] दृष्ट्वा तु मैथिलीं दीनाम्[1] आ-श्रमं तु प्र-वेशिताम्[1] ।
सं-तापम् अकरोद् घोरं[2] लक्ष्मणो दीन-मानसः[2] ॥ १ ॥ [१

३] अब्रवीच् च सु-मन्त्रं[3] तं सखायं तत्र सारथिम्[3] ।
सीता-सन्ताप-जं[4] दुःखं पश्य रामस्य धी-मतः ॥ २ ॥ [२

४] अतो दुःख-तरं किं नु राघवस्य भविष्यति ।
पत्नीं शुद्ध-समाचारां वि-सृज्य जनकाऽऽत्मजाम् ॥[5] ३ ॥ [३

५] व्य्-अक्तं दैवाद् अयं मन्ये[6] विना-भावो महाऽऽत्मनः[7] ।
वैदेह्या[8] सारथे साधं[8] दैवं हि दुरति-क्रमम् ॥ ४ ॥ [४

६] यो हि देवान् स-गन्धर्वान् अ-सुरान् सह-पन्नगान्[9] ।
नि-हन्ता राघवः शुद्रम्(?क्रुद्ध) उपाऽऽस्ते दैवव्(?म्) अद्यशः(?सः)।[10] ५

७] पुरा रामः पितुर् वाक्याद् दण्डके वि-जने वने ।
उषितो[11] नव वर्षाणि पञ्च चैव सु-दारुणे ॥ ६ ॥ [६

८] ततो दुःख-तरं भूयः सीताया विप्र-वासनम्[12] ।
पौराणां वचनात् सूत नृ-शंसं प्रति-भाति मे ॥ ७ ॥ [७

९] को नु धर्मोऽत्र सूत स्यात् कर्मण्य् अस्मिन् अ-शोभने ।
१०पू] मैथिलीं तु समुत्-सृज्य पौरे हीनाऽर्थ-वादिनि ॥ ८[13] ॥[८

११उ] एता बहु-विधा वाचः श्रुत्वा लक्ष्मण-भाषिताः ।
सु-मन्त्रः प्राऽञ्जलिर् भूत्वा सौमित्रिम् इदम् अब्रवीत् ॥ ९[14] ॥[९

१२] न सं-तापस् त्वया कार्यः[15] सौमित्रे[15] मैथिलीं प्रति ।
दृष्टम् एतत् पुरा विप्रैः पितुस् ते लक्ष्मणाऽग्र-तः ॥१०॥ [१०

१३] गमिष्यति वनं रामः सुखाद् दुःखम् अवाऽऽप्नुयात् ।[16] [११पू

---

१. च भ$_1$ भ$_2$–द्वारमाश्रमस्यागतां सतीं । २. च भ$_1$ भ$_2$–तीव्रं लक्ष्मणो हतचेतनः । ३. अ ल$_2$–°न्त्रं तं सहायं त° । च भ$_1$ भ$_2$–महाबाहुः सुमन्त्रं मन्त्रि-सत्तमं । ४. च भ$_1$ भ$_2$–°संस्थागजं । ५. च भ$_1$ भ$_2$–पत्नी शुद्धसमाचारा यदुत्सृष्टा नृपात्मजा । ६. च भ$_1$ भ$_2$–जातो । ७. रा$_1$ ल$_1$ ल$_2$ ल$_3$ ब प्र–गुरुर्मया । ८. च भ$_1$ भ$_2$–धर्मपत्न्या नरेन्द्रस्य । ९. च भ$_1$ भ$_2$–सहराक्षसान् । १०. च भ$_1$ भ$_2$–धुनुयाद्राघवः क्रोधात्स दैवमनुवर्तते । ११. ल$_1$–उषित्वा । १२. च भ$_1$ भ$_2$–वर्जं–परिवा° । १३. च भ$_1$ भ$_2$–सूत कर्मण्यकार्येस्मिन् किं नु धर्मः करिष्यति । राजानं लक्ष्मणं वापि पौरास्तान्वाक्यदुर्वचः ॥ १४. च भ$_1$ भ$_2$–श्रुत्वा ता विविधा वाचो लक्ष्मणेन समीरिताः । युगपत्प्राञ्जलिर्भूत्वा सुमन्त्रश्चेदमब्रवीत् ॥ १५. च भ$_1$ भ$_2$–वीर कर्तव्यो । १६. च भ$_1$ भ$_2$–नास्ति ॥

१४] त्वां चैव मैथिलीं चैव शत्रुघ्न-भरताव् अपि ।
सं-त्यजिष्यति[1] धर्माऽऽत्मा कालेन महता महान् ॥[2]११॥ [१२

१५] न त्व् इदं तव सौमित्रे वक्तव्यं तव (?न च) तैर् अपि[3] ।
राजानं[4] व्या-हृते वाक्ये[5] दुर्-वासा यद् उवाच ह ॥१२॥ [१३

१६] महाराज-समीपे तु मया[5] चैव नरर्षभ[6] ।
ऋषिणा[7] व्या-हृतं वाक्यं वसिष्ठस्य च सन्नि-धौ ॥१३॥ [१४

१७] तद् ऋषेस् तु वचः श्रुत्वा माम् उवाच स पार्थिवः ।
न ते क्व-चिद् इदं सूत वक्तव्यम् ऋषि-भाषितम्[8] ॥१४॥ [१५

१८] तस्याऽहं लोक-नाथस्य वाक्येन सु-समाहितः ।
नाऽनृ-ऋतं तम्[9] अहं कुर्याम् इति सौम्य नि-दर्शनम्[10] ॥१५॥ [१६

१९] सर्व-था नाऽस्ति[11] वक्तव्यं मया सौम्य तवाऽग्र-तः ।
यदि ते श्रवणे श्रद्धा[12] श्रूयतां रघु-नन्दन[13] ॥१६॥ [१७

२०] यद्य्[14] अप्य्[14] अहं नरेन्द्रेण रहस्यं श्रावितः पुरा ।
N] तत् तेऽहं कथयिष्यामि शृणु तन् महद् अद्भुतम् ॥[15]१७॥ [१८
तच्[16] छ्रुत्वा व्या-हृतं वाक्यं गम्भीराऽर्थ-पदाऽक्षरम्[17] ।

२२] ब्रूहि-ब्रूहीऽति सौमित्रिः सूतं[18] वाक्यम् उवाच ह[18] ॥१८॥ [२०

इत्यार्षे रामायण उत्तर-काण्डे लक्ष्मण-सन्तापो नाम
द्विपञ्चाशः सर्गः ॥ ५२ ॥

---

## [ वं–५३ ]= [ त्रिपञ्चाशः सर्गः ] =[ दा–५१ ]

ततस्[19] तेनोदितः[19] सूतो लक्ष्मणेन महाऽऽत्मना ।
१] तद् वाक्यं श्रावयामास[20] लक्ष्मणाय महाऽऽत्मने[20] ॥ १ ॥ [१

---

१. टि–आर्ष इट् । ल$_{1}$ ल$_{2}$–संत्याजि° । २. च भ$_{1}$ भ$_{2}$–भरतः स च शत्रुघ्नः कथितो ब्रह्मवादिभिः । ३. च भ$_{1}$ भ$_{2}$–न श्रोतव्यं तु सौमित्रे त्वया तद्भरतेन वा । ४. च भ$_{1}$ भ$_{2}$–राज्ञो वाचोमृतं यत्तु । प्र–°तं वाक्यं । ५. च भ$_{1}$ भ$_{2}$ ल$_{1}$–मम । ६. च भ$_{1}$ भ$_{2}$–नरोत्तम । ७. अ दा$_{1}$ ल$_{2}$ ल$_{3}$ ब–ऋषीणां । ८. च भ$_{1}$ भ$_{2}$–इतिभा° । ९. च भ$_{1}$ भ$_{2}$–तद् । १०. अ–°र्शने । प्र–निदार्शितं । ११. च भ$_{2}$–तत्तु । भ$_{1}$–यत्तु । १२. च भ$_{1}$ भ$_{2}$–बुद्धिः । १३. च भ$_{1}$ भ$_{2}$–तत् श्रुतान्वितं । १४. च भ$_{1}$ भ$_{2}$–तदप्यू । १५. च भ$_{1}$ भ$_{2}$–न तत्परिहरिष्यामि दैवं हि परमाद्भुतम् । १६. च भ$_{1}$ भ$_{2}$–यत् । १७. च भ$_{1}$ भ$_{2}$–पदं महत् । १८. च भ$_{1}$ भ$_{2}$–उवाचावहितस्तदा । १९. च भ$_{1}$ भ$_{2}$–तथा सञ्चोदितः । २०. च भ$_{1}$ भ$_{2}$–ऋषिणा प्रोक्तं व्याहर्तुमुपचक्रमे ॥

पुरा नाम्ना हि दुर्-वासा अत्रेः पुत्रो महान् ऋषिः ।[1]
२] वसिष्ठस्याऽऽश्रम-पदे वर्षाऽऽवासम्[2] उवास ह[2] ॥ २ ॥ [२
तम् आ-श्रमं महा-राज[3] पिता ते सु-महायशाः[4] ।
३] पुरो-धसं महाऽऽत्मानं दिदृक्षुर्[5] अगमत् स्वयम् ॥ ३ ॥ [३
सोऽपश्यत् सूर्य-सङ्काशं ज्वलन्तम् इव तेजसा ।
४] उप-विष्टं वसिष्ठस्य सव्ये पार्श्वे महा-मुनिम् ॥ ४ ॥ [४
ततोऽभि-वाद्य तम् ऋषिं[6] मित्रावरुण-सम्भवम् ।[6] [N
५] तं मुनिं तपसा युक्तं वि-नीतस्[7] त्व् अभ्य्-अवादयत्[7] ॥ ५ ॥
स ताभ्यां पूजितो राजा स्व्-आगतेनाऽऽसनेन च ।
६] वन्येन[8] फल-मूलेन आस्ते[9] ताभ्यां नि-योजितः[9] ॥ ६ ॥ [५
तेषां तत्रोप-विष्टानां तास् तास् तु मधुराः कथाः ।
७] बभूवुर् वि-विधा[10] रम्या मध्यन्दिन-गते रवौ[10] ॥ ७ ॥ [६
ततः कथायां कस्यां-चित् प्राऽञ्जलिः प्र-श्रयी[11] नृ-पः ।
८] उवाच तं महाऽऽत्मानम्[12] अत्रेः पुत्रं तपो-धनम्[12] ॥ ८ ॥ [७
भग-वन् किं-प्रमाणो मे[13] शेषो[14] वंशो भविष्यति ।
९] किम्-आयुश्[15] च भवेद् रामः[15] पुत्राश् चाऽन्ये किम्-आयुषः॥९॥[८
रामस्य सुता ये स्युस् तेषाम् आयुः[16] कियद् भवेत्[16] ।
१०] क्रम-शो[17] भग-वन् ब्रूहि वंशस्याऽस्य गताऽऽगतम्[18] ॥[19]१०॥ [९
११] तच् छ्रुत्वाऽभि-हितं[20] वाक्यं राज्ञा दश-रथेन हि[21] ।
१२पू] दुर्-वासास्[22] तु[22] महा-तेजा व्या-हर्तुम् उप-चक्रमे ॥[23]११॥ [१०

---

१. च भ$_1$ भ$_2$–सुतोऽत्रेर्नामदुर्वासाः पूर्वमासीन्महामुनिः । २. अ रा$_1$ ल$_1$ ल$_3$ ब प्र–वसिष्ठं समुपागमत् । ल$_2$–वार्षिक्यं समुवास ह । ३. ल$_2$–महातेजाः । ४. अ–च म° । रा$_1$ ल$_1$ ल$_2$ ल$_3$ ब प्र–तु म° । ५. अ ल$_2$–नास्ति । ६. अतः परमधिकः पाठः—रा$_1$ ल$_1$ ल$_3$ ब प्र–तौ मुनी तपसा युक्तावभिगम्याभ्यवादयत् । ७. च भ$_1$ भ$_2$ ल$_3$–अभिगम्याभ्य° । ८. च भ$_1$ भ$_2$–पाद्येन । ९. अ ल$_2$–ताभ्यां स च नि° । च भ$_1$ भ$_2$–स तत्रोपविवेश ह । १०. च भ$_1$ भ$_2$–परमोदारा मध्यादित्यगतेहनि । ११. च भ$_1$ भ$_2$–प्रग्रहो । १२. च भ$_2$–महाबाहुम् । भ$_1$–महाबाहुर् । १३. च भ$_1$ भ$_2$–इदं वचः । १४. च भ$_1$ भ$_2$-वर्जं–वा मम । १५. च भ$_1$ भ$_2$–रामः किमायुः पुत्रो मे । १६. च भ$_1$ भ$_2$–आयुश्च किं मुने । १७. च भ$_1$ भ$_2$–इच्छया । १८. च भ$_1$ भ$_2$–°गतिं । १९. अतः परमधिकः पाठः—च भ$_1$ भ$_2$-वर्जं–उपविष्टो वसिष्ठस्य सव्ये पार्श्वे महामुनिः । २०. च भ$_1$ भ$_2$–छ्रुत्वा व्याहृतं । २१. अ रा$_1$ ल$_1$ ल$_2$ ल$_3$ ब–च । प्र–तु । २२. च–°साः सुम° । २३. अतः परमधिकः पाठः—च भ$_1$ रा$_1$ ल$_2$–शृणु राजन्पुरा-

१७उ] स सर्वम् अ-खिलं राज्ञो वंशस्याऽस्य गताऽऽगतम्[1] ।[2]
आ-ख्याय सु-महातेजास् तूष्णीम् आसीन् महा-मुनिः ॥१२॥ [३१
१८] तूष्णीं-भूते मुनौ तस्मिन् राजा[3] दश-रथस् तदा[3] ।
१९पू] अभि-वाद्य महाऽऽत्मानं[4] पुनर् आऽयात् पुरोत्तमम् ॥१३॥ [३२
१२उ] यथा[5] पृच्छसि मां तत्[5] त्वम् इदं[6] ब्रूहीऽति लक्ष्मण[7] ।
शृणु तत् सर्वम् अ-खिलं यद् आह भग-वान् ऋषिः[8] ॥१४[9]॥[N
१३] रामः पतिर्[10] अयोध्यायां[10] दीर्घ-कालं भविष्यति[11] ।
१४पू] सुखिनश् च समृद्धाश् च भविष्यन्त्य् अस्य चाऽनु-जाः[12] ॥१५॥[२६
१५उ] दश वर्ष-सहस्राणि दश वर्ष-शतानि च ।
रामो[13] राज्यम् उपाऽऽसित्वा[13] ब्रह्म-लोकं गमिष्यति ॥१६॥ [२७
१६] बहुभिर्[14] हय-मेधैश्[14] च इष्ट्वा पर-पुरं-जयः[15] ।[16]
१७पू] राज-वंशांश् च काकुत्स्थः सु-बहून् स्थापयिष्यति ॥१७॥ [२८
१९उ] एता वाचो मया तत्र मुनिना समुद्-ईरिताः[17] ।

---

वृत्तं तदा देवासुरे युधि । दैत्याः सुरैर्भर्त्स्यमाना भृगुपत्नीं समाश्रिताः । तया दत्ताभयास्तत्र न्यवसन्नभयास्तदा ॥ तया परिगृहीतांस्तान्दृष्ट्वा क्रुद्धः सुरेश्वरः । चक्रेण शितधारेण भृगुपत्न्याः शिरोऽहरत् ॥ ततस्तां निहतां दृष्ट्वा पत्नीं भृगुकुलोद्भवः । च भ$_2$ रा$_1$–शशाप सहसा क्रुद्धो विष्णुं रिपुबलार्दनम् । यस्मादवध्यां मे पत्नीं ह्यवधीः क्रोधमूर्च्छितः ॥ तस्मात्त्वं मानुषे लोके जनिष्यसि जनार्दन । तत्र पत्नीवियोगं त्वं प्राप्स्यसे बहुवार्षिकम् ॥ शापाऽ-भिहतचेतास्तु आत्मनाऽभावितोऽभवत् । अर्चयामास तं देवं भृगुः शापेन पीडितः ॥ तपसा भावितो देवो ह्यब्रवीद्भक्तवत्सलः । लोकानां संप्रियार्थं तु शापं संगृह्य उक्तवान् ॥ इति शप्तो महातेजा भृगुणा पूर्वजन्मनि । इहा-गतो हि पुत्रत्वं तव पार्थिवसत्तम ॥ राम इत्यभिख्यातस्त्रिषु लोकेषु मानद । तत्फलं प्राप्यते चाऽपि भृगुणा यत्कृतं महत् ॥ १. च भ$_1$ भ$_2$–गतागतिं । २. प्र–यथावच्छ्रावयामास ज्ञानलब्धेन चक्षुषा । ३. च भ$_1$ भ$_2$–पिता दशरथ-स्तव । रा$_1$ ल$_2$–°रथो मुनौ । ४. ल$_2$–°त्मानौ । ५. च भ$_1$ भ$_2$–यत्तत् । ६. च भ$_1$ भ$_2$–सौम्य वाक्यं । ७. च भ$_1$ भ$_2$–राघव । ८. च भ$_1$ भ$_2$–मुनिः । ९. रा$_1$ ल$_2$–नास्ति । १०. च भ$_1$ भ$_2$–वर्जं–अयोध्याधिपती । ११. रा$_1$–चरिष्यति । १२. भ$_1$ भ$_2$ ल$_1$–वर्जं–चानुगाः । १३. च भ$_1$ भ$_2$–प्रशास्य राघवो राज्यं । १४. रा$_1$ ल$_2$ प्र–समृद्धैश्चाश्वमे° । १५. रा$_1$ ल$_2$–परमदुर्जयः । १६. अत आरभ्य–ल$_1$ ल$_3$ ब–५५–शसर्गस्य ३३–शश्लोकस्य तृतीयपादपर्यंतं नास्ति । १७. रा$_1$–व्याहृताः पुरा । ल$_2$ प्र–व्याहृतास्तदा ॥

२०पू] श्रुत्वा[1] च हृदये क्षिप्ता[1] नाऽन्य-था तद् भविष्यति ॥[2]१८॥ [३३
२१उ] एवं गते न सं-तापं कर्तुम् अर्हसि लक्ष्मण[3] ।
सीताऽर्थे राघवाऽर्थे च दृढो भव नरोत्तम ॥१९॥ [३४
२२] तच्[4] श्रुत्वा[4] व्या-हृतं वाक्यं सूतेन[5] परमाऽद्भुतम् ।
प्र-हर्षम् अ-तुलं लेभे साधु साध्व् इति चाऽब्रवीत् ॥२०॥ [३५
तयोः सं-वदतोर् एवं सूत-लक्ष्मणयोस् तदा[6] ।
२३] रविर् अस्तं गतो वासं कौशिक्याम् एव चक्रतुः ॥[7]२१॥ [३६

इत्यार्षे रामायण उत्तर-काण्डे सूत-वाक्यं नाम
त्रिपञ्चाशः सर्गः ॥ ५३ ॥

---

## [ वं-५४ ] = [ चतुष्पञ्चाशः सर्गः ] = [ दा-५२ ]

तां[8] यामिनीम् उषित्वा तु कौशिक्यां[8] रघु-नन्दनः ।
१] प्र-भाते पुनर् उत्थाय स्वां[9] पुरीं[9] प्र-ययौ[10] तदा ॥ १ ॥ [१
ततोऽर्ध-दिवसे[11] प्राऽऽप्ते प्र-विवेश महा-रथः ।
२] अयोध्यां रत्न-सम्पूर्णां हृष्ट-पुष्ट-जनाऽऽवृताम् ॥ २ ॥ [२
सौमित्रिस् तु परं दैन्यम् आ-जगाम[12] परं-तपः[12] ।
३] राम-पादौ समा-साद्य वक्ष्यामि किम् अहं गतः[13] ॥ ३ ॥ [३
तस्यैवं चिन्तयानस्य भवनं देव-सन्निभम्[14] ।
४] रामस्य परमोदारं पुरस्तात्[15] सम्-अदृश्यत[16] ॥ ४ ॥ [४
स[17] राज-भवन-द्वारि[17] रथं[18] सं-त्यज्य लक्ष्मणः[18] ।
५] अवाङ्-मुखो दीन-मनाः प्र-विवेश दिन-क्षये ॥ ५ ॥ [५

---

१. ल$_2$ ब प्र-श्रुतं हृदि च निक्षिप्तं । अतः परं-ल$_2$-५५-शसर्गस्य ४०-शश्लोकस्य द्वितीयपादपर्यंतं नास्ति । २. अतः परमधिकः पाठ—अ च भ$_1$ भ$_2$ रा$_1$-सीतायाश्च ततः पुत्रावभिषेद्यति राघवः । अन्यत्र न त्वयोध्यायां मुनेस्तस्य वचो मया ॥ ३. रा$_1$-राघव । ४. रा$_1$-श्रुत्वा तु । ५. रा$_1$-सूतस्य । ६. रा$_1$ प्र-पथि । ७. रा$_1$-अस्तमर्के गते वासं केशिनद्यामथोषतुः । ८. रा$_1$ प्र-तत्र तां रजनीमुष्य केशिन्यां । ९. अ-तां पुरीं । रा$_1$-लक्ष्मणः । प्र-अयोध्यां । १०. प्र-निर्ययौ । ११. अ भ$_1$ भ$_2$-°सं । १२. रा$_1$-जगाम सुमहामतिः । प्र-जगाम सुमहामनाः । १३. अ च भ$_1$ भ$_2$-प्रति । प्र-ततः । १४. रा$_1$-शशिस° । प्र-शोभनं पुरा । १५. अ च भ$_1$ भ$_2$-अग्रतः । १६ अ भ$_1$ भ$_2$-सम्प्रदृश्यते । १७. प्र-रामस्य मुदा न द्वारे । १८. रा$_1$-सोवतीर्य नरोत्तमः । प्र- सोवतीर्य रथोत्तमात् ॥

तत्राऽपश्यन्[1] नृ-पं[1] दीनम् आसीनं परमाऽऽसने ।
६] नेत्राभ्याम् अश्रु-पूर्णाभ्यां दहन्तम्[2] इव मेदिनीम्[2] ॥ ६[3] ॥ [६
जग्राह चरणौ तस्य लक्ष्मणो[4] दीन-चेतनः[4] ।[5]
७] उवाच च[6] महा-बाहुः[6] प्राऽञ्जलिः सु-समाहितः ॥ ७ ॥ [७
आर्यस्याऽऽज्ञां पुरस्-कृत्य वि-सृज्य जनकाऽऽत्मजाम् ।
८] गङ्गा-तीरे यथोद्दिष्टे वाल्मीकेर् आ-श्रमे शुभे ॥[7] ८ ॥ [८
९उ] पुनर् अस्म्य्[8] आ-गतो वीर पाद-मूलं[9] तवाऽन्-अघ ।[10] [९उ
१०पू] मा शुचः पुरुष-व्याघ्र कालस्य गतिर् ईदृशी ॥[11] ९ ॥ [१०पू
सर्वे क्षयाऽन्ता नि-चयाः पतनाऽन्ताः समुच्-छ्रयाः[12] ।
११] सं-योगा विप्रयोगाऽन्ता मरणाऽन्तं हि जीवितम् ॥[13] १० ॥ [११
शक्तस् त्वम् आत्मनाऽऽत्मानं वि-जेतुम् अञ्जसा[14] नृ-प[14] ।
१२] लोकान् सर्वांश् च काकुत्स्थः किं पुनर् दुःखम्[15] आत्मनः[15] ॥ ११ ॥ [१२
नेदृशेषु हि[16] मुह्यन्ति कार्येषु[16] पुरुषर्षभाः ।
१३] त्वद्-विधाः सत्त्व-सम्पन्ना राजन् उत्तम-बुद्धयः ॥[17] १२ ॥ [१४
यद्-अर्थं मैथिली त्यक्ता त्वया[18] सा च मनस्विनी[18] ।
१४] सोऽप-वादः पुरे राजन् भविष्यति न सं-शयः ॥[19] १३[20] ॥ [१५

---

१. रा१-स दृष्ट्वा राघवं । २. रा१-ददर्शाग्रजमग्रतः । ३. प्र-तत्र तस्यां हि कार्यस्य फलं नापैति पार्थिवात् । लक्ष्मणस्तूपसंगम्य चिन्ताशोकसमन्वितः ॥ ४. प्र-सुमित्रानन्दवर्धनः । ५. अतः परमधिकः पाठः—प्र-राघवाय महातेजा लक्ष्मणो दीनमानसः । ६. भ१-तु म° । रा१-दीनया वाचा । रा१-च महातेजा । ७. रा१ प्र-वर्जे-गंगातीरं यथोद्दिष्टं वाल्मीकेरनु चाश्रमं । अतः परमधिकः पाठः—रा१-तत्र तां च शुभाचारामाश्रमान्ते यशस्विनीम् । ८. अ-अभ्यागतो । रा१-अप्यागतो । ९. रा१-°लमुपासितुं । प्र-तव पादावुपासितुं । १०. अतः परमधिकः पाठः—प्र-सेयं राजन्महाबाहो कौशल्यानन्दवर्धन । अपवाद-भयात्त्यक्ता त्वया राघव मैथिली ॥ ११. अतः परमधिकः पाठः—प्र-त्वद्विधा हि न शोचन्ति सत्यवन्तो मनस्विनः । १२. अ-समुन्नवाः । १३. अतः परमधिकः पाठः—रा१-तस्मात्पुत्रेषु दारेषु मित्रेषु च धनेषु च । नातिप्रसंगः कर्तव्यो विप्रयोगो हि तैर्ध्रुवम् ॥ १४. अ च भ१ भ२-मनसा नृप । रा१-मनसा मनः । प्र-°जसैव हि । १५. भ१-दुःखमानसः । रा१-शोकमात्मनः । प्र-दुःखमीदृशं । १६. रा१-विमुह्यन्ति त्वद्विधाः । १७. च-नास्ति । रा१-अपवादः स किल ते पुनरेष्यति राघव । प्र-त्वद्विधा बुद्धिसम्पन्ना महाबुद्धय एव च । अतः परमधिकश्च पाठः—प्र-अपवादश्च नगरे पुनरेष्यति राघव । १८. रा१-अपवादभयान्नृप । प्र-अपवाद-कृते त्वया । १९. अ भ१ भ२-वचनादपमानस्ते न भविष्यति मानद । प्र-अपवादः पुरे राजन्न भविष्यति ते प्रभो । २०. च-नास्ति ॥

स त्वं पुरुष-शार्दूल धैर्येण[1] सु-समाहितः ।
१५] त्यजेमां[2] शोक-जां[3] बुद्धिं सं-तापे[4] मा मनः कृथाः[4] ॥१४॥ [१६
एवम् उक्तस् तु[5] काकुत्स्थो लक्ष्मणेन महाऽऽत्मना ।
१६] उवाच परम-प्रीत्या[6] सौमित्रिं मित्र-वत्सलम्[7] ॥१५॥ [१७
एवम् एव[8] महा-बाहो[8] यथा वदसि लक्ष्मण ।
१७] परि-तोषस् तु मे सौम्य वाक्येऽस्मिन् परमाऽद्भुते ॥[9]१६॥ [१८
नि-र्वृत्तिश् चाऽऽगता वीर[10] सं-तापश् च निरा-कृतः ।
१८] त्वद्-वाक्यैर्[11] मधुरैर् एभिर्[11] अनु-नीतोऽस्मि लक्ष्मण । [१९
N] जानानश् च गतीश् चित्रा द्वन्द्वानां पक्षयोर्[12] द्वयोः[12] ॥[13]१७॥[N

इत्यार्षे रामायण उत्तर-काण्डे राम-शोको नाम
चतुष्पञ्चाशः सर्गः ॥५४[14]॥

---

## [ वं–५५, ५६ ] = [ पञ्चपञ्चाशः सर्गः ] = [ दा–५३, ५४ ]

लक्ष्मणस्य तु तद् वाक्यं नि-शम्य परमाऽद्भुतम् ।
१] सु-प्रीतश् चाऽभवद् रामो वाक्यम् एतद् उवाच ह ॥ १ [15]॥ [१
दुर्-लभस्[16] त्व् ईदृशो[16] बन्धुर् अस्मिन् काले विशेष-तः ।
२] यादृशस् त्वं महा-बुद्धिर् मम सौम्य मनोऽनु-गः ॥ २ ॥ [२
यच् च मे हृदये किं-चिद् वर्तते शुभ-लक्षण ।
३] तन् नि-शामय च श्रुत्वा कुरुष्व वचनं मम ॥[17]३[17]॥[३
चत्वारो दिवसाः सौम्य कार्यं पौर-जनस्य च ।
४] अ-कुर्वाणस्य काकुत्स्थ[18] तन् मे मर्माणि कृन्तति ॥ ४ ॥ [४

---

१. रा$_1$ प्र–वर्ज–कार्येषु । २. अ च भ$_1$ भ$_2$–त्यक्त्वेमां । ३. रा$_1$ प्र–दुर्बलां । ४. रा$_1$–°पं मा कुरुष्व ह । प्र–°पं चैव मा कृथाः । ५. रा$_1$–स । ६. रा$_1$–परया प्रीत्या । ७. प्र–वर्ज–°लः । ८. रा$_1$ प्र–एतन्नरश्रेष्ठ । ९. रा$_1$–परितोषश्च मे वीर मम कार्यानुशासने । प्र–परितोषश्च मे सौम्य तव वाक्यमकल्मषं । अतः परमधिकः पाठः—प्र–निवृत्तं मानसं दुःखं मनः स्थैर्यमुपागतम् । श्रुत्वा तव महाबाहो वाक्योक्तानि च सुव्रत ॥ १०. रा$_1$–सौम्य । ११. रा$_1$–भवद्वाक्यैः सुरुचिरैर् । प्र–भवद्वाक्यैः समधुरैर् । १२. च भ$_1$ भ$_2$–च क्षयोदयौ । १३. प्र–जनानां च गतिश्चित्रा द्वन्द्वानां च प्रियोदयैः । १४. च भ$_1$ भ$_2$–नात्र सर्गसमाप्तिः । १५. अ–नास्ति । १६. प्र–°भो हीदृशो । १७. अतः परमधिकः पाठः—च भ$_1$ भ$_2$ रा$_1$ प्र–तस्य त्वन्तरमाज्ञाय क्षुधार्तस्य द्विजस्य च । १८. रा$_1$–सौमित्रे । प्र–मे यातास् ॥

आ-हूयन्तां प्र-कृतयः पुरो-धा मन्त्रिणस् तथा ।
५] कार्याऽर्थी च जनः[1] सर्वः[1] क्षिप्रम् इक्ष्वाकु-नन्दन ॥[2]५॥ [५
पौर-कार्याणि[3] यो राजा न करोति दिने[4] दिने[4] ।
६] व्य्-अक्तं[5] स नरके घोरे पच्यते[5] नाऽत्र सं-शयः ॥ ६ ॥ [६
श्रूयते[6] हि पुरा राजा[6] नृ-गो नाम महा-रथः[7] ।
७] बभूव पृथिवी-पालो ब्रह्मण्यः सत्य-सङ्गरः[8] ॥ ७ ॥ [७
स कदा-चिद् गवां कोटिं[9] स-वत्सां हेम-भूषिताम्[9] ।
८] नृ-देवो भूमि-देवेभ्यः पुष्करेषु ददौ नृ-पः[10] ॥[11]८॥ [८
तत्र[12] सं-गाऽऽगता[13] धेनुः स-वत्सा[14] काम-दोहना[14] ।
९] ब्राह्मणस्याऽग्नि-वेशस्य तपसा भाविताऽऽत्मनः ॥[15]९॥ [९
स तु तत्राऽऽगतां धेनुम् अन्व्-एष्टुं (१ष्टा) तत्र तत्र वै ।[16]
१०] नाऽपश्यत् सर्व-राष्ट्रेषु संवत्सर-गणान् बहून् ॥१०॥ [१०
ततः कनखले गत्वा जीर्णां[17] वत्स-विना-कृताम्[17] ।
११] स[18] ददर्श तदा गां स्वां[18] ब्राह्मणस्य नि-वेशने ॥११॥ [११
स[19] दृष्ट्वा नाम-धेयेन[20] स्वेन ताम् आऽह्वयद् द्वि-जः[20] ।
१२] आगच्छ शबलेत्य् एवं सा च शुश्राव तं[21] स्वनम्[21] ॥१२॥ [१२
तस्य तं स्वनम्[22] आ-ज्ञाय क्षुधाऽऽर्तस्य[23] द्वि-जस्य वै[24] ।
१३] अन्व्-अयात्[25] पृष्ठ-तः सा गौर् गच्छन्तम् अनलोपमम्[26] ॥१३॥[१३

---

१. अ-जनाः सर्वे । भ१-जनं सर्वं । २. रा१-कार्यार्थिनः पुरुषाः स्त्रियो वा पुरुषर्षभ । प्र-°र्थिनो वा पुरुषाः शेषाश्च पुरुषर्षभ । ३. अ च भ१ भ२-°कार्यं हि । ४. अ च भ१ भ२-सदा नृपः । प्र-समाहितः । ५. प्र-स मृतो नरकं घोरं प्राप्नुयात् । ६. प्र-श्रूयतां महाबाहो । ७. रा.१ प्र-महायशाः । ८. भ१-°संगतः । रा१-सत्यवाक् शुचिः । ९. रा१-कोटीः सवत्साः स्वर्णभूषिताः । १०. अ च भ१ भ२-पुनः । ११. प्र-ब्राह्मणेभ्यो नृपवरः प्रददौ पुष्करेषु हि । १२. अ च भ१ भ२-तस्य । १३. प्र-संगाद्यतो । १४. रा१-°त्सा शितानघा । प्र-°त्सा काम्यदो° । १५. रा१-°स्याहिताग्नेस्तु दरिद्रस्योञ्छवृत्तिनः । प्र-याज्ञिकस्य ब्राह्मणस्य दरिद्रस्योञ्छवृत्तिनः । १६. रा१-नृगस्य गोसमूहेषु ददतः पूर्वमेव सा । प्र-स नष्टां गां क्षुधार्तस्तामन्वेष्टुमुपचक्रमे । अतः परमधिकः पाठः—रा१-विनष्टा सा क्षुधार्ता वै अन्विष्टा तत्र तत्र ह । १७. रा१-जीर्णवत्सां निरामयां । १८. रा१-ददर्श तां स्वकां धेनुं । प्र-ददर्श तां स्वकां धेनुं । १९. प्र-तां । २० रा१-स्वकेनोवाच ब्राह्मणः । प्र-स्वकेनोवाच स द्विजः । २१. रा१-गौः स्वरं । प्र-तं स्वरं । २२. रा१ प्र-स्वरं । २३. प्र-क्षुधितस्य । २४. प्र-च । २५. रा१-अन्वगात् । २६. अ-°पमा । रा१-पावकोत्तमं । प्र-तं महाद्युतिं ॥

गां दृष्ट्वा ह्रियमाणां[1] तां ब्राह्मणो येन राज-तः[2] ।
१४] नृ-गात् प्रति-गृहीता[3] सा स तूर्णं[4] त्वरितोऽन्व्-अगात्[5] ॥१४॥[१४
१५उ] तयोर् ब्राह्मणयोर् वादो महान् आसीद् विपश्चितोः । [१५उ
वि-वदन्तौ नृ-गं[6] तं च राजानम्[7] अभि-जग्मतुः ॥१५॥
१६] तौ राज-भवन-द्वारि दिदृक्षू[8] नृ-पतिं स्थितौ[9] । [१६
बहून् अहोरात्र-गणान् क्षुधाऽऽर्तौ द्वारम् आ-गतौ[10] ॥[16]१६॥
१७] ऊचतुश्[11] च[12] महाऽऽत्मानौ नृ-गं[10] तं ब्राह्मणर्षभौ[10] ।
क्रुद्धौ परम-सन्तप्तौ वाक्यं घोराऽभिसंहितम् ॥१७॥ [१७
१८] अर्थिनां कार्य-सिद्ध्य्-अर्थं यस्मात् त्वं नैषि दर्शनम् ।
१९पू] अ-दृश्यः[11] सर्व-भूतानां[11] कृकलासो भविष्यसि[11] ॥१८॥ [१८
N] अष्टादश-युगं कालं कृताऽविपरिवर्तनम् ।[13]
श्वभ्रे त्वं कृकली-भूतो[14] दीर्घ-कालं नि-वत्स्यसि[15] ॥१९॥ [१९
२०] उत्-पत्स्यति च लोकेऽस्मिन् यादवः पुरुषर्षभः ।
वसुदेव-सुतः श्री-मान् विष्णुर् मानुष-विग्रहः ॥२०॥ [२०
२१] स ते मोक्षयिता[16] राजन् शापाद् अस्माद् भविष्यति ।
२२पू] कृता ह्य् अनेन कालेन निष्-कृतिस् ते भविष्यति ॥[17]२१॥[२१
भाराऽवतारणाऽर्थं हि नर-नारायणाव् उभौ ।
N] उत्-पत्स्येते महा-वीर्यौ कलौ[18] युग उप-स्थिते[18] ॥२२॥ [२२
२२उ] एवं तौ शापम् उत्-सृज्य ब्राह्मणौ विगत-ज्वरौ ।
तां गां हि दुर्-बलां वृद्धां ददतुर् ब्राह्मणाय वै ॥२३[19]॥[२३

---

१. अ प्र-ह्रियमानां । २. रा$_1$-योपि पालयत विप्रः सोपि गामन्वगाद् द्रुतं । ३. प्र-परिगृ° । ४. रा$_1$-गत्वा च तमृषिं चष्टे मम गौरिति सत्वरः । अतः परमधिकश्च पाठः—रा$_1$-स्पर्शिता राजसिंहेन मम दत्ता नृगेण ह । ५. अ-नृगं तौ च रा° । रा$_1$-ततोन्योन्यदातारं । ६. अ-°तिं हि तौ । रा$_1$-सम्प्राप्तौ कार्यगौरवात् । ७. प्र-°आश्रितौ । ८. रा$_1$-अहोरात्राण्यनेकानि तौ स्थित्वा क्रोधमायतुः । ९. प्र-°तुस्तौ । १०. रा$_1$-तावभौ द्विजसत्तमौ । ११. प्र-तस्माददृश्यो भू° । १२. अतः परमधिकः पाठः—भ$_2$-बहून्यब्दसहस्राणि बहून्यब्दशतानि च । १३. रा$_1$-बहुवर्षसहस्राणि बहुवर्षशतानि च । प्र-°गं कालमावयोः शापमोहितः । १४. रा$_1$-°लासो वै । प्र-°लीभूत्वा । १५. रा$_1$-भविष्यसि । १६. प्र-मोचयिता । १७ च-नास्ति । १८. प्र-द्वापरेति युप° । १९. अ-नास्ति । अतः परमधिकः पाठः—रा$_1$-वर्ज-वसिष्ठश्च चतुर्थोऽयं समुपत्स्यति वै कविः । स राजवंशं प्रक्षीणमुत्पाद्य कुरुराजसु ॥ प्रजानां युगदौर्बल्याद् धर्मकार्यं वदिष्यति । ततः प्रभृति घोरं तु युगं तच्च प्रवत्स्यति ॥

२३] एवं स राजा तं शापम् उप-भुङ्क्ते[1] सु-दारुणम्[1] । [२४
कार्याऽर्थिनां वि-लम्बो[2] हि राज्ञां[3] दोषाय कल्पते ॥२४॥
तच्[4] छीघ्रं[5] दर्शनं मह्यम् अभि-वर्तन्तु[5] कार्यिणः ।
२४] वि-फलस्य[6] हि कार्यस्य फलं नोपैति[7] पार्थिवः । [२५
N] तस्मात् स्वयं[8] प्रतीऽऽक्षस्व[9] सौमित्रे कार्य-वज्[10] जनम्[10] ॥२५[11]॥ [२६
सं-५६] रामस्य भाषितं श्रुत्वा लक्ष्मणः पर-वीर-हा[12] । [रा-५४
१] उवाच प्राऽञ्जलिर् वाक्यं राघवं दीप्त-तेजसम्[13] ॥२६॥ [१
अल्पेऽप-राधे काकुत्स्थ द्वि-जाभ्यां शाप ईदृशः[14] ।
२] दत्तो[15] नृ-गस्य राजर्षेर्[16] ब्रह्म-दण्ड[17] इवाऽपरः ॥ २ ॥ [२
श्रुत्वा स[18] शापम् उत्-सृष्टम् आत्मनः[18] पुरुषर्षभः ।
३] किम् उवाच नृ-गो[19] राजा द्वि-जौ क्रोध-समन्वितौ[19] ॥२८॥ [३
लक्ष्मणेनैवम् उक्तस् तु राघवः पर-वीर-हा[20] ।
प्रत्य्-उवाच महा-तेजा लक्ष्मणं शुभ-लक्षणम् ।
४] शृणु सौम्य यथा चक्रे[21] स राजा शाप-विक्षतः ॥२९॥ [४
दत्त्वा[22] शापं गतौ विप्रौ वि-ज्ञाय नृप-सत्तमः[23] ।
५] मन्त्रिणश् चाऽऽह्वयामास पुरुषान् नैगमांस् तथा ॥[24]३०॥ [५
तान् उवाच नृ-गो[25] राजा सर्वाश् च प्र-कृतीस् तथा[26] ।[27]
७] भृशं दुःख-समाविष्टः श्रूयतां[28] मे समा-हिताः[28] ॥३१॥ [६
नारदः पर्वतश् चैव मम दत्त्वा महद् भयम् ।
८] गतौ स्व-भवनं[29] दिव्यं[30] देव-भूताव्[31] उभाव् ऋषी[30] ॥३२॥ [७

---

१. अ च भ$_1$ भ$_2$–उपभुंजन्युगान्बहून् । २. अ च भ$_2$–विसर्गो । भ प्र–विमर्शो । ३. प्र–राज्ञो । ४. भ$_1$ भ$_2$–ततः । ५. भ$_1$–अतिव° । ६. रा$_1$–सुकृतस्य । ७. भ$_1$–नापैति । रा$_1$–नावैति । ८. रा$_1$–गच्छ । ९. च भ$_1$ भ$_2$–°क्षिष्ये । १०. रा$_1$–°वाञ्जनः । ११. भ$_1$ रा$_1$–अतः परं सर्गसमाप्तिः—श्री रा°नृगोपाख्यानं । प्र–नास्ति । १२. रा$_1$–परमार्थवत् । प्र–परमात्मवान् । १३. प्र–दीप्तचेतसं । १४. अ च भ$_1$ भ$_2$–उत्तमः । १५. रा$_1$ प्र–महान् । १६. प्र–विप्रर्षेर् । १७. रा$_2$–यमदण्ड । १८. रा$_1$–तु पापसंयुक्तमात्मानं । प्र–शापसमायुक्तमात्मानं । १९. च भ$_2$–°न्वितः । प्र–महातेजा तौ द्विजौ क्रोधमूर्छितौ । २०. रा$_1$ प्र–पुनरब्रवीत् । २१. रा$_1$–पूर्वं । प्र–कुर्वन् । २२. रा$_1$ प्र–अथाध्वनि । २३. रा$_1$–स नृपस्तदा । प्र–नृपतिस्तदा । २४. रा$_1$–आहूय मन्त्रिणः सर्वान्नैगमान्सपुरोधसः । प्र–आहूयतां मन्त्रिणः सर्वे नैगमाः सपुरोधसः । २५. प्र–ततो । २६. प्र–तदा । २७. रा$_1$ प्र–वर्जं–नास्ति । २८. अ च भ$_1$ भ$_2$–सर्वांस्तान्प्रत्यभाषत । २९. अ च–सुभ° । रा$_1$–त्रिभु° । ३०. रा$_1$–मन्त्रौ । प्र–विप्रौ । ३१. अ च भ$_1$ भ$_2$–°तौ महानृषी । रा$_1$–वायुभूतावनिन्दितौ ॥

कुमारोऽयं वसुर् मह्यं[1] क्षिप्रम् एवाऽभि-षिच्यताम्[1] ।
९] श्वभ्राश्[2] चैव सुख-स्पर्शाः[2] क्रियन्तां[3] शिल्पि-संमताः[4] ।
N] यत्राऽहं क्षपयिष्यामि शापं ब्राह्मण-निःसृतम्[5] ॥३३॥ [८
वर्ष-घ्नं श्वभ्रम् एकं तु हिम-घ्नम् अपरं तथा[6] ।
१०] ग्रैष्मिकं[7] तु सुख-स्पर्शम् एकं[7] कुर्वन्तु शिल्पिनः ॥३४॥ [९
फल-वन्तश् च ये वृक्षाः पुष्प-वन्तश्[8] च पाद-पाः[8] ।
११] वि-रोप्यन्तां बहु-विधा गुल्माः कण्टकिनस् तथा ॥[9]३५॥ [१०
पुष्पाणि च सु-गन्धीनि श्वभ्रे-श्वभ्रे[10] च[1] सर्व-तः ।
१२] रथ-चर्या-पथो[11] न स्याद् आ-वृतं(?तो)[11] यो जनस्य च ॥३६॥ [११
एवं कृत्वा वि-धानं स सं-दिदेश सुतं तदा ।
१४] धर्म-नित्यः प्र-जाः पुत्र क्षत्र-धर्मेण पालय ॥[12]३७॥ [१३
प्रत्य्-अक्षं ते यथा शापो[13] द्वि-जाभ्यां मयि पातितः[13] ।
१५] नर-श्रेष्ठ न रोष त्वम् अप-राधे च तादृशे ॥[14]३८॥ [१४
मा कृथास्[15] त्वं तु[15] सं-तापं मत्-कृते पुरुषर्षभ ।
१६] कृताऽन्तो बल-वांल् लोके येनाऽसि[16] व्यसनी-कृतः[16] ॥३९॥ [१५
प्राऽऽप्तव्यं[17] लभते सर्वं सुखं दुःखं यथा कृतम् ।
१७] पूर्व-जन्माऽन्तर-स्थेन मा वि-षादं कृथाः सुत ॥[18]४०॥ [१६
एवम् उक्त्वा सुतं[19] तत्र[19] नृ-गो राजा महा-यशाः ।
१८] श्वभ्रं जगाम सु-कृतं[20] वासाय पुरुषर्षभः ॥[21]४१॥ [१७

---

१. रा$_{1}$ प्र—नाम स चेहाद्याभिषिच्यतां । २. रा$_{1}$—श्वभ्रं च यस्सुखस्पर्शं । ३. रा$_{1}$ ब—क्रियतां । ४. रा$_{1}$—°तं । ५. अ—°सृजं । च भ$_{1}$ भ$_{2}$—°णसंसृतं । ६. अ रा$_{1}$—तदा । ७. च भ$_{1}$ भ$_{2}$—ग्रीष्मघ्नं सुखसंस्पर्शमाशु । ८. च भ$_{1}$ भ$_{2}$—°वन्त्यश्च या लताः । ९. च भ$_{1}$ भ$_{2}$—गुल्माश्च स्वादुसम्पन्ना रोप्यन्तां वै सहस्रशः । ल$_{1}$ ल$_{3}$ ब—त्रिरोप्यतां बहु° । १०. च भ$_{1}$ भ$_{2}$—तेषु श्वभ्रेषु । ११. अ रा$_{1}$ ल$_{1}$ ल$_{3}$ प्र—परिवार्य यथाधस्तादित्यर्थं । १२. च भ$_{1}$ भ$_{2}$—नित्यधर्मः सदा पुत्र राज्यं त्वं प्रतिपालय । १३. च भ$_{1}$ भ$_{2}$—वृत्तं शापस्ताभ्यां सुदारुणः । १४. च भ$_{1}$ भ$_{2}$—विमुक्तो मम विप्राभ्यां अपराधे च तद्विधे । १५. च भ$_{1}$ भ$_{2}$—मास्त्वं पुत्र । १६. च भ$_{1}$ भ$_{2}$—येनाहमभिपीडितः । १७. अ—स्वभाव्यं । १८. च भ$_{1}$ भ$_{2}$—°तरे राजन्मा कार्षीर्विकृतं मनः । १९. च भ$_{1}$ भ$_{2}$—स तनयं । २०. च भ$_{1}$ भ$_{2}$—दीनात्मा । २१. अतः परमधिकः पाठः—च भ$_{1}$ भ$_{2}$ प्र— तं शापमद्यापि गुरुं क्षपयत्येव भूपतिः ॥

एवं प्र-विष्टः स नृ-पः श्वभ्रं रत्न-विभूषितम्[1] ।
१९] द्विजाऽऽज्ञां[2] धारयामास[2] बहून् वर्ष-गणान् नृ-गः[3] ॥४२॥ [१८

इत्यार्षे रामायण उत्तर-काण्डे नृग-श्वभ्र-प्रवेशो[4] नाम
पञ्चपञ्चाशः सर्गः ॥ ५५ ॥

---

## [ वं-५७ ] = [ षट्पञ्चाशः सर्गः ] = [ द-५५ ]

एष ते[5] नृग-शापस्य[6] वि-स्तरोऽभि-हितो मया ।
१] यद्य् अस्ति श्रवणे श्रद्धा[7] शृणुष्वेहाऽपरं यथा[7] ॥ १ ॥ [१
एवम् उक्तस् तु रामेण सौमित्रिर् इदम्[8] अब्रवीत् ।
२] तृप्तिर् आश्चर्य-भूतानां कथानां नास्ति मे नृ-प ॥ २ ॥ [२
लक्ष्मणेनैवम् उक्तस् तु राम इक्ष्वाकु-नन्दनः[9] ।
३] कथां परम-धर्मिष्ठां व्या-हर्तुम् उप-चक्रमे ॥ ३ ॥ [३
आसीद् राजा निमिर् नाम इक्ष्वाकोः सु-महाऽऽत्मनः ।
४] पुत्रः शक्र-समो वीर्ये धर्मे च परमाऽऽत्म-वान् ॥ ४[10] ॥ [४
स राजा वीर्य-सम्पन्नः पुरं देव-पुरोपमम् ।
५] नि-वेशयामास तदा गौतमोद्देशम्[11] आ-श्रितम् ॥ ५ ॥ [५
पुरस्य तु[12] कृतं नाम वैजयन्तम् इति श्रुतिः ।
६] नि-वेशं तत्र राजर्षिर् निमिश् चक्रे महा-यशाः ॥[13] ६ ॥ [६
तस्य बुद्धिः समुत्-पन्ना नि-वेश्य सु-महापुरम्[14] ।
७] यजेयं दीर्घ-सत्रेण[15] पितुः प्र-ह्लादयन्[15] मनः[16] ॥ ७ ॥ [७
ततः पितरम् आ-मन्त्र्य स इक्ष्वाकु-सुतो निमिः[17] । [८पू
८] अत्रिम् अङ्गिरसं चैव भृगुं चैव[18] तपस्विनम्[18] ॥ ८ ॥ [९,उ

---

१. च भ$_1$ भ$_2$–हेमत्रि° । २. च भ$_1$ भ$_1$–द्विजाभ्यां धारयन्शापं । ३. च भ$_1$ भ$_2$–अपि । ल$_3$ ब–नृपः । ४. च भ$_1$ भ$_2$–नृगशापो । ५. च भ$_1$ भ$_2$–वै । ६. ब–नृपशा° । ७. च भ$_1$ भ$_2$–बुद्धिरपरां मे कथां शृणु । ल$_3$ ब–°ह प° । ८. च भ$_1$ भ$_2$–पुनर् । ९. च भ$_1$ भ$_2$–वर्ज–°कुवर्धनः । १०. च भ$_1$ भ$_2$–इक्ष्वाकुः प्रथितो लोके निमिर्नाम जनेश्वरः । द्वादशतनयो धीमान्धर्मिष्ठः परमात्मवान् ॥ ११. च भ$_2$–गौतमादेशम् । ल$_2$ प्र–गोत° । १२. च भ$_1$ भ$_2$–च । १३. च भ$_1$ भ$_2$–न्यवेशयद् यन्नृपतिर्निमिर्यत्नात्स्वलंकृतम् । १४. च भ$_1$ भ$_2$–महत्पुरं । १५. च भ$_1$ भ$_1$–इति यज्ञेन । १६. रा$_1$–यात्मनः । १७. च भ$_1$ भ$_2$–मुनीन् । ल$_1$ ल$_3$ ब–मुनिः । १८. च भ$_1$ भ$_2$–चावरयत्स्वयं । रा$_1$ ल$_1$ ल$_3$ ब प्र–°पोन्वितं ॥

वसिष्ठं चैव विप्रर्षिं ख्यात-कीर्तिं तपो-धनम् । [८उ
९] वरयामास राजर्षिर्[1] निमिर्[2] इक्ष्वाकु-वंश-जः[3] ॥९॥ [९पू
अथाऽऽह वचनं वि-प्रो वसिष्ठो मुनिर् अञ्जसा ।
१०] वृतोऽहं पूर्वम् इन्द्रेण प्रतीऽऽक्षं(?क्ष) तद् अनन्तरम् ॥[4]१०॥ [१०
११उ] तम् अन्तरम् अथो गत्वा गौतमं[5] प्रत्य्-अपूजयत् ।
वसिष्ठोऽपि महा-तेजा इन्द्र-यज्ञम्[6] अथाऽकरोत्[6] ॥११॥ [११
१२] निमिस् तु राजा तं वि-प्रं समा-नीय नराऽधिपः ।[7]
१३पू] अयजद्[8] धिमवत्-पार्श्वे[8] स्व-पुरस्य[9] समीप-तः ॥१२॥ [१२पू
N] धन-रत्नौघ-बहुलां निमिः संस्कार-संस्कृताम् ।[10] [N
१३उ] पञ्च वर्ष-सहस्रं[11] स यज्ञ-दीक्षाम् उपाऽगमत् ॥[12]१३॥[१२उ
१४उ] इन्द्र-यज्ञाऽवसाने[13] तु[13] वसिष्ठो भग-वान् ऋषिः ।
सकाशम् आ-गतो राज्ञो होतृ-कर्मण्य्[14] अ-तन्द्रितः[15] ॥१४॥ [१३
१५] तद् अन्तरम् अथाऽपश्यद्[16] गौतमेनाऽभि-पूरितम्[17] ।
क्रोधेन महताऽऽविष्टो वसिष्ठो ब्रह्मवित्-तमः[18] ॥१५॥ [१४
१६] स राज्ञो दर्शनाऽऽकाङ्क्षी मुहूर्तं समुपाऽविशत्[19] ।
तस्मिन्न् अहनि राजा[20] तु[20] निद्राम्[21] आ-हृतवान् सुखम्[21] ॥१६॥ [१५
१७] ततो मन्युर् वसिष्ठस्य प्रादुर्-भूतो महाऽऽत्मनः ।
अ-दर्शनेन[22] राजर्षेर् व्या-हर्तुम्[23] उप-चक्रमे[23] ॥१७॥ [१६
१८] यस्मात् त्वम् अन्यं वृतवान् माम् अव-ज्ञाय पार्थिव ।
चैतन्येन विना-भूतो देहस् तव भविष्यति ॥[24]१८॥[१७

---

१. च भ$_1$ भ$_2$–विप्रर्षिर् । २ भ$_1$ भ$_2$–निमिम । ३. च–°कुसंभवः । भ$_1$ भ$_2$–°कुसंभवं । ४. च भ$_1$ भ$_2$–इन्द्रेणाहं वृतः पूर्वमन्तरं प्रतिपालय । ५. ल$_2$–गोतमं । ६. च भ$_1$ भ$_2$–चक्रे यज्ञं शतक्रतोः । ७. च भ$_1$ भ$_2$–राजा च स निमिर्विप्रं समानीय महामतिः । ८. च भ$_1$ भ$_2$–इय.ज हिम° । ९. च भ$_1$ भ$_2$–सागरस्य । १०. च भ$_1$ भ$_2$–°लं बहुसंस्कारसंस्कृतं । ११. अ ल$_2$–वर्ज–°स्त्रात् । १२. अतः परमधिकः पाठः—च भ$_1$ भ$_2$–दीक्षामुपागमच्छक्रः पञ्चवर्षशतानि तु । १३. च भ$_2$–°ज्ञे तु सम्पूर्णे । भ$_1$–°ज्ञे तु सम्प्राप्ते । १४. च भ$_1$ भ$_2$ ल$_2$–हौत्रक° । १५. ल$_1$ ल$_3$ ब प्र–अनिन्दितः । १६. च भ$_1$ भ$_2$–उपागम्य । १७. भ$_1$ भ$_2$–वर्ज–°भिपूजितः । १८. च भ$_1$ भ$_2$–भगवानृषिः । १९. च भ$_1$ भ$_2$–उपविश्य ह । २० अ ल$_2$–राजापि । ल$_3$ ब–राजन्यो । २१. च भ$_1$ भ$_2$–निद्रयापहृतो भृशं । २२. च भ$_1$ भ$_2$–°र्शनात्तु । २३. च भ$_1$ भ$_2$–व्याजहार वचोऽथ सः । २४. च भ$_1$ भ$_2$–विनाकृतश्चेतनया विदेहस्त्वं भविष्यसि ॥

१९] ततः प्र-बुद्धो राजर्षिः श्रुत्वा शापं महा-मुनेः ।
ब्रह्म-योनिम् उवाचाऽथ स राजा क्रोध-मूर्च्छितः ॥१९॥ [१८

२०] अ-जानाने[1] शयाने[1] च[2] क्रोधेन कलुषी-कृतः ।
मुक्तवान् मयि शापाऽग्निं यम-दण्डम्[3] इवाऽपरम्[3] ॥२०॥ [१९
तस्मात् तवाऽपि ब्रह्मर्षे[4] चैतन्येन विना-कृतः[5] ।

२१] देहस्[6] तु[7] (?त्व)रुचिर-प्रख्यो[7] भविष्यति[8] न सं-शयः[8] ॥२१॥ [२०

इत्यार्षे रामायण उत्तर-काण्डे निमित्रसिष्ठयोरन्योऽन्य-शाप-वर्णनं नाम
षट्पञ्चाशः सर्गः ॥ ५६[9] ॥

---

## [ व—५८ ]=　　[ सप्तपञ्चाशः सर्गः ]　　=[ दा—५६ ]

N] एवं शप्तो मुनी राज्ञा राजा च मुनिना तदा ।　　[N
तौ परस्पर-शापेन देहम् उत्-सृज्य धार्मिकौ ।

४] अभूताम् ऋषि-राजर्षी वायु-भूतौ तपो-धनौ ॥[10]१॥ [४
अ-शरीरः शरीरस्य कृते तस्मिन्[11] महा-मुनिः[11] ।[10]

५] वसिष्ठस् तु महा-तेजा जगाम पितरं प्रति ॥[12]२॥ [५
सोऽभि-वाद्य पितुः[13] पादौ देव-देवस्य धर्म-वित् ।

६] पिता-महम् अथोवाच वायु-भूत[14] इदं वचः[14] ॥ ३ ॥ [६
भग-वन् निमि-शापेन वि-देहोऽस्मि कृतः प्र-भो ।　　[७पू

७] सं-भवेऽन्यस्य[15] देहस्य[15] प्र-सादं कर्तुम् अर्हसि ॥ ४ ॥ [८उ
तम् उवाच ततो ब्रह्मा स्वयं-भूर् अमित-द्युतिः ।

८] मित्रा-वरुणयोर्[16] ओजः प्र-विश त्वं[16] महा-मुने ॥ ५ ॥ [९
अ-योनिजस् त्वं भविता तत्राऽपि द्विज-सत्तम ।

९] धर्मेण महता युक्तः पुनर्[17] एष्यसि तां तनुम्[17] ॥ ६ ॥ [१०

---

१. अ-°नतः । भ$_{1}$, रा$_{1}$ ल$_{1}$ ल$_{2}$ ल$_{3}$ ब प्र-°नता । २. च भ$_{1}$ भ$_{2}$-वर्ज-°नेन । ३. च भ$_{1}$ भ$_{2}$-यस्मात्त्वं सत्पथि स्थिते । ४. च भ$_{1}$ भ$_{2}$ प्र-विप्रर्षे । ५. च भ$_{1}$ भ$_{2}$-°कृतं । ६. ब-देहं । ७. अ रा$_{1}$ ल$_{1}$ ल$_{2}$ ल$_{3}$ प्र-°ख्यं । ब-अरुचिरप्रख्यं । ८. च भ$_{1}$ भ$_{2}$-न भविष्यत्यसंशयः । ९. च भ$_{1}$ भ$_{2}$-नात्र सर्गसमाप्तिः । १०. भ$_{2}$-नास्ति । ११. च भ$_{1}$-नाशे स्वयं तु तौ । १२. च भ$_{1}$ भ$_{2}$-वसिष्ठोपि हि ब्रह्माणं जगामाथ पितामहं । १३. च भ$_{1}$ भ$_{2}$ प्र-ततः । १४. च भ$_{1}$ भ$_{2}$-°तो मनोगतिः । १५. च भ$_{1}$ भ$_{2}$-देहस्यान्यस्य सद्भावे । १६. च भ$_{1}$ भ$_{2}$-°योस्तेजस्त्वमाविश । १७. च भ$_{1}$ भ$_{2}$-पूतश्चैव भविष्यसि ॥

एवम् उक्तस् तु देवेशम्[1] अभि-वाद्य[1] पिता-महम्[2] ।
१०] कृत्वा प्र-दक्षिणं[3] चैव प्र-ययौ वरुणाऽऽलयम्[4] ॥ ७ ॥ [११
तम् एव कालं मित्रोऽपि वरुणस्य[5] महाऽऽत्मनः ।
११] क्षीरोदेन सहायेन पूज्यमानः[6] सुरेश्वरः ॥ ८ ॥ [१२
एतस्मिन्न्[7] एव काले तु उर्वशी[7] परमाऽप्सराः ।
१२] यदृच्छया तम् उद्-देशम् आ-गता[8] देव-निर्मिता[8] ॥ ९ ॥ [१३
तां दृष्ट्वा रूप-सम्पन्नाम् उर्वशीं[9] वरुणाऽऽलये ।
१३] आऽविशत् परमो हर्षो वरुणं ह्य् उर्वशी-कृतः ॥[10] १० ॥ [१४
स[11] तां पद्म-पलाशाऽक्षीं[11] पूर्णेन्दु-वदनाऽऽननाम्[12] ।
१४] वरुणो वरयामास वारुणीम् अप्सरो-वराम् ॥[13] ११ ॥ [१५
तम्[14] उवाचोर्वशी[14] वाक्यं प्राऽञ्जलिः सु-समाहिता ।
१५] मित्रेणाऽहं वृता साक्षात् पूर्वं[15] च वरुणेश्वर ॥[15] १२ ॥ [१६
वरुणस् त्व् अब्रवीद् वाक्यम् अनङ्ग-शर-पीडितः[16] ।
१६] इदं तेजः करिष्यामि[17] कुम्भेऽस्मिन् देव-निर्मिते ॥ १३ ॥ [१७
भावम् उत्-सृज सु-श्रोणि न[18] लक्ष्यं[18] वर-वर्णिनि ।
१७] कृत-कृत्यो[19] भविष्यामि यदि नेच्छसि[20] सं-गमम्[21] ॥ १४ ॥ [१८
तस्य तल् लोक-पालस्य[22] श्रुत्वा[23] वाक्यम् उदा-हृतम्[23] ।
१८] उर्वशी परम-प्रीता[24] तत्र भावं न्य्-अवेशयत् ॥ १५ ॥ [१९
कामं देव[25] भवत्व्[26] एवं[26] हृदयं मे तव[27] स्थितम्[27] ।

---

१. च भ$_1$ भ$_2$–भावेन सोऽभि° । २. च भ$_1$ भ$_2$–वर्जं–प्रदक्षिणं । ३. ल$_1$ प्र–पितामहं । ४. रा$_1$–°ये । ५. च भ$_1$ भ$_2$–वर्जं–°णाश्च महात्मना । ६. अ रा$_1$ ल$_1$ ब प्र–°मानौ सुरेश्वरौ । च भ$_1$ भ$_2$–क्षीरोदमुपसंगम्य तं संपूज्य परस्परं । ७. च भ$_1$ भ$_2$–उर्वशी त्वथ कालस्य कस्यचित् । ८. च भ$_1$ भ$_2$–आजगाम सखीगणैः । ९. च भ$_1$ भ$_2$–क्रीडन्तीं । १०. च भ$_1$ भ$_2$–नास्ति । ११. च–तामुवाच ततो हृष्टां । भ$_1$ भ$_2$–तामूचतुस्तौ हृष्टार्थं । १२. च भ$_1$ भ$_2$–उर्वशीं देववर्णिनीं । प्र–°न्दुसदृशाननां । १३. च भ$_1$ भ$_2$–आवां त्वमनवद्यांगि वरयस्व वरानने । १४. च भ$_1$ भ$_2$–तावुभौ चो° । १५. च भ$_1$ भ$_2$–मित्रेणाऽस्मि वृता पूर्वं नोत्सहेऽन्यं निषेवितुं । १६. च भ$_1$ भ$_2$–काममार्गणपी° । १७. अ रा$_1$ ल$_1$ ल$_2$ प्र–समुत्क्षिप्य । ल$_3$ ब–समुत्क्षिप्यं । १८. च भ$_1$ भ$_2$–मयि त्वं । १९. च भ$_1$ भ$_2$–कृतकामो । २०. अ रा$_1$ ल$_1$ ल$_2$ प्र–नेच्छामि । २१. अ रा$_1$ ल$_1$ ल$_2$ ल$_3$ ब–संगतं । प्र–संगतिं । २२. च भ$_1$ भ$_2$–लोकनाथस्य । २३. अ रा$_1$ ल$_2$ ल$_3$ ब प्र–वरुणस्य तु भाषितं । ल$_1$–वरुणस्य च भाषितं । २४. प्र–°प्रीत्वा । २५. च भ$_1$ भ$_2$–एवं । २६. अ रा$_1$ ल$_2$ ल$_3$ ब प्र–भवत्येव । २७. च भ$_1$ भ$_2$ ल$_1$–त्वयि स्थितं । प्र–तत्रेप्सितं ॥

१९] भावश् चाऽभ्य्-अधिकस् तुभ्यं देहो मित्रस्य तु प्र-भो[1] ॥१६॥[२०
उर्वश्या एवम्[2] उक्ते तु तेजोऽभून्[2] महद् अद्भुतम् ।
२०] जज्वालाऽनल-सङ्काशं[3] कुम्भे चाऽप्य्[4] असृजत् प्र-भुः ॥१७॥ [२१
उर्वशी त्व् अगमत् तत्र स मित्रो[5] यत्र देवता[5] ।[6]
२१] स[7] तु मित्रः सु-संक्रुद्ध उर्वशीम् इदम्[7] अब्रवीत् ॥१८॥ [२२
मया पूर्वं वृता भद्रे यस्मात्[8] त्वम्[8] अ-विसर्जिता ।
२२] भावेनाऽन्यं[9] वृतवती किम्[10]-अर्थं[10] दुष्ट-चारिणि ॥१९॥ [२३
अनेन दुष्-कृतेन त्वं मत्-क्रोध-कलुषी-कृता[11] ।
२३] मानुषं लोकम् आ-साद्य किं-चित् कालं[12] नि-वत्स्यसि[12] ॥२०॥[२४
बुधस्य पुत्रो राजा[13] यः पुरू-रवा[13] इति[14] श्रुतिः[15] ।
२४] तम् अभ्या-गच्छ दुर्-बुद्धे[15] स ते भर्ता भविष्यति ॥[16]२१॥[२५

इत्यार्षे रामायण उत्तर-काण्ड उर्वशी-शापो नाम
सप्तपञ्चाशः सर्गः ॥५७॥

---

## [ वं-५६ ]= [ अष्टापञ्चाशः सर्गः ] =[ दा-५७ ]

तां श्रुत्वा दिव्य-संयुक्तां[17] कथाम् अद्भुत-विस्तराम्[18] ।
१] लक्ष्मणः परम-प्रीतो राघवं वाक्यम् अब्रवीत् ॥ १ ॥ [१
निक्षिप्त-देहौ काकुत्स्थ कथं तौ द्विज-पार्थिवौ ।
२] पुनर् देहेन सं-योगं जग्मतुर्[19] देव-सन्निभौ[19] ॥ २ ॥ [२
तस्य तद् भाषितं श्रुत्वा रामः सत्य-परायणः[20] ।
३] तां कथां कथयामास वसिष्ठेक्ष्वाकुनाथयोः[21] ॥ ३ ॥ [३

---

१. च भ$_{1}$ भ$_{2}$–त्वद्गतो ह्यत्र मे भावो मित्र चैव वसेत्स्वयं । २. च भ$_{1}$ भ$_{2}$–त्वथ वाक्यांते तेजश्च । ३. च भ$_{1}$ भ$_{2}$–ज्वलज्ज्वलनसं° । ४. च भ$_{1}$ भ$_{2}$–चाप्यसृ° । ५. च भ$_{1}$ भ$_{2}$–यत्र मित्रश्च सुव्रत । ६. अतः परमधिकः पाठः—च भ$_{1}$ भ$_{2}$–आविशत्परमो हर्षो मित्रं वरुणमेव च । ७. च भ$_{1}$ भ$_{2}$–मित्रोऽथ परमक्रुद्धो उर्वशीं वाक्यम् । ८. च भ$_{1}$ भ$_{2}$–किमर्थं । ९. च भ$_{1}$ भ$_{2}$–°न वै । १०. च भ$_{1}$ भ$_{2}$–त्वमन्यं । ११. प्र–°घकिल्बिषी° । १२. च भ$_{1}$ भ$_{2}$–काले भविष्यसि । १३. च भ$_{1}$ भ$_{2}$–धर्मात्मा नरेन्द्रर्षिर् । प्र–राजर्षिः पु° । १४. च भ$_{1}$ भ$_{2}$ ल$_{1}$ प्र–प्रतापवान् । १५. अ रा$_{1}$ ल$_{2}$ ल$_{3}$ ब–भद्रे ते । १६. च भ$_{1}$ भ–तमभ्येहि स ते भर्ता भविष्यति महायशाः । १७. च भ$_{1}$ भ$_{2}$–°संकाशां । १८. च भ$_{1}$ भ$_{2}$–°तदर्शनां । १९. च भ$_{1}$ भ$_{2}$–आगतौ मुक्तसंशयौ । २०. च भ$_{1}$ भ$_{2}$–°राक्रमः । २१. च भ$_{1}$ भ$_{2}$–°ष्ठक्षितिना° ॥

यः स कुम्भो नर-श्रेष्ठ तेजः-पूर्णो महाऽऽत्मनोः[1] ।
४] तस्मिंस् तेजो-मयौ वि-प्रौ सं-भूताव् ऋषि-सत्तमौ ॥ ४ ॥ [४
पूर्वं[2] सम्-अभवत् तत्र अगस्त्यो भग-वान् ऋषिः ।[2]
५] नाऽहं सुतस् तवेत्य् उक्त्वा तस्मात् कुम्भाज् जगाम सः ॥[3] ५ ॥[५
तेजस् तत्र तु मित्रस्य उर्वश्यां[4] पूर्वम् आ-हितम्[4] ।
६] तस्मिन् सम्-अभवत् कुम्भे वसिष्ठो भग-वान् ऋषिः ॥ ६[5] ॥ [६
कस्य-चित् त्व् अथ कालस्य मित्रावरुण-सम्भवम् ।
७] वसिष्ठं तेजसा युक्तम्[7] इक्ष्वाकु-कुल-दैवतम् ॥ ७ ॥ [७
तम् इक्ष्वाकुर् महा-तेजा जात-मात्रम् अ-निन्दितम् ।
८] वव्रे पुरो-हितं सौम्य[9] वंशस्याऽस्य भवाय[9] वै[9] ॥ ८ ॥ [८
एष ते पूर्व-देहस्य[8] वसिष्ठस्य महाऽऽत्मनः ।
९] कथितो भव(?वस्) तः(?ते)सम्यग् राज्ञः शृणु यथाऽभवत् ।[9] ९ ।[९
दृष्ट्वा वि-देहं राजानम् ऋषयः सर्व एव ते[10] ।
१०] तच्[11] चेतो योजयामासुर्[11] यावद् दीक्षा सम्-आप्यते ॥१०॥ [१०
तदा[12] देहं[12] नरेन्द्रस्य तेऽरक्षन्[13] ऋषि-पुङ्गवाः[13] ।
११] गन्ध-माल्यैश्(?ल्ये) च युज्यन्ते पौर-भृत्य-समन्विताः ।[14] ११ ।[११
ततो यज्ञ-समाप्तौ तु देवास् तत्र समा-गताः ।
१२] आ-गताः परमां तुष्टिम् ऋषिभिस् तेऽभि-गम्य[15] च ॥१२॥ [१२
सु-प्रीताश् च सुराः सर्वे निमेश् चेतस्[16] तदाऽब्रुवन्[16] ।
१३] वरं वृणीष्व[17] राजर्षे यत्[18] ते चेतो नि-रूप्यताम्[18] ॥१३॥ [१३

---

१. च भ$_1$ भ$_2$–°नः । २. च भ$_1$ भ$_2$–अगस्त्यस्तत्र भगवान्सम्बभूवाग्र मुनिः । ३. ल$_3$–नास्ति । ४. अ रा$_1$ ल$_1$ ल$_2$ प्र–°श्याः पू° । च भ$_1$ भ$_2$–श सुसमाहितम् । ५. च भ$_1$ भ$_2$–पूर्णे । ६. च भ$_1$ भ$_2$–पुरा । ७. च भ$_1$ भ सुखावहं । ८. च भ$_1$ भ$_2$–स विदे° । ९. च–उत्पत्तिः कथिता सौम्य निमेः श परंतप । भ$_2$–उत्पत्तिः सा कथा सौम्य निमेः शृणु परंतप । भ$_1$–नास्ति । अ परमधिकः पाठः—च भ$_2$–वंशस्य निर्गमः सौम्य तन्मे शृणु परंतप । १०. भ$_1$ भ$_2$–हि । ११. च भ$_1$ भ$_2$–तथैव याज° । १२. अ ल$_2$–तथा देहं । च भ भ$_2$–तं विदेहं । १३. च भ$_1$ भ–वर्जं–ते रक्षन्ति ऋषिसत्तमाः । १४. च भ$_1$ भ वरैर्माल्यैः सुगन्धैश्च पूज्यमानं मुहुर्मुहुः । १५. च भ$_1$ भ$_2$–वर्जं-तं समेत्य । १६. भ$_1$ भ$_2$–आत्मानमब्रु° । १७. च भ$_1$ भ–वश्य । १८. च भ$_1$ भ$_2$–क्व ते ज विधीयतां ॥

एवम् उक्तः सुरैः सर्वैर् उवाचाऽऽत्मा[1] निमेस् तदा[1] ।[2]
१४] वसेयं सर्व-सत्त्वानां दृष्टयां वै सुर-सत्तमाः ॥[2]१४॥ [१४
बाढम् इत्य् एव देवास् ते निमेर्[3] आत्मानम् अब्रुवन्[3] ।
१५] नेत्रेषु सर्व-भूतानां वायु-भूतश् चरिष्यसि ॥१५॥ [१५
निमेषिष्यन्ति चक्षूंषि त्वत्-कृते सर्व-देहिनाम् ।
१६] वायु-भूतेन चरता विश्रमाऽर्थं मुहुर्-मुहुः ॥१६[4]॥ [१६
एवम् उक्त्वा तु वि-बुधाः सर्वेऽगच्छन् यथाऽऽगतम् ।
१७] ऋषयोऽपि[5] महाऽऽत्मानो निमेर् देहं तपो-धनाः[6] ॥१७॥ [१७
अरणिं तत्र नि-क्षिप्य मथनं[7] चक्रुर् ओजसा[7] ।
१८] मन्त्र-होमैर् महाऽऽत्मानः पुत्र-हेतोर् निमेस् तदा[8] ॥१८॥ [१८
अरण्यां मथ्यमानायां प्रादुर्-भूतो महा-यशाः ।
१९] मथनान्[9] मिथिर् इत्य् आहुर्[9] जननाज्[10] जनकोऽभवत् ॥१९॥
वि-देहश् चाऽभवद् यस्मान् महाऽऽत्मा स महा-तपाः ।[11] [१९
२०] तस्माद् वि-देहाः प्रोच्यन्ते सर्वे तद्-वंश-सम्भवाः ॥[12]२०॥ [N
एवं विदेह-राजस्[13] तु[13] पूर्व-जो[14] जनकोऽभवत्[14] ।
२१] मिथिर् नाम महा-तेजास् तेनाऽसौ[15] मिथिलाऽभवत्[15] ॥[16]२१॥ [२०

इत्यार्षे रामायण उत्तर-काण्डे निमि-सम्भवो
नामाऽष्टपञ्चाशः सर्गः ॥५८॥

---

१. अ रा$_{1}$ ल$_{1}$ ल$_{2}$ ल$_{3}$ ब-अत आरभ्य १५-शश्लोकस्य १-मपादं यावन्नास्ति । प्र-निमिश्चिन्त्य तदाब्रवीत् । २. अतः परमधिकः पाठः—प्र-नेच्छंति परमात्मानं सशरीरं दयालवः । ३. अ रा$_{1}$ ल$_{1}$ ल$_{2}$ ल$_{3}$ ब-निमेश्चेतस्तदाऽब्रुवन् । प्र-नरात्मानमथाब्रुवन् । ४. च भ$_{1}$ भ$_{2}$-वर्जं-नयनैर्निमिषिष्यन्ति विश्रमार्थं मुहुर्मुहुः । चक्षूंषि सर्वभूतानां वायुभूतेन पार्थिव ॥ ५. च भ$_{1}$ भ$_{2}$ °यश्च । ६. च भ$_{1}$ भ$_{2}$-समाहरन् । ७. च भ$_{1}$ भ$_{2}$-ते कुर्वन्मथनं तदा । ८. च भ$_{1}$ भ$_{2}$-अथ । ९. च भ$_{1}$ भ$_{2}$-अथो मिथिरिति ख्यातो । १०. अ ल$_{2}$-अत आरभ्य २१-शश्लोकस्य तृतीयपादं यावन्नास्ति । ११. ब-यस्माद्विदेहः सम्पन्नो विदेहः स ततोऽभवत् । १२. च भ$_{1}$ भ$_{2}$-वर्जं-नास्ति । १३. रा$_{1}$ ल$_{1}$ ल$_{3}$ ब प्र-°राजस्य । १४. च भ$_{1}$ भ$_{2}$-वर्जं-जनकः पूर्वकोऽभवत् । १५. च भ$_{1}$ भ$_{2}$-मथनान्मिमिलोऽभवत् । १६. अतः परमधिकः पाठः—च भ$_{1}$ भ$_{2}$-ख्याताः पुण्यवतां श्रेष्ठाः सत्यार्जवपरायणाः ॥

एवं ब्रुवाणं रामं तु लक्ष्मणः पर-वीर-हा ।
१] प्रत्य्-उवाच महा-तेजा ज्वलन्तम् इव तेजसा ॥[1] १ ॥ [१
महद्[2] अद्भुतम्[2] आश्चर्यं[3] वि-देहेषु[3] पुरा-तनम्[4] ।
२] निमित्तं[5] राज-शार्दूल वसिष्ठस्य[6] निमेस् तथा ॥ २ ॥ [२
निमिस् तु क्षत्रियः शूरो वि-शेषेण च[7] दीक्षितः[7] ।
३] न क्षमाम् अकरोत्[8] कस्माद्[8] वसिष्ठस्य महाऽऽत्मनः ॥ ३ ॥ [३
लक्ष्मणेनैवम्[9] उक्ते तु सौमित्रिं[9] पुनर् अब्रवीत् ।
४] रामः कथयतां श्रेष्ठो भ्रातरं दीप्त-तेजसम् ॥ ४ ॥ [४
न सर्वं क्षमया वीर मु(?सु)खेनैव[10] प्र-पद्यते[11] ।
N] यथा तु क्षत्रियेणैव क्षान्तं शुक्रस्य तच् छृणु ॥५[12]॥ [N
सौमित्रे दुः-सहः कोपो[13] यथा क्षान्तो ययातिना ।
५] सम्बन्ध-कं पुरस्-कृत्य तन् नि-बोध समा-हितः ॥ ६ ॥ [६
नहुषस्य सुतो राजा ययातिः पौर-वत्सलः ।
६] तस्य भार्या-द्वयं सौम्य रूपेणाऽप्रतिमं भुवि ॥ ७ ॥ [७
एका तु तस्य राजर्षेर् बहु-मान-पुरस्कृता[14] ।
७] शर्मिष्ठा नाम दयिता दुहिता वृष-पर्वणः ॥ ८ ॥ [८
सुता तूऽशनसः पत्नी ययातेः पुरुषर्षभ ।
८] न तु सा दयिता राज्ञो देव-यानी सु-मध्यमा ॥ ९[15]॥ [९
तयोः पुत्रौ समुद्-भूतौ ~~[illegible]~~ गुणान्वितौ ।[16]
९] शर्मिष्ठाऽजनयत् पूरुं देव-यानी यदुं तथा ॥१०॥ [१०
पूरुस् तु दयितो राज्ञो गुणैर् मातृ-कृतेन च ।
१०] ततो दुःख-समाविष्टो यदुर् मातरम् अब्रवीत् ॥११॥ [११

---

१. च भ$_1$ भ$_2$-पुनरेव महात्मानमुवाचामिततैजसं । २. प्र-अत्यद्भु° । ३. भ$_1$ भ$_2$-वर्जं-°हं तु । ४. च भ$_1$ भ$_2$-सनातनं । ५. च भ$_1$ भ$_2$-वर्जं-निवृत्तं । ६. ल$_1$-नास्ति । ७. अ ल$_3$ ब प्र-त्वदीरितः । ८. अ रा$_1$ ल$_2$ ल$_3$ ब प्र-कृतवान्राजा । ९. च भ$_1$ भ$_2$-एवं ब्रुवति वीरे तु लक्ष्मणे । १०. अ रा$_1$ ल$_2$ ल$_3$ ब प्र-सुखं नैव । ११. ल$_1$ प्र-प्रपश्यते । १२. च भ$_1$ भ$_2$-नास्ति । १३. च भ$_1$ भ$_2$-रोषो । १४. च भ$_1$ भ$_2$-वर्जं-°नमुपस्थिता । १५. च भ$_1$ भ$_2$-सुतामुशनसो राजा ययातिः पुरुषर्षभः । अद्विषत् सततं पत्नीं देवयानीं सुमध्यमां ॥ १६. च भ$_1$ भ$_2$-देवगर्भोपमं पुत्रं प्रथितं स्वेन तेजसा ॥

भार्गवस्य कुले जातां[1] शुक्रस्याऽक्लिष्ट-कर्मणः[1] ।
११] सहसे तत्[2] कथं[2] दुःखम् अव-मानं च दुः-सहम् ॥१२॥ [१२
ताव्[3] उभौ[3] सहितौ[4] शीघ्रं[5] प्र-विशावो[5] हुताऽशनम् ।
१२] राजाऽपि रमतां सार्धं दैत्य-पुत्र्या यथा-सुखम् ॥१३॥ [१३
यदि वा मर्षणीयं[6] ते माम् अनु-ज्ञातुम् अर्हसि[6] ।
१३] क्षमस्व न क्षमिष्येऽहं मरिष्यामि[7] न सं-शयः[7] ॥१४॥ [१४
१४उ] देव-यानो भृशं क्रुद्धा सस्मार पितरं तदा[8] । [१५उ
चिन्तितं तच् च वि-ज्ञाय दुहितुः स महा-यशाः ।
१५] समीपे क्षिप्रम् एवाऽस्या महा-बुद्धिर्[9] उपाऽगमत्[9] ॥१५॥ [१६
दृष्ट्वा च तां दीन-मना[10] अ-प्रहृष्टाम् अ-चेतनाम् ।[10]
१६] पिता दुहितरं वाक्यं[11] किम् एतद् इति चाऽब्रवीत्[12] ॥१६॥ [१७
अ-सकृत् तं तु[13] पृच्छन्तं भार्गवं मुनि-सत्तमम्[14] ।
१७] देव-यानी तु[15] सं-क्रुद्धा[15] पितरं वाक्यम्[16] अब्रवीत्[16] ॥१७[17]॥ [१८
अहम् अग्निं विशे[18] तीक्ष्णम् अपो वा मुनि-सत्तम[18] ।
१८] भक्षयिष्ये विषं वाऽपि न तु शक्ष्यामि जीवितुम् ॥[19]१८॥ [१९
अनु-जानीहि मां तात अवमान-विमानिताम् ।[20]
१९] वृक्षं[21] हि समति-क्रम्य[21] वध्यन्ते वृक्ष-चारिणः ॥१९॥ [२०
अव-ज्ञाय हि राजर्षिः परि-भूय च भार्गवम्[22] ।
२०] त्वय्य् अव-ज्ञां प्र-युङ्क्ते स न यन् मां बहु मन्यते ॥२०[23]॥ [२१

---

१. च भ$_1$ भ$_2$–जाता देवस्याक्लि° । २. च भ$_1$ भ$_2$–ह्यतुलं । ३. च भ$_1$ भ$_2$–ते वयं । ४. अ ल$_2$ ल$_3$ ब प्र–सहितं । च भ$_1$ भ$_2$–सहिताः । ५. च भ$_1$ भ$_2$–मातः प्रविशामो । ६. च भ$_1$ भ$_2$–सहनीयं ते तदवज्ञाकृतं भयं । ७. च भ$_1$ भ$_2$–इत्युक्त्वा सोऽरुदद्भृशं । ८. भ$_1$ भ$_2$ प्र–ततः । ९. अ रा$_1$ ल$_2$ ल$_3$ ब–दुहितुः समुपा° । १०. अ ल$_2$ ल$_3$–°मनामपहृष्टामचे° । च भ$_1$ भ$_2$–दृष्ट्वाप्रकृतिरूपस्थां तामह° । ११. च भ$_2$–प्राज्ञः । १२. च भ$_1$ भ$_2$–सोऽब्र° । १३. च भ$_1$ भ$_2$–च । १४. च भ$_1$ भ$_2$–दीप्ततेजसं । १५. च भ$_1$ भ$_2$–सुसं° । १६. च भ$_1$ भ$_2$–प्रत्युवाच ह । १७. अतः परमधिकः पाठः—च भ$_1$ भ$_2$–बाष्पविक्लवया वाचा कृशा दैन्यं समागता । ब–नास्ति । १८. अ रा$_1$ ल$_1$ ल$_2$ल$_3$ ब प्र–°क्ष्णमथवा मु° । च भ$_1$ भ$_2$–विषं शस्त्रमापो वा द्विजस° । १९. च भ$_1$ भ$_2$–दुःखेनानेन संतप्ता भजिष्ये शातमस्तु ते । २०. च भ$_1$ भ$_2$–स त्वं मामनुजानीहि दुःखितां मन्दभागिनीं । २१. अ ल$_2$–समतिक्रम्य वर्तन्ते । च भ$_2$–वृत्तं हि समवज्ञाय । भ$_1$–वृक्षं हि समनुज्ञाय । २२. प्र–राघव । २३. च भ$_1$ भ$_2$–मय्यवज्ञाय परा क्षेपा परः परिभवस्तथा । यन्मां राजावजानीते न चापि बहु मन्यते ॥

तस्यास् तद् वचनं श्रुत्वा क्रोधेनाऽभिपरि-प्लुतः[1] ।
२१] व्या-हर्तुम् उप-चक्राम भार्गवो[2] नहुषाऽऽत्मजम् ।।२१।। [२२
यदि मे तनयां मोहाद् अव-जानासि मारिष ।[3]
२२] तस्मात् त्वं जरया[4] जीर्णः[5] शैथिल्यम् उप-यास्यसि ।।२२।। [२३
एवम् उक्त्वा दुहितरं[6] समा-श्वास्य च भार्गवः[6] ।
२३] मुनिर्[7] जगाम स तदा[7] भवनं स्वं महा-यशाः ।।२३।। [२४

इत्यार्षे रामायण उत्तर-काण्डे ययाति-शापो[8]
नामैकोनषष्टितमः सर्गः ॥ ५९ ॥

---

## [ वं–६१ ]= [ षष्टितमः सर्गः ] =[दा–५६]

N] ययातिर् अपि धर्माऽऽत्मा देवयानी-समुद्भवम् ।[9] [N
श्रुत्वा तम्[10] अभि-शापं[10] तु शुक्रात्[11] स[11] नहुषाऽऽत्मजः ।
१] जरां परमिकां प्राऽऽप्य यदुं[12] वचनम्[12] अब्रवीत् ॥ १ ॥ [१
यदो[13] त्वम् असि धर्म-ज्ञो[13] मद्-अर्थे[14] प्रति-गृह्यताम् ।
२] जरां(?रा) तु महतीं(?ती) पुत्र रंस्ये भोगैर् महा-बलः[15] ।।[16]२।। [२
न तावत् कृत-कृत्योऽस्मि[17] विषयेषु नरोत्तम[18] ।
३] अनु-भूय हि कामान् वै ततः[19] सम्प्राऽऽप्नुयां[19] जराम् ।।३।। [३
यदुस्[20] तु[20] वचनं श्रुत्वा प्रत्य्-उवाच नरर्षभम्[21] ।
४] पुत्रस् ते दयितः पूरुः प्रति-गृह्णातु ते[22] जराम् ॥ ४ ॥ [४
बहिष्-कृतोऽहम् अर्थेभ्यः सर्वेभ्यस् तव पार्थिव ।

---

१. च भ$_1$ भ$_2$–क्रोधेन स प° । २. च भ$_1$ भ$_2$–वर्जं–प्रहसन् । ३. च भ$_1$ भ$_2$–अवजानाति स्त्रीं यस्मान्नहुषस्यात्मजो नृपः । ४. अ ल$_2$–जरसा । ५. च भ$_1$ भ$_2$–वर्जं–भग्नः । ६. च भ$_1$ भ$_2$–समाश्वास्य तनयामृषिसत्तमः । ७. च भ$_1$ भ$_2$–पुनर् जगाम धर्मात्मा । ८. च भ$_1$ भ$_2$–देवयानीवाक्यं । ९. च भ$_2$–नास्ति । १०. च भ$_1$ भ$_2$–स मुनिशापं । ११. च भ$_1$ भ$_2$–वर्जं–श्रुतार्थो । १२. च भ$_1$ भ$_2$–वर्जं–स पुत्रमिदं । १३. च भ$_1$ भ$_3$–जरा त्वयेयं धर्मज्ञ । १४. अ च भ$_1$ भ$_2$–मदर्थं । १५. ल$_1$ प्र–°लैः । १६. च भ$_1$ भ$_2$–त्वयि संक्राम्य धर्मज्ञ भोगी रंस्ये यथासुखं । १७. च भ$_1$ भ$_2$–कृतकार्योऽस्मि । १८. च भ$_1$ भ$_2$–नरर्षभ । १९. च भ$_1$ भ$_2$–पुनः प्राप्स्याम्यहं । २०. च भ$_1$ भ$_2$–स पितुर् । २१. च–यदुस्तदा । भ$_1$ भ$_2$–यदुस्तथा । २२. च भ$_1$ भ$_2$–वै ॥

५] प्रति-गृह्णन्तु ते राजन्[1] यैः[2] सहाऽश्नासि भोजनम्[2] ॥ ५ ॥ [५
एवम् उक्तस् तु पुत्रेण यदुना पुरुषर्षभः । [N
६] प्रत्य्-उवाच महा-प्राज्ञः[3] क्रुद्धोऽत्य्-अर्थं तम्[3] आत्म-जम् ॥६॥ [१३उ
राक्षसस् त्वं मया जातः पुत्र-रूपो दुरा-सदः ।
७] प्रति-हंसि ममाऽऽज्ञां यत्[4] प्र-ज्ञया विफली-कृतः ॥ ७ ॥ [१४
पितरं[5] गुरु-भूतं[6] मां यस्मात् त्वम् अव-मन्यसे ।
८] राक्षसान् यातु-धानांस् त्वं जनयिष्यसि दारुणान् ॥ ८ ॥ [१५
न तु सोमकुलोत्पन्ने वंशे स्थास्यसि दुर्-मते ।
९] भविता खलु वंशो हि[7] दुर्वि-नीतश् चिरं तव ॥ ९ ॥ [१६
तस्य तद् भाषितं श्रुत्वा राजा पूरुम् अथाऽब्रवीत् ।
१०] इयं जरा महा-प्राज्ञ मद्-अर्थं[8] प्रति-गृह्यताम् ॥[9]१०॥ [६
नाहुषेणैवम् उक्तस् तु पूरुः प्राऽञ्जलिर् अब्रवीत् ।
११] धन्योऽस्म्य् अनु-गृहीतोऽस्मि शासनेऽस्मि स्थितस् तव ॥ ११ ॥ [७
पूरोर् वचनम् आ-ज्ञाय नाहुषः परमया[10] मुदा[10] ।
१२] सं-क्रामयामास जरां प्रति-पेदे च तत्-सुतः ॥[11]१२॥ [८
ततः स राजा तरुणो यज्ञान् बहु-विधान् यजन्[12] ।
१३] बहु-वर्ष-सहस्राणि पालयामास मेदिनीम् ॥[13]१३॥ [९
अथ दीर्घस्य कालस्य राजा पूरुम् अथाऽब्रवीत्[14] ।
१४] आ-नयस्व[15] जरां पुत्र न्यासं निर्-यातयस्व मे ॥१४॥ [१०
न्यास-भूता[16] मया[16] पुत्र त्वयि[17] सं-क्रामिता जरा ।
१५] तस्मात् प्रति-ग्रहीष्यामि ताम् अहं मा वृथा कृथाः ॥[18]१५॥ [११
प्रीतोऽस्मि ते महा-बाहो शासनस्य परि-ग्रहात् ।
१६] त्वां चाऽहम् अभि-षेक्ष्यामि प्रीत्या युक्तेन चेतसा ॥१६[19]॥ [१२

---

१. च भ$_1$ भ$_2$–जरां । २. अ–यैः सह भोजनं सदा । रा$_1$ ब–पौरजानपदैस्तदा । प्र ल$_3$–पौराः जानपदास्तदा । ३. च भ$_1$ भ$_2$–वर्जं–महात्मानं क्रुद्धस्तु यदुम् । ४. च भ$_1$ भ$_2$–यो । ५. भ$_1$–प्रकृतं । ६. अ ल$_2$–गुरुरूपं । ७. च भ$_1$ भ$_2$ ल$_1$ प्र–°पि । ८. रा$_1$ प्र–मदर्थं । ९. अ ल$_2$ ल$_3$ ब–नास्ति । १०. च भ$_1$ भ$_2$–वर्जं–परमाज्ञया । ११. च भ$_1$ भ$_2$–स युक्तोऽभूत्प्रहृष्टश्च संक्राम्य तु जरां ततः । १२. च भ$_1$ भ$_2$–बहून् । १३. च भ$_1$ भ$_2$–आजहार स धर्मात्मा पालयामास च प्रजाः । १४. च भ$_1$ भ$_2$–उवाच ह । १५. च भ$_1$ भ$_2$–°येतां । १६. च भ$_1$ भ$_2$–°भूततया । प्र–°ता जरा । १७. भ$_1$ भ$_2$–तव । १८. च भ$_1$ भ$_2$–पुनरिच्छाम्यहं त्वत्तः शीघ्रं मे प्रतिदीयतां । १९. च भ$_1$ भ$_2$–यस्माच्चेदं कृतं वाक्यं मम वै पितृगौरवात् । तस्मात्त्वं यशसा युक्तो राज्यं प्राप्स्यसि शाश्वतं ॥

एवम् उक्त्वा तु तं पूरुं[1] ययातिर् नहुषाऽऽत्मजः ।[2] [१३पू

N] अभि-षेकेण सं-योज्य धर्माऽरण्यं जगाम ह ॥[3]१७॥ [१७उ

N] ततः कालेन महता दिष्टाऽन्तम्[4] उप-लब्धवान्[5] ।

त्रि-विष्टपं[6] ब्रह्म-लोकं ययातिर् नाहुषो[7] ययौ ॥१८॥ [१८

१७] पूरुश् च कारयामास राज्यं धर्मेण राघव[8] ।[9]

प्रति-ष्ठाने पुर-वरे काशि-राज्ये[8] महा-यशाः ॥१९॥ [१९

१८] यदुश् चाऽजनयद्[9] राजा[8] यातु-धानान् सहस्र-शः ।

पुरे क्रौञ्च-वटे दुर्-गे[10] राज-वंशं च शाश्वतम्[10] ॥२०॥ [२०

१९] एष तूऽशनसा मुक्तः शापोत्सर्गस् तु नाहुषे ।[11]

धारितः क्षत्र-धर्मेण निमिना[12] तु न धारितः[12] ॥२१॥ [२१

एष ते सर्वम् आ-ख्यातं दर्शितं[13] सर्व-कर्मिणाम्[13] ।[14]

२०] अभि-वर्तामहे[15] सौम्य दोषो न स्याद् यथा नृ-पे[16] ॥२२॥ [२२

इत्यार्षे रामायण उत्तर-काण्डे पूरोरभि-षेको नाम

षष्टितमः सर्गः ॥६०॥

---

१. अ रा१ ल२ ल३ ब-पुत्रं । २. च भ१ भ२-तमेवमुक्त्वा राजर्षिः पूरुं सुप्रियमात्मनः । अतः परमधिकः पाठः—अ रा१ ल१ ल२ प्र-देवयानीसुतं क्रोधाद्राजा वाक्यमथाब्रवीत् । रक्षस्त्वं हि मया जातः क्षत्ररूपी दुरासदः ॥ प्रतिहंसि ममाज्ञां च प्रज्ञया विफलीकृतः । पितरं गुरुभूतं मां यस्मान्न बहुमन्यसे ॥ राक्षसान्यातुधानांश्च जनयिष्यसि दारुणान् । न तु सोमकुलोत्पन्ने वंशे स्थास्यसि दुर्मते ॥ वंशो हि भवता तुल्यो दुर्विनीतो भविष्यति । अ रा१ ल१ ल२ ल३ ब प्र-तमेवमुक्त्वा राजर्षिः पूरुं राज्यविवर्धनम् । ३. च भ१ भ२-संयोज्य चाभिषेकेण विवेशाश्रममात्मवान् । ४. च भ१ भ२-तस्मिन्पुण्यवने वसन् । ५. च भ१ भ२-पुण्यकर्मा नरेन्द्रर्षिर्ययातिस्तु दिवं । ६. ल१ प्र-पार्थिव । ७. च भ१ भ२-कारयामास धर्मेण राज्यं पूरुश्च धर्मवित् । ८. अ रा१ ल१ ल२ ल३ ब-°राजो । ९. च भ१ भ२-च जनयामास । १०. च भ१ भ२-राज्यं वंशं चैव चकार सः । ११. च भ१ भ२-ययातेरथ शापाग्निः सृष्टः काव्येन लक्ष्मण । १२. च भ१ भ२-वर्जं-निमिर्यो हि न चक्षमे । १३. च भ१ भ२-सर्वकार्यनिदर्शनं । १४. अतः परमधिकः पाठः—च भ१ भ२-ज्येष्ठकनिष्ठनिर्दृष्टं क्षमाबुद्धिसुखप्रदम् । १५. च भ१ भ२-वर्तितव्यं तथा । १६. च भ१ भ२-तयोः ॥

तयोः सं-वदतोर् एवं राम-लक्ष्मणयोस् तदा ।
१] वासन्तिकी[1] निशा याता[1] न शीता न च घर्म-दा ॥ १ ॥ [१
ततः प्र-भाते वि-मले कृत्वा पौर्वाह्णिकं क्रमम्[2] ।
२] अभि-चक्राम काकुत्स्थो दर्शने पौर-कर्मणाम्[3] ॥[3] २ ॥ [२
धर्माऽऽसन-गतो राजा रामो राजीव-लोचनः । [५९.प्र.१–१३
३] राज-धर्मान् अवेक्षन्(?द्) वै[5] ब्राह्मणैर् नैगमैः सह ॥ ३ ॥
पुरो-धसा वसिष्ठेन ऋषिणा कश्यपेन च[4] । [२
४] मन्त्रिभिर् व्यवहार-ज्ञैस् तथाऽन्यैर् धर्म-वाचकैः[6] ॥ ४ ॥
नीति-ज्ञैर् नीति-मद्भिश्[7] च राजभिः सा[7] समा-वृता । [३
५] सभा यथा महेन्द्रस्य वरुणस्य यमस्य च ।
शुशुभे राज-सिंहस्य रामस्याऽक्लिष्ट-कर्मणः ॥ ५ ॥ [४
६] अथ रामोऽब्रवीत् तत्र लक्ष्मणं शुभ-लक्षणम् ।
निर्-गच्छ त्वं महा-भाग[8] सुमित्राऽऽनन्द-वर्धन ।
७] कार्याऽर्थिनस् तु सौमित्रे व्यापारयितुम्[9] अर्हसि[9] ॥ ६ ॥ [५
रामस्य भाषितं श्रुत्वा लक्ष्मणः शीघ्र-विक्रमः ।
८] द्वार-देशम् उपाऽऽक्रम्य[10] कार्यिणश् चाऽऽह्वयत् स्वयम् ॥७॥[६
न कश्-चिद् अब्रवीत् तत्र मम कार्यम् इहाऽद्य वै ।
९] नाऽऽधयो व्या-धयश् चैव रामे राज्यं प्र-शासति ॥ ८ ॥ [७
पक्व-सस्या वसु-मती सर्वौषधि-समन्विता ।
१०] न बालो म्रियते देही[11] न युवा न च मध्यमः ॥ ९ ॥ [८
धर्मेण शासते सर्वं न च बाधा वि-धीयते ।
११] दृश्यते न च कार्याऽर्थी रामे राज्यं[12] प्र-शासति । [९
लक्ष्मणः प्राऽञ्जलिर् भूत्वा रामायैवं[13] न्य्-अवेदयत् ॥१०॥ [१०
१२] अथ रामः प्रसन्नाऽऽत्मा सौमित्रिम् इदम् अब्रवीत् ।

---

१. भ$_1$–वासन्ती सा निशा प्रायात् । २. प्र-क्रमात् । ३. अ रा$_1$ ल$_1$ ल$_3$ व–°कर्मिणां । ४. च भ$_1$ भ$_2$–नास्ति । ५. ल$_3$ प्र–वै । ६. च भ$_1$ भ$_2$–धर्मपाठकैः । ७. च–परमधीभिस्तथान्यैश्च । भ$_1$ भ$_2$–परमधीभी रा° । ८. च भ$_1$ भ$_2$–महाबाहो । ९. च भ$_1$ भ$_2$–व्याहर्तुं त्वमुपाक्रम । प्र–व्याहर्तुमुपचक्रमे । १०. च भ$_1$ भ$_2$–उपागम्य । ११. च भ$_1$ भ$_2$–तत्र । १२. रा$_1$–राज्ये । १३. अ च ल$_1$ ल$_2$ प्र–रामायैव ॥

भूय एव[1] तु गच्छ[2] त्वं कार्यिणं[2] प्र-विचारय ॥११॥ [११
१३] सम्यक् प्र-णीतया[3] नीत्या नाऽधर्मो विद्यते क-चित् ।
तस्माद् राज-भयात् सर्वे रक्षन्ति स्म परस्-परम् ॥१२॥ [१२
१४] बाणा भुवि[4] मया मुक्ता इह रक्षन्ति वै[5] प्र-जाः ।
तथाऽपि त्वं महा-बाहो प्रजा-रक्षण-तत्-परः ॥१३॥ [१३
१५] एवम् उक्तस् तु सौमित्रिर् निर्-जगाम नृपाऽऽलयात् ।
अथाऽपश्यद् द्वार-देशे[6] श्वानं पाद-द्वये[7] स्थितम् ॥१४॥ [१४
१६] तम् एव(?वं) वीक्ष्य(?क्ष)माणं[8] वै प्राऽऽक्रोशन्तं[9] मुहुर्-मुहुः ।
दृष्ट्वा तु[10] लक्ष्मणस् तं वै पप्रच्छाऽथ स वीर्य-वान् ॥१५॥ [१५
१७] किं ते कार्यं महा-भाग ब्रूहि नि-स्तब्धं[11] मा चिरम् ।
लक्ष्मणस्य वचः श्रुत्वा सारमेयोऽभ्य्-अभाषत[12] ॥१६॥ [१६
१८] सर्व-भूत-शरण्याय रामायाऽक्लिष्ट-कर्मणे ।
भयेष्व् अभय-दात्रे च तस्मै वक्तुं समुत्-सहे ॥१७॥ [१७
१९] एतच् छ्रुत्वा तु वचनं सारमेयस्य लक्ष्मणः ।
राघवाय तदा वक्तुं प्र-विवेश नृपाऽऽलयम् ॥१८॥ [१८
२०] नि-वेद्य रामस्य पुनर् निर्-जगाम नृपाऽऽलयात् ।
वक्तव्यं यदि ते किं-चित् तत् त्वं ब्रूहि नृ-पाय वै ॥१९॥ [१९
२१] स लक्ष्मण-वचः श्रुत्वा सारमेयोऽभ्य्-अभाषत ।
देवाऽऽगारे नृपाऽऽगारे द्विज-वेश्मसु वै तथा । [२०पू
२२] नाऽत्र[13] योग्योऽस्मि[13] सौमित्रे योनीनाम् अधमा त्व् इयम् ॥२०॥
प्र-वेष्टुं[14] नाऽत्र शक्ष्यामि[14] धर्मो विग्रह-वान् नृ-पः[15] । [२१
२३] सत्य-वादी रण-पटुः सर्व-सत्त्व-हिते रतः[16] ॥२१॥
षाड्गुण्यस्य पदं वेत्ता नीति-कर्ता च[17] राघवः । [२२

---

१. च-एवानुगच्छ । २. च भ$_1$ भ$_2$-वर्ज-कार्याणि । ३. च भ$_1$ भ$_2$ प्रणिहिता । ४. च भ$_1$ भ$_2$-इव । ५. च भ$_1$ भ$_2$-ये । ६. अ रा$_1$ ल$_2$ ल$_3$ ब प्रदू° । ७. च-°द्वयोस्थितं । ८. च भ$_1$ भ$_2$-वर्ज-°माणो । ९. च भ$_1$ भ$_2$ त्रिक्रो° । प्र-आक्रो° । १०. च भ$_1$ भ$_2$-स । रा$_1$ ल$_1$ ल$_3$ ब-°थ । ११. च भ भ$_2$ रा$_1$ प्र-विश्रब्धं । १२. च भ$_1$ भ$_2$-°ब्रवीदिदं । १३. च भ$_1$ भ$_2$-वर्ज-प्रवेश नास्ति । १४. च भ$_1$ भ$_2$-वर्ज-प्रवेशो नात्र वक्ष्यामि । १५. च भ$_1$ भ$_2$-हि सः ल$_1$-सर्वभूतहि° । १७. च भ$_1$ भ$_2$-स ॥

२४] धर्म-ज्ञः[1] सर्व-दर्शी च रामो रमयतां वरः ॥[2]२२॥ [२३
स सोमश् च स मृत्युश् च स यमो धन-दस् तथा ।
२५] वह्निः शत-क्रतुश्[3] चैव सूर्यो वरुण[4] एव च[4] ॥२३[5]॥[5][२४
तस्य त्वं ब्रूहि सौमित्रे प्रजा-पालस्य राघव ।[5]
२६] अनु-आज्ञप्तस् तु सौमित्रे प्र-वेष्टुं नोत्-सहे सभाम् ॥२४॥ [२५
आनृशंस्यान् महा-भागः प्र-विवेश महा-द्युतिः ।
२७] नृपाऽऽलयं प्र-विष्टस् तु लक्ष्मणो वाक्यम् अब्रवीत् ॥२५॥ [२६
श्रूयतां मम वि-ज्ञाप्यं कौसल्याऽऽनन्द-वर्धन ।
२८] यन् मयो(?मो)क्तं महा-बाहो तदाऽ(?द्-अ)भिनयजं(?योऽयं)वि-भो।
श्वा वै तिष्ठति ते द्वारि कार्याऽर्थी समुपाऽऽगतः[6] ॥२६॥ [२७
लक्ष्मणस्य वचः श्रुत्वा रामो वचनम् अब्रवीत् ।
२९] तं प्र-वेशय वै क्षिप्रं कार्याऽर्थी योऽत्र तिष्ठति ॥२७॥ [२८

इत्यार्षे रामायण उत्तर-काण्डे सारमेय-वाक्यं
नामैकषष्टितमः सर्गः ॥ ६१ ॥

---

## [ वं-६३ ]= [ द्विषष्टितमः सर्गः ] =[ दा-५६.प्र२ ]

दृष्ट्वा द्वारि स्थितं श्वानं रामो वचनम् अब्रवीत् ।
१] विवक्षया स्फुटं ब्रूहि सारमेय न ते भयम् ॥ १ ॥ [२
अथाऽपश्यत तत्र-स्थं रामं श्वा भिन्न-मस्तकः ।
२] तं[7] तु दृष्ट्वाऽथ[8] राजानं सारमेयोऽब्रवीद् वचः ॥ २ ॥ [३
राजैव कर्ता भूतानां राजैव च वि-नाशकः ।
३] राजा सुप्तेषु जागर्ति राजा पालयते[9] प्रजाः ॥ ३ ॥ [४
राजा नीत्यां सु-नीतायां धर्मं रक्षति रक्षिता ।
४] यदा न पालयेद् राजा क्षिप्रं नश्यन्ति[10] वै प्र-जाः ॥ ४[11]॥ [६

---

१. भ₂-सर्वज्ञः । २. अतः परमधिकः पाठः-च-ऐश्वर्यस्य समग्रस्य धर्मस्य यशसः श्रियः । वैराग्यस्याथ मोक्षस्य षण्णां भग इतीरणा ॥ प्र-नास्ति । ३. अ ल₂-शक्रः क्र॰ । ४. च भ₁ भ₂ ल₁-वै वरुणस्तथा । ५. प्र-नास्ति । ६. च भ₁ भ₂-समुपस्थितः । ७. च भ₁ भ₂-हि ते । ८. च भ₁ भ₂-तत्र दृष्ट्वा स । ९. च भ₁ भ₂-॰ति । १०. च भ₁ भ₂-नश्येत । ११. ल₃ ब-नास्ति ॥

राजा[1] कर्ता[1] च गोप्ता च सर्वस्य जगतः पिता ।[2]
५] राजा कालो युगश् चैव राजा सर्वम् इदं जगत् ॥ ५ ॥ [५
६पू] धारणाद्[3] धर्म इत्य् आहुर्[3] धर्मेण रञ्जयन् प्र-जाः ।[4] [७पू
७उ] तस्माद् धारण इत्य् उक्तः स धर्म इति निश्-चयः[5] ॥ ६ ॥ [८उ
एष राम परो धर्मो रक्षणात् प्रेत्य चेह च । [१०उ
८] न हि धर्माद् भवेत् किं-चिद् दुष्प्राऽऽपम् इति मे मतिः ॥[6] ७[7] ॥ [९उ
दानं दया सतां पूजा व्यव-हारेषु चाऽऽर्जवम् । [१०पू
९] एष राजन् परो धर्मः फल-वान् प्रेत्य राघव[8] ॥ ८[9] ॥ [९पू
त्वं प्र-माणं प्र-माणानां भासि राघव सु-व्रत ।
१०] विदितश् चैव ते धर्मः सद्भिर् आ-चरितश् च वै ॥ ९ ॥ [११
धर्माणां त्वं परं धाम गुणानां[10] सागरोपमः ।
११] अ-ज्ञानाच् च मया[11] राजन्[11] उक्तस् त्वं राज-सत्तम ।
प्र-सादयामि[12] शिरसा[12] न त्वं क्रोद्धुम् इहाऽर्हसि ॥१०॥ [१२
१२] शुनः स[13] वचनं श्रुत्वा रामो[14] वाक्यम् अथाऽब्रवीत्[14] ।
किं ते कार्यं करोम्य् अद्य ब्रूहि वि-स्रब्धं मा चिरम् ॥११[15]॥ [१३
१३] रामस्य वचनं श्रुत्वा सारमेयोऽब्रवीद् वचः[16] ।
धर्मेण राष्ट्रं विन्देत[17] धर्मेणैवाऽनु-पालयेत् ॥१२[18]॥ [१४
१४] धर्माच् छरण्य-तां याति राजा सर्व-भयाऽपहः ।
इदं वि-ज्ञाप्यं[19] सु-कृतं[19] श्रूयतां मम राघव ॥१३॥ [१५
१५] भिक्षुः सर्वाऽर्थकः[20] कश्-चिद्[21] ब्राह्मणाऽऽवसथेऽभवत्[21] ।
तेन दत्तः प्र-हारो मे निष्-कारणम् अन्-आगसः ॥१४॥ [१६
१६] एतच् छ्रुत्वा तु रामेण द्वा-स्थः सम्-प्रेषितस् तदा ।

---

१. अ–प्रजाकर्ता । २. प्र–नास्ति । ३. भ$_1$–°णाच्च विशां चैव । ४. च भ$_2$–नास्ति । अतः परमधिकः पाठः—भ$_1$–धारणे धर्म इत्याहुर्धर्मेण विधृताः प्रजाः । भ$_1$ भ$_2$ प्र–तस्माद्धारयते सर्वं[1] त्रैलोक्यं सचराचरं[1] । ५. ब–मे मतिः । ६. च भ$_1$ भ$_2$–नास्ति । ७. ब–नास्ति । ८. प्र–एव च । ९. च भ$_1$ भ$_2$–तु । १०. च भ$_1$ भ$_2$–गुणवान् । ११. अ रा$_1$ ल$_2$ ल$_3$ ब प्र–महाराज । १२. अ रा$_1$ ल$_1$ ल$_2$ ल$_3$ ब–मूर्ध्ना प्रसादयिष्यामि । १३. रा$_1$ ल$_2$ ब प्र–तद् । १४. ल$_1$ प्र–राघवो वाक्यमब्र° । १५. अ रा$_1$ ल$_2$ ल$_3$ ब–नास्ति । १६. प्र–इदं । १७. भ$_1$ भ$_2$–वर्जे–विदितं । १८. चे–नास्ति । १९. च भ$_1$ भ$_2$–तु विज्ञाप्य कृतं । ल$_1$ प्र–मे विज्ञाप्य कृतं । २०. च भ$_1$ भ$_2$–°र्थसिद्धस्तु । २१. च भ$_1$ भ$_2$–°थे वसन् ॥

---

१. भ$_1$–धर्मस्त्रैलोक्ये स परावरे ।

आ-नीतश् च द्वि-जस् तेन सर्वाऽर्थः[1] सर्व-कोविदः[2] ॥१५॥ [१७
१७] अथ द्विजर्षभस् तत्र रामं दृष्ट्वा महा-द्युतिः[2] ।
किं ते राजन्[3] मया कार्यं तद् ब्रूहि त्वं ममाऽनृ-अघ ॥१६॥ [१८
१८] एवम् उक्तस् तु वि-प्रेण रामो वचनम् अब्रवीत् ।
त्वया दत्तः प्र-हारोऽयं सारमेयस्य वै द्वि-ज ।
१९] किं ते ह्य् अप-कृतं विप्र[4] दण्डेनाऽप-हतस्[4] त्वया[5] ॥१७॥ [१९
क्रोधः प्राण-हरः शत्रुः क्रोधो मित्र-मुखो रिपुः ।
२०] क्रोधो ह्य् असिर् महांस् तीक्ष्णः सर्वं क्रोधोऽप-कर्षति ॥१८॥ [२०
तपते जपते वाऽपि[6] यच्[7] च दानं[7] प्र-यच्छति ।
२१] क्रोधेन सर्वं हरति[8] तस्मात् क्रोधं वि-वर्जयेत् ॥१९॥ [२१
इन्द्रियाणां प्र-दुष्टानां हयानाम् इव धावताम् ।
२२] कुर्वीत धृत्या सारथ्यं संहृत्येन्द्रिय-गोचराम्(?न्)[9] ॥२०॥ [२२
मनसा कर्मणा वाचा चक्षुषाऽपि[10] समा-चरन्[11] ।
२३] श्रेयो लोकस्य चरते[12] न स द्वेष्टि न लिप्यते ॥२१॥ [२३
न तत्[13] कुर्याद् असिस् तीक्ष्णः सर्पो[14] वाऽपि प्र-कोपितः ।
२४] अरिर्[15] वा[15] नित्य-सङ्क्रुद्धो[16] यथाऽऽत्मा[17] दुर्-अधिष्ठितः ॥२२॥ [२४
विनीत-विनयस्याऽपि प्र-कृतिर् न वि-धीयते ।
२५] प्र-कृतिं गूहमानस्य निश्-चये[18] प्र-कृतिर् ध्रुवा[19] ॥२३॥ [२५
एवम् उक्तः स[20] विप्रो वै रामेणाऽक्लिष्ट-कर्मणा ।
२६] द्वि-जः सर्वाऽर्थ-सिद्धस्[21] तु अब्रवीन्[21] नृप-सन्निधौ ॥२४॥ [२६
मया दत्तः प्र-हारोऽस्य[22] क्रोधेनाऽऽविष्ट-चेतसा[23] ।
२७] भिक्षाऽर्थम् अटमानेन[24] काले विगत-भैक्षु(?क्ष)के ॥२५॥ [२७

---

१. च भ$_{1}$ भ$_{2}$ रा$_{1}$ ल$_{1}$ ल$_{3}$ ब प्र-°र्थसिद्धिको° । २. च भ$_{2}$-°तिं । ३. च भ$_{1}$ भ$_{2}$-राम । ४. च भ$_{2}$-कर्मदंडे° । भ$_{1}$-ब्रूहि दंडे° । अ ल$_{2}$-विप्र दंडेनोप° । ५. च भ$_{1}$ भ$_{2}$-यतः । ६. अ ल$_{2}$-चापि । ७. अ रा$_{1}$ प्र-सर्वदानं । ल$_{1}$ ल$_{2}$ ल$_{3}$ ब-पर्वदानं । ८. च भ$_{1}$ भ$_{2}$-दहति । ९. अ रा$_{1}$ ल$_{1}$ ल$_{2}$ ल$_{3}$ ब प्र-°गौरवं । भ$_{1}$ भ$_{2}$-°गोचरं । १०. च भ$_{1}$ भ$_{2}$-°षा च । ११. च भ$_{1}$ भ$_{2}$-वर्जं-°चरेत् । १२. च भ$_{2}$ रा$_{1}$ ल$_{1}$ ल$_{3}$ ब-°तो । १३. भ$_{2}$-च । १४. रा$_{1}$ ल$_{2}$ ल$_{3}$ ब प्र-सर्वौ । ल$_{1}$-शर्वौ । १५. च भ$_{1}$ भ$_{2}$-वर्जं-अर्थिने । १६. च भ$_{1}$ भ$_{2}$-नातिसं° । १७. च भ$_{1}$ भ$_{2}$-यदात्मा । १८. च भ$_{2}$-°यः । भ$_{1}$-°यं । १९. च भ$_{1}$ भ$_{2}$-ध्रुवं । २०. भ$_{1}$ भ$_{2}$ प्र-वर्जं-तु । २१. प्र-°सिद्धिस्तु जगाद । २२. च भ$_{1}$ भ$_{2}$-वर्जं-°रो वै । २३. प्र-°ष्टतेजसा । २४. अ रा$_{1}$ ल$_{2}$ ल$_{3}$ ब-°मानो वै ॥

रथ्या-स्थितस त्व्[१] अयं[१] वै श्वा गच्छ गच्छेति भाषितः ।
२८] अथ श्वानम्[२] अ-गच्छन्तं[२] रथ्याऽन्ते वि-षमे स्थितम् ॥२६॥ [२८
क्रोधेन महताऽऽविष्टस्[३] ततो दत्तोऽस्य राघव ।
२९] प्र-हारो राजराजेन्द्र शाधि माम् अप-राधिनम् ।
त्वया शास्तस्य[४] राजेन्द्र नाऽस्ति मे नरकाद्[५] भयम् ॥[६]२७॥ [२९
३०] अथ रामेण सं-पृष्टाः[७] सर्व एव सभा-सदः[८] ।
किं कार्यम् अस्य च ब्रूत को वा दण्डो नि-पात्यताम् ।[६]
३१] सम्यक् प्रणि-हिते दण्डे प्र-जा भवति रक्षिता ॥[९]२८॥ [३०
भृग्व्-आङ्गिरस-कुत्साऽऽद्या[१०] वसिष्ठाऽऽदि-सकश्यपाः[११] ।[१२]
३२] धर्म-पाठक-मुख्याश्[१३] च सचिवा नैगमास् तथा ।[१२]
एते चाऽन्ये च बहवः पण्डितास् तत्र सं-गताः ॥२९॥ [३१
३३] अ-वध्यो ब्राह्मणोऽदण्ड्य एवं शास्त्र-विदो विदुः ।
ब्रुवते[१४] राघवं सर्वे राज-धर्मेष्व् अधि-ष्ठिताः ॥ ३०[१५]॥ [३२
३४] अथ ते मुनयः सर्वे रामम् एवाऽब्रुवंस् तदा । [३३
राजा शास्ता[१६] हि[१७] सर्वस्य[१७] त्वं वि-शेषेण राघव ।
३५] त्रैलोक्यस्य भवेच् छास्ता देवो विष्णुः सनातनः ॥३१॥ [३४
एवम् उक्ते[१८] तु तैः सर्वैः श्वा वै वचनम् अब्रवीत् । [३५
३६] यदि तुष्टोऽसि मे[१९] राम[२०] यदि देयो वरो मम ॥३२॥
प्रति-ज्ञातं त्वया वीर किं करोमीऽति मे[२१] श्रुतम् । [३६
३७] प्र-यच्छ ब्राह्मणस्याऽस्य कौलपत्य नराऽधिप ।
कालिञ्जरे महा-राज कौलपत्यं प्र-दीयताम्[२२] ॥३३॥ [३७
३८] एतच् छ्रुत्वा तु रामेण कौलपत्येऽभि-षेचितः ।
प्र-ययौ ब्राह्मणो हृष्टो गज-स्कन्धेन सोऽर्चितः ॥३४॥ [३८
३९] अथ ते राम-सचिवाः स्मयमाना[२३] वचोऽब्रुवन् ।

---

१. अ ल$_{२}$–स्वयं । २. च भ$_{१}$ भ$_{२}$–स्वैरेण ग° । ३. अ ल$_{२}$–वर्जं–क्षुधया-वि° । ४. च भ$_{१}$ भ$_{२}$ रा$_{१}$ ल$_{१}$ ब प्र–शासति । ५. च भ$_{२}$ रा$_{१}$ ल$_{१}$ प्र–मारणाद् । ६. अ ल$_{२}$–नास्ति । ७. रा$_{१}$ ब प्र–ते पृष्टा. । ८. ल$_{३}$ ब प्र–महर्षयः । ९. रा$_{१}$–नास्ति । १०. अ–वर्जं–°अंगि° । ११. च भ$_{१}$ भ$_{२}$–°ष्ठात्रिस° । १२. रा$_{१}$–नास्ति । १३. भ$_{१}$–°पालक° । १४. च–ब्रुवन्तु । भ$_{१}$–ऊचुस्ते । १५. भ$_{२}$–नास्ति । १६. अ रा$_{१}$ ल$_{१}$ ल$_{२}$ ल$_{३}$–शास्ति हि । प्र–प्रशास्ति । १७. प्र–सर्वं हि । १८. ल$_{१}$–वर्जं–उक्तास् । १९. अ रा$_{१}$ ल$_{२}$ ल$_{३}$ ब–वै । २०. च भ$_{१}$ भ$_{२}$–देव । २१. अ च रा$_{१}$ ल$_{२}$ ब–वै । भ$_{१}$ भ$_{२}$–नः । ल$_{१}$–च । २२. च भ$_{१}$ भ$_{२}$–वर्जं–°यते । २३. भ$_{१}$–स्वय° ॥

वरोऽयं दत्त एतस्य नाऽयं शापो महा-द्युते[1] ॥३५॥ [३९
४०] एवम् उक्तस् तु सचिवै रामो वचनम् अब्रवीत् ।
न यूयं गति-तत्त्वज्ञाः श्वा वै जानाति कारणम् ॥३६॥ [४०
४१] अथ पृष्टस् तु रामेण सारमेयोऽब्रवीद् इदम्[2] ।
अहं कुल-पतिस् तत्र ह्य्[3] आसं[3] शिष्टाऽन्न-भोजनः[4] ॥३७॥ [४१
४२] देव-द्विजाति-पूजायां[5] दासी-दासेषु राघव ।
संवि-भागी शुभ-रतिर्[6] देव-द्रव्यस्य रक्षिता ॥३८॥ [४२
४३] वि-नीतः शील-सम्पन्नः सर्व-सत्त्व-हिते[7] रतः ।
सोऽहं प्राप्त इमां घोराम् अव-स्थाम् अधमां गतिम् ॥[8]३९॥ [४३
४४] एष क्रोधाऽन्वितो विप्रस् त्यक्त-धर्मोऽहिते[9] रतः ।[8]
क्रूरो नृ-शंसः परुषोऽविद्वान् मानी न धार्मिकः ॥४०॥ [४४
४५] कुलानि पातयत्य्[10] एव[10] सप्त सप्त च राघव ।
तस्मात् सर्वास्व् अव-स्थासु कौलपत्यं न कारयेत् ॥४१॥ [४५
४६] य[11] इच्छेन्[12] नरकं नेतुं[13] स-पुत्र-पशु-बान्धवः[14] ।
देवेष्व् अधि-कृतः स स्याद् गोष्ठ-गो-ब्राह्मणेषु च ॥[15]४२[16]॥ [४६
४७] ब्रह्म-स्वं देव-द्रव्यं च स्त्रीणां बाल-धनं च यत् ।[17]
दत्तं हरति यो राजन्[18] इष्टैः स ह वि-नश्यति ॥४३॥ [४७
४८] ब्राह्मण-द्रव्यम् आ-दत्ते देवानां चैव राघव ।
४९पू] सद्यः पतति वै घोरे नरके वीचि-संज्ञिते[19] ॥४४॥ [४८
N] मनसाऽपि हि देव-स्वं ब्रह्म-स्वं वा हिनस्ति यः ।
४९उ] निर्-अयान् निर्-अयं चैव पतते स नराऽधमः[20] ॥४५॥ [४९
एतच् छ्रुत्वा तु[21] रामो[21] वै विस्मयोत्फुल्ल-लोचनः ।
५०] श्वाऽप्य्[22] अगच्छन्[22] महा-तेजा यत एवाऽऽगतस् ततः ॥४६॥ [५०

---

१. च भ$_2$–महामते । भ$_1$–महामुने । २. भ$_1$–वचः । ३. अ रा$_1$ ल$_1$ ल$_2$ ल$_3$ ब प्र–आसं । ४. च भ$_2$–मिष्टा° । ५. च भ$_1$ भ$_2$–वर्जं–°तिभृत्यांश्च । ६. भ$_1$ भ$_2$–वर्जं–शुभगतिर् । ७. अ भ$_2$–सर्वतत्त्व° । ८. ल$_3$ ब–नास्ति । ९. च भ$_1$ भ$_2$–°र्माऽहिते । १०. च भ$_1$ भ$_2$–वर्जं–पातयामास । ११. च भ$_1$–यम् । १२. अ ल$_2$–ह्यथं । १३. च भ$_1$–वर्जं–गन्तुं । १४. च भ$_1$–°न्धवं । १५. च भ$_1$–तं देवेषु नियुंजीत गोषु च ब्रा° । १६. भ$_2$–नास्ति । १७. भ$_2$–नास्ति । १८. च भ$_1$ भ$_2$–मोहाद् । १९. भ$_1$–°ज्ञिके । २०. च भ$_1$ भ$_2$–वर्जं–°धिप । २१. च भ$_1$ भ$_2$–राघवः । २२. च भ$_1$ भ$_2$–श्वापि गत्वा ॥

मनस्वी पूर्व-जात्यां[1] च साम्प्रतं जाति-दूषितः[1] ।
५१] वाराणस्यां महा-भागः[2] प्रायं चोपाऽविशत् तदा ॥४७॥ [५१

इत्यार्षे रामायण उत्तर-काण्डे सारमेय-ब्राह्मण-संवादो[3] नाम
द्विषष्टितमः सर्गः ॥ ६२ ॥

---

## [ वं-६४ ]= [ त्रिषष्टितमः सर्गः ] =[दा-५६,प्र·३]

अथ तस्मिन् वनोद्देशे रम्ये पादप-शोभिते ।
१] नदी-कीर्णे[4] गिरि-वरे कोकिला-शत-कूजिते[5] ॥ १ ॥ [१
N] नानापक्षिवरोद्घुष्टे[6] नाना-मृग-समाकुले ।[7] [N
सिंह-व्याघ्र-समाकीर्णे नाना-द्विप-शताऽऽवृते[8] ।
२] गृध्रोलूकौ प्र-वसतो बहून्[9] वर्ष-गणान्[9] अपि ॥ २ ॥ [२
अथोलूकस्य भवनं गृध्रः पाप-विनिश्चयः ।
३] ममेदम्[10] इति कृत्वाऽसौ कलहं तेन चाऽकरोत्[11] ॥ ३ ॥ [३
राजा सर्वस्य[12] लोकस्य[12] रामो राजीव-लोचनः ।
४] तं प्र-पद्यावहे शीघ्रं कस्यैतद्[13] भवनं[14] महत् ॥[15]४ ॥ [४
रामं प्र-पद्य तौ शीघ्रं[13] कलि-व्याकुल-चेतसौ ।
६] तौ परस्पर-विद्वेषात् स्पृशतश् चरणौ तदा ॥ ५ ॥ [६
अथ गृद्ध्रो नरेन्द्रं तु[16] दृष्ट्वा वचनम् अब्रवीत् ।
७] सुराणाम् अ-सुराणां त्वं[17] प्र-माणं च मतो मम[17] ॥ ६ ॥ [७
बृहस्पतेश्[18] च शुक्राच् च त्वं वि-शिष्टो[18] महा-द्युते ।
८] पराऽवर-ज्ञो[19] भूतानां[19] कान्त्या[20] चन्द्र इवाऽपरः ॥ ७ ॥ [८

---

१. भ$_1$–जातिमात्रश्च जातिमात्रोपतोषितः । अ ल$_2$–°जात्यां वै सां° । २. च भ$_1$ भ$_2$–महातेजाः । ३. च भ$_2$–वरप्रदानो । ४. च भ$_2$–वर्जं–नदाकीर्णे । ५. च–वर्जं–°तमण्डिते । ६. भ$_1$ भ$_2$–°क्षिरवोद्धुष्टे । ७. च–नास्ति । ८. च–°द्विजसमाहिते । भ$_1$–°द्विजसमाकुले । ९. भ$_1$ भ$_2$–वर्जं–बहुव° । १०. च–ममैतद् । ११. च प्र–वाक° । १२. भ$_1$–वर्जं–स सर्वंलो° । १३. अ रा$_1$ ल$_2$ ल$_3$ ब प्र–नास्ति । १४. भ$_2$ ल$_1$–भवेत् । १५. अतः परमधिकः पाठः–च भ$_1$ भ$_2$ ल$_1$–गृध्रोलूकौ तु पश्येतां जातकोपौ ह्यमर्षणौ । १६. भ$_1$–तं । १७. च–त्वं प्रधानोसि मतो मम । भ$_1$–हि त्वं प्रधानतमो मतः । ल$_1$–च त्वं प्रमाणं म° । १८. अ रा$_1$ ल$_3$ ब प्र–°तिश्च शुक्रश्च त्वं वसिष्ठो । १९. च–परापरज्ञो लोकानां । २०. अ ल$_2$–अत आरभ्य ९-मश्लोकस्य ३-यपादं यावन्नास्ति ॥

दुर्-निरीक्ष्यो यथा सूर्यो हिम-वांशु[1] चैव[1] गौरवे ।
९] सागरश्[2] चाऽसि[2] गाम्भीर्ये लोक-पालो[3] यमो[3] ह्य् असि ॥८॥ [९
क्षान्त्या धरण्या[4] तुल्योऽसि शीघ्र-त्वे ह्य् अनिलोपमः[5] ।
१०] गुरुस्[6] त्वं सत्त्व-सम्पन्नः[6] कीर्ति-युक्तश्[7] च[7] राघव ॥ ९ ॥ [१०
अमर्षी दुर्-जयो जेता सर्वाऽस्त्र-विधि-पार-गः ।
११] शृणु त्वं मम वै राम वि-ज्ञाप्यं नर-पुङ्गव ॥१०॥ [११
ममाऽऽलयं पूर्व-कृतं बाहु-वीर्येण राघव ।
१२] उलूको हरते राजन्न्[8] अत्र[8] त्वं त्रातुम् अर्हसि ॥११॥ [१२
एवम् उक्ते तु गृध्रेण उलूको वाक्यम् अब्रवीत् । [१३
१३] सोमाच् छत-क्रतोः सूर्याद् धन-दाद् वा[9] यमात्[9] तथा ॥१२॥
जायते वै नृ-पो राम किं-चिद् भवति मानुषः ।
१४] त्वं[10] तु सर्व-मयो देवो[10] नारायण इवाऽपरः ॥१३॥ [१४
या च ते सौम्य-ता राजन् सम्यक् प्रणि-हिता वि-भो ।
१५] सम्यक् च करुणाऽऽविष्टस् तेन सोमाऽङ्ग-जो भवान् ॥[11]१४॥ [१५
कोशे दण्डे प्रजा-नाथ दाने पाप-भयाऽपहः ।
१६] दाता भोक्ता[12] प्र-हर्ता च[12] तेनेन्द्र[13] इव नो भवान् ॥१५[14]॥ [१६
अ-धृष्यः[15] सर्व-भूतेषु तेजसा[16] चाऽनलोपमः[16] ।
१७] अभीक्ष्णं तपसे पापांस् तेन भास्कर-सन्निभः[17] ॥१६॥ [१७
साक्षाद् वित्तेश-तुल्योऽसि ह्य् अथवा धनदाऽधिकः ।
१८] वित्ते[18] यत्ता स-पद्मा[18] श्रीर् नित्यं ते राज-सत्तम ॥१७॥ [१८
धन-दस्य च[19] कोपेन धन-दस् तेन[19] नो भवान् ।
१९] समः सर्वेषु भूतेषु[16] स्थावरेषु चरेषु च ॥१८॥ [१९

---

१. च भ$_{2}$ रा$_{1}$ प्र-°वानिव । २. भ$_{1}$ ल$_{1}$ ल$_{3}$ ब-समुद्रश्चापि । ३. भ$_{1}$ भ$_{2}$ ल$_{1}$ ल$_{3}$ ब-°लसमो । ४. भ$_{1}$-धरित्र्या । ५. भ$_{1}$ ब-°लो यथा । ६. भ$_{2}$ ल$_{1}$ ल$_{3}$-°सर्वभूतानां । ७. भ$_{1}$-कीर्त्या यु° । भ भ$_{2}$ ल$_{2}$-°युक्तोऽसि । ८. भ$_{1}$-राजस्तत्र । ९. च-वरुणात् । १०. भ$_{1}$-सर्वदेवमयस्त्वं तु । ११. भ$_{1}$-स सम्यक् चरसि त्वं वै तेन सोमसमो भवान् । १२. च-हर्तासि गोप्तासि । भ$_{1}$-प्रहर्ता गोप्तासि । १३. भ$_{1}$-माहेन्द्र । १४. अतः परमधिकः पाठः—भ$_{1}$-साक्षाद्वित्तेशतुल्योपि ह्यथवा धनदाधिपः । वित्तैर्यस्मात्सपद्मा श्रीर्नित्यं ते राजसत्तम । रा$_{1}$ ल$_{3}$ ब प्र-नास्ति । १५. च भ$_{1}$ भ$_{2}$-वर्जे-अदृश्यः । १६. अ-अत आरभ्य १८-शश्लोकस्य ३-यपादं यावन्नास्ति । भ$_{1}$-स्थावरेषु चरेषु च । १७. भ$_{2}$ ल$_{1}$ ल$_{3}$-त्वं राम भास्करः । १८. टि० 'वित्ताऽऽयत्ता सर्वा' इति शोधः । १९. भ$_{2}$ ल$_{3}$ प्र-तु कोशेन धनदा तात ॥

शत्रौ मित्रे च ते दृष्टिः सम-तां याति राघव ।
२०] धर्मेण शासनं दिव्यं व्यवहार-विधि-क्रमात्[1] ॥१९॥ [२०
यस्य रुष्यसि वै राम मृत्युस् तस्याऽभि-धावति[2] ।
२१] गीयसे तेन वै राजन्[3] यम[4] इत्य् उरु-विक्रमः[4] ॥२०॥ [२१
यश् चैष[5] मानुषो भावो[6] भवतो[6] नृप-सत्तम ।
२२] आनृशंस्य-परो राजा[7] सर्वेषु[8] कृपयाऽन्व्-इतः ॥२१॥ [२२
दुर्-बलस्य त्व् अ-नाथस्य राजा भवति वै बलम् ।
२३] अ-चक्षुषो[6] भवेच् चक्षुर् अ-गतेश् च[9] गतिर् भवेत् ॥२२॥ [२३
अस्माकम् अपि नाथस् त्वं श्रूयतां मम धार्मिक ।
२४] ममाऽऽलय-प्रविष्टोऽयं[10] गृध्रो मां[11] बाधते नृ-प[12] ॥२३॥
त्वं हि देव-मनुष्येषु शास्ता हि[13] नर-पुङ्गव । [२४
२५] एतच् छ्रुत्वा तु वै राजा सचिवान् आऽह्वयत् स्वयम् ॥२४॥ [२५
धृष्टिर्[14] जयन्तो वि-जयः सिद्धाऽर्थो[15] राष्ट्र-वर्धनः ।
२६] अ-शोको[16] धर्म-पालश् च[17] सु-मन्तश्[18] च महा-बलः ॥२५॥ [२६
एते रामस्य सचिवा राज्ञो दश-रथस्य च[19] ।
२७] नीति-युक्ता महाऽऽत्मानः सर्व-शास्त्र-विशारदाः ।[20]
ह्री-मन्तश् च कुलीनाश् च नये मन्त्रे च कोविदाः ॥२६॥ [२७
२८] तान् धी-मतः स धर्माऽऽत्मा पुष्पकाद् अव-रुह्य च ।[20]
गृध्रोलूक-विवाद तं पृच्छति स्म रघूऽत्तमः[21] ॥२७॥ [२८
२९] कति वर्षाणि वै गृध्र त्वयेदं नि-लयं कृतम् ।
एतन्[22] मे कारण ब्रूहि यदि जानासि तत्त्व-तः[23] ॥२८॥ [२९
३०] एतच् छ्रुत्वा तु[24] वै[24] गृध्रो बभाषे[25] राघवं स[26] तम्[26] । [३०

---

१. च भ$_1$-°रे वि° । भ$_1$ रा$_1$ ल$_3$-°धिं क्र° । २. च-तस्य हि धा° ३. च-राम । ४. अ ल$_2$-अथ उत्तरवि° । च-यम इत्यतिवि° । ५. अ च रा$_1$ ल$_2$-चैव । ६. भ$_1$ भ$_2$ रा$_1$ ल$_3$ ब प्र-°वो भवते । ल$_1$-स्वपरो भावो । ७. च भ$_1$-राजन् सत्त्वेषु । ८. च भ$_1$-वर्जं-°षां । ९. च-त्वं १०. च भ$_1$-°हस्तु । ११. अ च ल$_2$-°यं । १२. च-पुनः । १३. च भ$_1$-वै १४. भ$_2$ ल$_1$ ल$_3$ रा$_1$ ब-सृष्टिर् । १५. च भ$_1$-वर्जं-सुराष्ट्र । १६. च भ$_1$-वर्जं-अकोपो । १७. भ$_1$-तु । १८. भ$_2$-सुमंत्रश् । भ$_2$-सुमन्तुश् । १९. च-तु । २० अ-नास्ति । २१. भ$_2$-रघूद्वहः । २२. भ$_1$-इदं । २३. भ$_1$-गृध्र वै । २४. प्र-ततो । २५. च-भाषते । २६. भ$_1$-वचः । भ$_2$ रा$_1$ ल$_1$ ब प्र-स्म तं ॥

इयं वसु-मती राम मनुष्यैः परि-तो[१] यदा[१] ।
३१] उत्थितैर् आ-वृता[१] सर्वा[२] तदा-प्रभृति मे गृहम् ॥२९॥ [३१
उलूकस् त्व् अब्रवीद् रामं पाद-पैर्[३] उप-शोभिता[३] ।
३२] यदेयं पृथिवी राजंस् तदा-प्रभृति मे[४] गृहम् । [३२
एतच् छ्रुत्वा तु वै[५] रामः सभा-सद उवाच ह[५] ॥३०॥ [३३
न सा सभा यत्र न सन्ति वृद्धा
वृद्धा न ते ये न वदन्ति धर्मम् ।
धर्मः[६] स नो[६] यत्र न[७] सत्यम् अस्ति[७]
३३] न[८] तत् सत्यं यच् छलेनाऽनु-विद्धम्[८] ॥३१॥ [३४
ये तु सभ्याः सभां गत्वा तूष्णीं ध्यायन्त आसते ।[९] [३५पू
३४] सहस्रं वारुणान् पाशान् वि-मुञ्चन्ते[१०] त आत्मनि[१०] ॥३२॥ [३६उ
तेषां संवत्सरे पूर्णे पाश एकः प्र-मुच्यते[११] ।
३५] तस्मात् सत्यं[१२] प्र-वक्तव्यं[१२] जानता सत्यम् अञ्जसा ॥३३॥ [३७
एतच्[१३] छ्रुत्वा तु सचिवा रामम् एवाऽब्रुवंस् तदा ।
३६] उलूकः शोभते[१४] राजन् न तु गृध्रो महा-मते[१५] ॥३४॥ [३८
त्वं प्र-माणं महा-राज राजा हि परमा गतिः ।
३७] राज-मूलाः प्र-जाः सर्वा राजा धर्मः सनातनः ॥३५॥ [३९
शास्ता राजा[१६] नृणां[१६] येषां न ते गच्छन्ति दुर्-गतिम् ।
३८] वैवस्वतेन मुक्तास् ते[१७] भवन्ति पुरुषोत्तम[१८] ॥३६॥ [४०
सचिवानां वचः श्रुत्वा रामो वचनम् अब्रवीत् ।
३९] श्रूयताम् अभि-धास्यामि पुराणे यद् उदा-हृतम् ॥३७॥ [४१

---

१. अ भ$_2$ रा$_1$ ल$_1$ ल$_2$ ल$_3$ ब–आवृता यदा । भ$_1$–रूढबाहुभिः । २. च भ$_1$ प्र–वर्जं–शोभिता सर्वैस् । ३. अ रा$_1$ ल$_1$ ल$_2$ ल$_3$ ब–न देशैरुपशो° । शैलैश्च शो° । ४. अ च भ$_2$ रा$_1$ ल$_2$–वै । ५. भ$_1$–रामो वै तानुवाच सभासदः । ६. च–वर्जं–नासौ धर्मो । ७. भ$_1$–सत्यं न चास्ति । ८. ब–सत्यं न तद्य-च्छलमभ्युपैति । ९. अतः परमधिकः पाठः—च–वर्जं–यथाप्राप्तं न ब्रुवते सर्वे तेऽनृतवादिनः । भ$_1$ ल$_1$–जानन्नविब्रुवन्प्रश्नान्कामात्क्रोधाद्भयात्तथा । १०. अ भ$_2$ प्र–°न्ते तु आ° । च–°न्तीह चात्मनि । ११. भ$_1$–विमु° । १२. च–सत्येन व° । १३. भ$_1$–एवं । १४. भ$_1$–शुध्यते । १५. अ भ$_2$ रा$_1$ ल$_2$ ल$_3$ ब–महीपते । ल$_1$–महीतले । १६. च–नृणां नृपो । १७. भ$_1$–च । १८. भ$_1$–°त्तमा ॥

द्यौः स-चन्द्राऽर्क-नक्षत्रा स-पर्वत-महावना[1] ।
४०] सलिलाऽर्णव-सम्भूतं[2] त्रैलोक्यं स-चराऽचरम् ॥३८॥
एक[3] एव यदा ह्य् आसीद् युक्तो[4] मेरुर् इवाऽपरः[5] । [४२
४१] पुनर् भूः सह[6] लक्ष्म्या च[6] विष्णोर् जठरम् आ-स्थिता[7]॥३९॥
तां नि-गृह्य महा-तेजाः प्र-विष्टः सलिलाऽर्णवम् ।
४२] सुष्वाप[8] देवः सर्वाऽऽत्मा[8] बहून् वर्ष-गणान् अपि ॥४०॥ [४३
विष्णौ सुप्ते तदा ब्रह्मा विवेश जठरं ततः[9] । [४४
४३] रुद्ध-स्रोतं तु तं ज्ञात्वा महा-योगी समाऽविशत् ॥४१॥
नाभ्यां विष्णोः समुत्-पन्नः पद्मो हेम-विभूषितः । [४५
४४] स तु निर्-गत्य[10] वै ब्रह्मा योगी भूत्वा महा-प्रभुः[11] ॥४२॥
सिसृक्षुः पृथिवीं वायुं पर्वतांश् च मही-रुहान् । [४६
४५] तद्-अन्तराः प्र-जाः सर्वा मानुष्याः[12] स-सरीसृपाः[12] ।
जरायु-जाऽण्ड-जाः सर्वाः[13] ससर्ज स[13] महा-तपाः ॥४३[14]॥[४७
४६] विष्णोः[15] कर्णमलोत्पन्नः[15] कैटभो मधुना सह ।
दानवौ तौ महा-वीर्यौ[16] घोर-रूपौ दुरा-सदौ ॥४४॥ [४८
४७] दृष्ट्वा प्रजा-पतिं[17] तौ तु क्रोधाऽऽविष्टौ बभूवतुः ।
वेगेन महता तौ[18] तु स्वयं-भुवम् अधावताम् ॥[19]४५॥[४९
४८] दृष्ट्वा स्वयं-भुवा मुक्तो रावो वै वि-कृतस् तदा ।
तेन शब्देन सम्प्राऽऽप्तो हरो वै हरिणा सह ॥४६॥ [५०
४९] अर्धचन्द्र-प्रहारेण[20] सूदितौ मधु-कैटभौ ।
मेदसा प्लाविता सर्वा पृथिवी च[21] समन्त-तः ॥४७[22]॥ [५१
५०] भूयो वि-शोधिता तेन हरिणा लोक-धारिणा ।
शुद्धां[23] वै[23] मेदिनीं तां तु वृक्षैः सर्वाम् अपूरयत् ।
५१] ओषध्यः सर्व-सस्यानि निष्-पद्यन्ते पृथग्-विधाः ॥४८॥ [५२

---

१. भ$_1$–°हार्णवा । २. भ$_1$–°सम्पूर्णा । ३ च भ$_1$–वर्जं–एकं । ४. च भ$_1$–वर्जं–युक्तं । ५. च–वर्जं–इवाम्बरं । ६. भ$_1$–सहितो लक्ष्म्या । ७. च भ$_1$–आत्मनः । ८. च–तस्मिन्सुप्ते महाभागे । ९. च भ$_1$–वर्जं–प्रति । १०. च भ$_1$–निर्गम्य । ११. च भ$_1$–वर्जं–समन्वितः । १२. च–वर्जं–मानुषांश्च सरीसृपान् । १३. भ$_1$–सर्वे ऋषयश्च । १४. रा$_1$–नास्ति । १५. च भ$_1$–तस्य गात्रम° । १६. अ ल$_2$–°वीरौ । १७. रा$_1$–वर्जं–°तिर् । १८. भ$_1$–तं । १९. अतः परमधिकः पाठः—च भ$_1$–वर्जं–धावमानौ समालोक्य रावो मुक्तः स्वयम्भुवा । २०. भ$_1$–अथ चक्रप्र° । २१. भ$_1$–वै । २२. च–नास्ति । २३. भ$_1$–विशुद्धां ॥

मेदो-गन्धात् तु धरणी मेदिनीऽत्य् अभि-संज्ञिता ।
५२] तस्मान् न गृध्रस्य गृहम् उलूकस्येति[1] मे मतिः ॥४९॥ [५३
तस्माद् गृध्रस् तु दण्ड्योऽयं[2] पाप-कर्मा पराऽऽलये[2] ।
५३] पीडां करोति पापाऽऽत्मा दुर्-विनीतो महान् अयम् ॥[3]५०॥ [५४
अथाऽशरीरिणी वाणी अन्तरिक्षाद्[4] अभाषत[4] ।
५४] मा वधी राम गृध्रं त्वं पूर्व-दग्धं तपो-बलात् ॥५१॥ [५५
काल-गौतम-दग्धोऽयं प्रजा-नाथो नरेश्वरः[5] ।
५५] ब्रह्म-दत्तेति नामैष शूरः सत्य-व्रतः शुचिः ॥५२॥ [५६
गृहम्[6] आ-गत्य विप्रोऽस्य[6] भोजनं प्रत्य्-अमार्गत ।
५६] साऽग्रं वर्ष-शतं चैव भुक्तवान् नृप-सत्तम[7] ॥५३॥ [५७
ब्रह्म-दत्तस् तु वै तस्य पाद्यम् अर्घ्यं[8] स्वयं नृपः ।
५७] हार्देनैवाऽकरोत्[8] तस्य भोजनाऽर्थं[9] महा-द्युते(ः)[10] ।
मांस-पेश्य् अभवत् तत्र ह्य् आ-हारे तु महाऽऽत्मनः ॥५४॥ [५८
५८] अथ क्रुद्धेन मुनिना शापो दत्तोऽस्य[11] दारुणः[11] ।[12]
गृध्र-त्वं[13] गच्छ[13] वै राजन् मांसाऽदोऽस्य्[14] अथाऽब्रवीत्[14] ॥५५॥ [५९
५९] प्र-सादं कुरु धर्म-ज्ञ अ-ज्ञानान् मे महा-यशः[15] ।
शापस्याऽन्तो महा-भाग क्रियतां वै ममाऽन्-अघ ॥[16]५६॥ [६०
६०] तद् अज्ञान्-कृतं मत्वा राजानं मुनिर् अब्रवीत् ।
उत्-पत्स्यति कुले राजा रामो नाम महा-यशाः ॥५७[16]॥ [६१
६१] इक्ष्वाकूणां महा-भागो रामो राजीव-लोचनः ।
तेन स्पृष्टो वि-शापस् त्वं भविता नृप-सत्तम[17] ॥५८॥ [६२
६२] स्पृष्टो रामेण तच् छ्रुत्वा नरेन्द्रः पृथिवी-पतिः ।
गृध्र-त्वं त्यज्य राजा वै दिव्य-स्रग्-अनुलेपनः[18] ।

---

१. भ$_1$-°स्य तु । २. च-वै पापो हत्वा परालयं । ३. अतः परमधिकः पाठः—च-वर्ज-एवं चिन्तयमानस्य रामस्य सुमहात्मनः । ४. च-स्वन्तरिक्षात्प्रबोधिनी । भ$_1$-स्वंतरिक्षप्रबोधिनी । ५. च भ$_1$-वर्ज-धने° । ६. च-गृहं त्वस्य गतो विप्रो । भ$_1$-गृहागतस्य विप्रस्य। ७. च भ$_1$-वर्ज-राम स° । ८. च-हार्दं चैवा° । ९. रा$_1$ ल$_2$ ल$_3$-°नार्थे । १०. च-महामतिः । ११. भ$_2$ ल$_2$ ल$_3$ ब-दत्तो महात्मनः । १२. अ-नास्ति । १३. च-गृध्रस्त्वं भव । १४. रा$_1$ ल$_3$ प्र-°दोथवाब्रवीत् । १५. च भ$_1$ रा$_1$ ल$_3$-°शाः । १६. अ भ$_2$ ल$_2$ प्र-नास्ति । १७. च-नरपुङ्गव । भ$_1$ भ$_2$ रा$_1$ प्र-नरस° । १८. भ$_1$-दिव्यगन्धानु० ॥

६३] पुरुषो दिव्य-रूपोऽभूद् बभाषे तं नराऽधिपम्[१] ॥५९[२]॥ [६३
साधु राघव धर्म-ज्ञ त्वत्-प्रसादाद् अहं वि-भो[३] ।
६४] वि-मुक्तो नरकाद् राम[४] शापस्याऽन्तः कृतस् त्वया ॥६०॥ [६४

इत्यार्षे रामायण उत्तर-काण्डे गृध्रोलूक-संवादो नाम
त्रिषष्टितमः सर्गः ॥ ६३[५]॥

---

## [ वं–६५ ]= [ चतुःषष्टितमः सर्गः ] =[ दा–६० ]

द्वाः-स्थः[६] प्राऽऽह[७] ततो[८] राजन् द्वारि[९] तिष्ठन्ति तापसाः । [३उ
१] भार्गवं[९] च्यवनं नाम[९] पुरस्-कृत्य महर्षयः[१०] ॥ १ ॥
दर्शनं ते[११] महा-राज[११] काङ्क्षन्त्य्[१२] एते[१२] महर्षयः[१३] ।
२] त्वरमाणा नर-व्याघ्र यमुना-तीर-वासिनः ॥ २[१४]॥ [४
स[१५] तु[१५] तद् वचनं श्रुत्वा रामः प्रोवाच स-त्वरम्[१६] ।
३] प्र-वेश्यन्तां महाऽऽत्मानो भार्गव-प्र-मुखा द्वि-जाः ॥ ३ ॥ [५
रामस्याऽऽज्ञां पुरस्-कृत्य द्वाः-स्थो मूर्ध्नि कृताऽञ्जलिः ।[१७]
४] प्र-वेशयामास ततस् तापसान् धर्म-चारिणः ॥[१७]४ ॥ [६
शान्तं सम्-अधिकं लक्ष्म्या[१८] दीप्यमानं स्व-तेजसा ।
५] प्र-विष्टा राज-भवनं तापसास् ते महा-व्रताः ॥[१९]५ ॥ [७
सं-हिताः पूर्ण-कलशैस् तीर्थीयम् उदकं शुचि ।[२०]
६] गृहीत्वा फल-मूलं च रामस्याऽभ्या-हरन्[२१] बहु[२१] ॥ ६ ॥ [८
प्रति-गृह्य च[२२] तत् सर्वं[२२] रामः[२३] प्रीति-पुरस्कृतम्[२३] ।

---

१. भ$_1$–नरोत्तमं। २. च–नास्ति। ३. च–प्रभो। ४. च–अस्माच्। ५. ल$_3$–नास्त्यत्र सर्गसमाप्तिः। ६. इतः पूर्वमधिकः पाठः—च–ततः प्रभाते विमले कृत्वा पौर्वाह्णिकीं क्रियाम्। अभ्यधावत काकुत्स्थः पौरकार्याण्यवेक्षितुम्॥ च भ$_1$ भ$_2$ ल$_3$–ततः। ७. च–निवेदितं। भ$_1$ भ$_2$–प्रणिहिता। ८. भ$_1$–द्वारे। ९. भ$_1$ भ$_2$–भार्गवच्यवनौ ते तु। १०. च भ$_1$ भ$_2$–महामुनी। ११. च ल$_1$–तव राजेन्द्र। ११. भ$_1$ भ$_2$–कांक्षंतो वै। ल$_1$ ल$_3$–नोदयन्ति। १३. रा$_1$ ल$_3$–समाहिताः। १४. अ ल$_2$–नास्ति। १५. ल$_3$–तस्य। १६. भ$_1$ भ$_2$ रा$_1$ ल$_1$ ल$_3$ ब–सस्मितं। १७. च भ$_1$ भ$_2$–ततःप्रवेशयामास स समस्तांस्तु तापसान्। १८. च भ$_1$ भ$_2$–वर्ज–तत्र। १९. च–प्रविश्य राममद्राक्षुस्तापसाः सुसमाहिताः। भ$_1$ भ$_2$–नास्ति। २०. च भ$_1$ भ$_2$–ते द्विजाः कलसैस्तोयं नानातीर्थोद्धृतं शुचि। २१. च भ$_1$ भ$_2$–रामाय समुपाहरन्। २२. च–महर्षीणां। भ$_1$ भ$_2$–महार्षिभ्यः। २३. च–°मःप्रीतः समाधिना। भ$_1$ भ$_2$–प्रीतिमान्वै स राघवः॥

७] तीर्थोदकानि सर्वाणि[1] तथा मूल-फलानि[1] च ॥ ७ ॥ [९
उवाच स[2] महा-बाहुः[3] सर्वान् एव महा-मुनीन्[3] ।
८] इमान्य् आसन-मुख्यानि यथाऽर्हम् उप-विश्यताम् ॥ ८ ॥ [१०
रामस्य भाषितं श्रुत्वा सर्वे एव महर्षयः ।
९] बृसीषु[4] रुचिराऽन्तासु[5] नि-षेदुः[6] काञ्चनीषु ते[6] ॥ ९ ॥ [११
उप-विष्टान् महा-भागान् दृष्ट्वा पर-पुरं-जयः ।
१०] प्र-यतः प्राञ्जलिर् भूत्वा राघवो वाक्यम् अब्रवीत् ॥१०॥ [१२
किम् आगमन-कार्यं[7] वः किं[8] करोमि तपो-धनाः[8] ।
११] आ-ज्ञाप्योऽहं तपः-सिद्धैः[9] सर्व-काम-पुरःसरः[10] ॥११॥ [१३
इदं राज्यं च सकलं जीवितं च हृदि स्थितम् ।
१२] सर्वम् एतद् द्विजाऽर्थं[11] मे सत्यम् एतद् ब्रवीमि वः ॥१२॥ [१४
तस्य[12] तद्[12] वचनं श्रुत्वा साधु-वादो महान् अभूत् ।
१३] ऋषीणाम्[13] उग्र-तपसां यमुना-तीर-वासिनाम्[13] ॥१३॥ [१५
ऊचुश् चैव महाऽऽत्मानः प्र-हर्षेण[14] समन्व्-इताः[14] ।
१४] उप-पन्नं नर-व्याघ्र त्वय्य् एव[15] भुवि नाऽन्य-तः[15] ॥१४॥ [१६
बहवः पार्थिवा राजन्न् अति-क्रान्ता महा-बलाः ।
१५] आ-श्रुत्वा[16] नाऽभ्य्-अरोहन्त[17] प्रति-ज्ञां कार्य-गौरवात् ॥१५॥[१७
त्वया पुनः सत्-पुरुषेण दुर्-वहं[18]
वचः प्रति-ज्ञातम् अ-चिन्त्य-विक्रम ।
करिष्यसे तद्[19] धि[19] तथा न सं-शयो
१६] मुनीन्[3] भवान् पालयिता महा-भयात्[20] ॥१६॥ [१८

इत्यार्षे रामायण उत्तर-काण्डे ऋषिदर्शनं नाम चतुःषष्टितमः सर्गः ॥ ६४ ॥

---

१. भ$_1$ भ$_2$–पुण्यानि फलमूलमथापि । २. भ$_2$–च । ३. च भ$_1$ भ$_2$–वेनीतात्मा सर्वांस्तानृषिसत्तमान् । ४. अ च भ$_1$ भ$_2$–बृषीषु । ५. च–रुचिराभासु । भ$_1$–विधिवज्जाता । ६. च भ$_1$ भ$_2$–काञ्चनीषु समाविशन् । ७. च भ$_1$ भ$_2$–°नकृत्यं । ८. च–सानुजः करवाणि किं । भ$_1$ भ$_2$–करवाणि समाहितः । ९. च भ$_1$ भ$_2$–द्वर्जे–यतः सिद्ध्यै । १०. च–सर्वथा किंकरः सदा । भ$_1$ भ$_2$–सर्वदा सर्वदः सुखं । ११. भ$_1$ भ$_2$–एतत्तु । १२. च–मुनीनां । १३. ब–मुनीनां ती° । १४. अ रा$_1$ तु$_1$ ल$_2$ ल$_3$ ब प्र–हर्षेण परमान्विताः । भ$_1$ भ$_2$–हर्षेण च स° । १५. भ$_1$ भ$_2$–एवैतत्कुलोपमं । १६. च–ते श्रुत्वा । भ$_2$ ल$_2$ प्र–अश्रुत्वा । रा$_1$ ल$_1$ ल$_3$ ब–अश्रुता । १७. च–नेह रोचन्ते । १८. च–दुर्द्धरं । १९. च भ$_1$ भ$_2$–तच्च । २०. अ ल$_2$ ल$_3$ प्र–मुनीन्भवान्मानयिता महानयात् । च–महाभयात्त्रातुमृषींस्त्वमर्हसि । भ$_1$ भ$_2$–मुनींस्ततः पालयतां भयात्तदा ॥

ब्रुवतस्त्व् एवं तदा तेषु काकुत्स्थो वाक्यम् अब्रवीत् ।
१] किं[1] कार्यं ब्रूत मुनयो भयं तावद् अपैतु वः ।।[1] १ ।। [१
तथा[2] ब्रुवति काकुत्स्थे भार्गवो वाक्यम् अब्रवीत् ।
२] भयं नः शृणु यन्-मूलं देशस्य च[3] नरेश्वर[3] ।। २ ।। [२
पुरा[4] कृत-युगे राम दैतेयः सु-महान् अभूत् ।
३] श्रेष्ठः[5] कुम्भीनसी-भर्ता[5] मधुर् नाम महाऽसुरः ।। ३ ।। [३
ब्रह्म-ज्ञश्[6] च कृत-ज्ञश्[6] च बुद्ध्या च परि-निष्ठितः[7] ।
४] सुरैश् च परमोदारैः प्रीतिस् तस्याऽतुलाऽभवत्[8] ।। ४ ।। [४
स मधुर् वीर्य-सम्पन्नो धर्मे[9] परमम् आप्तवान्[9] । [५पू
५] बहु-मानाच् च रुद्रेण दत्तस्[10] तस्याऽद्भुतो वरः[10] ।। ५ ।। [६उ
शूलाच् छूलं विनिष्-कृष्य[11] महा-वीर्यं[12] महा-प्रभम्[12] ।
६] दत्त्वा[13] स मधुने प्रीतो[13] वाक्यम् एतद् उवाच ह ।। ६ ।। [७
तवाऽयम् अ-तुलो धर्मो मत्-प्रसाद-करः शुभः ।
७] येन प्रीतस् तवाऽरि-घ्नं ददाम्य् आ-युधम् उत्-तमम् ।। ७ ।। [८
यावत् सुरैश् च विप्रैश् च न वि-रोधं[14] करिष्यसि[14] ।
८] तावच् छूलं तवैतत् स्याद् अन्य-था नाशम् एष्यति[15] ।। ८ ।। [९
अभि-यास्यति यश् च त्वां युधि[16] योद्धुं महाऽसुर ।[17]
९] तं शूलं[18] भस्म-सात्-कृत्वा पुनर् एष्यति ते करम् ।।[19] ९ ।। [१०
एवं शूलं समा-साद्य[20] भूय एव[20] महाऽसुरः[21] ।[22]
१०] प्रणि-पत्य महा-देवं वाक्यम् एतद् उवाच ह ।।१०[23]।। [११

---

१. च–किं भयं ब्रूत भवतामहं नाशयिष्यामि तत् । च भ$_1$ भ$_2$ ल$_1$-वर्जं नास्ति । २. च–इति । ३. च–च नरोत्तम । भ$_1$ भ$_2$–नगरस्य च । ४. च भ भ$_2$–पूर्वं । ५. च–हिरण्यकशिपोर्नप्ता । भ$_1$ भ$_2$–प्रभुः परमधर्मात्मा । ६. च भ भ$_2$–ब्रह्मण्यश्च वदान्यश् । ७. च भ$_2$-सुसमाहितः । ८. च भ$_1$ भ$_2$–अस्याभ° ९. च भ$_1$ भ$_2$–धर्मे च परिनिष्ठितः । १०. भ$_1$ भ$_2$–दत्तोऽस्य परमो वरः । ल$_1$ ल ल$_3$ ब प्र–°स्याद्भुतोपमः । ११. अ ल$_2$ ल$_3$ ब प्र–°ष्क्रम्य । १२. च–महाबलं । १३. च–ददौ महात्मा सुप्रीतो । भ$_1$ भ$_2$–ददौ महात्मा प्रीतात्मा । १४. च विरुध्येन्नवान्भुवि । १५. अ ल$_2$–एष्यसि । १६. अ भ$_1$ ल$_2$–यदि । १७. च यश्च त्वामभियुंजीत युद्धाय विगतज्वरः । रा$_1$–नास्ति । १८. च–नूनं । भ$_1$ भ$_2$ शत्रुं । १९. रा$_1$ ब–नास्ति । २०. च भ$_1$ भ$_2$–वरं लब्ध्वा स्मयमानो । २१. च महात्मनः । २२. ब–नास्ति । २३. प्र–नास्ति ।

भग-वन् मम वंशस्य शूलम् एतद् अन्-उत्तमम् ।
११] भवेद् धि[1] सततं[1] देव वराणाम् ईश्वरो ह्य असि ॥११॥ [१२
ब्रुवाणं[2] तं मधुं देवः[2] सर्व-भूत-पतिर् भवः[3] ।
१२] प्रत्य्-उवाच महा-भाग[4] नैतद् एवं भविष्यति ॥१२॥ [१३
मा ते भूद् वि-फला वाणी मत्-प्रसादात्[5] कृताऽसुर[5] ।
१३] भवतः[6] पुत्र[7] एकस्मिन्[7] शूलम् एतद् भविष्यति ॥१३[8]॥ [१४
यावत् कर-स्थं तच्[9] छूलं[9] भविष्यति सुतस्य ते[10] ।
१४] अ-वध्यः सर्व-भूतानां तावत् स[11] तु[11] भविष्यति ॥१४[12]॥ [१५
एवं मधुर् वरं[13] लब्ध्वा देवात् सु-महद् अद्भुतम्[13] ।
१५] भवनं सोऽसुर-श्रेष्ठः[14] कारयामास सु-प्रभम्[14] ॥१५॥ [१६
तस्य पत्नी महा-राज[15] नाम्ना[15] कुम्भी-नसी हृता[16] ।[17]
१६] विश्वावसोर्[18] अपत्यं सा राक्षसी[19] रावण-स्वसा[19] ॥१६॥ [१७
तस्याः पुत्रो महा-वीर्यो लवणो नाम दानवः[20] ।
१७] बाल्यात् प्रभृति दुष्टाऽऽत्मा पापान्य् एव समाऽचरत् ॥१७॥ [१८
तं पुत्रं दुर्-विनीतं तु दृष्ट्वा शोक-समन्वितः[21] ।
१८] मधुः स शोकम्[22] आ-दत्ते[22] न चैनं किं-चिद् अब्रवीत् ॥१८॥ [१९
वि-हाय स इमं लोकं प्र-विष्टो[23] वरुणाऽऽलयम् ।
१९] शूलं नि-वेश्य लवणे वरं चास्मै[24] न्य्-अवेदयत्[24] ॥१९॥ [२०
स प्र-भावाच् च शूलस्य दौरात्म्याद् आत्मनस् तथा ।[25]
२०] लोकान् सं-तापयामास वि-शेषेण तु[26] तापसान् ॥२०॥ [२१

---

१. भ$_1$ भ$_2$–प्रहरणं । २. च–तथा ब्रुवाणमसुरं । ३. च–शिवः । भ$_1$ भ$_2$–वचः । ४. च–स्वयं साक्षा । ५. च–°दकरी तव । भ$_1$ भ$_2$–°दकृता मधो । प्र–°ता ततः । ६. च–औरसं । भ$_1$ भ$_2$–भाव्यं वै । ७. अ रा$_1$ ल$_1$ ल$_2$ ब–पुत्रमेकं तु । च भ$_1$ भ$_2$–पुत्रमेकं ते । ८. ल$_3$–नास्ति । ९. च–शूलं हि । १०. भ$_1$–वै । ११. च–एव । १२. भ$_2$–नास्ति । १३. च–देववराद्वरं लब्ध्वा सुदुर्लभं । भ$_1$ भ$_2$–देववराद्वरं लब्ध्वा सुदुर्मतिः । १४. च–कारयामास सुप्रभं सोसुरोत्तमः । भ$_1$ भ$_2$–कारयामास सोसुर सुप्रभं महत् । १५. च भ$_1$ भ$_2$–वर्जं–महाभागा चित्रा । १६. च–पुरा । १७. भ$_1$ भ$_2$–तेन पत्नी पुरा लब्धा रावणान्तःपुरैधिता । १८. च भ$_1$ भ$_2$–दत्ता विश्रवसोऽपत्यं । १९. च–वर्जं–माला नाम महाप्रभा । २०. च भ$_1$ भ$_2$–दारुणः । २१. च–दुःखस° । २२. च–स शोकं समासाद्य । भ$_1$ भ$_2$–स दुःखमापेदे । २३. च–प्रयातो । २४. च भ$_1$ भ$_2$–वर्जं–चास्य निवेद्य च । २५. च–स प्रभावेन शूलस्य दौरात्म्याच्च तथात्मनः । च भ$_1$ भ$_2$–वर्जं–नास्ति । २६. च भ$_1$ भ$_2$–तु ॥

एवं-प्रभावो लवणः शूलं चाऽस्य[1] तथा-विधम् ।
२१] श्रुत्वा प्र-माणं काकुत्स्थ त्वं हि नः परमा गतिः ॥२१॥ [२२
बहवः पार्थिवा राजन् भयाऽऽर्तैर् ऋषिभिः पुरा ।
२२] अ-भयं याचितास्[2] तेभ्यो[3] न कश्-चिद् अ-भयं ददौ ॥२२॥ [२३
ते वयं रावणं श्रुत्वा[4] हतं स-सुत-बान्धवम् ।
२३] त्रातारं राम विप्रस्[5] त्वां[5] नाऽन्यं भुवि नराऽधिपम् ॥[6]२३॥ [२४
वं-६७] रामस् तथोक्त ऋषिभिः[7] प्रत्य्-उवाच कृताऽञ्जलिः । [दा-६र
१] किम्-आहारः किम्-आचारो लवणः क्व च वर्तते । [१
N] की-दृशो लवणः शूली तच् छीघ्रं वै नि-वेद्यताम् ॥२४[8]॥ [N
ऋषयो राघव-वचः[9] श्रुत्वा ते[10] सर्व एव वै[11] ।[12]
२] नि-वेदयां तदा चक्रुर् लवणस्य वि-चेष्टितम् ॥[13]२५॥[२
३पू] आ-हारः सर्व-भूतानि[14] वि-शेषेण तु मानुषाः[15] । [३पू
४पू] हत्वा दश सहस्राणि पूर्यते[16] तस्य राघव[16] ॥२६॥ [४पू
N] मृगाणां महिषाणां च भक्ष्यम् एकाऽह्निकं किल ।[17] [N
४उ] मानुषाणां वराहाणां गवां चैव चतुः-शतम् ॥[18]२७॥ [४उ
ततोऽपराणि सत्त्वानि खादते स महा-बलः ।
५] सं-हारे समनुप्राऽऽप्ते व्यादिताऽऽस्य इवाऽन्त-कः ॥२८[19]॥ [५
३उ] आ-चरन् रौद्र-तां नित्यं वासं मधु-वने सदा ।[20] [३उ
N] लवणस् तु महा-बाहो सं-तापयति नित्य-शः ॥[21]२९[19]॥[N
तच् छ्रुत्वा राघवो वाक्यं तान् उवाच तपस्विनः ।

---

१. च–चैव । २. च ल$_1$–वर्जं–°तं । ३. च–तेषां । ४. अ ल$_2$–हत्वा । भ$_1$ भ$_2$–दृष्ट्वा । ५. भ$_2$–विप्र त्वां । च–विप्रहे । ६. अ ल$_2$–नास्ति । अतः परमधिकः पाठः—च–इति राम निवेदितं तु ते भयदं कारणमुत्थितं हि यत् । विनिवारयितुं भवान् क्षमः कुरु तं काममहीनमेव तत ॥ इत्युत्तरकाण्डे लवणोत्पत्तिर्नाम सर्गः । अ च ल$_2$–वर्जं–लवणान्नो भयं तीव्रं तुद शीघ्रं महामते । भ$_1$ भ$_2$–अत्र सर्गसमाप्तिर्दृश्यते-तद्यथा-लवणोत्पत्तिः । ७. प्र–मुनिभिः । ८. भ$_1$ भ$_2$ ल$_1$ प्र–वर्जं–नास्ति । ९. च–रामवचनं । १०. च–तत् । ११. च–ते । १२. अ रा$_1$ ल$_2$ ल$_3$ ब–नास्ति । १३. अ ल$_2$–नास्ति । च–न्यवेदयन्यथातथ्यं प्रचारं लवणस्य ते । १४. च–सर्वसत्त्वानि । १५. रा$_1$ ल$_1$ ल$_2$ ब प्र–°षान् । १६. च–सिंहव्याघ्रमृगद्विपाम् । १७. च–नास्ति । १८. च–मानुषं चैव कुरुते नित्यमाहारमाह्निकं । १९. भ$_1$ भ$_2$–नास्ति । २०. च–प्रचारो रौद्रता नित्यं वासो मधुवने तथा । २१. च–नास्ति ॥

६] घातयिष्यामि[1] तद् रक्षो भयं वो[2] नश्यतां[3] ततः[3] ॥३०॥ [६
प्रति-ज्ञाय तदा[4] तेषाम् ऋषीणाम्[4] उग्र-तेजसाम् ।
७] भ्रातॄंश् च[5] सहितान्[6] सर्वान्[6] इदं[7] वचनम् अब्रवीत्[7] ॥३१॥ [७
को हन्ता लवणं वीराः[8] कस्यांऽशः स वि-धीयताम्[9] ।
८] भरतस्य महा-बाहोः शत्रु-घ्नस्य[10] महाऽऽत्मनः[10] ॥३२॥ [८
राघवेणैवम् उक्ते[11] तु भरतो वाक्यम् अब्रवीत् ।
९] अहम् एनं हनिष्यामि ममांऽशः स वि-धीयताम्[12] ॥३३॥ [९
भरतस्य वचः श्रुत्वा शौर्य-धैर्य-समन्वितम् ।
१०] लक्ष्मणाऽनुज उत्-तस्थौ हित्वा सौवर्णम् आसनम् ॥३४[13]॥ [१०
शत्रु-घ्नस् त्व् अब्रवीद् वाक्यं प्रणि-पत्य नराऽधिपम् ।
११] कृत-कर्मा महा-बाहुर् मध्य-मो रघु-नन्दनः ॥३५॥ [११
आर्येण हि पुरी[14] शून्या अयोध्या रक्षिता पुरा[14] ।
१२] सं-तापं[15] हृदये कृत्वा[15] आर्यस्य[16] गमनं[16] प्रति ॥३६॥ [१२
सु-बहूनि[17] च[17] दुःखानि अनु-भूतानि[18] पार्थिव[18] ।
१३] शयितं दुःख-शय्यासु नन्दि-ग्रामे महाऽऽत्मना ॥३७॥ [१३
१४पू] फल-मूलाऽशनो भूत्वा जटा-चीर-धरस् तथा ।
N] अनु-भूयेदृशं दुःखम् एष राघव-नन्दनः ।[19]
१४उ] प्रेष्ये मयि स्थिते भूयः[20] कथं[21] क्लेशम् अवाऽऽप्नुयात्[21] ॥३८॥ [१४
तथा ब्रुवति शत्रु-घ्ने[22] राघवः पुनर् अब्रवीत् ।
१५] एवं भवतु काकुत्स्थ[23] क्रियतां मम[24] शासनम्[24] ॥३९॥ [१५
राज्ये त्वाम् अभि-षिञ्चामि[25] मधोस् तस्य[26] महा-पुरे[26] ।

---

१. अ रा$_1$ ल$_2$ ल$_3$ ब–पात° । २. ल$_2$–वै । ३. च–नश्यतु द्विजाः । ४. च–तथा तेषां मुनीनां । ५. च–तान् । ६. भ$_1$ भ$_2$–तान्वै सहितान् । ७. च भ$_1$ भ$_2$–उवाच रघुनन्दनः । ८. अ रा$_1$ ल$_1$ ल$_3$ ब प्र–वीरः । ९. च भ$_1$ भ$_2$–वर्ज–°यते । १०. अ रा$_1$ ल$_1$ ल$_2$ ल$_3$ ब प्र–°स्यापि चात्रिभोः । ११. च भ$_1$ भ$_2$–उक्तस । १२. भ$_1$–°यते । १३. भ$_1$ भ$_2$–नास्ति । १४. च–पुरायोध्या शून्याने-नैव रक्षिता । भ$_1$ भ$_2$–पुरायोध्या शून्येयं परिपालिता । १५. भ$_1$ भ$_2$–हृदि कृत्वा तु संतापं । १६. च–आर्यस्याग° । १७. च भ$_1$ भ$_2$–अनुभूतानि । १८. च–भरतेन बहूनि हि । भ$_1$ भ$_2$–पार्थिवानि बहूनि च । १९. च भ$_1$ भ$_2$–नास्ति । २०. च–ह्येष । भ$_1$ भ$_2$–राजन् । २१. च–न भूयः क्लेशमर्हति । २२. भ$_1$ भ$_2$–काकुत्स्थो । २३. च–शत्रुघ्न । २४. भ$_1$ भ$_1$–वचनं मम । २५. अ च भ$_1$ भ$_2$ ल$_2$–°षेक्ष्यामि । २६. च भ$_1$ भ$_2$–तु नगरे शुभे । प्र–तस्य पुरे शुभे ॥

१६] नि-वेशय[1] महा-बाहो नगरं[2] परि-रक्ष च[3] ॥४०॥ [१६
शूरस् त्वं कृत-विद्यश् च सम्-अर्थश्[3] च नि-वेशने[1] । [१७
१७] नगरं मधुना जुष्टं तथा जानपदं शुभम् ॥४१॥
यो हि वंश समुत्-पाट्य पार्थिवस्य परि-क्षये ।
१८] न वि-धत्ते पुरं तत्र नरकं सोऽव-गाहते ॥[4]४२॥[१८
स त्वं हत्वा मधु-सुतं लवणं पाप-चेतसम् ।
१९] राज्यं प्र-शाधि धर्मेण मद्-वाक्यं यद्य् अवेक्षसे ॥४३[4]॥[१९
उत्-तरं न च वक्तव्यं शूर[5] वाक्याऽन्तरे मम ।
२०] पूर्व-जस्याऽविचार्याऽऽज्ञा कर्तव्या ह्य् अनु-जैः सदा ॥४४॥ [२०
अभि-षेकं च[6] काकुत्स्थ प्रतीऽच्छ त्वं मयोद्-यतम् ।
२१] वसिष्ठ-प्रमुखैर् विप्रैर् मन्त्र-पूतम् अ-निन्दितम्[7] ॥४५॥ [२१

इत्यार्षे रामायण उत्तर-काण्डे शत्रुघ्न-नियोगो नाम
पञ्चषष्टितमः सर्गः ॥ ६५ ॥

---

## [ वं–६८,६९ ]= [ षट्षष्टितमः सर्गः ] =[ दा–६३ ]

एवम् उक्तस् तु रामेण हर्षात् किं-चिद् अधो-मुखः[8] ।
१] शत्रु-घ्नो वीर्य-सम्पन्नो मन्दं मन्दम् उवाच ह ॥ १ ॥ [१
काकुत्स्थ वेत्सि धर्मं[9] त्वम् अस्मिन्न् अर्थे[9] नरेश्वर ।
२] कथं ज्येष्ठेषु तिष्ठत्सु कनीयान् अभि-षिच्यते ॥ २ ॥ [२
अवश्यं[10] करणीयं ते[11] शासनं पुरुषर्षभ[12] । [३पू
३] गुरूणां[13] हि[13] महा-बाहो तव[14] चैव मया श्रुतम्[14] ॥ ३ ॥
उत्तरं हि[15] न वक्तव्यं गुरूणां प्रति-जानता[15] । [६
४] व्या-हृतं[16] दुर्-वचो[16] घोरं तन् मे मर्माणि कृन्तति ॥ ४ ॥

---

१. च–निःशेषं स । २. च–वर्जं–भरत यद्यवेक्षसे । ३. च–कुशलेषु नि° । ४. च $भ_1$ $भ_2$ $ल_1$–वर्जं–नास्ति । ५. च–त्वया । ६. $भ_2$–तु । ७. च–अरिंदम । ८. च $भ_1$ $भ_2$–अवाङ्मुखः । ९. च–लोके । १०. अ $रा_1$– अवशं । ११. च $भ_1$ $भ_2$–च । १२. च–तव पार्थिव । १३. च–त्वमेव हि । $भ_1$ $भ_2$–आत्मनश्च । १४. च–ममेदं ते प्रतिश्रु° । १५. च–यन्मया तुभ्यं दत्तमप्रति° । $भ_1$ $भ_2$–यन्मया वाक्यमुच्यते विप्रजानता । १६. च–अनार्यव्याहृतं ॥

५पू] तस्येयं[1] मे दुर्-उक्तस्य निष्-कृतिः पुरुषर्षभ ।[2] [५
सोऽहं द्वितीयं काकुत्स्थ न[3] वक्ष्यामि तवोत्तरम्[4] ।
७] दण्डो द्वितीयो नेदानीं ह्रीयते मे परं-तप ॥[5]५॥ [७
अहं कर्म-करस् ते हि सर्व-धर्म-भृतां वर ।
८] अ-धर्मं जहि काकुत्स्थ मत्-कृते पुरुषोत्तम ॥ ६[6]॥ [८
९पू] शत्रु-घ्नस्य वचः श्रुत्वा राघवः प्रीत-मानसः ।[7] [९पू
१०पू] आ-ज्ञापयामास वि-भुर् आभिषेचनिकं वि-धिम् ॥[8]७॥ [१०पू
पुरो-धसं वसिष्ठं च नैगमांश् च[9] द्वि-जांस्[9] तथा ।
११] मन्त्रिणश् च तथा[10] सर्वांस्[10] त्वरितो[11] नृप-सत्तमः[11] ॥ ८॥ [११
राज्ञः शासनम् आ-ज्ञाय चक्रुः[10] सर्वम्[11] अशेष-तः ।
१२] अभिषेक-समारम्भं पुरस्-कृत्य पुरो-धसम् ॥[12]९॥ [१२
ततोऽभि-षेकोऽव-धृतः शत्रुघ्नस्य महाऽऽत्मनः ।[13]
१३] प्र-हर्षम् अ-तुल चक्रे भ्रातॄणां च पुरस्य च ॥[14]१०॥ [१३
अभि-षिक्तः पुरा स्कन्दः सेन्द्रैर् इव दिवौकसैः ।[15]
१४] अभि-षिक्तस् तु शत्रु-घ्नः प्र-भयाऽऽदित्य-सन्निभः ॥[16]११॥ [१४
अभि-षिक्ते[17] तु शत्रु-घ्ने रामेणाऽक्लिष्ट-कर्मणा ।
१५] पौराः प्र-मुदिताः सर्वे ब्राह्मणाश् च बहु-श्रुताः ॥१२॥ [१५
कौसल्या च सु-मित्रा च मङ्गलं कैकयी तथा ।
१६] चक्रुस् ता राज-भवने याश् चाऽन्या राज-योषितः ॥१३॥ [१६
ऋषयश् च महाऽऽत्मानो यमुना-तीर-वासिनः ।[15]

---

१. भ$_1$ भ$_2$–तस्यैवं । २. अतः परमधिकः पाठः—च–अस्यैव मे दुरुक्तस्य त्वन्तुमर्हस्यनिन्दित । च भ$_1$ भ$_2$–उत्तरं हि न वक्तव्यं ज्येष्ठानां मद्विधैः सदा । च–अधर्मसहितं चैव इहामुत्र च गर्हितम् । तव चैव महाबाहो शासनं दुरतिक्रमम् ॥ ३. अ ल$_2$–मद्गतं रघुनन्दन । ४. अ ल$_2$–नास्ति ५. च–एवमुक्ते तु शूरेण शत्रुघ्नेन महात्मना । अतः परमधिकश्च पाठः—उवाच राम संहृष्टो लक्ष्मणं भरतं तथा । ६. च–अभिषेकस्य संभारा आनीयन्तां त्वरान्वितं । अतः परमधिकश्च पाठः—अद्यैव पुरुषव्याघ्र अभिषेकस्तु राघवम् । ७. च भ$_1$ भ$_2$–ऋत्विजस् । ८. च–नरव्याघ्र । ९. च–शीघ्रं सर्वान्समानय । भ$_1$ भ$_2$–शीघ्रं नृपतिस° । १०. भ$_2$–वर्जे–वक्तुं । ११. च–तूर्णं । १२. अतः परमधिकः पाठः—च भ$_1$ भ$_2$–वर्जं–प्रविष्टा राजभवनं पुरन्दरगृहोपमम् । १३ च–अभिषिक्तस्तु श्रीमान्स शत्रुघ्नः स महायशाः । भ$_1$ भ$_2$–अभिषेकात् सुश्रीमान्स शत्रुघ्नस्य महात्मनः १४ प्र–नास्ति । १५. च भ$_1$ भ$_2$–नास्ति । १६. प्र–नास्ति । १७. अ–°षेके ॥

१७] हतं लवणम् आ-शंसुः शत्रु-घ्नस्याभि-षेचने ॥१४[1]॥ [१७
ततोऽभि-षिक्तं काकुत्स्थम्[2] अङ्कम् आ-रोप्य राघवः ।
१८] उवाच मधुरां वाणीं तेजसोऽस्य[3] वि-वर्धयन्[4] ॥१५॥ [१८
अयं[5] शरस् त्व् अ-मोघस् ते[5] दिव्यः पर-पुरं-जय ।
१९] अनेन लवणं सौम्य हन्ताऽसि मधुनः[6] सुतम्[6] ॥१६॥ [१९
सृष्टः शरोऽयं शत्रु-घ्न यदा[7] शेते महाऽर्णवे[7] ।
२०] स्वयं-भूर् अ-च्युतो देवो यन् नाऽपश्यन् सुराऽसुराः ॥[8]१७॥
अ-दृश्यः सर्व-भूतानां तेनाऽयं हि शरोत्तमः । [२०
२१] सृष्टः क्रोधाऽभिभूतेन वि-नाशाऽर्थं[9] सुर-द्विषाम्[10] ॥१८॥
मधु-कैटभयोर् वीर वि-घाते वर्तमानयोः ।[11]
२२] स्रष्टु-कामेन त्रींल् लोकांस् तौ चाऽनेन हतौ युधि ।[12] [२१
२३उ] अनेन शर-मुख्येन ततो लोकांश् चकार सः ॥१९॥ [२२उ
नाऽयं मया शरः पूर्वं रावणस्य[13] वधाऽर्थिना[13] ।
२४] मुक्तः शत्रु-घ्न भूतानां[14] त्रासो मा भून् महान् इति[14] ॥[15]२०॥ [२३
वं-६९स.] यत् तु तस्य महच् छूलं त्र्यम्बकेन महाऽऽत्मना ।
२] दत्तं शत्रु-विनाशाय मधोर् आ-युधम् उत्-तमम् ॥[16]२१॥ [२४
तत् तु[17] नि-क्षिप्य[17] भवने पूज्यमानं मुहुर्-मुहुः ।
३] दिशो वि-लोकयन्[18] सर्वाश् चरत्य् आहार-धर्म-तः[19] ॥२२॥ [२५
यदा तु युद्धम्[20] आ-काङ्क्षन् कश्-चिद् एनं समा-ह्वयेत्[20] ।

---

१. च भ१ भ२–नास्ति । २. च भ१ भ२–शत्रुघ्नं । ३. च भ१ भ२–वर्जं-तेजश्चास्य । ४. च भ१ भ२–°र्धनीं । ५. च भ१ भ२–अमोघोऽयं शरो वीर । ६. च-जयतां वर । भ१ भ२–रघुनन्दन । ७. च–जगत्येकार्णवे पुरा । भ१ भ२–जगत्येकार्णवीकृते । ८. भ१–स्वयंभुवा हि देवेन वधार्थं हि सुरद्विषाम् । भ२–नास्ति । ९. च–°शाय । १०. च भ१ भ२–दुरात्मनां । ११. च भ१ भ२–जगदर्थे हि निहितावसुरौ मधुकैटभौ । १२. च भ१ भ२–नास्ति । १३. च भ१ भ२–दशग्रीवजिघांसया । १४. च–महात्रासो लोकानां खल्वभूदिति । भ१ भ२–मा त्रासो भूतानां तु भवेदिति । १५. अतः परमधिकः पाठः—च–अनेन तं सुरगणशत्रुमाहवे हनिष्यसे रघुवर नात्र संशयः । निहत्य तं पुरमेव च स्वयं निवेशय त्रिदशपुरोपमं लघु ॥ इत्यार्षे रामायण उत्तरकाण्डे शत्रुघ्नाऽभिषेको नाम सर्गः । शरं दत्त्वा तु शत्रुघ्ने राघवः परवीरहा । पुनश्चैवमुवाचेदं वचनं वाक्यकोविदः ॥ १६. च–अधृष्यः सर्वभूतानां तेनायमसुरोत्तमः । १७. च भ१ भ२–संनि° । १८. च भ१–विलोडयन् । १९. अ रा१ ल१ ल२ ल३ ब प्र–°रकर्म तत् । भ१ भ२–°रकर्मवान् । २०. च भ१ भ२–युद्धकाङ्क्षी तं कश्चिदाह्वयते रिपुं ॥

४] तदा शूलं गृहीत्वा[1] तु शत्रुं भस्मी-करोति सः[1] ॥२३॥ [२६
स त्वं पुरुष-शार्दूल[2] तम् आहार-विनिर्गतम्[2] ।
५] अ-प्रविष्टं[3] पुरे पूर्वं[3] द्वारि[4] तिष्ठ धृताऽऽयुधः ॥२४॥ [२७
अ-गृहीताऽऽयुधं चैव युद्धाय पुरुषर्षभ[5] ।
६] आ-ह्वयेथा महा-बाहो ततो हन्ताऽसि राक्षसम् ॥२५॥ [२८
अन्य-था क्रियमाणे तु न[6] वध्यः स्यात् तु वीर्य-वान्[6] ।
७] सद्यस्[7] त्व् एवं कृते वीर[7] वि-नाशम् उप-यास्यति ॥२६॥ [२९
एतत् ते सर्वम् आ-ख्यातं शूल-हस्तः स[8] दुर्-जयः[8] ।
८] श्री-मता[9] शिति-कण्ठेन कृतो[10] हि दुर्-अतिक्रमः[10] ॥[11]२७॥ [३०

इत्यार्षे रामायण उत्तर-काण्डे शर-प्रदानिको नाम
षट्षष्टितमः सर्गः ॥६६[12]॥

---

## [ वं-७० ]= [ सप्तषष्टितमः सर्गः ] =[दा-६४]

एवम् उक्त्वा तु शत्रु-घ्नं प्र-शंस्य च पुनः-पुनः ।
१] पुनर् एवाऽपरं वाक्यम् उवाच वदतां[13] वरः[13] ॥ १ ॥ [१
इमान्य् अश्व-सहस्राणि चत्वारि रघु-नन्दनम्[14] ।
२] रथानां द्वे सहस्रे च द्वि-पानां[15] तु शतं तथा[15] ॥ २ ॥ [२
अन्तर्-आपण-वीथ्यश्[16] च नाना-पण्योपशोभिताः[17] ।
३] अनु-गच्छन्तु काकुत्स्थं तथैव नट-नर्तकाः ॥ ३ ॥ [३
हिरण्यं[18] च सु-वर्णं च अ-मितं[18] पुरुषर्षभ[19] ।
४] आ-दाय गच्छ शत्रु-घ्न पर्याप्त-बल-वाहनः ॥ ४ ॥ [४

---

१. च-°स्त्वाशु भस्मं तं कुरुते युधि । २. च भ$_1$ भ$_2$-निवर्तमानं तं दृष्ट्वा-हारप्रचारिणं । ३. भ$_1$ भ$_2$-प्रविष्टः प्रथमं क्षिप्रं । ४. च भ$_1$ भ$_2$-वर्ज-करे । ५. भ$_1$ भ$_2$-रघुनन्दन । ६. च-अवध्यः स भविष्यति । ७. भ$_1$ भ$_2$-स सद्यश्च पुरुषव्याघ्र । ८. भ$_1$ भ$_2$-सुदु° । ९. च भ$_1$ भ$_2$-°तः शितिकंठस्य कीर्तिकर् । १०. च भ$_1$-हि दुरतिक्रमा । भ$_2$-सुदुरतिक्रमा । ११. अतः परमधिकः पाठः-च-वर्ज-तस्मादनेन विधिना युध्येथा मुनिकण्टकम् । १२. च-इत्युत्तरकाण्डे शत्रुघ्नशरप्रदानं नाम । भ$_1$ भ$_2$-नास्त्यत्र सर्गसमाप्तिः । १३. च भ$_1$ भ$_2$-रघुनन्दनः । १४. च भ$_1$ भ$_2$-पुरुषर्षभः । १५. च-गजानां शतमुत्तमं । १६. च-चत्वराप° । १७. च-नानारत्नोप° । १८. च भ$_1$ भ$_2$-हिरण्यस्य सुवर्णस्य नियुतं । १९. च-प्रयुतं तथा ॥

बलं च सु-प्रभूतं[1] च[1] हृष्ट-पुष्ट-जनाऽऽकुलम्[2] ।
५] वश्यं[3] साम-प्रदानाभ्यां[4] कुरुष्व[5] रघु-नन्दन ॥ ५ ॥ [५
नह्य् अर्थास् तत्र[6] तिष्ठन्ति न दारा न च बान्धवाः ।
६] सु-(?अ-)प्रीतो भृत्य-वर्गस् तु[7] यत्र तिष्ठति राघव ॥ ६ ॥ [६
स त्वं हृष्ट-जनाऽऽकीर्णां प्र-स्थाप्य[8] महतीं चमूम् ।
७] एक एव धनुष्-पाणिर् उप-गच्छ मधोर् वने[9] ॥ ७ ॥ [७
यथा त्वां[10] न प्र-जानीयाद्[10] आ-यान्तं[11] युद्ध-काङ्क्षिणम् ।
८] लवणः स मधोः पुत्रस् तथा निः-शङ्कितो[12] व्रज[12] ॥ ८ ॥ [८
९पू] न ह्य् अन्य-था भवेन् मृत्युस् तस्य घोरस्य रक्षसः ।[13] [९पू
N] आ-ख्याता नहि तस्याऽस्ति कश्-चिन् मृत्यु-भयात्[14] किल[14] ९[N
९उ] दर्शनं यो हि गच्छेत[15] हन्येत लवणेन सः[15] । [९उ
N] न तस्याऽस्ति त्वद्-अन्यो हि मृत्युः कश्-चित् सु-निर्भयः[16] १०[N
ग्रीष्मे[17] चाऽपि व्यति-क्रान्ते[17] वर्षा-रात्रे[18] ह्य्[18] उपस्थिते[19] ।
१०] हन्यास् त्वं लवणं सौम्य[20] तं[21] युक्त्या लोक-कण्टकम्[21] ॥११॥ [१०
महर्षीश्[22] च[22] पुरस्-कृत्य प्र-यान्तु[23] तव सैनिकाः ।
११] यथा[24] ग्रीष्माऽवशेषेण तरेयुर् जाह्नवी-जलम् ॥१२॥ [११
तत्र[25] स्थाप्य बलं सर्वम् अनु-तीरं[25] समा-हितः[26] ।
१२] अग्र-तस् त्वं[27] धनुष्-पाणिर्[27] गच्छस्व[28] लघु-विक्रमः ॥१३॥ [१२
एवम् उक्तस् तु रामेण शत्रु-घ्नः[29] सु-महाबलः[29] ।

---

१. अ ल$_2$-°तं स । च भ$_1$ भ$_2$-सुभृतं वीर । २. च-°ष्टमनिन्दितं । भ$_1$ भ$_2$-°ष्टमनुत्तमं । ३. च-अथ । ४. च-सम्मानदा° । भ$_1$ भ$_2$-सान्त्वप्र° । ५. च-कुर्यास्त्वं । ६. अ रा$_1$ ल$_1$ ल$_2$ ब-तव । ७. च भ$_1$ भ$_2$-वर्जं-च । ८. भ$_2$-सम्प्राप्य । ९. च-वनं । भ$_1$ भ$_2$-सुतं । १०. च-स त्वां न जानाति । भ$_1$ भ$_2$-च त्वां न जा° । ११. च-गच्छंतं । १२. च-त्वं गच्छ राघव । १३. च भ$_1$ भ$_2$-नास्ति । १४. च भ$_1$ भ$_2$-°यान्वितः । १५. च-तस्येयास्स वध्यो लवणस्य हि । १६. च. भ$_1$ भ$_2$-नास्ति । १७. च-ग्रीष्मकाले व्यतीते तु । १८. अ रा$_1$ ल$_1$ ल$_2$ ब प्र-°त्रिर् । च-°त्र । १९. भ$_2$-वर्जं-°ता । २०. भ$_1$ भ$_2$-वीर । २१. अ ल$_2$-°क्त्या देवक° । स हि कालोस्य दुर्मते । २२. च-ऋषीनिमान् । २३. च-गच्छन्तु । २४. च-अथ । २५. च-स्थापयित्वा बलं तत्र पम्पातीरे । २६. अ रा$_1$ ल$_1$ ल$_2$ ब प्र-°ताः । २७. च-धनुषा सार्धं । २८. च-यातस्त्वं । भ$_1$ भ$_2$-गच्छेथा । २९. च-सर्वान् लक्ष्मणानुजः । भ$_1$ भ$_2$-स तदा लक्ष्मणानुजः ॥

१३] सेना-मुख्यान् समा-नीय ततो वाक्यं जगाद ह ॥[1]१४॥ [१३
वासरा[2] गणिता ह्य्[2] एते यथा तत्र नि-वत्स्यथ[3] ।
१४] स्थेयं तेष्व अ-प्रमादेन ममाऽऽज्ञां प्रति-काङ्क्षिभिः[4] ॥१५॥ [१४
तथेति वै प्रति-ज्ञाते निर्-यात्य सु-महद् बलम् ।
१७] कौसल्यां कैकयीं चैव सु-मित्रां चाऽभ्य्-अवादयत् ॥१६॥[5] [१५
रामं प्रदक्षिणी-कृत्य[6] शिरसाऽभिप्र-णम्य[7] च ।
१८] उपाऽऽघ्रातश्[8] च रामेण[8] शत्रु-घ्नः शत्रु-तापनः ॥[9]१७॥ [१६
१९पू] लक्ष्मणं भरतं[10] चैवम् अभि-वाद्य[10] कृताऽञ्जलिः ।[11]
पुरो-हितं वसिष्ठं च शत्रु-घ्नः परमाऽऽत्म-वान्[12] ॥[13]१८॥
२०] प्र-दक्षिणम् अथो कृत्वा निर्-जगाम महा-बलः[14] ।[15] [१७
N] आ-शास्ता वि-जयं श्री-मान् वसिष्ठाऽऽद्यैर् महाऽऽत्मभिः[16] ॥१९॥[N

इत्यार्षे रामायण उत्तर-काण्डे शत्रुघ्न-निर्याणं[17] नाम
सप्तषष्टितमः सर्गः ॥ ६७ ॥

---

## [वं-७१]= [ अष्टाषष्टितमः सर्गः ] =[ दा-६५]

प्र-स्थाप्य तद्[18] बलं सर्वं[19] सप्त-रात्रम्[19] अथोष्य[20] च[20] ।
१] शत्रु-घ्न एवाऽऽशु तदा जगामैक-रथः किल ॥[21]१॥ [१
द्वि-रात्रम् अन्तरा शूर उष्य राघव-नन्दनः[22] ।

---

१. अतः परमधिकः पाठः–च–शीघ्रमद्यैव निर्यात सभृत्यबलवाहनाः । पुरस्कृत्य महाभागान्सर्वानेतांस्तपोधनान् ॥ न च वो विषये कश्चिद्बाधः कार्यः प्रतापजः । प्रतापार्थोपचारेण राजा दोषेण गम्यते ॥ २. च भ$_1$ भ$_2$–इमे वो । ३. च–वासा यत्र यत्र निवत्स्यते । ४. अ ल$_2$–परिरक्षितः । रा$_1$ ल$_1$ ल$_3$ ब प्र–प्रतिरक्षितः । ५. च–तथा तांस्तु समाधाय निर्याप्य च महाबलः । कौशल्यां च सुमित्रां च कैकेयीं चापि राघवः । ६. च भ$_1$ भ$_2$–°णं कृत्वा । ७. च–°सा त्रिप्र° । ८. च–रामेण मूर्ध्न्युपाघ्रातः । ९. अतः परमधिकः पाठः–च–राघवेणाभ्यनुज्ञातो निर्जगाम नृपालयात् । १०. च–चैव भरतं प्रणिपत्य । ११. अतः परमधिकः पाठः—ल$_1$–ताभ्यां वै अभ्यनुज्ञातमाघ्रातः शिरसि स्म सः । १२. च–प्रयतां वरान् । १३. भ$_1$ भ$_2$–नास्ति । १४. भ$_1$ भ$_2$–नृपालयात् । १५. अतः परमधिकः पाठः—च–निर्याप्य सेनामथ सोऽग्रतस्तदा गजेन्द्रवाजिप्रवरौघसङ्कुलाम् । उपोष्य मासं स नरेन्द्रपार्श्वतः प्रतिप्रयातो रघुवंशवर्धनः ॥ १६. च भ$_1$ भ$_2$–नास्ति । १७. च भ$_1$–°स्तप्रयाणं । १८. च–तु । १९. अ–मासमासं । च भ$_1$ भ$_2$–वर्जं–मासमर्धं । २०. च–अथोषितः । २१. च भ$_1$ भ$_2$–एक एवाथ शत्रुघ्नो जगाम त्वरितस्तदा । २२. भ$_1$ भ$_2$–इक्ष्वाकुनं° ॥

२] वाल्मीकेर् आ-श्रमं पुण्यम् अध्य्-आसामास[1] चोत्-तमम्[2] ॥२॥ [२
सोऽभि-गम्य महाऽऽत्मानम् अभि-वाद्य च राघवः ।
३] कृताऽञ्जलि-पुटो[3] भूत्वा वाक्यम्[3] एतद् उवाच ह ॥ ३ ॥ [३
भग-वन् वासम्[4] इच्छामि गुरु-वाक्याद्[4] इहाऽऽगतः ।
४] श्वः प्र-भाते गमिष्यामि प्रतीचीम् अभि-तो[5] दिशम् ॥ ४ ॥ [४
शत्रु-घ्नस्य वचः श्रुत्वा[6] जहर्ष[6] मुनि-पुङ्गवः ।
५] प्रत्य्-उवाच महाऽऽत्मानं स्व्-आगतं तेऽस्त्व्[7] इति प्र-भुः[7] ॥५॥ [५
स्वम् आ-श्रमम्[8] अभिप्राऽऽप्तस् त्वं रघूणां हि राघव[8] ।
६] आसनं पाद्यम् अर्घ्यं च निर्-विशङ्कः प्रतीऽच्छ[9] मे[9] ॥ ६ ॥ [६
प्रति-गृह्य ततः पूजां वन्यं च फल-भोजनम् ।
७] भक्षयामास काकुत्स्थस् तृप्तिं[10] च परमां ययौ[10] ॥ ७ ॥ [७
स भुक्तवान् महा-बाहुर् महर्षिं तम् उवाच ह ।
८] इयं यज्ञ-विभूतिर् वै[11] कस्याऽस्त्य्[12] अत्र समीप-तः ॥ ८ ॥ [८
तस्य[13] तद् भाषितं[13] श्रुत्वा वाल्मीकिर् वाक्यम् अब्रवीत् ।
९] शत्रु-घ्न शृणु यस्यैतद् बभूवाऽऽयतनं पुरा[14] ॥ ९ ॥ [९
१०पू] युष्माकं पूर्व-जो[15] राजा सु-दासस्य[16] महाऽऽत्मनः[16] ।[17]
११उ] पुत्रो मित्र-सहो नाम वीर्य-वान्[18] अति-धार्मिकः[19] ॥१०॥ [१०
स बाल एव सौदासो मृगयाम् अटते[20] नृ-प[20] ।
१२] चंक्रम्यमाणो ददृशे[21] वीर्य-वान्[22] राक्षस-द्वयम्[22] ॥११॥ [११
शार्दूल-रूपिणौ घोरौ मृगान् बहु-सहस्र-शः[23] ।
१३] भक्षयन्तौ महा-कायौ[24] पर्य्-आप्तिं[25] नैव जग्मतुः[25] ॥१२॥ [१२

---

१. च–प्रविवेश महामतिः । भ$_1$–जगाम स तमुत्त° । भ$_2$–अगमद्वासमुत्त° । २. भ$_1$ भ$_2$–ल्रिरथो । ३. ल$_2$–नास्ति । ४. च–वस्तुमिच्छामि गुरुकार्याद् । ५. च भ$_1$ भ$_2$–वारुणीं । ६. च–प्रहसन् । भ$_1$ भ$_2$–प्रहस्य । ७. च–ते नराधिप । ८. च–°मपदं सौम्य राघवाणां न संशयः । भ$_1$ भ$_2$–°ममिमं प्रा° । ९. अ भ$_1$ रा$_1$ प्र–°क्षसे । १०. च–तदन्नममृतोपमं । ११. भ$_1$ भ$_2$–तु । १२. च भ$_1$ भ$_2$–कस्याश्रमस° । १३. भ$_1$ भ$_2$–तस्यैतद्वचनं । १४. भ$_1$ भ$_2$–तदा । १५. च–पूर्वको । १६. च–°दासो नाम धर्मवित् । भ$_1$ भ$_2$–°सस्तस्य पार्थिवः । ल$_1$ ल$_3$ ब–सुदासस्य म° । १७. अतः परमधिकः पाठः—च–तस्य पुत्रो महाभागः सर्वास्त्रशस्त्र संयुगे । योद्धा दानपतिः क्षत्रः प्रजानां पालने रतः ॥ १८. च–सत्त्ववान् । भ$_1$ भ$_2$–रूपवान् । १९. भ$_1$ भ$_2$–मतिमान् बुधः । २०. च भ$_1$ भ$_2$–उपचक्रमे । २१. च–ददर्श । भ$_1$ भ$_2$–सोद्राक्षीत् । २२. भ$_1$ भ$_2$–राक्षसौ द्वौ महाबलौ । २३. च–तौ च स° । २४. च–असन्तुष्टौ । २५. च–न चैवालमभूत्तयोः । रा$_1$ ल$_3$ ब प्र–पर्याप्तं ॥

स तु[1] तौ राक्षसौ दृष्ट्वा[1] निर्-मृगं च वनं कृतम् ।
१४] क्रोधेन महताऽऽविष्टो जघानैकं महेषुणा[2] ।।[3]१३।।[१३
विनि-पात्य[4] तम् एकं तु सौदासः पुरुषर्षभः ।
१५] वि-ज्वरो विगताऽमर्षस् तद्[5] रक्षः समवैक्षत[5] ।।१४।। [१४
निर्-ईक्षमाणं तं दृष्ट्वा सहायस् तस्य रक्षसः ।
१६] सं-तापम्[7] अकरोत् क्रूरः[7] सौदासं चेदम् अब्रवीत् ।।१५।। [१५
यस्माद् अन्-अपराधं त्वं सहायं मम जघ्निवान् ।[8]
१७] तस्मात् त्वम् अपि पापिष्ठ[9] शापम्[10] उग्रम् अवाऽऽप्स्यसि[10] १६।[१६
एवम् उक्त्वा[11] तु तद् रक्षस् तत्रैवाऽन्तर्-अधीयत ।
१८] काल-पर्याय-योगेन[12] राजा मित्र-सहोऽप्य्[13] अथ[13] ।।१७।। [१७
स ईजे नृ-पतिः श्री-मान्[14] ममाऽऽश्रम-समीप-तः[15] ।[16]
१९] अश्व-मेधं महा-यज्ञं तं वसिष्ठोऽन्व्-अपालयत्[17] ।।१८।। [१८
ततो यज्ञो महांस् तस्य[18] सर्व-काम-समन्वितः[18] ।
२०] सम्-ऋद्धः परया लक्ष्म्या[19] देव-यज्ञ-समोऽभवत् ।।[20]१९।।[१९
अथाऽव-साने यज्ञस्य पूर्व-वैरम्[21] अनु-स्मरन्[21] ।
२१] वसिष्ठ-रूपी[22] राजानम् इति[23] होवाच[23] राक्षसः[24] ।।२०।। [२०
अस्य[25]यज्ञस्य कर्माऽन्ते[25] साऽऽमिषं[26]भोजनं मम[26] ।
२२] दीयताम् इति[27] शीघ्रं वै[27] परि-तुष्येद्[28] यथा गुरुः[28] ।।२१।। [२१
तच् छ्रुत्वा व्या-हृतं राजा[29] रक्षसा[30] ब्रह्म-रूपिणा[30] ।

---

१. भ$_1$ भ$_2$–दृष्ट्वा नृवरस्ताभ्यां । २. च–°षुभिः । ३. भ$_1$ भ$_2$–जघान परमक्रुद्धस्तयोरेकं वरेषुणा । ४. भ$_1$ भ$_2$–विनिहत्य । ५. च–बभूव रघुनन्दनः । ६. भ$_1$ भ$_2$–स रोषं । ७. च भ$_1$ भ$_2$–घोरं । ८. च–सखा ह्यनपराधोऽयं यन्मे निहतस्त्वया । ९. अ ल$_2$–काकुत्स्थ । भ$_1$ भ$_2$–°ष्ठां । १०. भ$_1$ भ$_2$–करिष्यामि प्रतिक्रियां । ११. भ$_1$ भ$_2$–उक्तस् । १२. भ$_1$ भ$_2$–°गाच्च । १३. च–वर्जं–°होऽभवत् । १४. भ$_1$ भ$_2$–धीमान् । १५. भ$_1$ भ$_2$–आश्रमस्य स° । १६. च–स राजा यजते सत्रे ह्यस्मिन्देशे नरर्षभ । १७. च भ$_1$ भ$_2$–वसिष्ठेनाभिपालितः । १८. भ$_1$ भ$_2$–आसीद्बहुवर्षगणायुतान् । अत आरभ्य–ल$_3$–२०-शश्लोकस्य २-यपादं यावन्नास्ति । १९. अ ल$_2$–भक्त्या । २०. भ$_1$ भ$_2$–समृद्धो दक्षिणाभ्यश्चैर्दक्षयज्ञसमः श्रिया । २१. भ$_1$ भ$_2$–°वैरः स राक्षसः । २२. भ$_1$ भ$_2$–°पो । २३. च–उवाचेदं स । २४. भ$_1$ भ$_2$–दारुणं । २५. च भ$_1$ भ$_2$–अस्यावसाने यज्ञस्य । २६. भ$_1$ भ$_2$–मह्यं सामिषभोजनं । २७. भ$_1$ भ$_2$–अद्य राजानं । २८. च–न च कार्या विचारणा । भ$_1$ भ$_2$–इति होवाच राक्षसः । २९. च भ$_1$ भ$_2$–वाक्यं । ३०. च–°सः कामरूपिणः ।।

२३] भक्ष्य-संस्कार-कुशलान् उवाच[1] पृथिवी-पतिः[2] ।।२२।। [२२
हविष्यम् आमिषं स्वादु यथा भवति भोजनम् ।
२४] तथा कुरुध्वं शीघ्रं वै परि-तुष्येद् यथा द्वि-जः ।।[3]२३।। [२३
२५पू] शासनात् पार्थिवेन्द्रस्य ततः[4] सम्भ्रान्त-चेतसः[5] ।
N] सं-चस्करुस् तथा क्षिप्रं[6] साऽऽमिषं सूप-कारकाः ।।[7]२४।। [N
२५उ] तच् च रक्षः पुनः कृत्वा सूद-वेशम्[8] उप-स्थितः ।[9] [२४उ
मानुषं चाऽपि[10] सं-स्कृत्य मांसं राज्ञे[10] न्य्-अवेदयत् ।
२६] इदं स्वादु हविष्यं च सं-स्कृतं[11] मांसम् आ-हृतम् ।।२५।। [२५
स भोजनं वसिष्ठाय पत्न्या सार्धम् उपाऽहरत् ।
२७] मदयन्त्या नर-श्रेष्ठः साऽऽमिषं राक्षसाऽऽहृतम् ।।२६[12]।। [२६
ज्ञात्वा तदाऽऽमिषं विप्रो[13] मानुषं भोजनाऽऽगतम्[13] ।
२८] तं[14] राजानं भृशं क्रुद्धो[14] व्या-हर्तुम् उप-चक्रमे ।।२७।। [२७
अ-भोजनम्[15] इदं यस्मान् मह्यं त्वं[15] दातुम् इच्छसि ।
२९] तस्माद् भोजनम् एतत् ते भविष्यति न सं-शयः ।।२८।। [२८
भार्यया[16] सहितो राजा[16] प्रणि-पत्य यथा-तथम्[17] ।
३०] पुनर् वसिष्ठं प्रोवाच यद्[18] उक्तं ब्रह्म-रूपिणा ।।[19]२९।। [३३
तं[20] ज्ञात्वा[20] पार्थिवेन्द्रस्य रक्षसोपाधिनाऽऽहृतम्[21] ।
३१] पुनः प्रोवाच राजानं[18] वसिष्ठः पुरुषर्षभम्[22] ।।३०[23]।। [३४
मया रोष-परीऽतेन[24] यद् इदं व्या-हृतं[25] वचः ।
३२] न तच् छक्यं वृथा[26] कर्तुं प्र-यच्छामि[27] च ते वरम् ।।[28]३१।। [३५
कालो द्वादश वर्षाणि शापस्याऽस्य[29] भविष्यति ।

---

१. च–°चाथ नराधिपः । २. च–गुरुः । ३. अतः परमधिकः पाठः—च–अथ रक्षः पुनस्तत्र तत्र वेशं समाहितः । ४. च–शीघ्रं । $भ_१$ $भ_२$–तदा । $ल_३$ ब–तथा । ५. च–°न्तमेव ह । $भ_१$ $भ_२$–°न्तमानसः । ६. अ–विप्राः । ७. च $भ_१$ $भ_२$–नास्ति । ८. अ $रा_१$ $ल_२$ $ल_३$ ब प्र–सूक्ष्मवे° । $भ_१$ $भ_२$–तदा वेषम् । ९. च–नास्ति । १०. च–मांसमानीय पार्थिवाय । ११. च–आमिषं । १२. अ $ल_२$ $ल_३$–नास्ति । १३. च–चैव वसिष्ठो मानुषं तदा । $भ_१$ $भ_२$–°भोजनं गते । १४. च–क्रोधेन महताविष्टो । १५. च–यस्मात्त्वं मानुषं मांसं ममेदं । १६. च–सभार्यः स तु राजा तं । १७. च–वर्जं–मुहुर्मुहुः । १८. $ल_३$ ब–नास्ति । १९. च–निवेदयामासतुस्तौ राक्षसस्य वचः स्वयं । २०. च $भ_१$ $भ_२$–तच्छ्रुत्वा । २१. च–°सोदाहृतं वचः । २२. च–द्विजसत्तमः । $ल_३$ ब–°भः । २३. ब प्र–नास्ति । २४. अ $ल_२$–शोकप° । २५. च $भ_१$ $भ_२$–भाषितं । २६. च–मृषा । २७. च $ल_१$–प्रदास्यामि । २८. $भ_१$ $भ_२$–नास्ति । २९. $भ_१$ $भ_२$–पर्यन्तोऽस्य ।।

३३] मत्-प्रसादात् तु राजेन्द्र अतीऽतं न स्मरिष्यसि ॥[1]३२॥ [३६
ततः क्रुद्धस् तु सौदासस् तोयं जग्राह पाणिना ।
३४] वसिष्ठं शप्तु-कामस् तु[2] भार्या चैनम् उवाच ह[2] ॥३३॥ [२९
राजन् प्र-भवतेऽस्माकं वसिष्ठो भग-वान् ऋषिः ।
३५] अभि-शप्तुं[3] न युक्तं[4] ते[5] देव-भूतं[6] पुरो-धसम् ॥३४॥ [३०
स तु क्रोध-मयं[7] तोयं[8] तेजो-बल-समन्वितम् ।
३६] व्य्-असर्जयत धर्माऽऽत्मा स्वौ[9] पादाव् अभ्य्-अषेचयत्[10] ॥३५॥[३१
तेनाऽस्य राज्ञस् तौ पादौ तत्र[11] कल्माष-तां गतौ ।
३७] तदा-प्रभृति राजाऽसौ सौदासः सु-महाबलः[12] ।
३८पू] कल्माष-पादः सं-वृत्तः ख्यायते च महान् नृ-पः ॥३६॥ [३२
N] एवं स राजा तच्-छापम् उप-भुज्याऽरि-मर्दनः ।[13]
३८उ] प्रति-लभ्य पुना राजा राज्यं चैवाऽन्व्-अपालयत् ॥[14]३७॥[३७
तस्य कल्माष-पादस्य यज्ञस्याऽऽयतनं शुभम् ।[15]
३९] आ-श्रमस्य[16] समीपेऽस्मिन् यत्[16] त्वं पृच्छसि राघव[17] ॥[18]३८॥[३८
तस्य[19] तां पार्थिवेन्द्रस्य[19] कथां श्रुत्वा सु-दारुणाम् ।
४०] विवेश पर्ण-शालायां[20] मुनिं समभि-वाद्य सः[20] ॥३९[21]॥[३९

इत्यार्षे रामायण उत्तर-काण्डे सौदासोपाख्यानं

नामाऽष्टाषष्टितमः सर्गः ॥ ६८[22]॥

---

१. च भ$_1$ भ$_2$–नास्ति। २. च–च भार्या चैनं न्यवारयत् । ३. च भ$_1$ भ$_2$–प्रतिशप्तुं। ४. भ$_1$ भ$_2$ रा$_1$ ल$_1$ ब प्र–युक्तस्। ५. अ भ$_1$ भ$_2$ रा$_1$ ल$_1$ ल$_3$ ब प्र–त्वं । ६. भ$_1$ भ$_2$–देवतुल्यं। ७. भ$_1$ भ$_2$–क्रोधसमं। ८. च–वह्निं। ९. च–तस्य। भ$_1$ भ$_2$–ततः। १०. च–सिषेच सः। भ$_1$ भ$_2$–सिषेच च। ११. च भ$_1$ भ$_2$–दग्धौ । १२. च–पृथिवीपतिः। १३. च भ$_1$ भ$_2$–नास्ति। १४. च–पुनर्लेभे तदा राज्यं प्रजाश्चैवाभ्यपालयत्। भ$_1$ भ$_2$–इक्ष्वाकोस्तु नरव्याघ्र स च यज्ञसमाप्यत। १५. च–तस्येदं राजसिंहस्य यज्ञायतनमद्भुतं। भ$_1$–°दस्य पुण्यमाय°। १६. अ–°पेऽस्य यत्। च–°पे हि यत्। भ$_1$–°मश्चेदभितो यस्। भ$_2$–°मस्यैतदभितो यस्। १७. भ$_1$ भ$_2$–पार्थिव। १८. अतः परमधिकः पाठः—भ$_1$ भ$_2$–इति स मुनिवचो निशम्य राजा कुलवंशविवर्धनस्तदानीं। महर्षिमभिगम्य पर्णशालां कृशतनुः॥ १९. भ$_1$ भ$_2$–स तस्य राज्ञः शत्रुघ्नः। २०. भ$_1$ भ$_2$–°लां च ऋषिं तमभिवाद्य च। २१. च–इति स मुनिवचो निशम्य राजा कुलवंशविवर्धनस्तदानीं। महर्षिमभिगम्य पर्णशालां कृशतनुः। २२. च–नात्र सर्गसमाप्तिः॥

याम्[1] एव वेलां शत्रु-घ्नः पर्ण-शालां समाऽविशत् ।
१] ताम् एव वेलां सीताऽपि प्र-जज्ञे दारक-द्वयम् ॥ १ ॥ [१
ततोऽर्धरात्र-समये बालका मुनि-दारकाः ।
२] वाल्मीकेः प्रियम् आ-चख्युः सीताया दारक-द्वयम् ॥ २[2] ॥ [२
३उ] तत्र रक्षां महर्षे त्वं सर्व-भूत-विनाशिनीम्[3] । [३उ
N] कुरुष्व मुनि-शार्दूल सीताया बालयोर् द्वयोः ॥[4] ३ ॥ [N
तेषां तद् भाषितं श्रुत्वा मुनिर् हर्षम् उपाऽऽगतः । [४पू
४] हृष्टश् चैवाऽकरोत् ताभ्यां रक्षां भूत-विनाशिनीम् ॥ ४[5] ॥ [५उ
कुश-मुष्टिम् उपाऽऽदाय लवं[6] चैव महा-द्युतिः[6] ।
५] वाल्मीकिः प्र-ददौ[6] ताभ्यां रक्षां भूत-विनाशिनीम्[6] ॥ ५[7] ॥ [६
यस्[8] तयोः पूर्व-जातस् तु[8] स कुशैर् मन्त्र-संहितैः[9] ।
६] निर्-मार्जनीयस्[10] त्व् अभवन् नाम्ना स च कुशोऽभवत्[10] ॥६॥ [७
यश् चाऽपरस् तयोस् तत्र स लवेन समा-हितः ।
७] निर्-मार्जनीयो[11] वृद्धाभिर्[11] लवश्[11] चेति स नाम-तः[12] ॥७॥ [८
एवं कुश-लवौ नाम्ना यमलौ[13] सं-बभूवतुः[14] ।
८] भावेन कृत-नामानौ मुन(?नेर् )यो(?यौ) रक्षया च तौ ॥[15] ८॥ [९
तां रक्षां प्रति-गृह्याऽऽशु[16] मुनेर् हस्तात्[17] समा-हिताः[17] ।
९] अकुर्वन्त ततो[18] रक्षां तापस्यो[19] गत-कल्मषाः[19] ॥[20] ९ ॥ [१०

---

१. अत आरभ्य च-७-मश्लोकस्य पूर्वार्धं यावन्नास्ति । २. प्र-नास्ति । अतः परमधिक. पाठः—भ$_1$ भ$_2$ ल$_1$-भगवन्रामपत्नी सा प्रसूता दारकद्वयम् । ३. भ$_1$ भ$_2$-कुरु भू° । ४. भ$_1$ भ$_2$-नास्ति । ५. भ$_1$ भ$_2$-लवैरेवाऽभिरक्षणं । ६. भ$_1$ भ$_2$-प्रययौ स्नेहात्ताभ्यां रक्षां विधापितुं । ७. ल$_3$ ब-नास्ति । ८. भ$_1$ भ$_2$-योऽनयोः प्रथमं जातः । ९. भ$_1$ भ$_2$-मन्त्रसत्कृतैः । १०. भ$_1$ भ$_2$-°नीयो नाम्ना वै ततः कुश इति स्मृतः । ११. च-प्रविवेश राजवृ° । १२. च-नाम्ना स भविता लवः । भ$_1$ भ$_2$-नाम्ना स लवोऽभवत् । १३. च-तावुभौ । भ$_1$ भ$_2$-तौ यमौ । १४. च-यमजातकौ । १५. च-सत्कृताभ्यां च नामाभ्यां लोकख्यातिं गमिष्यतः । भ$_1$ भ$_2$-भगवन्नूकृतनामानौ विधिवद्रक्षया च तौ । १६. अ च भ$_1$ भ$_2$ ल$_2$-°ह्याथ । ल$_3$ ब प्र-परिगृ° । १७. अ रा$_1$ ल$_1$ ल$_2$-हर्षसमाधिना । भ$_1$-तस्य स° । १८. च भ$_1$ भ$_2$-तदा । १९. च-तयोर्भूतविनाशिनीं । २०. अतः परमधिकः पाठः—प्र-एवं कुशलवौ नाम्ना यमलौ एव बभूवतुः । भगवत्कृतनामानौ सुकृतौ रक्षया युतौ । माङ्गल्ये क्रियमाणे तु सीताया नामगोत्रतः ॥

सं-जल्प्य[1] क्रियमाणायां[2] रक्षायां नाम-गोत्र-तः[2] ।
१०] सं-कीर्तनं[3] तु[4] रामस्य सीतायाः प्रथमं[5] तथा ॥१०॥ [११
अर्ध-रात्रे स[6] शत्रु-घ्नः[7] शुश्राव सु-महत्[8] प्रियम्[8] ।
११] पर्ण-शालां गतो रात्रौ दिष्ट्या दिष्ट्येति चाऽब्रवीत् ॥११॥ [१२
तथा तस्य प्र-हृष्टस्य शत्रु-घ्नस्य महाऽऽत्मनः ।
१२] व्यतीऽता वार्षिकी रात्रिर् न[9] शीता न च घर्म-दा[9] ॥१२॥ [१३
प्र-भाते तु महा-वीर्यः कृत्वा पूर्वाऽह्णिकं[10] क्रमम्[10] ।
१३] प्राऽञ्जलिर् मुनिम् आ-मन्त्र्य प्राऽयात् पश्चान्-मुखः शनैः[11]।[12]१३[१४
स गत्वा यमुना-तीरं सप्तरात्रोषितः पथि ।
१४] ऋषीणां पुण्य-कीर्तीनाम् आ-श्रमे[13] वासम् अभ्य्-अयात्[13] १४[१५
स[14] तत्र मुनिभिः[14] सार्धं[15] भार्गव-प्रमुखैर् नृपः[15] ।
१५] कथाभिर् बहु-रूपाभिर् वासं चक्रे महा-यशाः ॥[16]१५॥[१६

इत्यार्षे रामायण उत्तर-काण्डे कुशलव-जन्म[17]

नामैकोनसप्ततितमः सर्गः ॥ ६९ ॥

---

## [ वं-७३ ] = [ सप्ततितमः सर्गः ] = [ दा-६७ ]

१पू] अथ रात्र्यां व्यतीऽतायां शत्रु-घ्नः शत्रु-तापनः[18] ।
पप्रच्छ च्यवनं विप्रं लवणस्य बलाऽबलम् ॥[19]१ ॥ [१
२] शूलस्य च बलं ब्रह्मन् के च पूर्वं नि-पातिताः ।
रक्षसा शूल-मुख्येन द्वन्द्व-युद्धे महा-मुने ॥[20]२ ॥ [२

---

१. च–मंगलं । २. च–°माणं च रक्षणं गोत्रनाम च । भ$_1$ भ$_2$–°णे तु सीतया ना° । ३. भ$_1$ भ$_2$–°नाच् । ४. च भ$_1$ भ$_2$–च । ५. च–वर्जं–प्रसवं । ६. च–°थ । ७. भ$_1$ भ$_2$–काकुत्स्थः । ८. च–मधुरं तथा । ९. च–श्रावणी लघुविक्रमा । १०. च–°किं विधिं । ११. भ$_1$ भ$_2$–नृपः । रा$_1$ ल$_1$ ल$_3$ ब–पुनः । १२. च–ययौ प्राञ्जलिरामन्त्र्य मुनिं तेन विसर्जितः । १३. च भ$_1$ भ$_2$–अकरोद्वासमाश्रमे । १४. भ$_1$ भ$_2$–शत्रुघ्नो ऋषिभिः । १५. च–तदा । भ$_1$ भ$_2$–वृतः । १६. अतः परमधिकः पाठः—च–सकांचनाद्यैर्मुनिभिः समेतो रघुप्रवीरो रजनीं तदानीं । कथाप्रकारैर्बहुभिर्महात्मा विरामयामास नरेन्द्रसूनुः ॥ १७. च–°लवोत्पत्तिर् । भ$_1$ भ$_2$–यमुनातीरवासो । १८. च भ$_1$ भ$_2$–रघुनन्दनः । १९. भ$_1$ भ$_2$–उवाच परमां वाणीं लवणः किंपराक्रमः । २०. च–तेन शूलेन भगवन्कथयस्व ममानघ । भ$_1$ भ$_2$–°युद्धमुपागताः ॥

३] तस्य तद् भाषितं श्रुत्वा शत्रु-घ्नस्य महाऽऽत्मनः ।
प्रत्य्-उवाच महा-तेजाश् च्यवनो रघु-नन्दनम्[1] ॥ ३ ॥ [३
४] अ-संख्येयानि[2] कर्माणि यान्य्[3] अस्य पुरुषर्षभ[3] ।
इक्ष्वाकु-वंश-प्रभवे यद् वृत्तं शृणु[4] तन् मम[4] ॥ ४ ॥ [४
५] अयोध्यायां पुरा राजा युवनाऽश्व-सुतो बली ।
मान्धाता इति वि-ख्यातस् त्रिषु लोकेषु वीर्य-वान्[5] ॥ ५ ॥ [५
६] स कृत्वा[6] पृथिवीं सर्वां[7] शासने[7] पृथिवी-पतिः ।
सुर-लोकम्[8] अथो जेतुम्[8] उद्-योगम्[9] अकरोन् नृ-पः[9] ॥ ६ ॥ [६
७] इन्द्रस्य च[10] भयं तीव्रं सुराणां[11] च[12] महाऽऽत्मनाम्[12] ।
मान्धातरि कृतोद्योगे देव-लोक-जिगीषया[13] ॥ ७ ॥ [७
८] सोऽर्धाऽऽसनेन शक्रस्य[14] राज्याऽर्धेन च पार्थिवः ।
वन्द्यमानः[15] सुर-गणैः प्रति-ज्ञां चाऽति-चक्रमे[16] ॥ ८ ॥ [८
९] तस्य पापम् अभिप्राऽयं विदित्वा पाक-शासनः ।
सान्त्व-पूर्वम् इदं वाक्यम् उवाच युवनाऽश्व-जम् ॥ ९ ॥ [९
१०] राजंस्[17] त्वं मानुषे[18] लोके[18] न तावत् पुरुषर्षभ[19] ।
अ-कृत्वा पृथिवीं वश्यां देव-राज्यम् इहेच्छसि ॥[20] १० ॥ [१०
११] यदि वीर समग्रा ते मेदिनी सागराऽम्बरा[21] ।
देव-राज्यं कुरुष्वेह स-भृत्य-बल-वाहनः[22] ॥ ११ ॥ [११
१२] इन्द्रम्[23] एवं ब्रुवाणं तु[23] मान्धाता वाक्यम् अब्रवीत् ।
क्व मे प्रति-हतं शक्र शासनं पृथिवी-तले ॥ १२ ॥ [१२
१३] तम्[24] उवाच सहस्राऽक्षो[24] लवणो नाम दानवः[25] ।
मधु-पुत्रो[26] मधु-वने राज्यं[27] स[27] कुरुते तव[28] ॥ १३ ॥ [१३

---

१. भ१ भ२–भृगुनन्दनः । २. भ१ भ२–अप्रमेयानि । ल२–°याणि । ३. ल२–पापस्यैतस्य राघव । भ१–यान्यासन्रघुनन्दन । भ२–°स्य रघुनन्दन । ४. च–तच्छृणुष्व मे । ५. च–राघव । ६. च–गत्वा । ७. च–राजा स्ववशां । ८. भ१ भ२–°कजयं प्राप्तुं । ९. च–अकरोन्मतिमात्मवान् । १०. च रा१ ल३ ब प्र–तु । ११. भ१ भ२–देवानां । १२. च–चाभवत्तदा । १३. अ–°कं जि° । रा१ ल१ ल२ ल३ ब प्र–°कं जिगीषति । १४. रा१ ल२ ल३ ब प्र–पार्थस्य । १५. भ१–छन्द्य° । १६. भ१–चाजहात्तदा । भ२–चाजहत्तदा । १७. च–वशे । १८. च–°षं लोकं । १९. च–कुरुषेऽनघ । २०. च–तद्भुञ्जन्महीं कृत्स्नां कथं रा° । भ१ भ२–°ज्यं न ते क्षमं । २१. च–निखिला वशे । २२. अ–°न । भ१–सपुत्रब° । भ२–ससैन्यब° । २३. भ१ भ२–इन्द्रस्येतिब्रुवाणस्य । २४. च–शक्रस्तु प्रत्युवाचाथ । २५. च भ१ भ२–राक्षसः । २६. भ१ भ२–मधोः पुत्रो । २७. च–नाज्ञां ते । २८. च–नृप ॥

१४] तच् छ्रुत्वा वि-प्रियं[1] वाक्यं[1] सहस्राऽक्षेण भाषितम्[2] ।
व्रीडितोऽवाङ्-मुखो[3] राजा व्या-हर्तुं[4] न शशाक ह[4] ॥१४॥ [१४

१५] आ-मन्त्र्य च सहस्राऽक्षं ह्रिया किं-चिद् अवाङ्-मुखः ।
पुनर् एवाऽगमच् छ्रीमान्[5] इमं लोकं[5] नरेश्वरः ॥१५॥ [१५

१६] स कृत्वा हृदयेऽमर्षं स-भृत्य-बल-वाहनः ।
आ-जगाम[6] मधोः पुत्रं वशे कर्तुम्[7] अ-निर्जितम्[8] ॥१६॥ [१६

१७] सं-काङ्क्षमाणो लवणं[9] युद्धाय पुरुषर्षभ[9] ।
दूतं सम्प्रेषयामास सकाशं लवणस्य वै[10] ॥१७॥ [१७

१८] स गत्वा वि-प्रियाण्य् आह[11] सु-बहूनि[12] मधोः सुतम् ।
वदन्तम्[13] एवं दूतं तं[13] भक्षयामास[14] राक्षसः ॥१८॥ [१८

१९] चिरायमाणे दूते तु राजा क्रोध-समन्वितः ।
आ-ह्वयामास[15] तद् रक्षः[16] क्रुद्धः शत्रुं समन्त-तः[17] ॥[18]१९॥ [१९

२०] ततः प्र-हस्य लवणः शूलं जग्राह[19] पाणिना[19] ।
वधाय साऽनु-बन्धस्य तस्य[20] राज्ञो मुमोच ह[20] ॥२०॥ [२०

२१] तच् छूलं दीप्यमानं तु स-भृत्य-बल-वाहनम्[21] ।
भस्मी-कृत्वा[22] नृ-पं भूयो[22] लवणस्याऽऽगमत् करम् ।[23] [२१

२२] एवं स राजा बल-वान्[24] हतः स-बल-वाहनः ॥२१॥ [२२पू

---

१. च-भाषितं घोरं । भ१ भ२-सुमहद्वाक्यं । २. च-धीमता । ३. भ१ भ२-°तोऽधोमुखो । ४. भ१ भ२-सः । ५. भ१ भ२-शीघ्रं मर्त्यलोकं । ६. भ१ भ२-आगम्य तं । ७. च भ१ भ२-वर्जे-वशीकर्तुं । ८. च-वर्जे-प्रचक्रमे । ९. च-युद्धं तु लवणेन नरोत्तमः । १०. च-तु । भ१ भ२-ह । ११. च भ१ भ२-वर्जे-आशु । १२. च-°न्येव । १३. च-राजवाक्यात्ततो दूतं । १४. च-भर्त्सयामास । १५. च-गत्वाभ्यद्रवद् । १६. अ रा१ ब प्र-छक्कः । १७. च-शरवृष्ट्या स° । भ१ भ२-गत्वा सर्वास्त्रविन्नृपः । १८. अतः परमधिकः पाठः—च भ१ भ२-वर्जे-आह्वयामास तद्राजा गन्धर्वास्त्रं च विक्रमी । १९. च-चिक्षेप दारुणं । २०. च-मुमोचायुधमुत्तमं । २१. च-नृपं स बलवाहनः । २२. च-°कृत्य ततस्तूर्णं । २३. अतः परमधिकः पाठः—च भ१ भ२-वर्जे-एतत्ते सर्वमाख्यातं लवणस्य महद्बलम् । च-वर्जे-शूलस्य च बलं घोरमप्रमेयं नरर्षभ । च भ१ भ२-वर्जे-विनाशश्चैव मांधातुर्यत्नवान्भव पार्थिव । २४. च-सुमहान् ॥

२३उ ]श्वः प्र-भाते तु[१] लवणं वधिष्यसि[२] न सं-शयः ।
२४पू ]अ-गृहीताऽऽयुधं सौम्य[३] ध्रुवो हि वि-जयस् तव ।[४] [२३
N] शूल-पाणिः स ते वर्ज्यो हन्तव्यस् तद्-विना-कृतः ॥[५]२४॥ [N

इत्यार्षे रामायण उत्तर-काण्डे मान्धात्रुपाख्यानं नाम
सप्ततितमः सर्गः ॥ ७०[६] ॥

---

## [वं-७४]= [ एकसप्ततितमः सर्गः ] =[ दा-६८ ]

ततस्[७] तच्[८] छृण्वतस्[८] तस्य जयं चाऽऽकाङ्क्षतः शुभम् ।
१] व्यतीऽता रजनी क्षिप्रं[९] शत्रु-घ्नस्य महाऽऽत्मनः ॥ १ ॥ [१
ततः प्र-भाते वि-मले तस्मिन् काले स राक्षसः ।
२] विनिर्-गतः[१०] पुराद्[१०] वीरो भक्ष-हेतोर्[११] महा-बलः[११] ॥२[१२]॥ [२
एतस्मिन् अन्तरे शूरः शत्रु-घ्नो यमुनां नदीम्[१३] ।
३] तीर्त्वा मधु-पुर-द्वारि धनुष्-पाणिर् अधि-ष्ठितः ॥ ३ ॥ [३
ततोऽर्ध-दिवसे प्राऽऽप्ते तद् रक्षो घोर-दर्शनम्[१४] ।
४] आऽगमद्[१५] बहु-साहस्रं प्राणिनां भारम् उद्-वहन् ॥ ४ ॥ [४
ततोऽपश्यत्[१६] स शत्रु-घ्नं स्थितं द्वारि धृताऽऽयुधम्[१७] ।
५] उवाच प्र-हसन्[१८] रक्षो धनुषा किं[१८] करिष्यसि ॥ ५ ॥ [५
ईदृशानां सहस्राणि साऽऽयुधानां नराऽधम[१९] ।
६] भक्षितानि मया रोषात्[२०] कालम्[२१] आ-काङ्क्षसेऽत्र किम्[२१]॥[२२]६॥[६
आ-हारश् चाऽप्य् अ-सम्पूर्णो ममाऽद्य[२३] पुरुषाऽधम ।
७] स्वयम् आस्यम् अनुप्राऽऽप्तो[२४] दुर्-बुद्धे[२५] नाऽव-बुध्यसे[२५]॥७॥ [७

---

१. च भ$_{1}$ भ$_{1}$–वर्जं–च । २. भ$_{1}$ भ$_{2}$–निहन्तासि । ३. भ$_{1}$ भ$_{2}$–वीर । ४. च–नास्ति । ५. च–त्वं श्वः प्रभाते लवणं महात्मन्वधिष्यसे नात्र तु संशयो मे । शूलं विना निर्गतमामिषार्थे ध्रुवो जयस्ते भविता नरेन्द्र । ६. भ$_{1}$ भ$_{2}$–नास्त्यत्र सर्गसमाप्ति । ७. भ$_{1}$ भ$_{2}$–कथां । ८. च–वर्जं–कथयतस् । ९. भ$_{1}$ भ$_{2}$–शीघ्रं । १०. च भ$_{1}$ भ$_{2}$–निर्गतः स्वपु° । ११. अ–°तोर्महामनाः । च भ$_{1}$ भ$_{2}$–भक्षार्थी सुम° । १२. प्र–नास्ति । १३. च–तदा । १४. अ च भ$_{1}$–°नः । १५. रा$_{1}$ ल$_{1}$ ल$_{2}$ ल$_{3}$ ब प्र–अग° । १६. च–ततो ददर्श । १७. अ–कृता° । १८. च–चैनं प्रहसन्किमनेन । १९. च भ$_{1}$–नराधिप । २०. ल$_{1}$ ल$_{2}$ ल$_{3}$ प्र–क्रोधात् । २१. भ$_{1}$ भ$_{2}$ रा$_{1}$ ल$_{1}$ ल$_{2}$ ल$_{3}$ प्र–कालेनानुगतो ह्यसि । २२. अ ब–नास्ति । २३. ल$_{1}$ ल$_{2}$ ल$_{3}$ प्र–ममायं । २४. च–आस्ये प्रविष्टो मे । २५. च भ$_{1}$ भ$_{2}$–कथमद्य विमोक्षसे ॥

तस्यैवं भाषमाणस्य हसतश् च मुहुर्-मुहुः ।
८] शत्रु-घ्नो रोष-सम्पन्नो[1] रोषाद्[2] अनूण्य् अवर्तयत् ॥ ८ ॥ [८
तस्य रोषाऽभिभूतस्य शत्रु-घ्नस्य महाऽऽत्मनः ।
९] गात्रेभ्यश् चाऽभिनिष्-पेतुस् तेजो-मय्यो मरीचयः ॥[3]९[4]॥ [९
उवाच[5] च[5] स शत्रु-घ्नः सं-क्रुद्धः पुरुषाऽऽदकम्[6] ।
१०] योद्धुम् इच्छामि दुर्-बुद्धे द्वन्द्व-युद्धम्[7] उपैहि माम्[7] ॥१०॥ [१०
पुत्रो दश-रथस्याऽहं भ्राता रामस्य धी-मतः ।
११] शत्रु-घ्नो नाम दुर्-बुद्धे[8] वधाऽऽकाङ्क्षी[9] तवाऽऽगतः[9] ॥११॥ [११
तस्य[10] मे युद्ध-कामस्य[10] द्वन्द्व-युद्धं प्र-दीयताम् ।
१२] शत्रुस् त्वं सर्व-भूतानां न मे जीवन् वि-मोक्ष्यसे ॥१२॥ [१२
तथा[11] तस्य ब्रुवाणस्य राक्षसः[11] प्र-हसन् वचः ।
१३] प्रत्य्-उवाच नर-व्याघ्रं दिष्टया प्राऽऽप्तोऽसि दुर्-मते ॥१३॥ [१३
मम मातुः स्व-को भ्राता दश-ग्रीवो महा-बलः ।
१४] हतो रामेण दुर्-बुद्धे स्त्री-हेतोः पुरुषाऽऽदकः ॥[12]१४॥[१४
स[13] तु सर्वो मया क्षान्तो[13] रावणस्य कुल-क्षयः[14] ।
१५] अवज्ञा-पूर्वकं तन् मां दहत्य् अग्निर् इवाऽऽशयम् ॥[15]१५॥[१५
इक्ष्वाकवो मया[16] सर्वे परि-भूता[17] यथा तृणम्[18] ।
१६] भूताश् चैव भविष्याश् च ये[19] युष्माकं नराऽधम[19] ॥१६[20]॥[१६
तस्य ते योद्धु-कामस्य[21] युद्धं दास्यामि दुर्-मते ।
१७] ईप्सितं यादृशं तुभ्यं[22] यावद् आ-युधम् आ-नये[22] ॥[23]१७॥[१७

---

१. च भ१ भ२–वीर्यस° । २. अ रा१ ल२ ल३ ब प्र–हर्षाद् । ३. च–निश्चेरु सर्वगात्रेभ्यस्ते° । भ१ भ२–तेजोमयो मरीच्यग्निर्गात्रेभ्यो निपपात ह । ४. ल३ ब–नास्ति । ५. भ१ भ२–°चाथ । प्र–चैव । ६. च–तं निशाचरं । ७. च–°द्धं त्वया सह । रा१ ल३ ब–अत आरभ्य ११शश्लोकतृतीयपादं यावन्नास्ति । ८. भ१ भ२–दुष्टात्मन् । ९. रा१ ल३ ब–नास्ति । १०. च–मम युद्धाभिका° । भ१ ल१ ल२–°योद्धुका° । ११. च–तस्मिंस्तथा ब्रुवाणे तु । १२. च–नास्ति । १३. च–°या हतो । भ१ भ२–तं चाहं मर्षयन्सर्वं । १४. भ१ भ२–°यं । १५. च–अवज्ञां तु पुरस्कृत्य भवंतं भक्षयाम्यहं । भ१–अद्य तेऽवज्ञया तन्मे द° । भ२–नास्ति । १६. च–हि मे । १७. च–परिज्ञाता । १८. च भ१ वर्ज–नृणां । १९. च–यूयं च पुरुषाधमाः । २०. भ२–नास्ति । २१. च–युद्ध° । २२. च–यत्र सज्जयेथास्त्वमायुधं । भ१ भ२–यत्र सज्जयस्तं ममायुधं । २३. अतः परमधिकः पाठः—च–तिष्ठ च त्वं मुहूर्तं हि यावदायुधमानये ॥

शत्रु-घ्नस्[1] त्व् अब्रवीद्[1] वाक्यं न मे जीवन् गमिष्यसि ।
१८] आ-गतो[2] दर्शनं[3] शत्रुर् न मोक्तव्यः कथं[4] चन[4] ॥१८॥ [१८
यो हि वि-क्लवया बुद्ध्या प्र-ददाति[5] रणं रिपोः[5] ।
१९] स हन्यते मन्द-बुद्धिर् यथा का-पुरुषस् तथा ।[6] [१९
N] विमुक्त-बाहुर्[7] युध्यस्व[8] वध्योऽसि मम दुर्-मते ॥[9]१९॥ [N

इत्यार्षे रामायण उत्तर-काण्डे शत्रुघ्न-वाक्यं
नामैकसप्ततितमः सर्गः ॥ ७१[10]॥

---

## [ वं-७५ ]= [ द्विसप्ततितमः सर्गः ] =[ दा-६६ ]

तच्[11] श्रुत्वा भाषितं तस्य[11] शत्रु-घ्नस्य महाऽऽत्मनः ।
१] रोषम् आऽहारयत् तीव्रं राक्षसः[12] स नरोत्तमे ॥ १ ॥ [१
नि-पीड्य[13] पाणिना पाणिं दन्तैर् दन्तांस् तथा पिषन् ।
२] भारं च भुवि नि-क्षिप्य[13] तिष्ठ तिष्ठेति चाऽब्रवीत् ॥[14]२ ॥ [२
तं ब्रुवाणं तथा[15] वाक्यं[16] लवणं भीम-विक्रमम् ।
३] शत्रु-घ्नो देव-शत्रु-घ्न इदं वचनम् अब्रवीत् ॥ ३ ॥ [३
शत्रु-घ्नो न तदा जातो यदाऽन्ये[17] निर्-जितास्[17] त्वया ।
४] तद् अद्य बाणाऽभिहतो[18] व्रज[19] त्वं[19] यम-सादनम् ॥ ४ ॥ [४
ऋषयोऽद्यैव[20] पापाऽऽत्मन् मयाऽद्य नि-हतं[20] रणे ।
५] पश्यन्तु[21] शर-विद्धाऽङ्गं[21] त्रि-दशा इव रावणम् ॥ ५ ॥ [५

---

१. $भ_1$ $भ_2$–तमुवाच स.शत्रुघ्नो । २. च–गतो हि । ३. $भ_1$ $भ_2$–°ने । ४. च $भ_1$ $भ_2$–कृतात्मभिः । ५. च–प्रदद्यात्प्रशवं रि° । $भ_1$–प्रहारं छात्रवं रि° । $भ_2$–प्रहरेच्छत्रवे रिपुः । ६. च–स महान्मन्दबुद्धिः स्यात्स लोके पुरुषाधमः । $भ_1$ $भ_2$–हन्यते मन्दबुद्धित्वात्सोऽपि कापुरुषः स्मृतः । अतः परमधिकः पाठः—च–तस्मात्प्रहृष्टं कुरु जीवलोकं शरैः शितैस्त्वां विमलैर्नयामि । यमस्य गेहाभिमुखं हि पापं रिपुं त्रिलोकस्य सदेवकस्य ॥ ७. $भ_1$ $भ_2$–किमुक्त्वा बहु । ८. च $भ_1$ $भ_2$–वर्जं–युद्धस्व । ९. च–नास्ति । १०. $भ_1$ $भ_2$–नास्त्यत्र सर्गसमाप्तिः । ११. $भ_1$ $भ_2$–श्रुत्वा रोषपरीतस्य । १२. च–वर्जं–नास्ति । १३. च–पाणौ पाणिं विनिक्षिप्य दन्तान्कटकटाय्य च । अ $ल_2$ $ल_3$ ब–अत आरभ्य तृतीयपादं यावन् नास्ति । १४. $भ_1$ $भ_2$ $ल_1$ प्र–लवणो रघुशार्दूलं राक्षसः स नरान्तकः । १५. च $भ_1$ $भ_2$-तदा । १६. च–पापं । १७. $भ_1$ $भ_2$–यदा वान्ये हतास्त । अ $रा_1$ $ल_1$ $ल_2$ $ल_3$ ब प्र–°न्ये विजितास् । १८. च–ममाद्य बा° । $भ_1$ $भ_2$–शत्रुघ्नबा° । १९. $भ_1$ $भ_2$–यास्यसे । २०. च–°यस्त्वद्य पश्यन्तु पापात्मानं हतं । २१. च–मदीयश° । $भ_1$ $भ_2$–प्रपश्यन्तु महात्मनः ॥

त्वयि मद्-बाण-निर्दग्धे पतितेऽद्य निशा-चरे[1] ।
६] पुरे जन-पदे[2] चाऽपि[2] निर्-वृत्तिश्[3] च[3] भविष्यति ॥ ६ ॥ [६
अद्य मच्-चाप-निर्मुक्तः[4] शरो वज्र-निभ-द्युतिः[5] ।
७] प्र-वेक्ष्यते ते हृदयं पद्मम् अंशुर् इवाऽर्क-जः ॥ ७ ॥ [७
ततः[6] प्र-गृह्य वृक्षं तु[6] लवणः क्रोध-मूर्च्छितः ।
८] शत्रुघ्नोरसि[7] चिक्षेप तं[8] शूरो बहुधाऽच्छिनत्[8] ॥ ८ ॥ [८
तद् दृष्ट्वा वि-फलं कर्म राक्षसः पुनर् एव च[9] ।
९] वृक्षान्[10] अन्-एकान् उत्-पाट्य[10] शत्रु-घ्नेऽन्व्-असृजद्[11] बली[11] ९ [९
शत्रु-घ्नश् चाऽपि तेजस्वी वृक्षान् आ-पततो बहून् ।
१०] चिच्छेद सायकैस् तीक्ष्णैर् एकैकं सप्त-धा[12] छिनत्[13](?न्) ।[14] १० ।[१०
ततो बाण-मयं वर्षम् असृजद् राक्षसोरसि[15] ।
११] शत्रु-घ्नो वीर्य-सम्पन्नो विव्यथे[16] न[16] च राक्षसः ॥ ११ ॥ [११
ततः प्र-हस्य लवणो वृक्षम्[17] उत्-पाट्य लीलया ।
१२] शिरस्य् अभि-हतः[18] शूरः[18] स्रस्ताऽङ्गः स[19] पपात ह[19] ॥१२॥ [१२
तस्मिन् नि-पतिते भूमौ हाहा-कारो महान् अभूत् ।
१३] ऋषीणां देव-सङ्घानां[20] गन्धर्वाऽप्सरसाम्[21] अपि[21] ॥१३॥ [१३
तं[22] तु वृक्ष-हतं दृष्ट्वा[22] शत्रु-घ्नं विनि-पातितम्[23] ।
१४] रक्षो लब्धाऽन्तरम् अपि[24] न विवेश[24] स्वकं[25] गृहम्[25] ॥१४॥ [१४
नाऽपि शूलं प्र-जग्राह तं[26] दृष्ट्वा भुवि पातितम्[26] ।[27]
१५] ततो हतम् इति ज्ञात्वा तं[28] भक्ष्यं समुपाऽहरत्[28] ॥१५॥ [१५

---

१. ल ब-°चरे । २. च-°दे चैव । ३. अ ब-°त्तिः प्रभ° । च-वनमेतद् । भ$_1$ भ$_2$-शिवमेतद् । ४. च-°निष्क्रान्तः । भ$_1$ भ$_2$-°निक्षिप्तः । ५. च-°निभाननः । भ$_1$ भ$_2$-वज्रानलद्युतिः । ६. च-एवं मुक्तो महावृक्षं । ७. च-°घ्नं प्रति । ८. च-तत्रासौ दशधा° । ल$_1$-शत्रुघ्नो ब° । ९. च-ह । भ$_1$ भ$_2$ ल$_1$-तु । १०. च-पादपान्सुबहून्गृह्य । ११. च-°घ्नस्यासृजद् बली । भ$_1$ भ$_2$-°घ्ने समवासृजत् । १२. भ$_2$-त्रिधा । १३. टि=छिन्दत्→-न् । १४. च-त्रिभिश्चतुर्भिश्चैकैकं चिच्छेदानतपर्वभिः । १५. च भ$_1$ भ$_2$-°सोपरि । १६. भ$_1$ भ$_2$-उद्धतः स । १७. भ$_1$ भ$_2$-वृक्षान् । १८. च भ$_1$ भ$_2$-अभ्यहनत्क्रुद्धः । १९. च-संमुमोह च । २०. भ$_1$ भ$_2$-देवतानां च । २१. च-°र्वाणां च सर्वशः । भ$_1$ भ$_2$-°सां तथा । २२. अ रा$_1$ ल$_1$ ल$_2$ ब-स तमाज्ञाय तु हतं । च-स तं विज्ञाय तु हतं । २३. अ भ$_2$ रा$_1$ ल$_1$ ल$_2$ ल$_3$ ब-तु नि° । च-भुवि पा° । भ$_1$-विनियोजितम् । २४. च-वर्ज-पापः प्रविवेश । भ$_1$-वर्ज-अपि आवि° । २५. च भ$_1$ प्र-स्वमालयं । २६. च-मृतोऽयमिति दानवः । २७. भ$_1$ प्र-नाप्यगृह्णान्महच्छूलं दृष्ट्वा तं विनिपातितम् । २८. च-अगृह्णाज्ञारमामिषं ॥

मुहूर्तात्[1] लब्ध-संज्ञस् तु ततस्[2] तस्थौ धृताऽऽयुधः[3] ।
१६] शत्रु-घ्नो[4] राक्षस-द्वारि पूजितः परमर्षिभिः ॥[4]१६॥ [१६
ततो दिव्यम् अ-मोघं स[5] जग्राह[5] शरम् उत्-तमम् ।
१७] ज्वलन्तं[6] तेजसा घोरं[6] दीपयन्तं[7] दिशो दश ॥१७॥ [१७
वज्र-वेगं[8] वज्र-शितं[8] मेरु-मन्दर-गौरवम् ।
१८पू] नतं[9] पर्वसु सर्वेषु[9] सं-युगेष्व् अ-पराजितम् ॥१८[10]॥ [१८
N] असृक्-चन्दन-दिग्धाऽङ्गं चारु-पत्रं पतत्रिणम् ।
१८उ] दानवेन्द्राऽचलेन्द्राणां[11] पुराणां चाऽव-दारणम् ॥[10]१९॥ [१९
तं दीप्तम् इव कालाऽग्निं युगाऽन्ते[12] समुप-स्थिते[12] ।
२०] दृष्ट्वा सर्वाणि भूतानि परं मोहम्[13] उपाऽगमन् ॥२०॥ [२०
स-देवाऽसुर-गन्धर्वं स-मुनि[14] साऽप्सरो-गणम्[14] ।[15]
२१] जगत् सर्वं[16] तथाऽस्वस्थं[16] पिता-महम् उपाऽगमत्[17] ॥२१॥ [२१
ऊचुश् च देवदेवेशं वर-दं प्र-पितामहम् ।
२२] कच्-चिल् लोक-क्षयः प्राऽऽप्तः[18] प्राऽऽप्तो वा सुर-संक्षयः[18] २२ [२२
२३पू] नेदृशं दृष्ट-पूर्वं नः श्रुतं वाऽपि पिता-मह ।
N] देवानां भय-संमोहो[19] लोकानां सं-शयः[20] प्र-भो[20] ॥[21]२३॥ [२३
२३उ] देवानां[22] भाषितं[23] श्रुत्वा देवः[24] कमल-सम्भवः[24] ।
भय-कारणम् आऽचष्ट देवानाम् अभयं-करः ॥[25]२४॥ [२४
२४] वधाय लवणस्याऽसौ शरः शत्रुघ्न-धारितः ।
तेजसा यस्य सं-मूढाः सर्वे वै[26] सुर-सत्तमाः ॥२५[27]॥ [२५

---

१. च भ$_1$ भ$_2$-वर्जं-°र्तं । २. च-शत्रुघ्नः पुनरुत्थितः । भ$_1$-पुनरेव धृ° । ३. च-अतिष्ठद् । ४. भ$_1$-शत्रुघ्नं राक्षसद्वारि मुनयः समपूजयन् । ५. भ$_1$-प्रज° । ६. भ$_1$-ज्वलज्ज्वलनसङ्काशं । ७. च-पूरयंतं । ८. च-वज्रस्वनं वज्रमुखं । ९. च-निर्मितं हरिणा पूर्वं । १०. भ$_1$-नास्ति । ११. च-भिन्नेषु-वानरेन्द्रमहेन्द्राणां सर्ववेगापहारकं । १२. च-°स्थितं । भ$_1$-युगक्षयमिवापरं । १३. च-त्रासं । भ$_1$-हर्षः । १४. भ$_1$-सिद्धाप्सरसो गणं । १५. च-ततः सदेवगन्धर्वं सयक्षऋषिचारणं । १६. च-हि सर्वमस्वस्थं । १७. भ$_1$-उपाद्रवत् । १८. च-देव प्राप्तो चाऽथ सुरक्षयः । भ$_1$-नाम प्राप्तः सुरसत्तम । १९. भ$_1$-क्षयकृद् बाणो । २०. भ$_1$-संक्षयोपमं । २१ च-नास्ति । २२. भ$_1$-सुराणां । २३. च भ$_1$-वचनं । २४. भ$_1$-वरदः सर्वभूत-कृत् । २५. भ$_1$-उवाच मधुरां वाणीं शृणुध्वं सर्वदेवताः । २६. अ रा$_1$ ल$_1$ ल$_2$ ल$_3$ ब प्र-ते । च-च । प्र-°पि । २७ भ$_1$-नास्ति ॥

२५] एष[1] वै पूर्व-देहस्य[2] लोक-कर्तुः[3] सनातनः[4] ।
शरस् तेजो-मयो येन[5] भयं वोपहृतं[6] भवेत्[6] ॥२६॥ [२६
२६] स[7] एष[7] कैटभस्याऽर्थे मधोश्[8] चैव[9] महा-शरः ।
सृष्टो महाऽऽत्मना तेन वधाऽर्थं रक्षसोर् द्वयोः ॥२७॥ [२७
२७] एवम्[10] एव[11] प्र-जानीत[12] विष्णोस् तेजो-मयं शरम् ।
एषा चैव तनुः पूर्वा विष्णोस् तस्य[13] रघूऽत्तमः[14] ॥२८॥ [२८
२८] प्र-यात[15] यूयं[15] पश्यध्वं वध्यमानं महाऽऽत्मना ।
रामाऽनुजेन लवणं निर्-उद्विग्ना[16] निशा-चरम्[17] ॥२९॥ [२९
२९] ते तस्य देव-देवस्य नि-शम्य[18] वचनं[19] सुराः[19] ।
आ-जग्मुर् यत्र तद् युद्धं शत्रु-घ्नस्य च रक्षसः ॥[20]३०॥[३०
३०] तं शरं घोर-सङ्काशं शत्रुघ्न-कर-धारितम् ।[21]
ददृशुः सर्व-भूतानि युगाऽन्ताऽग्निम् इवोत्थितम् ॥३१॥ [३१
३१] आ-काशम् आ-वृतं दृष्ट्वा दैवतै रघु-नन्दनः ।
सिंह-नादं महत्[22] कृत्वा ददर्श[23] लवणं मुहुः[23] ॥[24]३२॥[३२

---

१. ल$_{1}$-वर्जं-एषो । २. अ च भ$_{1}$ भ$_{2}$ प्र-पूर्वदेवस्य । ३. अ भ$_{2}$ ल$_{2}$ ल$_{3}$ रा$_{1}$ ब-°कर्ता । ४. च-महात्मनः । ५. यस्माद् । ६. भ$_{1}$-वोपकृतं महत् । ७. भ$_{1}$-एष हि । ८. भ$_{1}$-मधुनश् । ९. अ ल$_{2}$-चैष । च-अपि । भ$_{1}$-च । १०. च-एष । ११. च-एकः । ल$_{1}$ ल$_{3}$-एवं । १२. च-प्रजानाति । १३. च भ$_{1}$-वर्जं-चैव । १४. भ$_{2}$-रघूद्वहः । १५. च-तस्माद्गच्छत । भ$_{1}$-तदद्य यूयं । १६. अ भ$_{2}$ रा$_{1}$ ल$_{1}$ ल$_{2}$ ल$_{3}$ ब प्र-वध्यमानं । च-निरुद्वेगाः । १७. भ$_{1}$-महासुराः । १८. च भ$_{1}$ भ$_{2}$-वर्जं-निशाम्य । १९. अ भ$_{2}$ रा$_{1}$ ल$_{1}$ ल$_{2}$ ल$_{3}$ ब प्र-मधुराक्षरं । भ$_{1}$-मधुरां गिरं । २०. भ$_{1}$-आगच्छन्यत्र युद्धे ते शत्रुघ्नलवणावुभौ । २१. भ$_{1}$-नास्ति । २२. अ रा$_{1}$ ल$_{1}$ ल$_{2}$ ल$_{3}$ ब प्र-मुहुः । भ$_{1}$ भ$_{2}$-ततः । २३. च-पुनर्लवणमाह्वयत् । भ$_{1}$-°पश्यत क° । २४. अतः परमधिकः पाठः—
च-अथोवाच शत्रुघ्नो लवणं राक्षसाधमम् । प्रवेष्टव्यं न दुर्बुद्धे मृत्युस्त्वेह-मुपागतः ॥ ततः श्रुत्वा तु लवणो वाक्यं शत्रुघ्नचोदितम् । अस्त्रं च वैष्णवं दृष्ट्वा भैरवं हि समुद्यतम् ॥ क्षुब्धचेता उवाचेदं शत्रुघ्नमपराजितम् । मुहूर्तं तिष्ठ दुर्बुद्धे रघूणां कुलपांसन ॥ यावत्कृत्वाह्निकं क्षिप्रमाहारश्च पुनर्गृणन् । निष्क्रमामि सशूलोऽद्य ततस्त्वन्न भविष्यसि ॥ शत्रुघ्नश्चाब्रवीद्धीरो भोक्ष्यसे क्व मयि स्थिते । यमलोकगतश्च त्वमाह्निकं वै करिष्यसि ॥ ततः क्रुद्धोऽब्रवीद्वाक्यं लवणो दुष्टमानसः । यस्मान्न क्षमसे पाप बुभुक्षुं मां क्षुधातुरम् ॥ तस्मात्ते नगरी कृत्स्ना क्षुधार्ता विद्रविष्यति । मुक्त्वा स शापं लवणः शत्रुघ्नमभिदुद्रुवे ॥

३२] आ-हूतश् च ततस् तेन शत्रु-घ्नेन महाऽऽत्मना[1] ।
लवणः क्रोध-सन्तप्तो[2] युद्धाय समुप-स्थितः[2] ॥३३॥ [३२
३३] आ कर्णाद्[3] धि[3] वि-कृष्याऽथ तद् धनुर् धन्विनां[4] वरः[4] ।
३४पू] मुमोच तं महा-बाणं शत्रु-घ्नो लवणं[5] प्रति ॥३४॥ [३४
मुच्यमानस्य तस्याऽथ इषो रूपं तदाऽभवत्[6] ।
N] आ-हुत्या सिच्यमानस्य वह्नेर् इव तदाऽतुलम् ॥[7]३५॥ [N
दह्यमानः स तान् वृक्षान् शरो[8] वक्रोऽद्भुतोपमः[8] ।
N] पपात सु-महा-तेजा[13] लवणस्य तदोरसि ॥३६॥ [N
३४उ] उरस् तस्य वि-दार्याऽऽशु प्र-विवेश मही-तलम् ।[9] [३५
गत्वा रसा-तलं[10] दिव्यः[10] शरो विबुध-पूजितः ।[11]
३५] पुनर् एवाऽऽगमत् तूर्णम् इक्ष्वाकु-कुल-नन्दनम् ॥३७॥ [३६
शत्रुघ्न-शर-निर्भिन्नो लवणः स[12] निशा-चरः[12] ।
३६] पपात सहसा[13] भूमौ[13] वज्राऽऽहत इवाऽचलः ॥३८॥ [३७
तच्[14] च शूलं महद्[14] दिव्यं हते लवण-राक्षसे ।
३७] पश्यतां सर्व-भूतानां[15] रुद्रस्य करम्[16] आ-गतम्[16] ॥३९॥ [३८
एकेषु-पातेन[17] भयं नि-हत्य[17]
लोक-त्रयस्याऽस्य[18] रघु-प्रवीरः ।
विनिर्-बभाव् उद्यत-चाप-पाणिस्
३८] तमः प्र-मृद्येव सहस्र-रश्मिः[18] ॥४०॥ [३९

---

१. भ$_1$–महाहवे । २. च–°संरक्तो वृक्षमादाय धिष्ठितः । भ$_1$–रघुमुख्येन यु° । ३. भ$_1$–°कर्ण तु । ४. च–धनुषां वरं । ५. च–नास्ति । ६. अ रा$_1$–तथाऽभ° । ७. भ$_1$–पूर्णाहुत्या सिच्यमाने रूपमग्न्यादिवानलम् । ८. भ$_1$–शरो वज्रायुधोपमः । भ$_2$–शरश्चक्रोपमोऽद्भुतः । रा$_1$–अत आरभ्य ३७-शश्लोकस्य प्रथमपादं यावन्नास्ति । ९. च ल$_1$–स शरस्तं विनिर्भिद्य प्रविवेश रसातलम् । भ$_1$–विनिर्भिद्योरसस्तस्य स शरो नरपूजितः । अतः परमधिकः पाठः—भ$_1$–रसातलं विवेशाथ सर्पराज इव श्वसन् । १०. च–°ले चैव । ११. भ$_1$–स्नात्वा रसातले दिव्यः स शरो रिपुमर्दनः । १२. च–सोऽथ राक्षसः । १३. अ भ$_2$ ल$_1$ ल$_2$ ल$_3$ व प्र–सुमहान्भूमौ । भ$_1$–सुमहातेजा । १४. अ ल$_2$–तच्छूलं सुम° । १५. ल$_1$–सर्वदेवानां । १६. च भ$_1$–वशमन्वगात् । १७. च–°षुणा चैव निहत्य शत्रुं । १८. भ$_1$–लोकत्रयस्यास्य रघूत्तमस्य तमो विदीर्णोऽथ रराज वीरः सूर्यो यथा चारु सहस्ररश्मिः ॥

ततस् तु देवा[1] ऋषयः स-पन्नगाः[1]
प्र-नर्तयन्त्य्[2] अप्सरसश् च सर्वाः[2] ।[3]
दिष्ट्या[4] जयोऽनेन रणे च प्राप्तो[4]
३८] दिष्ट्या[5] च लोकाः सकलाः प्र-सन्नाः[5] ॥४१॥ [४०

इत्यार्षे रामायण उत्तर-काण्डे लवण-वधो नाम द्विसप्ततितमः सर्गः ॥ ७२ ॥

---

## [ वं–७६ ]= [ त्रिसप्ततितमः सर्गः ] =[ दा–७० ]

हते तु लवणे देवाः सेन्द्राः साऽग्नि-पुरो-गमाः ।
१] ऊचुस् ते[6] मधुरां वाणीं[6] शत्रु-घ्नं शत्रु-तापनम्[7] ॥ १ ॥ [१
दिष्ट्या त्वं[8] वि-जयी[9] वत्स दिष्ट्या लवण-राक्षसः ।
२] हतः पुरुष-शार्दूल वरं वरय राघव ॥ २ ॥ [२
वर-दाः स्मो[10] महा-बाहो सर्व एव समा-गताः ।
३] विजयाऽऽकाङ्क्षिणस्[11] तुभ्यम् अ-मोघं दर्शनं च नः ॥ ३ ॥ [३
देवानां भाषितं श्रुत्वा शूरो मूर्ध्नि कृताऽञ्जलिः ।
४] प्रत्य्-उवाच महा-तेजाः[12] शत्रु-घ्नः प्रयताऽऽत्मवान् ॥ ४ ॥ [४
इयं मधु-पुरी[13] रम्या मथुरा[14] देव-निर्मिता[14] ।
५] नि-वेशं प्राऽऽप्नुयाच् छीघ्रम् एष मेऽस्तु वरः परः[15] ॥ ५ ॥ [५
तं[16] देवाः[16] प्रीत-मनसो बाढम् इत्य् एव[17] राघवम्[17] ।
६] भविष्यति पुरी रम्या मथुरेत्य् एव वि-श्रुता ॥[18] ६ ॥ [६
७३] एवम्[19] उक्त्वा[19] महाऽऽत्मानो[20] दिवं[21] खं विविशुस् तदा[21] ।
शत्रु-घ्नोऽपि महा-तेजास्[22] तां सेनां समुपाऽनयत्[22] ॥ ७ ॥ [७

---

१. च–देवर्षिगणाः स° । भ$_1$–°यक्ष गन्धर्वाः । २. च–प्रपूजिरे साप्सरसश्च सिद्धाः । भ$_1$–सिद्धाः सहिताप्सरोभिश् । ३. अतः परमधिकः पाठः—भ$_1$–अपूजयन्दाशरथिं समेत्य । ४. अ ल$_2$–°रणेषु प्रा° । च–°यो दाशरथे तवाद्य । भ$_1$–दिष्ट्येति मुहुर्वदन्त्यः । भ$_2$ ल$_3$ प्र–°रणेऽपि प्रा° । ५. च–वर्जं–°काः सर्व एव प्रशस्ताः । भ$_1$–नास्ति । ६. भ$_1$–सुमधुरं वाक्यं । ७. भ$_1$–शत्रुसूदनं । ८. च–ते । ९. च–°यो । भ$_1$–जीवितो । १०. भ$_1$–वर्जं–स्म । ११. अ च–°णं । १२. भ$_1$–महाबाहुः । १३. भ$_2$–देवपुरी । १४. च–मधुना चैव निर्मिता । भ$_1$–सर्वतो देवसम्मिता । ल$_2$–अत आरभ्य ६-ष्ठश्लोकस्य ३-यपादं यावन्नास्ति । १५. भ$_1$–शुभः । १६. भ$_1$–देवास्ते । १७. भ$_1$–अब्रवीत्स तं । १८. च–आहुर्भविष्यति पुरी रम्या मधुना वै विनिर्मिता । भ$_1$–°ष्यतीयं नगरी मधुरे° । १९. च–तथा चोक्त्वा । २०. भ$_1$–°नं । २१. भ$_1$–देवलोकं ययुस्ततः । ल$_1$–देवाः खं वि° । २२. भ$_1$–महाबाहुस्तां सेनां समुदावहत् ॥

९] सा सेना शीघ्रम् आऽगच्छच् छ्रुत्वा शत्रुघ्न-शासनम् ।
नि-वेशनं च[1] चक्रे स[1] श्रवणेन महा-बलः[2] ॥८॥ [८
१०] सा पुरी दिव्य-संवासा[3] वर्षे द्वादश-मे शुभे[3] ।
नि-विष्टा[4] शूर-सेनानां वि-षयाश् चाऽकुतो-भयाः[5] ॥[6]९॥ [९
११] क्षेत्राणि सस्य-युक्तानि[7] काले देवो ववर्ष[8] च[8] ।
अ-रोगा[9] वीर-पुरुषा[9] शत्रुघ्न-परिपालिता[10] ॥१०॥ [१०
१२] अर्ध-चन्द्र-प्रतीकाशा यमुना-तीर-शोभिता ।[11]
१४उ] शोभिता गृह-मुख्यैश् च चत्वरैर् आ-पणैस् तथा ॥[12]११॥ [११
या च तेन महच् छुभ्रा लवणेन कृता तदा[13] ।
१३] व्य्-अशोभयत शत्रु-घ्नो नाना-पण्योपशोभिताम् ॥१२[14]॥ [१२
तां सम्-ऋद्धां च शत्रु-घ्नो ददृशे लक्ष्मणाऽनुजः[15] ।[16]
१५] निर्-ईक्ष्य परम-प्रीतः[17] परं[18] हर्षम् उपाऽगमत्[18] ॥१३॥ [१५
तस्य बुद्धिः समुत्-पन्ना निर्-ईक्ष्य मथुरां पुरीम् ।[19]
१६] राम-पादौ निर्-ईक्षेऽहं वर्षे द्वादश-मे[20] शुभे[20] ॥[21]१४॥ [१६

इत्यार्षे रामायण उत्तर-काण्डे मथुरोपनिवेशो नाम
त्रिसप्ततितमः सर्गः ॥ ७३ ॥

---

१. च–च शत्रुघ्नः । भ$_1$–ततश्चक्रे । २. च–तदाकरोत् । ३. च–°संकाशा वर्षे च द्वादशेऽभवत् । भ$_1$–देवसंस्थाना वर्षेऽभूद्द्वादशे शुभा । ४. च–°ष्टः शूरसेनाख्यो । ५. च–°भयः । ६. भ$_1$–निविष्टविषयश्चैव शूरसेनस्तथाभवत् । ७. च–सस्यवन्त्यासन् । भ$_1$–सस्यवन्त्यस्यां । ८. च–प्रवर्षति । भ$_1$–स वर्षति । ९. भ$_1$–अप्रमत्ताश्च पुरुषाः । १०. च भ$_1$–°घ्नभुजपा° । ११. च–वप्रप्राकारसम्पन्नां गोपुराट्टालसंवृतां । अतः परमधिकः पाठः—भ$_1$ रा$_1$ ल$_2$–उद्यानवरसम्पन्ना संवृद्धतरुसंवृता । नानादेशागतैश्चापि वणिग्भिरुपशोभिता । १२. च–शोभितां राजमार्गेण नानापण्यविभूषिताम् । १३. भ$_2$ ल$_1$–पुरा । १४. च–उद्यानवेश्मससम्पन्नां समृद्धनरसंवृताम् । नानादेशागतैश्चापि वानरैरुपशोभिताम् ॥ भ$_1$–यच्च तेन महच्छुभ्रं लवणेन कृतं पुरा । शोभयामास तद्वीरो नानापुण्यसमृद्धिभिः । अतः परमधिकश्च पाठः—उद्यानैश्च पुरैश्चैव तडागैश्चैव सर्वतः । शोभित शोभमानैश्च तथान्यैर्दिव्यमानुषैः ॥ १५. च भ$_1$–वर्ज–भरतानुजः । १६. च–समृद्धां तु समृद्धार्थः शत्रुघ्नो ल° । भ$_1$–तां पुरीं दिव्यसंकाशां नानापण्योपशोभिताम् १७. अ भ$_1$–परया प्रीत्या । च–°मस्फीतां । १८. च–शत्रुघ्नो हर्षमाग° । १९. च यच्च ते महच्छ्रव्यं लवणेन कृतं पुरा । अतः परमधिकश्च पाठः—ततः स साममर पुरोपमां पुरीं निवेश्य वै विविधजनाभिसंवृताम् । नराधिपो रघुपतिपाद दर्शने दधौ मतिं रघुकुलवंशवर्धनः ॥ २०. भ$_1$–°श आगते । २१. च–नास्ति

ततस् तु द्वादशे[1] वर्षे शत्रु-घ्नः शत्रु-तापनः[2] ।
१] अयोध्या-गमने बुद्धिं चकाराऽल्प-पदाऽनुगः ॥[3]१॥ [१

ततः पुर-प्रधानान्[4] स[5] बल-मुख्यान् नि-वर्त्य च[6] ।[6]
२] जगाम रथ-मुख्येन जय-युक्तेन[7] भास्-वता[7] ॥ २ ॥ [२

स गत्वा दिवसैः[8] कैश्-चित् सं-हृष्टो[8] रघु-नन्दनः ।
३] वाल्मीक्य्-आश्रमम्[9] आ-साद्य[9] वासं चक्रे महा-बलः ॥ ३ ॥ [३

सोऽभि-वाद्य ततः पादौ वाल्मीकेः पुरुषर्षभः ।
४] पाद्यम् अर्घ्यम् अथाऽऽतिथ्यं जग्राह मुनि-हस्त-तः ॥ ४ ॥ [४

बहु-चित्राः[10] सु-मधुराः[11] कथास् तत्र सहस्र-शः ।
५] कथयामास स[12] मुनिः[12] शत्रु-घ्नस्य[13] महाऽऽत्मनः[13] ॥ ५ ॥ [५

उवाच स[14] मुनिर्[14] वाक्यं लवणस्य वधाऽऽश्रितम् ।
६] सु-दुष्करं कृतं कर्म पूर्व-जैर्[15] अ-कृतं तव[15] ॥ ६ ॥ [६

बहवः पार्थिवाः सौम्य[16] हताः स-बल-वाहनाः ।
७] लवणेन महाऽऽत्मानो युध्यमानाः सहस्र-शः[17] ॥ ७ ॥ [७

त्वया[18] पुनर् हतः[18] पापो लीलया पुरुषर्षभ ।
८] जगतश् च भयं राजन् प्र-शान्तं तव तेजसा ॥ ८ ॥ [८

रावणस्य[19] वधो घोरो यत्नेन महता कृतः ।
९] इदं महत्-तरं[20] कर्म त्वया कृतम्[21] अयत्न-तः[21] ॥ ९ ॥ [९

प्रीतिश् च[22] महती[22] जाता देवानां लवणे हते ।
१०] भूतानां[23] चैव सर्वेषां जगतश् च प्रियं कृतम् ॥१०॥ [१०

---

१. च–द्वादशमे । २. च–शत्रुकर्षणः । ३. च–°ध्यामीहतां गन्तुमल्पभृत्य-बलानुगः । ४. भ$_{1}$–मन्त्रिप्रधानांश्च । ५. भ$_{1}$–सः । ६. च–मन्त्रिणो बलमुख्यांश्च निवर्त्य च पुरोधसम् । ७. च भ$_{1}$–हयानां च शतेन च । ८. च–गणितावासं संप्राप्तो । ९. च–वाल्मीकेराश्रमं प्राप्य । १०. च भ$_{1}$–बहुरूपाः । ११. भ$_{1}$–च म° । १२. भ$_{1}$–महर्षिः । १३. च–°घ्नाय महात्मने । १४. च–मधुरं । १५. च–सौम्य राघव-नन्दन । भ$_{1}$–लवणं निघ्नता त्वया । १६. भ$_{1}$–वर्ज–सौम्या । च–वीर । १७. च ल$_{2}$ प्र–वर्ज–दुरात्मना । प्र–निराकृताः । १८. च–त्वया तु निहतः । भ$_{1}$–त्वयायं निहतः । १९. अ ल$_{2}$–राघवेण । २०. च–तु सुमहत् । २१. भ$_{1}$–यत्नात्कृतं प्रभो । २२. भ$_{1}$–चैव परा । २३. च–मर्त्यानां ॥

तच् च युद्धं यथा-वृत्तं[1] श्रुत्वैव[2] पुरुषर्षभ ।[2]
११] सभायाम् उप-विष्टस्य[3] वासवस्य महाऽऽत्मनः[3] ॥११॥ [११
ममाऽपि परमा प्रीतिस् त्वया[4] शत्रु-घ्न वर्धिता[5] ।
१२] उपाऽऽघ्रास्यामि[6] मूर्ध्नि त्वां स्नेहेनैषा[7] परा गतिः[7] ॥१२॥ [१२
इत्य् उक्त्वा मूर्ध्नि शत्रु-घ्नम् उपाऽऽघ्राय महा-मुनिः ।[8]
१३] आतिथ्यम् अकरोत् तस्य स-सैन्यस्य महा-यशाः ॥१३॥ [१३
स भुक्तवान् नर-श्रेष्ठो[9] गीतं मधुर-निःस्वनम्[10] ।
१४] शुश्राव राम-चरितं वि-विधं[11] विधि-संहितम्[12] ॥१४॥ [१४
तान्य् अ-क्षराणि सर्वाणि[13] यथा-वृत्तानि सर्व-शः ।
१५] श्रुत्वा पुरुष-शार्दूलो[14] वि-संज्ञो बाष्प-लोचनः ॥१५॥ [१६
स मुहूर्तम् इवाऽसंज्ञो विनिः-श्वस्य[15] मुहुर्[16]-मुहुः[16] ।
१६] तस्मिन् गीते यथा-वृत्तं वर्तमान इवाऽशृणोत् ॥[17]१६॥[१७
पादाऽनुगाश्[18] च ये राज्ञस्[18] तच् छ्रुत्वा गीतम् अद्भुतम्[19] ।
१७] अवाङ्-मुखाश् च[20] दीनाश् च[20] आश्चर्यम् इति चाऽब्रुवन् ॥१७॥[१८
परस्-परं च ते तत्र सैनिकाः[21] सं-बभाषिरे[21] ।
१८] किम् इदं क्व च वर्तामो[22] मायेयं[23] स्वप्न-दर्शनम् ॥१८॥ [१९
नेदं श्रुतम् इहाऽस्माभिर् अध्व-स्थैर्[24] आ-श्रमे पुरा[24] ।
१९] यद् अद्य शृणुमः साधु गीत-माधुर्यम्[25] उत्-तमम्[26] ॥१९॥ [२०
वि-स्मयं परमं गत्वा शत्रु-घ्नम् इदम्[27] अब्रुवन् ।
२०] साधु पृच्छ नर-व्याघ्र वाल्मीकिम् ऋषिम्[28] उत्-तमम्[28] ॥२०[29]॥[२१

---

१. भ$_1$-तदा वृत्ते दृष्टे त्वै । २. च-लब्धयुद्धं मया सर्वं श्रुतं पुरुषसत्तम । ३. च-°ष्टेन शत्रुघ्नस्य महदद्भुतं । भ$_1$-देवराजस्य ह्यासीनेन तदा मया । ४. च-त्वयि । ५. च-वर्धते । भ$_1$-वर्तते । ६. भ$_1$-तदाघ्रा° । ७. भ$_1$-स्नेहस्यैष परो विधिः । ८. अतः परमधिकः पाठः—च-शत्रुघ्नस्य महात्मासौ वाल्मीकिर्मुनिसत्तमः । ९. अ ल$_2$ प्र-नरव्याघ्रो । च भ$_1$-रघुश्रेष्ठो । १०. अ ल$_2$ प्र-°रनि° । च भ$_1$-°रमुत्तमं । ११. च-यथोक्तं । १२. अ ल$_2$-°संयुतं । १३. च-यान्यासन् । १४. भ$_1$-°भूत्तरशा° । १५. च-निश्वस्याथ । भ$_1$-निःश्वस्य च । १६. भ$_1$-पुनः पुनः । १७. भ$_1$-वर्तमानं यथातीतं तस्मिन्गीते च शुश्रुवे । १८. च-पदातिश्चैव राज्ञश्च । १९. च-अर्थवत् । २०. भ$_1$-भृशं दीना । २१. च भ$_1$-समभाषन्त सैनिकाः । २२. च-तिष्ठामो । २३. भ$_1$-स्यादिदं । २४. च-आश्रमेन्यत्र कुत्रचित् । भ$_1$-रथस्थैराश्र° । २५. च-गीतवादित्रं । २६. अ भ$_2$ ल$_2$-अद्भुतम् । २७. च-चेदं । २८. अ च भ$_1$-ऋषिसत्त° । २९. रा$_1$ ल$_1$ ल$_3$ ह प्र-नास्ति ॥

शत्रु-घ्नस् त्व् अब्रवीत् सर्वान् कौतूहल-समन्वितान् ।
२१] सैनिका न क्षमं प्रष्टुम् इदम्[1] अस्माभिर् ईदृशम् ॥२१॥ [२२
आश्चर्यं[3] मोहनीयं च वाल्मीकेर् आ-श्रमे शुभे[2] ।[3]
२२] न[4] तु कौतूहलाद् युक्तम् अन्व्-एष्टुं[4] तानि वै[5] मया[4] ॥२२[6]॥ [२३
एवम् उक्त्वा तु तद् वाक्यं सैनिकान् रघु-नन्दनः ।
२३] अभि-वाद्य महर्षींश्[7] च स्वं नि-वेशं ययौ तदा[7] ॥२३॥ [२४

इत्यार्षे रामायण उत्तर-काण्डे गीत-श्रवणं नाम
चतुःसप्ततितमः सर्गः ॥७४॥

---

## [ वं-७८ ]= [ पञ्चसप्ततितमः सर्गः ] =[ दा-७२ ]

N] गीत-माधुर्य-विश्रान्तं तच्-चित्त तद्गतेन्द्रियम् ।[8]
तत्-प्रियं[9] च[9] नर-व्याघ्रं निद्रा नैति[10] स्म राघवम्[10] ।
१] चिन्तयानं[11] तम् एकाऽग्रं[11] राम-गीतम् अनु-उत्तमम् ॥ १ ॥ [१
तं[12] तु[12] शब्दं सु-मधुरं तन्त्री-लय-समन्वितम् ।[13]
२] जगाम[14] शृण्वतो रात्रिः[14] शत्रु-घ्नस्य महाऽऽत्मनः ॥ २ ॥ [२
तस्यां निशायां व्य्-उष्टायां कृत्वा पौर्वाह्णिकीं क्रियाम् ।
३] उवाच प्राऽञ्जलिर् वाक्यं शत्रु-घ्नो मुनि-पुङ्गवम्[15] ॥ ३ ॥ [३
भग-वन् द्रष्टुम् इच्छामि रामम्[16] इक्ष्वाकु-नन्दनम्[16] ।
४] त्वयाऽनु-ज्ञातु(?त)म् इच्छामि गमनं वै सहाऽनुगः ॥[17]४॥ [४

---

१. भ$_1$-अपि । २. अ रा$_1$ ल$_3$ ब प्र-°भवत् । ३. च-°र्यं दृष्टमपूर्वं वा° । भ$_1$-आश्चर्याणि बहूनीह वाल्मीकेस्तु सहस्रशः । ४. च भ$_1$ ल$_1$-अस्माभिश्च ततः सर्वमन्वेष्टव्यं । भ$_1$-अस्माभिस्तु न तत्सर्वम° । ५. च-कुतूहलैः । भ$_1$ ल$_1$-कुतूहलात् । ६. अतः परमधिकः पाठः—ल$_1$-न तु कौतूहलाद्युक्तमन्वेष्टुं तानि वै मया । ७. च-°र्षिं तु संविवेश तदा निशां । भ$_1$-°र्षिं तं संविवेश ततो निशि । ८. भ$_1$-°र्यसम्भ्रान्तस्तन्मनास्तद्गतेन्द्रियः । च-नास्ति । ९. च-तं शयानं । भ$_1$-°याच्च । १०. च-शत्रुघ्नमागमत् । ११. च-°यन्तमनेकार्थं । १२. च-श्रुत्वा । १३. ल$_1$-नास्ति । १४. भ$_1$-वर्जं-श्रुत्वा जगाम सा रात्रिः । च-तत्र रात्रिर्जगामाशु । १५. च-मुनिसत्तमं । १६. च-राघवं रघुनं° । १७. च भ$_1$-वर्जं-त्वयाज्ञप्तो ह्यहं गच्छे सहैभिः सैनिकाग्रगैः । भ$_1$-तदनुज्ञातुमिच्छामि भवता तापसैः सह ॥

इत्य् एवं वादिनम् ऋषिः[1] शत्रु-घ्नं[2] शत्रु-सूदनम् ।
५] वाल्मीकिः सम्परि-ष्वज्य वि-ससर्ज स[3] राघवम्[3] ॥ ५ ॥ [५
N] व्रजेति सोऽभ्यनु-ज्ञातः[4] शत्रु-घ्नः प्र-ययौ क्रमात्[5] ।[6] [N
६पू] सोऽभि-वाद्य मुनि-श्रेष्ठं रथम् आ-रुह्य सु-प्रभम्[7] ॥ ६ ॥ [६पू
N] स तेनाऽम्बुद-नादेन इन्द्रवैवस्वतोपमः ।[8] [N
N] ततो मध्याऽह्न-समये वाजिभिः शीघ्र-गामिभिः ।[8] [N
६उ] अयोध्याम् अगमत् तूर्णं राम-सन्दर्शनोत्सुकः[9] ॥ ७ ॥ [६उ
N] तां गोपुर-वतीं रम्याम् उद्यान-शत-शोभिताम् ।[10] [N
सम्प्र-हृष्टां[11] पुरीं हृद्यां[12] श्री-मान् इक्ष्वाकु-नन्दनः ।
७] प्र-विवेश महा-बाहुर् यत्र रामो महा-द्युतिः ॥[13] ८ ॥ [७
सु-संपूज्य[14] तु[15] पौरैश् च द्वि-जैर् जानपदैर् अपि ।
N] रामाऽऽयतनम् आ-साद्य प्र-विवेशाऽनिवारितः ॥ ९[15] ॥ [N
स रामं मन्त्रि-मध्य-स्थं पूर्ण-चन्द्र-निभाऽऽननम्[16] ।
८] पश्यन्[17] नगर-मध्य-स्थं[17] सहस्र-नयनं यथा ॥ १० ॥ [८
सोऽभि-वाद्य महाऽऽत्मानं ज्वलन्तम् इव तेजसा ।
९] उवाच प्राऽञ्जलिर् वाक्यं[18] रामं सत्य-पराक्रमम् ॥ ११ ॥ [९
यथाऽऽज्ञप्तं महा-राज तत्[19] सर्वं°[19] कृतवान् अहम् ।
१०] हतः स लवणः पापः पुरी सा[20] च[20] नि-वेशिता ॥ १२ ॥ [१०
द्वादशं[21] च गतं वर्ष°[21] त्वां[22] विना रघुनन्दन[22] ।
११] नोत्-सहेयम्[23] अहं[23] वस्तुं विना-भूतस्[24] त्वयाऽन्-अघ[24] ॥ १३ ॥ [११
मम प्र-सादं काकुत्स्थ कुरुष्व वदतां वर ।
१२] मातृ-हीनो यथा वत्सस् त्वां विना नोत्-सहाम्य् अहम् ॥ १४ ॥ [१२

---

१. च भ$_1$–तत्र । २. भ$_1$–राघवं । ३. च–महामुनिः । भ$_1$–सवाहनं । ४. अ–सौम्यानु° । ५. भ$_1$ ल$_2$–ततः । ६. च–नास्ति । ७. च–पार्थिवः । ८. च–नास्ति । ९. च–राघवं द्रष्टुमुत्सुकः । १०. च–नास्ति । ११. च–सम्प्रविश्य । भ$_1$–सम्प्रविष्टः । १२. भ$_2$–वर्जं–रम्यां । १३. भ$_1$–प्रविशन्वै स नृपतिर्वासवो मारुतैरिव । १४. भ$_1$ भ$_2$ रा$_1$ ल$_3$ ब–समपूज्यत । ल$_1$–सम्पूजितः स । १५. च–नास्ति । १६. अ–नास्ति । १७. अ–नास्ति । च–पश्यत्यमरम° । भ$_1$–°न् स सुरम° । भ$_2$ रा$_1$ ल$_1$ ल$_2$ ब प्र–°न्नमरम° । १८. च भ$_1$–भूत्वा । १९. च–सर्वं वै । २०. भ$_1$–चाऽपि । २१. च–°शो गतो वर्षो । २२. च भ$_1$–वसतस्तत्र मे प्रभो । २३. भ$_1$–°हेऽहं पुनर् । २४. अत आरभ्य १५-शश्लोकस्य प्रथमपादं यावन्नास्ति ॥

एवं ब्रुवाणं शत्रु-घ्नं परि-ष्वज्येदम्[1] अब्रवीत्[1] ।
१३] मा वि-षादं कृथा[2] वीर[3] नैतत् क्षत्रिय-चेष्टितम् ॥[4]१५॥ [१३
न वि-षीदन्ति राजानो विप्र-वासेषु[5] मान-द[6] ।
१४] राज्यं हि परि-रक्षन्तो राज्य-वृत्ताऽनुवर्तिनः[7] ॥१६॥ [१४
काले काले च मां[8] वीर ह्य्[8] अयोध्यां चाऽव-लोकय[9] ।
१५] आ-गम्य तु नर-व्याघ्र गन्ताऽसि च पुरीं ततः[10] ॥[11]१७॥ [१५
ममाऽपि त्वं सु-दयितः प्राणैर्[12] अपि न सं-शयः[12] ।
१६] अवश्यं करणीयं ते[13] राज्यस्य परि-रक्षणम्[14] ॥१८॥ [१६
तस्मात् त्वं वस काकुत्स्थ[15] पञ्च-रात्रं मया सह ।
१७] ऊर्ध्वं[16] गन्ताऽसि मथुरां[17] स-भृत्य-बल-वाहनः ॥१९॥ [१७
रामस्यैतद् वचः श्रुत्वा धर्म-युक्तं मनो-गतम् ।[18]
१८] शत्रु-घ्नो दीनया वाचा बाढम् इत्य् आह राघवम् ॥२०॥ [१८
स[19] पञ्च-रात्रं काकुत्स्थो[19] रामस्याऽऽज्ञा-चिकीर्षया[20] ।
१९] उष्य[21] तत्र[21] महेष्वासो गमनायोप-चक्रमे ॥२१॥ [१९
आ-मन्त्र्य तु[22] महाऽऽत्मानं[23] रामं सत्य-पराक्रमम् ।
२०] लक्ष्मणं भरतं चैव[24] महा-रथम् उपाऽहरत्[24] ॥[25]२२॥ [२०
दूरं पद्भ्याम् उप-गतो लक्ष्मणेन महाऽऽत्मना ।[26]
२२] भरतेन[27] च शत्रु-घ्नो ययौ[28] मधु-पुरीं[28] तदा ॥[29]२३॥ [२१

इत्यार्षे रामायण उत्तर-काण्डे शत्रुघ्न-प्रस्थापनं नाम पञ्चसप्ततितमः सर्गः ॥७५॥

---

१. च–भ्रातरं भ्रातृवत्सलं । भ$_1$–उवाच भ्रातृवत्सलः । २. भ$_1$–रामः । ३. भ$_1$ भ$_2$–शूर । ४. च–प्राह गाढं परिष्वज्य मा विषादं कृथा इति । ५. च–°सेन । ६. च ल$_1$–राघव । ७. च–°त्समनुस्मरन् । ८. च–शूरस्त्वं ह्य् । भ$_1$–मां शूर त्वं । ९. भ$_1$–च विलो° । १०. च भ$_1$–वर्ज–तथा । ११. च–आगच्छेथा नरश्रेष्ठ गन्ताहमपि च स्वयं । १२. च भ$_1$–प्राणेभ्योपि विशेषतः । १३. च भ$_1$–तु । १४. च भ$_1$–परिपालनं । १५. भ$_1$–शत्रुघ्न । १६. च–ततो । १७. च–मधुरां । १८. च–°क्तस्य भाषितं । भ$_1$–रामस्यैव बहुविधैर्धर्मयुक्तैर्महापदैः । १९. च–पंचरात्र तु शत्रुघ्नो । २०. भ$_1$–वर्ज–राघवस्य यथाज्ञया । २१. च–तत्रोषित्वा । भ$_1$–प्रोष्य तत्र । २२. च–तं । भ$_1$–च । २३. च–महाराजं । भ$_1$–महाभागं । २४. च–चैतौ मातरं चैव सर्वशः । भ$_1$–चैव संप्रतस्थे महाबलः । भ$_2$–यमुपाहरत् । २५. अतः परमधिकः पाठः—च–प्रणम्य विधिवद्वीरो भ्रातॄंश्चैवातिनन्दितः । आरुरोह रथं श्रीमान्नानारत्नविभूषितम् ॥ २६. च–स लक्ष्मणेनानुगतो महाबलो महात्मना । भ$_1$–दूरं चानुगतो वीरो भरतेन महात्मना । अतः परमधिकः पाठः—च प्रतिप्रतस्थे भरतेन चैव हि स दूरमध्वानमितो निवर्त्य तौ । २७. भ$_1$–लक्ष्मणेन । २८. भ$_1$–जगामाशु पुरीं । २९. च–पुरं स्वमेवातिययौ महात्मा ॥

प्र-स्थाप्य स तु शत्रु-घ्नं भ्रातृभिः सह राघवः ।
१] प्र-मुमोद सुखी राज्यं धर्मेण प्रति-पालयन्[1] ॥ १ ॥ [१

ततः कतिपयाऽहस्य[2] वृद्धो जानपदो द्वि-जः ।
२] पुत्रं[3] शवम् उपाऽऽदाय राज-द्वारम् उपाऽगमत्[4] ॥ २ ॥ [२

रुदन् बहु-विधा वाचः स्नेहाऽक्षर-समन्विताः ।
३] अ-सकृत् पुत्र-पुत्रेति[5] शोकाऽऽर्तः[5] स जगाद ह ॥[6] ३ ॥ [३

किं नु मे दुष्-कृतं कर्म[7] पूर्व-देहाऽन्तरे[7] कृतम् ।
४] यद् अहं पुत्रम्[8] एकं[9] त्वां पश्यामि नि-धनं गतम् ॥ ४ ॥ [४

अ-प्राऽऽप्त-यौवनं बालं पञ्च-वर्ष[10] दशाऽधिकम्[10] ।
५] अ-काले कालम् आ-पन्नं दुःखाय मम पुत्र-क ॥ ५ ॥ [५

अल्पैर् अहोभिर् नि-धनं गमिष्यावो[11] न सं-शयः ।
६] अहं च जननी चैव तव शोकेन पु-त्रक ॥[12] ६ ॥ [६

न स्मराम्य् अनृ-ऋतं[13] ह्य् उक्तं न च हिंसां स्मराम्य् अहम्[13] ।
७] सर्वेषां प्राणिनां पीडां कृतां नाऽहम् अनु-स्मरे ॥[14] ७ ॥ [७

केन[15] मे[15] दुष्-कृतेनाऽद्य[16] बाल एव ममाऽऽत्मजः[16] ।
८] अ-कृत्वा पितृ-कार्याणि[17] यातो[18] वैवस्वतं[18] क्षयम् ॥ ८ ॥ [८

नेदृशं दृष्ट-पूर्वं[9] मे श्रुतं वा घोर-दर्शनम्[19] ।
९] मृत्युर् अ-प्राऽऽप्त-वेलानां[20] रामस्य वि-षये यथा[21] ॥[22] ९ ॥ [९

---

१. भ$_1$ भ$_2$–परिपा° । २. भ$_2$–°हस्सु । ३. च भ$_1$–बालं । ४. भ$_1$–उपाविशत् । ५. भ$_1$–पुत्रेति शोकार्तो ब्राह्मणः । ६. च–नास्ति । ७. च–°मे पुरदे° । भ$_1$–पुत्र देहान्तरकृते । ८. भ$_1$ भ$_2$–पुत्र । ९. च–बालं । १०. च–°वर्षकमेव ह । भ$_1$–°वर्षसमन्वितं । ११. भ$_2$ ल$_1$–°ष्यामि । १२. भ$_1$–जननी तेतथैवेयं शोकेन मम पुत्रक । अ रा$_1$ ल$_2$ ल$_3$ य प्र–नास्ति । १३. भ$_1$–अकृतंकिंचित्कृतं हि स न मे स्मरन् । १४. भ$_1$ ल$_1$–वर्जं–नास्ति । ल$_1$–न स्मराम्यहिंसांकिंचित्कृतां हिंसां न मे स्मरे । १५. भ$_1$–केनापि दुष्कृ° । १६. च–°तेन त्वं मृतपुत्राद्य बालकः । १७. अ–पूर्वका° । १८. च–नीतश्चैव सुत । १९. च–घोरसंहितं । २०. च–°प्तवयसां । भ$_1$–°प्तकालानां । २१. अ च रा$_1$ ल$_2$ ल$_3$ ब प्रतथा । २२. अतः परमधिकः पाठः—च भ$_1$–वर्जं–पुनर्जगाद वाक्यं स पुत्रशोकेन पीडितः ॥

रामस्य दुष्-कृतं किं-चिद्[1] इदं[2] घोराऽभिवर्तनम्[2] ।
१०] न[3] ह्य् अन्य-विषय-स्थान् वै बालकान्[3] मृत्युर् आऽविशत् ॥१०॥[१०
न राजा जीवयेद् एनं बाल मृत्यु-वशं गतम् । [११उ
१२] राज-द्वारि मरिष्येऽहं पत्न्या सार्धम् अनाथ-वत् ॥११[4]॥
ब्रह्म-हत्यां ततो रामः सम्प्रेक्ष्य सुखी भवेत् ।[4] [१२
१३] भ्रातृभिः सहितो राजन्[5] दीर्घम् आयुर् अवाऽऽप्नुहि[5] ॥[6]१२॥ [१३पू
१४पू] उषिताः स्म सुखं राज्ये राज्ञो दश-रथस्य ह ।[7]
एवं[8] स[8] वि-लपन् विप्रः पत्न्या सार्धम् अनाथ-वत् ।[9]
N] द्वारि तिष्ठति रामस्य भृशं शोकाऽभि-पीडितः[10] ॥[9]१३॥ [N
रामं गर्हयमाणस् तु भ्रातॄंश् चाऽस्याऽति-दुःखितः ।
N] वसिष्ठ-वामदेवाऽऽदीन् ऋत्विजान्(?) अति-सम्मतान् ॥१४[11]॥[N
N] उषितोऽस्मि सुखं राज्ये वि-षयेषु महाऽऽत्मनाम् ।[11] [१३उ
१४उ] रामस्य विषय-स्थानां न ह्य् अल्पम् अपि नः सुखम् ॥[12]१५॥ [१४
सम्प्रत्य् अ-नाथो वि-षय इक्ष्वाकूणां महाऽऽत्मनाम् ।[13]
१५] रामं नाथम् अनुप्राऽऽप्य[14] बालाऽन्त-करणं[15] नृ-पम् ॥१६॥ [१५
राज-दोषा हि वर्धन्ते नृणाम् अ-प्रतिपालनात्[16] ।[17]
१६] वृत्त-हीने[18] हि नृ-पताव् अ-काले म्रियते जनः ॥१७॥ [१६
यदा पुरेष्व्[19] अ-युक्तानि राजा[20] जन-पदेषु च ।
१७] कुरुते[21] न च रक्षाऽस्ति[22] तदा काल-कृतं भयम् ॥१८॥ [१७

---

१. च–मन्ये । भ$_1$–व्यक्तं । २. च–महदस्ति न संशयः । ३. च–तथा हि विषयस्थानां बालानां मृ° । ४. च–वर्जं–नास्ति । ५. च–राजा दीर्घमायुरवाप्नुयात् । ६. भ$_1$–नास्ति ! ७. च–वर्जं–उषितोस्मि पुरे राज्ये तवास्मिन्सुमहाबल । भ$_1$–नास्ति । अतः परमधिकः पाठः—च भ$_1$ भ$_2$–वर्जं–राजन्कमलपत्राक्ष* तव राम वशे स्थितः । ८. भ$_1$–इत्येवं । ९. च–नास्ति । १०. भ$_1$–शोकेन पी° । ११. च भ$_1$–नास्ति । १२. च–रामं नृपतिमासाद्य जाताः सम्प्रति दुःखिताः । भ$_1$ रा$_1$ ल$_3$ ब प्र–नास्ति । १३. रा$_1$ ल$_3$ ब प्र–नास्ति । १४. च–इहासाद्य । १५. ब–°न्तः-क° । १६. भ$_1$ ल$_1$–अपरिपाल्यतां । १७. च–राजदोषैर्विपद्यन्ते प्रजाः सम्यगपालिताः । १८. च–असद्वृत्ते । १९. च–पुरे ह्ययु° । भ$_1$–वर्जं–नृपेष्वयु° । २०. रा$_1$–वर्जं–जना ज° । भ$_1$–दुःखितो जनपदे तथा । २१. भ$_1$–वर्जं–कुर्वीत । च–कुर्वते । २२. च भ$_1$–वर्जं–रक्षन्ति ॥

---

* रा–इयं ते प्रत्ययेनास्मि । ब ल$_1$ ल$_2$ ल$_3$ प्र—नास्ति (त्रुटितः) ।

सु-व्यक्तं[1] राज-दोषो[2] हि भविष्यति न[3] सं-शयः ।
१८] पुरे जन-पदे चैव[1] यथा[1] बाल-वधो ह्य् अयम् ॥१९॥ [१८
एवं बहु-विधैर् वाक्यैर् निन्दमानो[4] मुहुर्-मुहुः ।
१९] राजानं दुःख-सन्तप्तो जगर्हे गृह्य तं सुतम् ॥[5]२०[6]॥ [१९

इत्यार्षे रामायण उत्तर-काण्डे ब्राह्मण-परिदेवनं[7] नाम
षट्सप्ततितमः सर्गः ॥ ७६ ॥

---

## [ वं-८० ]= [ सप्तसप्ततितमः सर्गः ] =[ दा-७४ ]

आर्त-वद्[8] बहु-रूपं तद्[8] द्वि-जस्य परि-देवितम्[9] ।
१] शुश्राव[10] राघवः सर्वं[8] दुःख-शोक-समन्वितम्[11] ॥ १ ॥ [१
स च दुःखेन सं-तप्तः सर्वान् आ-हूय मन्त्रिणः ।[12]
२] पुरो-धसम् उपाऽध्यायं भ्रातरौ[13] नैगमांस् तथा[12] ॥ २ ॥ [२
ततो द्वि-जा वसिष्ठेन[14] सार्धम् अष्टौ समा-गताः[14] ।
३] राजानं देव-सङ्काशम् ऊचुर्[15] वर्धस्व नित्य-शः[15] ॥ ३ ॥ [३
मार्कण्डेयोऽथ मौद्गल्यो वाम-देवः[16] स-कश्यपः[16] ।
४] कात्यायनोऽथ जाबालिर् गौतमो नारदस् तथा ॥ ४ ॥ [४
एते द्विजर्षभाः सर्वे आसनेषूऽप-वेशिताः[17] ।
५] मन्त्रिणश् च तथा सर्वे यथाऽर्हम् अनुकूल-तः ॥[18]५॥ [५

---

१. च-तद् व्यक्तं । २. च-°दोषेण जातो मे नात्र । ३. च-वापि तथा । ४. च-निंदन्नथ । ५. च-स द्विजो दुखेन संतप्त उपगृह्य सुतं तदा । अतः परमधिकश्च पाठः—ब्राह्मण्या ब्राह्मणः सार्धं सुतमेकेन धारयन् । तत्रैवोपाविशद्भूमौ राजद्वारि च दुःखितः ॥ एवं द्विजो बहुविधैः करुणैस्तदानीं वाक्यैः सुदुःखपरितप्तमना नृपेन्द्रम् । स रुद्य बालमुपधार्य रुरोद दुःखात् शुश्राव चैव नृपतिः परिदेवितं तत् ॥ ६. अ ल$_2$-नास्ति । ७. च-ब्राह्मणपुत्रमरणं । ८ अतः पूर्वमधिकः पाठः—च भ$_1$-वर्जे-आर्तो रोरूयमाणस्तु सबन्धुरतिदुःखितः । च-तथातिकरुणं तस्य । अ भ$_1$ रा$_1$ ल$_2$ प्र-°वद्बलरूपस्य । ९. प्र-°देवनं । १०. च-संश्रुत्य । ११. च भ$_1$ ल$_2$-°तः । १२. भ-सुदुःखेन सुसंतप्तो मन्त्रिणः समुपानयत् । १३. च-ज्ञातींश्च सह नैगमैः । १४. च-°ष्ठप्रमुखा ऋषयः प्रविश्य तु । १५. च-वर्धयामासुरागताः । १६. अ प्र-वासुदेवः स° । च भ$_1$-°देवोऽथ काश्य° । १७. च-तत्रैव समुपागताः । भ$_1$-मंत्रिणो नैगमास्तथा । भ$_2$ रा$_1$ ल$_1$ ल$_3$-ह्यास° । १८. च-ततो राजा तु ताम्सर्वान्यथार्हमुपवेशयत् । भ$_1$-आसनेषूपविविशुः सर्वेषु रुचिरेष्विह ॥

तेषां समुप-विष्टानां सर्वेषां[1] दीप्त-तेजसाम्[2] ।
६] आ-चचक्षे ततः[3] सर्वं[3] द्वि-जोऽयम्[4] उप-रोदिति[4] ॥ ६ ॥ [६
तस्य[5] तद् भाषितं[5] श्रुत्वा राज्ञो दीनस्य नारदः ।
७] प्रत्य्-उवाच शुभं वाक्यम् ऋषीणां सन्नि-धौ तदा[6] ॥ ७ ॥ [७
शृणु राम[7] यथाऽकाले प्राऽऽप्तोऽयं[8] बालकः[9] क्षयम् ।
८] श्रुत्वा कर्तव्य-तां[10] वीर[10] कुरुष्व रघु-नन्दन ॥ ८ ॥ [८
पुरा कृत-युगे राजन्[11] ब्राह्मणानां तपस्वि-ता[11] ।
९] अ-ब्राह्मणस्[12] तदा राजन्[12] न तपस्वी कथं[13] चन[13] ॥ ९ ॥ [९
तस्मिन् युगे प्र-ज्वलिते ब्रह्म-भूते ह्य् अन्-आवृते ।[14]
१०] अ-मृत्यवस् तदा सर्वे[15] जायन्ते दीर्घ-जीविनः[16] ॥१०॥ [१०
ततस् त्रेता-युगं नाम ब्राह्मणानां[17] वपुष्-मताम्[17] ।
११] क्षत्रिया यत्र जायन्तेऽपूर्वेण[18] तपसाऽन्विताः[19] ॥११॥ [११
वीर्येण तपसा चैव तेऽधिकाः पूर्व-जन्मसु[20] ।
१२] मानवेया महाऽऽत्मानस् तस्मिन्न् एव[21] युगे-युगे[21] ॥१२॥ [१२
ब्रह्म-क्षत्रं[22] तु[22] तत् सर्वं यत्[23] पूर्वम् अ-परं[23] च यत् ।
१३] युगयोर् उभयोर् मध्ये[24] राम वीर्य-समन्वितम्[24] ॥१३॥ [१३
अ-पश्यन्तस्[25] तु ते सर्वे[25] वि-शेषम् अधिकं ततः ।
१४] स्थापनं[26] चक्रिरे सर्वे[27] चातुर्वर्ण्यस्य सर्व-शः[28] ॥१४॥ [१४
१५उ] अ-धर्मः[29] पादम्[29] एकं तु पातयेत्[30] पृथिवी-तले । [१५उ
१६पू] अ-धर्मेण तु सं-युक्तो[31] मन्द-तेजा भवेन् नृ-पः[31] ॥[32]१५॥ [१६

---

१. च–राघवो । २. भ₁–दीनचेतसां । ३. च–°थ तत्सर्वं । भ₁– रघुश्रेष्ठो । ल₁–°तः सर्वान् । ४. च–ब्राह्मणस्य प्ररोदनं । भ₁–द्विजं तं सुतरोदिनं । ५. अ रा₁–तथा तद् भा° । च–तस्य तद्वचनं । भ₁–इत्येवं भा° । ६. च भ₁–नृपं । ७. भ₁–राजन् । ८. च–प्राप्तवान् । ९. भ₁–दारकः । १०. च–चैव प्रतीकारं । ११. च–राम ब्राह्मणा वै तपस्विनः । भ₁–राम सर्वं ते ब्राह्मणोत्तरं । भ₂ ब प्र–°नां तपस्विनां । १२. भ₁–°णो नैव कश्चिन् । १३. च–कदाचन । भ₁–न विद्यते । १४. च–नास्ति । १५. च–मर्त्याः । १६. भ₁–चिरजी° । १७. च–मानुषाणां ततोऽभवत् । १८. च–°न्ते अग्रेण । १९. भ₁–°सावृताः । २०. च–रघुनन्दन । भ₁–सर्वजन्तुषु । २१. च–त्रेतायुगेऽभवन् । भ₁–त्रेतायुगे तदा । २२. भ₁–क्षत्रे च । २३. च–वर्जं-तत्पू° । भ₁–ततः पूर्वं परं । २४. च भ₁–वर्जं–राम समा वीर्यसमन्विताः । च–आसन् समा वीर्यतपोऽन्विताः । २५. भ₁–°श्यमाना वीर्यं तु । २६. च भ₁–°नां । २७. भ₁–हृष्टास् । २८. अ ल₂ ल₃–ते तदा । च–राघव । २९. भ₁ भ₂–वर्जं–°मेपादम् । ३०. भ₁–वर्जं–°पातयन् । ३१. भ₁–°कास्ते न मन्दाऽभवंस्तदा । ३२. अत आरभ्य च–१७-शश्लोकस्य पूर्वार्धं यावन्नास्ति ॥

आ-विशेद् यदि पूर्वेण राजसं[1] हि[1] मलं भृशम् ।
N] अनृ-ऋतं नाम तद् भूतं पातयेत्[2] पृथिवी-तले[2] ॥१६॥ [१७
अन्-ऋते च समुत्-पन्ने धर्म-पादः प्र-णश्यति ।
N] ततः प्रादुष्-कृतं[3] पूर्वम् आयुस्[4] तत् परि-कीर्तितम्[4] ॥१७॥ [१८
पातिते त्व् अनृ-ऋते तस्मिन्न् अ-धर्मे च महीं गते ।[5]
१६उ] शुभान्य्[6] एवाऽचरंल् लोकाः[6] सत्य-धर्म-पुरस्कृताः[6] ॥१८॥ [१९

---

त्रेता-युगेऽभवंस् तत्र ब्राह्मणाः क्षत्रियाश् च ये ।[8]
१७] तपोऽतप्यन्त ते सर्वे शुश्रूषाम् अपरे जनाः ॥[9]१९॥ [२०
अ-धर्मस्[10] त्व् अ-परस्[10] तेषां वैश्यं[11] शूद्रम् उपाऽगमत्[12] ।
१८] पूजां[13] च सर्व-वर्णानां शूद्राश् चक्रुर्[13] विशेष-तः ॥२०॥ [२१
एतस्मिन्न्[14] अन्तरे तेषाम् अ-धर्मेणाऽऽवृतेन[15] च[15] ।
१९] ततः सर्वे भृशं त्रासम् आ-जग्मुर्[16] नृप-सत्तमाः[16] ॥२१॥ [२२
ततः पादस् त्व् अ-धर्मस्य[17] द्वितीयः[18] सम्-अपद्यत[18] ।
२०] ततो द्वापर-संज्ञोऽयं युगस् तु सम्-अजायत ॥२२॥ [२३
तस्मिन् द्वापर-संज्ञे तु वर्तमाने युग-क्षये[19] ।
२१] अ-धर्मश् चाऽनृ-ऋतं चैव ववृद्धे[20] (?धा)द्वे(?ते) पुरुषर्षभ ॥२३॥[२४
ततो द्वापर-संख्याने[21] तपो वैश्याः[22] समाऽविशन्[23] । [२५
२२] त्रिभ्यो युगेभ्यस् त्रैवर्ण्यं धर्मस्य परिनि-ष्ठितम् ॥[24]२४॥

---

१. भ$_1$-राजभयं । २. भ$_1$-°पातयामास भूतले । ३. च-प्रादुरभूत् भ$_1$-प्रादुष्करोत् । ४. च-आयुषां परिनिश्चयः । भ$_1$-आयुषः प्रतिनिश्चयः ५. च-अधर्मेण च संयुक्ता महात्मानोऽभवन्नृपाः । भ$_1$-तदाप्यधर्मे पतिते महात्मनोऽनृते तथा । ६. अ ल$_2$ प्र-°नि वर्धयंल्लोके । च-सत्यधर्मं पुरस्कृत्य । भ$_2$ शुभाचारं च° । ७. च-शुभान्येवाचरंस्तदा । ८. च-त्रेतायुगे मुनिर्वीर ब्रह्मक्षत्रमनुत्तमं । भ$_1$-त्रेतायुगे पुनर्वृत्ते ब्रह्मक्षत्रमनुव्रताः । ९. अ रा$_1$ ल$_2$ प्र-ततोऽत° । च तपस्तेपे महाभागः शुश्रूषां चेतरे जनाः । भ$_1$-तपस्तेपुर्महात्मानः शु° । १०. च-स धर्मपरमस् । भ$_1$-स धर्म अपरस् । ११. भ$_1$-वर्जं- वैश्यः । १२. च भ$_1$-अथाविशत् १३. च-प्रजा प्रयोजयच्चस्माद्ब्रह्मक्षत्रं । भ$_1$-पूजां प्रयोजयंस्तस्मिन्ब्रह्मक्षत्रे । १४. च भ$_1$-एवं निरंतरे । १५. च-तदासीदद्भुतं तदा । भ$_1$-उद्भूतमनृतं पुनः । १६ च-गत्वा राघवनन्दनः । भ$_1$-समाजग्मुर्नरर्षभाः । १७. भ$_1$-वर्जं-पादमध° । १८ च-°यं समपातयत् । भ$_1$-वर्जं-°यमवतारयन् । १९ च-युगे नृप । २०. च वर्धते । भ$_1$-वर्तते । २१. च-°रमध्ये तु । भ$_1$-°रसंज्ञे तु । २२. भ$_1$-वैश्यान् २३. भ$_2$ ल$_2$-वर्जं-°शत् । २४. च-युगे तृतीये त्रैवर्ण्यं धर्मे प्रतिवर्तते । भ$_1$ युगत्रयस्य त्रैवर्ण्यं धर्मस्य प्रतिष्ठति ॥

न शूद्रो लभते ह्य्[1] अंशं तपः कर्तुं[1] नरर्षभ[2] । [२६
२३] हीन-वर्णा नर-श्रेष्ठ तप्यन्ते[3] सु-महत् तपः[3] ॥२५॥ [२७
भविष्या[4] शूद्र-योनौ तु[4] तपश्-चर्या[5] कलौ युगे ।
२४] अ-धर्मः परमो[6] राजन्[6] द्वापरे शूद्र-कारितः ॥[7]२६॥ [२८
स ते विषय-पर्यन्ते राजन्न् उग्र-तरं तपः ।[8]
२५] शूद्रस् तपति[9] दुर्-बुद्धिस् तेन बाल-वधः कृतः[10] ॥२७॥ [२९
यो ह्य् अ-धर्मम् अ-कार्यं वा त्रि-षये पार्थिवस्य हि[11] ।
२६] पुरे वा राज-शार्दूल कुरुते दुर्-मतिर् नरः ॥२८॥
क्षिप्रं स नरकं याति स च राजा[12] न सं-शयः । [३०
२७] चतुर्थं[13] तस्य[13] पापस्य भागम् अश्नाति पार्थिवः ॥२९॥ [३१पू
स त्वं पुरुष-शार्दूल चरस्व[14] वि-षयं स्व-कम्[14] ।
२८] दुष्-कृतं[15] यत्र पश्येस् त्वं[15] तत्र यत्नं समा-चर ॥३०॥ [३२
एवं[16] ते धर्म-वृद्धिश् च बलाऽऽयुर्-वर्धनं[17] तथा ।
२९] भविष्यति नर-व्याघ्र[18] बालस्याऽस्य च जीवितम् ॥३१॥ [३३

इत्यार्षे रामायण उत्तर-काण्डे नारद-वाक्यं नाम
सप्तसप्ततितमः सर्गः ॥ ७७ ॥

---

## [बं-८१,८२]= [अष्टासप्ततितमः सर्गः] =[दा-७५,७६]

नारदस्य तु तद् वाक्यं श्रुत्वाऽमृत-मयं तदा[19] ।
१] प्र-हर्षम् अ-तुलं लेभे लक्ष्मणं चेदम् अब्रवीत् ॥ १ ॥ [१
गच्छ सौम्य द्विज-श्रेष्ठं समा-श्वासय लक्ष्मण ।
२] बालस्य च[20] शरीरं त्वं तैल-द्रोण्यां नि-धापय[21] ॥ २ ॥ [२

---

१. भ$_1$-कर्तुं तप उग्रं । २. च-महीपते । ३. च-नाचरेत् सु° । ४. च-भविष्ये शूद्रवर्णस्थ । भ$_1$-भविता शूद्रयोन्यां तु । ५. च-तपस्तप्यं । ६. भ$_1$-°मोदारो । ७. च-अधर्मश्च महाराज तदा सम्पत्स्यते महत् । अतः परमधिकः पाठः—भ$_1$-अधर्मेण तु संयुक्तास्तेन मन्दासवस्तदा । ८. च-स वै त्वया न विज्ञातो राजन्नुग्रतपाः क्वचित् । ९. च भ$_1$-तप्यति । १०. च- नृप । ११. च-ह । १२. च भ$_1$ भ$_2$ ल$_1$-वर्जं-राजन् । १३. च-°र्थश्चैव । १४. च-सुरर्षे मृगय स्वयं । १५. भ$_1$-दुष्करं यत्र पश्येथास् । १६. भ$_1$-एतत् । १७. च भ$_2$ ल$_3$ ब-बाला° । १८. भ$_1$-नरश्रेष्ठ । १९. च-तथा । भ$_1$-यथा । २०. भ$_1$ ल$_2$-तु । २१. अ ल$_2$ ल$_3$-निपातय । च-निवेशय ॥

गन्धैश् च परमोदारैस्[1] तैलैश् चाऽपि सुगन्धिभिः ।
३] यथा न शीर्यते[2] बालस् तथा सम्यग्[3] वि-धीयताम्[4] ॥ ३ ॥ [३
यथा शरीरं गुप्तं[5] स्याद् बालस्याऽक्लिष्ट-कर्मणः[5] ।
४] वि-पत्तिः परि-भेदो[6] वा न भवेत् तत् तथा कुरु ॥ ४ ॥ [४
तथा सं-दिश्य सौमित्रिं[7] लक्ष्मणं शुभ-लक्षणम्[8] ।
५] मनसा पुष्पकं दध्याव्[9] आ-गच्छेति महा-यशाः ॥ ५ ॥ [५
ईप्सितं[10] स तु वि-ज्ञाय पुष्पको[11] हेम-भूषितः[11] ।
६] आ-जगाम मुहूर्तेन समीपं राघवस्य ह ॥ ६ ॥ [६
सोऽब्रवीत्[12] प्राञ्जलिर् वाक्यम् अयम् अस्मि नराऽधिप ।
७] वश्यस् तव महा-बाहो किं-करः समुपाऽऽगतः ॥[13] ७ ॥ [७
भाषितं[14] रुचिरं श्रुत्वा[14] पुष्पकस्य नराऽधिपः ।
८] अभि-वाद्य महर्षींस् तु[15] वि-मानं सोऽध्य्-अरोहत ॥[16] ८ ॥ [८
धनुर् गृहीत्वा तूणौ[17] च खड्गं च[18] रुचिर-प्रभम्[18] ।
९] नि-क्षिप्य नगरे वीरौ सौमित्रि-भरताव् उभौ ॥ ९ ॥ [९
१०पू] ययौ[19] प्रतीचीं त्वरितो वि-चिन्वन् सु-समाहितः[20] ।
उत्-तराम् अगमच् छ्री-मान्[21] दिशं हिमवद्-आश्रिताम्[22] ॥[23] १० ॥
११] अ-पश्यमानः[24] स ततः[24] स्व्-अल्पम् अप्य् अथ दुष्-कृतम् ।[25]
१२पू] पूर्वां[26] वै परि-चक्राम दिशं पश्यन्[26] नराऽधिपः ॥ ११ ॥ [११

---

१. भ$_1$–परमैस्तद्वत् । २. च–हीयते । ३. च भ$_1$–सौम्य । ४ भ$_2$ रा ल$_1$ ब–°यते । ५. च–गुप्तस्य बालस्याक्लिष्टमेव च । ६. च–वर्जं–परभेदो । ७. च काकुत्स्थो । ८. अ च–°लक्ष्मणं । ९. भ$_1$–ध्यात्वा । १०. च भ$_1$–इङ्गितं । ११ भ$_1$–कामगं हेमभूषणं । रा$_1$ ल$_3$ ब–पुरुषो हे° । १२. अ ल$_2$–सोऽभवत् १३. च–आज्ञापयस्व नृपते किंकरं मामुपस्थितं । भ$_1$–वशे तव महाबाहो किं मामुपस्थितं । १४. भ$_1$–ततः प्रदक्षिणं कृत्वा । १५. च भ$_1$–तान् । १६. अत परमधिकः पाठः—भ$_1$–भाषितं रुचिरं श्रुत्वा पुष्पके वै महायशाः । १७. भ$_1$ तूणं । १८. भ$_1$–चापि महाप्रभ । १९. च–यातः । भ$_1$–वर्जं–प्रायात् । भ$_1$–दिशं २०. च–रघुनन्दनः । २१ भ$_1$–चापि । भ$_2$–छीघ्रं । २२. अ–°श्रितः । भ$_1$ °वताश्रितां । २३. च–नास्ति । २४. च–नापश्यत्तत्र धर्मात्मा । २५. अतः परमधिक पाठः—च–विचिन्त्य पश्चिमामाशामुत्तरां प्रययौ तदा । न तत्राधार्मिक सत्त्वमपश्यत्किंचिदप्युत ॥ भ$_1$–नास्ति । २६. च–ततः पूर्वां दिशं यातो विमानेन । भ$_1$–पूर्वामपि दिशं सर्वामथाप° ॥

शुचिः शुद्ध-समाचार आदर्श-तल-सन्निभः ।[1] [१२पू

१३] दक्षिणां दिशम् आऽक्रामत् ततो राजर्षि-नन्दनः ।[2]
विन्ध्यस्य[3] चोत्-तरे[3] पार्श्वे ददर्श सु-महत्[4] सरः[4] ।।१२।। [१३

१४] तस्मिन् सरसि तप्यन्तं तापसं सु-महत् तपः ।
ददर्श राघवो भीमं लम्बमानम् अधो-मुखम् ।।१३।। [१४

१५] अथैनं[5] समुपा-गम्य[5] तपन्तं[6] तप उत्-तमम्[6] ।
उवाच राघवो वाक्यं धन्यस्[7] त्वम् असि सु-व्रत ।।१४।। [१५

१६] कस्यां योन्यां[8] तपो-वृद्धिं(?द्ध) वर्तसे शुभ-लक्षण[9] ।
कुतूहलात्[10] त्वां पृच्छामि रामो दाशरथिर् ह्य् अहम् ।।१५।। [१६

१७] मनीषितस् ते को न्व्[11] अर्थः[11] स्वर्ग-लाभोऽवरोऽपि[12] वा[12] ।
किम्-अर्थं[13] तप्यसे स त्वं[13] तपस्[14] त्व् अन्यैः सु-दुश्चरम्[15] ।।[15]१६।।[१७

१८] ब्राह्मणो वाऽसि भद्रं ते क्षत्रियो वाऽसि[16] दुर्-जयः ।
वैश्यो वा यदि वा शूद्रः सत्यम् एतद् ब्रवीहि[17] मे[17] ।[18] [१८

१९] तपः सत्याऽऽत्मकं नित्यं सत्ये ह्य् अ-मृतम् आ-हितम् ।।[18]१७।।[N

वं-८२] तस्य तद् भाषितं श्रुत्वा रामस्याऽक्लिष्ट-कर्मणः । [दा-७६

१] अवाक्-शिरास् तथा-भूतो वाक्यम् एतद् उवाच ह ।।१८।। [१
शूद्र-योनौ प्र-सूतोऽहं चराम्य्[20] उग्र-तरं तपः[20] ।

२] देव-त्वं प्राऽर्थये राम स-शरीरोऽद्य[21] पार्थिव[21] ।।[22]१९।।[२

---

१. च-न ददर्श च तत्रापि कं च दुष्कृतकारिणं । भ$_1$-सम्प्रहृष्टजनाकीर्णामादर्शमिव निर्मलां । २. च-°मत्ततो राघवनन्दनः । भ$_1$-ततो दिशं समाक्रामद्दक्षिणां रघुनन्दनः । ३. च-स शैलस्योत्तरे । भ$_1$-शैलस्य उत्तरे । ४. रा$_1$ ल$_3$ ब प्र-महात्मनः । ५. भ$_1$-तमुपागम्य काकुत्स्थो । ६. अ-तप्यंतं° । च-तप्यमानं तप उ° । भ$_1$-तप्यमानं महत्तपः । ७. भ$_1$ भ$_2$-अत आरभ्य १६-शश्लोकपूर्वार्धं यावन्नास्ति । ८. च-योनौ । ९. च ल$_1$ ल$_2$-दृढविक्रम । १०. च-कौतू° । ११. च-वाद्य । १२. च-वर्जं । अ-°भो धनाश्रयः । १३. रा$_1$ ल$_1$ प्र-तत् । १४. भ$_1$-श्रोतुमिच्छामि तापस । भ$_1$-तपस्त्वन्यैः सुदुश्चरं । ल$_1$-°न्यैः सुदुष्करम् । १५. च-तप्यसे च यदर्थं तु तपोऽन्यैर्दुश्चरं नरैः । १६. च ब-वाऽथ । १७. च-ब्रवीमि ते । १८. भ$_1$-वैश्यस्तृतीयो वर्णो वा शूद्रो वा सत्यमुच्यतां । अतः परमधिकः पाठः—च-इत्येवमुक्तः स नराधिपेन अवाक् दाशरथाय तस्मै । उवाच जातिं नृपपुङ्गवाय यत्कारणं चैव तपः प्रयत्नः ।। इत्यार्षे रामायण उत्तरकाण्डे शम्बुकदर्शनं नाम सर्गः । भ$_1$-आर्षे श्रीरामायणे शूद्रदर्शनो नाम सर्गः । १९. च-नास्ति । भ$_1$-कोऽर्थो व्यवसितस्तेऽद्य स्वर्गलोकपरिग्रहे ।। २०. च भ$_1$-तपश्चोग्र समास्थितः । २१. भ$_1$-°रीरेण धर्मवित् । २२. च-नास्ति ।।

न मिथ्याऽहं वदे राम[1] देव-लोक-जिगीषया[1] ।
३] शूद्रं मां विद्धि काकुत्स्थ शम्बूकं[2] नाम नाम-तः ॥२०[3]॥ [३
भाषतस् तस्य शूद्रस्य खड्गं सु-रुचिर-प्रभम् ।
४] निष्-कृष्य कोशाद् वि-मलं शिरश् चिच्छेद राघवः ॥२१॥ [४
तस्मिञ् शूद्रे हते देवाः सेन्द्राः[4] साऽग्नि-पुरो-गमाः ।
५] साधु साध्व् इति काकुत्स्थं प्र-शशंसुर् मुहुर्-मुहुः ॥२२॥ [५
ततो[5] वृष्टिः सु-महती दिव्यानां[5] सु-सुगन्धिनाम् ।
६] पुष्पाणां[6] वायु-मुक्तानां सर्व-तः[7] प्र-पपात ह[7] ॥२३॥ [६
सु-संप्रीत्याऽब्रुवन्[8] देवा रामं सत्य-पराऽऽक्रमम्[9] ।
७] सुर-कार्यम् इदं सौम्य[10] सु-कृतं[11] ते महा-मते[11] ॥२४॥ [७
गृहाण च वरं राम[12] यत् ते मनसि काङ्क्षितम्[12] ।
८] त्वत्-कृते[13] नहि शूद्रोऽयं स-शरीरोऽभ्य्-अयाद् दिवम्[14] ॥[15]२५॥[८
देवानां भाषितं[16] श्रुत्वा राघवः सु-समाहितः ।
९] उवाच प्राञ्जलिर् वाक्यं सहस्राऽक्षं पुरं-दरम् ॥२६॥ [९
यदि देवाः प्र-सन्ना मे द्विज-पुत्रः[17] स जीवतु[17] ।
१०] वरम्[18] एतद् धि भवतां[18] काङ्क्षितं परमं हि[19] मे[19] ॥२७॥ [१०
ममाऽप-चाराद्[20] बालोऽसौ[21] ब्राह्मणस्यैक-पुत्रकः[21] ।
११] अ-प्राऽऽप्त-कालः[22] कालेन नीतो वैवस्वत-क्षयम् ॥२८॥ [११
स[23] सं-जीवतु[23] भद्रं वो[24] नाऽनृ-ऋती[25] स्याम् अहं सुराः[25] ।
१२] द्वि-जस्य सं-श्रुतो ह्य् अर्थो जीवयिष्यामि ते सुतम् ॥[26]२९॥ [१२

---

१. भ$_1$ ल$_1$–वर्जं–देव जीवलो° । २. भ$_1$ ल$_1$ ल$_3$ ब प्र–शंबुकं । ३. च–नास्ति । ४. भ$_2$–अत आरभ्य २४-शश्लोकस्य प्रथमपादं यावन्नास्ति । ५. च भ$_1$–पुष्पवृष्टिश्च महती पुष्पाणां । ६. च भ$_1$–आकाशाद् । ७. च–°तो राममागमत् । भ$_1$–राघवं सर्वतोऽकिरत् । ८. च–सुप्रीताश्चाब्रु° । भ$_1$–प्रीतात्मानोब्रु° । ९. च भ$_1$–वाक्यविदां वरं । १०. च–राम । ११. च–कृतं ते नरसत्तम । भ$_1$–कृतं ते रघुनन्दन । १२. च भ$_1$–सौम्य यमिच्छसि महामते । १३. च भ$_1$–वर्जं–तत्कृते । रा$_1$ ल$_3$ ब–तत्कृतं । १४. अ ल$_2$–°रोऽभवद्विना । च–°रेण स्वर्गभाक् । १५. भ$_2$–नास्ति । १६. भ$_2$–वचनं । १७. च–°श्चास्य जीवितं । १८. च–ददतां वरमेतद्धि । भ$_1$–वरमेवं हि ददतां । १९. च भ$_1$ ल$_1$–मम । २०. अ–समाचरतु । च भ$_1$–°राधाद् । २१. च–बालोऽयं देवा ब्राह्मणपु° । रा$_1$ ल$_1$ ल$_3$ ब प्र–°णस्यैष पु° । २२. च–अकाल एव । २३. च–तं जीवयत । २४. ल$_3$–वै । २५. च–°ऋतं कर्तुमर्हथ । २६. च–सम्प्रति संश्रुतं तस्य जीवितं द्विजसन्निधौ ॥

राघवस्य तु तद् वाक्यं श्रुत्वा विबुध-सत्तमाः[1] ।
१३] प्रत्य्-ऊचस् ते[2] महाऽऽत्मानं प्रीत्या[3] प्रीति-समन्विताः ।।३०[4]।।[१३
नि-वृत्तो भव काकुत्स्थ ब्राह्मणस्यैष[5] पुत्र-कः[5] ।
१४] जीवितं प्राऽऽप्नुयाद्[6] भूयः समेतश् चाऽपि बन्धुभिः[7] ।।३१।। [१४
यस्मिन् मुहूर्ते काकुत्स्थ शूद्रोऽयं विनि-पातितः ।
१५] तस्मिन् मुहूर्ते जीवेन स बालः सम्-अयुज्यत[8] ।।३२।। [१५
स्वस्ति प्राऽऽप्नुहि भद्रं ते साधयामः[9] परं-तप ।
१६] अगस्त्यस्याऽऽश्रम-पदे[10] द्रष्टारः स्मो महा-मुनेः[10] ।।३३।। [१६
तस्य दीक्षा-समाप्तिर् हि ब्रह्मर्षेः सु-महाऽऽत्मनः[11] ।
१७] द्वादशे हि स वै वर्षे जल-वासाद् उपाऽऽगतः ।।[12]३४।। [१७
ते गमिष्याम वै द्रष्टुम् अगस्त्यम् ऋषि-सत्तमम् ।[13]
१८] त्वं चाऽपि गच्छ भद्रं ते वर्धयस्व[14] महा-मुनिम्[14] ।।३५।। [१८
स तथेति प्रति-ज्ञाय देवानां रघु-नन्दनः ।
१९] आ-रुरोह वि-मानं तं[15] पुष्पकं हेम-भूषितम् ।।[16]३६।। [१९

इत्यार्षे रामायण उत्तर-काण्डे शम्बूक-वधो[17]
नामाऽष्टासप्ततितमः सर्गः ॥ ७८ ॥

---

## [वं-८३,८४]= [एकोनाशीतितमः सर्गः]= [दा-७६,७७]

ततो देवाः प्र-यातास् ते वि-मानैः सूर्य-सन्निभैः[18] ।
१] रामोऽप्य् अनु-जगामाऽऽशु कुम्भ-योनेस्[19] तपो-वनम्[19] ।।१।। [२०
दृष्ट्वैव[20] देवान् सम्प्राऽऽप्तान् अगस्त्यः स[21] तपो-निधिः[21] ।
२] अर्चयामास तुष्टाऽऽत्मा[22] सर्वांस् तान् अविशेष-तः ।। २ ।। [२१

---

१. च-देवाः सवासवाः । २. च-तम् । ३. च $भ_2$ $ल_1$ ब प्र-प्रीताः । ४. अ $ल_2$-नास्ति । ५. च-सोऽस्मिन्नहनि बालकः । ६. च $ल_1$-प्राप्तवान् । ७. च-बान्धवैः । ८. च-समबुद्धयत । ९. $भ_1$-मा भयं ते । १०. च-°पदं द्रष्टुकामा म° । $भ_1$-°दं द्रष्टुं रामो महाबलः । ११. प्र-हि म° । १२. च-द्वादशं हि गतं वर्षं जलशय्यामुपागतः । १३. च-काकुत्स्थ तद्गमिष्यामि मुनिं तमभिभाषितुं । १४. च-तं द्रष्टुं ऋषिसत्तमं । १५. च $भ_1$-वर्जे-तु । १६. अतः परमधिकः पाठः—च-अग्रे ततः सुरगणा मनःपवनवेगसमानवेगैः । रामोऽपि तान्स्वविमानवराभिरूढो द्रष्टुं तदा कलशयोनिमभिप्रयातः । १७. $भ_2$ $ल_1$-शंबुक° । $रा_1$ $ल_3$-शूद्रशम्भुक° । १८. च $भ_1$-बहुविस्तरैः । १९. $भ_1$-°निं तपोनिधिं । २०. च-दृष्ट्वा तु । २१. $भ_1$-भगवानृषिः । २२. च-धर्मात्मा । $भ_1$-सुप्रीतः ॥

प्रति-गृह्य ततः[1] पूजां सं-भाष्य[2] च महा-मुनिम् ।
३] जग्मुस् ते त्रि-दशास् तुष्टा नाक-पृष्ठं सहाऽनु-गाः[3] ॥ ३ ॥ [२२
गतेषु तेषु काकुत्स्थः पुष्पकाद् अव-रुह्य च ।
४] ततोऽभि-वादयामास ह्य् अगस्त्यं मुनि-सत्तमम् ॥[4]४ ॥ [२३
सोऽभि-वाद्य[5] महाऽऽत्मानं ज्वलन्तम् इव तेजसा ।
५] आतिथ्यं परमं प्राऽऽप्य नि-षसाद नराऽधिपः ॥ ५ ॥ [२४
तम् उवाच महा-तेजाः कुम्भ-योनिर् नराऽधिपम् ।
६] स्वागतं ते नर-श्रेष्ठ[6] दिष्ट्या प्राऽऽप्तोऽसि राघव ॥ ६ ॥ [२५
त्वं मे बहु-मतो राम कर्मभिर् लोक-विश्रुतैः ।
N] तथा गतिश् च सर्वेषां मुनीनां दीप्त-तेजसाम् ॥ ७[7] ॥ [N
त्वम् एवं बहु-मतो वीर[8] गुणैर् बहुभिर् उत्-तमैः ।
७] अ-तिथिः पूजनीयश् च मम नित्यं हृदि स्थितः ॥ ८ ॥ [२६
सुरास् तु[9] कथयन्ति त्वाम् आ-गतं शूद्र-घातिनम्[10] ।
८] ब्राह्मणस्य च धर्मेण त्वया जीवापितः[11] सुतः ॥ ९ ॥ [२७
उष्यतां[12] रजनीं चेह आ-वासे[13] मम राघव ।
९] प्र-भाते पुष्पकेनाऽसि गन्ताऽयोध्यां महा-द्युते[14] ॥[15]१०॥ [२८
इदं चाऽऽभरणं सौम्य सु-कृतं विश्व-कर्मणः ।[15]
१०] दिव्यं दिव्येन वपुषा दीप्यमानं स्व-तेजसा ।
प्रति-गृह्णीष्व काकुत्स्थ मत्-प्रियं कुरु राघव ॥११[16]॥ [३०
११] दत्तस्य[17] हि पुनर् दानैः सु-महत् फलम् अश्नुते[18] ।
तारणे हि भवान् शक्तः सेन्द्राणां मरुताम् अपि ।[19] [३१
१२] तस्मात् प्र-दास्ये विधि-वत् प्रत ऽच्छस्व नरर्षभ[20] ॥१२॥ [३२
अथोवाच महा-बाहुर् इक्ष्वाकूणां महा-रथः ।
१३] रामो मति-मतां श्रेष्ठः क्षत्र-धर्मम्[21] अनु-स्मरन् ॥१३॥ [३३

---

१. भ$_{1}$-च तां । २. च-सम्पूज्य । ३. भ$_{1}$-तु सानुगाः । ४. च-°मास स देवमृषिसत्तमं । भ$_{1}$-अभिवादयितुं चक्रे सोगस्त्यमृषिसत्तमं । ५. भ$_{1}$-अभि° । ६. भ$_{1}$-महाभाग । ७. च भ$_{1}$-नास्ति । ८. च भ$_{1}$-नित्यं । ९. च-हि । भ$_{1}$-च । १०. प्र-शीघ्रगामिनं । ११. च-संजीवितः । १२. च-इत्येतां । १३. च भ$_{1}$-सकाशे । १४. च-गन्ता स्वपुरमेव हि । १५. अ ल$_{2}$ भ$_{2}$ ब-नास्ति । १६. च भ$_{1}$ ल$_{1}$-वर्जं-नास्ति । १७. भ$_{1}$-लब्धस्य । १८. च भ$_{1}$-उच्यते । १९. भ$_{1}$-त्वं हि शक्तस्तारयितुं सेन्द्रानपि दिवौकसः । २०. च-नराधिप । २१. च भ$_{1}$-वर्जं-सर्वध° ॥

प्रति-ग्रहो वै भग-वन् ब्राह्मणस्याऽव(?पि) गर्हितः ।[1]
१४] क्षत्रियेण कथं विप्र प्रति-ग्राह्यं वि-जानता[2] ॥[3]१४॥ [३४
१५] ब्राह्मणेन यथा दत्तं तन् मे वक्तुम् इहाऽर्हसि ।[4] [३५
एवम् उक्तस् तु रामेण प्रत्य्-उवाच महान् ऋषिः ॥१५॥ [३६
१६] आसन् कृत-युगे राम ब्रह्म-भूते पुरा[5] युगे ।
अ-पार्थिवाः प्र-जाः सर्वाः सुराणां[6] तु शत-क्रतुः[6] ।[7] [३७
१७] पप्रच्छुः सुरलोकेशं पार्थिवं सुर-सत्तम(?मम्) ॥[8]१६॥ [३८
१९पू] यस्मै पूजां प्र-युञ्जाना धूत-पापाश् चरेमहि ॥[9]१७॥ [४०पू
ततो ब्रह्मा सुर-श्रेष्ठो लोक-पालान् स-वासवान्[10] ।
२०] समा-हूयाऽब्रवीत् सर्वास् तेजो-भागान्[11] प्र-यच्छत[11] ॥१८॥ [४१
ततो ददुर् लोक-पालाश् चतुर्-भागान्[12] स्व-तेजसाम्[13] ।
२१] अ-क्षुपच्[14] च ततो[15] ब्रह्मा यतो जातः क्षुपोऽभवत्[16] ॥[17]१९॥ [४२
तं ब्रह्मा लोक-पालानां समांऽशैः सम्-अयोजयत् ।
२२] ततो ददौ नृ-पं तासां प्र-जानां जय-संयुतम्[18] ॥२०॥ [४३
तत्रैन्द्रेण तु भागेन महीम् आऽज्ञापयन् नृ-पः ।
२३] वारुणेन तु भागेन वपुः पुष्णाति राघव[19] ॥२१॥ [४४
कौबेरेण तु[20] भागेन ह्य् आ-दत्तेऽर्थान् ददाति च[20] ।
२४] यस्[21] तु याम्यो भवेद् भागस्[21] तेन शासति स[22] प्र-जाः ॥२२[23]॥ [४५

---

१. च–भगवन्प्रग्रहो नित्यं ब्राह्मणस्यापि ग° । २. च–भवेत्ततः । ३. अतः परमधिकः पाठः—च–प्रतिग्रहो हि विप्रेन्द्र क्षत्रियाणां सुगर्हितः । ४. च–ब्राह्मणेन विशेषेण दत्तं तद्वक्तुमर्हसि । ५. अ–वर्ज–तदा । ६. च–ब्रह्माणमुपतस्थिरे । ७. अतः परमधिकः पाठः—ल$_1$–ताः प्रजा देवदेवेशं शरणार्थमुपागमन् । सुराणां स्थापितो राजा देवराजशतक्रतुः । ८. च भ$_1$–ताः प्रजा देवदेवेशं राजार्थं समुपाद्रवन् । अतः परमधिकः पाठः—च भ$_1$–सुराणां स्थापितो राजा त्वया देव शतक्रतुः । प्रयच्छास्मासु लोकेश पार्थिवं सुरपुङ्गव ॥ ९. अतः परमधिकः पाठः—च–निवत्स्यामो विना राज्ञा एष नो निश्चयः परः । १०. भ$_1$–समागतान् । ११. भ$_1$–तेजोभागं प्रयच्छथ । १२. च–वर्ज–°भागं । १३. अ भ$_2$ ल$_1$ ल$_2$ ल$_3$–°जसः । १४. भ$_1$–अक्षिपच् । १५. भ$_2$ रा$_1$ ल$_3$–यशे । १६. भ$_1$–क्षमो नृपः । १७. च–नास्ति । १८. भ$_1$–क्षुत्प्रपीडितं । भ$_2$–वर्ज–जयपीडितं । १९. च भ$_1$–पार्थिवः । २०. च–तथांशेन वित्तमानं ददौ तदा । २१. भ$_2$–अनुग्राह्यो भवेद्राम । २२. भ$_2$–वै । २३. अ ल$_2$ ल$_3$–नास्ति ॥

कौबेरेण[1] नर-श्रेष्ठ[2] भागेन रघु-नन्दन[2] ।
२५] प्रति-गृह्णीष्वाऽऽभरणं[3] तारणाऽर्थं[4] मम प्र-भो[5] ॥२३॥ [४६
तद् रामः प्रति-जग्राह मुनेस् तस्य महाऽऽत्मनः । [४७उ
२६] दिव्यम् आ-भरणं चित्रं प्र-दीप्तम्[6] इव भास्-करम्[6] ॥२४॥ [N
प्रति-गृह्य ततोऽगस्त्याद्[7] दिव्यम्[8] आ-भरणं ततः[8] ।
२७] आ-गमं तस्य दिव्यस्य प्रष्टुम्[9] एवोप-चक्रमे[9] ॥२५॥ [४८
अत्य्-अद्भुतम् इदं ब्रह्मन् वपुष्-मत् सु-मनोहरम्[10] ।
२८] कथं भग-वता प्राऽऽप्त[11] कुतो वा केन वाऽऽहृतम्[12] ॥[13]२६॥ [४९
कुतूहल-तया[14] ब्रह्मन् पृच्छामि त्वां तपो-धन[15] ।
२९] आश्चर्याणां[16] बहूनां हि सन्-निधिः परमो भवान् ॥२७॥ [५०
एवं वदति काकुत्स्थे मुनिर् वाक्यम् अथाऽब्रवीत्[17] ।
३०] शृणु राम यथा-वृत्तं पुरा त्रेता-युगे गते ॥२८॥ [५१
द्वापरे समनुप्राऽऽप्ते वने यद् दृष्टवान् अहम्[18] ।
N] आश्चर्यं सु-महाबाहो राम[19] तत्राऽव-लोकयन्[19] ॥[20]२९॥ [५२
वं-८४] पुरा कृत-युगे[21] ह्य् आसीद् अरण्यं बहु-विस्तरम्[22] । [दा-७७
१] समन्ताद् योजन-शतं निर्-मृगं[23] पक्षि-वर्जितम्[23] ॥३०॥ [१
तस्मिन् निष्-पुरुषेऽरण्ये कुर्वाणस् तप उत्-तमम् ।
२] अहम् आ-क्रमितुं सौम्य तद् अरण्यम् उपाऽगमम्[24] ॥[25]३१॥ [२
तस्य रूपम् अरण्यस्य निर्-देष्टुं नाऽशकं तदा ।
३] फल-मूल-सुखाऽऽस्वादैर्[26] बहु-रूपैश् च काननैः ॥३२॥ [३

---

१. च–तदिन्द्रेण । २. भ$_2$–तु भागेन रघुश्रेष्ठ नरोत्तम । ३. च भ$_1$ प्र-वर्ज–°गृहाणाभ° । ४. च भ$_1$–गृहाणार्थं । ५. च–भुज । ६. च–दीप्यमानमिति श्रुतिः । ७. च–तु तेऽग° । ८. च–राघव ऋषिसत्तमं । भ$_1$–राघवस्तमृषिं ततः । ९. च–प्रतिज्ञातुमुप्र° । भ$_1$–प्रष्टुं समुपच° । १०. भ$_1$–अनुत्तमं । ११. रा$_1$ ल$_1$ ल$_3$ प्र–प्रोक्तं । १२. भ$_2$–चाहृ° । १३. च–नास्ति । १४. च भ$_1$–कौतूहलितया । १५. च भ$_1$–महामुने । १६. च भ$_1$ ल$_1$–वर्ज–आचार्याणां । १७. च–उदाहरत् । १८. च–अतः परं सर्गसमाप्तिः—इत्यार्षे रामायण उत्तरकाण्डे आभरणदानो नाम सर्गः । १९. भ$_1$–दानमाश्रित्य केवलं । २०. च–नास्ति । भ$_1$–अत्रैव सर्गसमाप्तिः—इत्यार्षे रामायण उत्तरकाण्डे आभरणप्रदानो नाम सर्गः । २१. च भ$_1$–त्रेतायुगे । २२. अ–°स्तृतं । २३. भ$_1$–मृगपक्षिविवर्जितं । २४. भ$_1$–°गतः । २५. अत आरभ्य च भ$_1$ ल$_1$ ब–वर्ज–३३-शश्लोकस्य पूर्वार्धं यावन्नास्ति । २६. भ$_0$ ब–फलमूलैस्तथा शाखैर् ॥

तस्य मध्ये त्व् अरण्यस्य सरो योजनम् आ-यतम् ।
४] हंस-कारण्डवाऽऽकीर्णं चक्रवाकोपशोभितम् ॥[1]३३॥ [४
तद् आश्चर्यम् इवाऽत्य्-अर्थं निः-सत्त्वं वनम् उत्-तमम् । [५उ
५] अ-रजस्कं तथाऽक्षोभ्यं सरः पक्षि-गणाऽऽयुतम् ॥[2]३४॥
समीपे[3] तस्य सरसो[3] महद्-अद्भुतम्[4] आ-श्रमम्[4] । [६
६] पुराणं पुण्यम् अत्य्-अर्थं तपस्वि-जन-वर्जितम् ॥३५॥
तत्राऽहम्[5] अवसं रात्रिं[6] नैदाघीं रघु-नन्दन[6] । [७
७] प्र-भाते पुनर्[7] उत्थाय सरस् तद् उप-चक्रमे ॥३६॥
अथाऽपश्यं शवं[8] तत्र सु-पुष्टम् अ-रुजं शुचिम्[8] । [८
८] तिष्ठन्तं परया लक्ष्म्या तस्मिंस्[9] तोयाऽऽशये नृ-प[9] ॥३७॥ [९उ
तद्-अर्थं चिन्तयानोऽहं मुहूर्तम् इव[10] राघव ।
९] धि-ष्ठितं(?तः) सरसस् तीरे किम् इदम् इति चिन्तयन् ॥३८॥ [१०
अथाऽपश्यं मुहूर्तेन दिव्यम् अद्भुत-दर्शनम् ।
१०] वि-मानं परमोदारं[11] हंस-युक्तं मनो-जवम् ॥३९॥ [११
N] अध्यर्ध-स्त्री-सहस्रं[12] तु[13] श्री-मद्[13] अप्सरसां तथा[14] । [N
तस्मिन् वि-माने काकुत्स्थ स्वर्गिणं[15] तम् अन्-आमयम् ।[16]
११] उपाऽऽस्तेऽप्सरसां वीर सहस्रं दिव्य-भूषणम् ॥[17]४०॥ [१२
जगुर्[18] गेयानि[19] दिव्यानि[19] वादयन्ति स्म[20] चाऽपराः[20] । [१३पू
१२] अपराश् चन्द्र-रश्म्य्-आभैर् हेम-दण्डैः स-चामरैः ।[21]
N] विविजुर्[22] वदनं तस्य पुण्डरीकदलेक्षणम् ॥[23]४१॥ [१४
N] ततः सिंहाऽऽसनं हित्वा मेरु-कूटाद् इवांऽशु-मान् ।[23]

---

१. च ब–नास्ति । २. च–सरश्चाक्षोभ्यसलिलं नैकपक्षि° । भ$_1$-सरश्चाक्षोभ्यमभवत् नैकप° । ३. च भ$_1$–वर्जे–सरसस्तत्समीपे तु । ४ भ$_1$–ददर्शाहं महाश्रमं । ५. च–तत्राश्रमे वसानोहं । ६. च–रजनीं नृप । भ$_1$–पुरुषोत्तम । ७. च–कल्यम् । ८. च–शवमहं प्रशस्तमरुजं क्वचित् । भ$_1$–अहं शवं सुपुष्टमजरं शिवं । ९. च–समीपे सरसस्तदा । भ$_1$–सरसो नातिदूरतः । १०. च भ$_1$–वर्जे–अपि । ११. रा$_1$–मं हसं । १२. भ$_1$–तथाध्यर्धस° । १३. भ$_1$–च विमाने । १४. भ–नृप । भ$_2$–तदा । १५. ल$_3$ ब–वर्जे–°र्णां । १६. भ$_1$–नास्ति । १७. च–नास्ति । भ$_1$–वपुष्मतीनां तत्रस्थं रमयन्ति स्म तत्परं । १८. च भ$_1$–गायन्ति । १९. च–गेयं दिव्यं तु । २०. भ$_1$–तथापराः । २१. च भ$_1$–मृदंगवीणापणवान्नृत्यन्ति च तथापराः । २२. अ–विरजं । २३. च भ$_1$–नास्ति ॥

पश्यतो[1] वै मम पुरो[1] वि-मानाद् अव-रुह्य सः[2] ।

१३] भक्ष्यं[3] च[3] भक्षयामास[4] स स्वर्गी रघु-नन्दन[4] ।।४२।। [१५

भक्षयित्वा[5] यथा-कामं मांसं बहु च[6] सुष्ठु च[6] ।

१४] अव-तीर्य सरः स्वर्गी तदोप-स्पृष्टवान्[7] नृ-प[7] ।।४३।। [१६

उप-स्पृश्य यथा-न्यायं[8] स स्वर्गी रघु-नन्दन[9] ।

१५] आ-रोढुम् उप-चक्राम विमान-वरम्[10] उत्-तमम्[10] ।।४४[11]।।[१७

तम् अहं देव-सङ्काशम् आ-रूढं[12] समुद्-ईक्ष्य वै[12] ।

१६] श्रोतुम् इच्छामि कामं त्वाम् इत्य् एवं वाक्यम् अब्रुवम् ।।[13]४५।।[१८

को भवान् देव-सङ्काश आ-हारश् च वि-गर्हितः ।

१७] त्वया[14] सं-भुज्यते[14] सौम्य किम्-अर्थं क्व च वर्तसे ।।४६।। [१९

कश्[15] चाऽयम्[15] ईदृशो भावो भास्वरो[16] देव-सन्निभः[17] ।

१८] आ-हारो गर्हितश्[18] चैव[18] श्रोतुम् इच्छामि तत्त्व-तः ।।[19]४७।।[२०

इत्यार्षे रामायण उत्तर-काण्डेऽगस्त्य-वाक्यं नामैकोनाशीतितमः सर्गः ।। ७९ ।।

---

## [ वं-८५ ]= [ अशीतितमः सर्गः ] =[ दा-७८ ]

श्रुत्वा तु भाषितां[20] वाचं[21] मम[22] राम शुभाऽक्षराम्[23] ।

१] प्राऽञ्जलिः प्रत्य्-उवाचेदं स स्वर्गी रघु-नन्दन ।। १ ।। [१

शृणु ब्रह्मन् यथा-वृत्तं ममेदं सुख-दुःख-जम् ।

२] कालो हि दुरति-क्राम्यो यत् त्वं मां पृच्छसे द्वि-ज ।।[24]२ ।। [२

---

१. च भ१–अथापश्यमहं तस्माद् । २. च–तं । भ१–तु । ३. च भ१–स्वर्गिणं । ४. च–भक्षमाणं तु शवं रघुकुलोद्वह । भ१–भक्षमाणं च सत्त्वं रघुकुलोद्भव । ५. च भ१–ततो भुक्त्वा । ६. भ१–सुपीवरं । ७. च–ततश्चापोऽस्पृशत्तदा । भ१–प्रवेष्टुमुपचक्रमे । ल१–तदापः स्पृ° । ८. अ ल२ ब प्र–तथा° । ९. रा१ ल३–रघुसत्तम । १०. च–तद्विमानमनुत्तमं । ११. भ१–नास्ति । १२. च भ१–आरोहन्तं श्रियान्वितं । १३. च–कथय श्रोतुमिच्छामीत्यवदं पुरुषर्षभ । भ१–निकामं श्रोतुमिच्छामीत्यवोचं परं वचः । १४. च–त्वयायं भु° । भ१–त्वया च भु° । १५. च–कस्यायं । १६. च भ१–त्वर्जं–भास्करो । १७. च भ१–देवनिर्मितः । १८. च–°तश्चापि । भ१–यश्च ते वीर । १९. अतः परमधिकः पाठः—च–इत्येवमुक्त्वा स नरेन्द्र स्वर्गी कौतूहलप्रश्रितया गिरा तदा । श्रुत्वा वाक्यं ममेदं सर्वं तदा कथितवान्विधिवन्ममेति(?) । भ१–नाहमौपयिकं मन्ये तव भोज्यमिदं शवम् ।। २०. च भ१ रा१ प्र–°तं । २१. च भ१–वाक्यं । २२. भ१–मत्तो । २३. च भ१ प्र–°क्षरम् । २४. अ भ२–कामो हि दु° । च–यद्धि मां पृच्छसि मुने स कालो दुरतिक्रमः । भ१–कामा हि दुरतिक्रम्या यथा पृच्छसि मां द्विज ।।

पुरा वैदर्भको राजा पिता मम महा-यशाः ।
३] सु-देव इति वि-ख्यातस् त्रिषु लोकेषु धार्मिकः[1] ॥ ३ ॥ [३
तस्य पुत्र-द्वयं राजन्[2] द्वाभ्यां[3] स्त्रीभ्याम् अजायत[3] ।
४] अहं श्वेत इति ख्यातो यवीयान्[4] सु-रथोऽभवत् ॥ ४ ॥ [४
दिवं[5] याते च पितरि[5] पौरा[6] माम् अभ्य्-अषेचयन् ।
५] तत्राऽहं कृतवान्[7] राज्यं धर्मेण सु-समाहितः ॥ ५ ॥ [५
एवं वर्ष-सहस्राणि समतीऽतानि[8] सु-व्रत[8] ।
६] राज्यं कारयतो ब्रह्मन्[9] प्र-जाश्[10] चैवाऽनु-शासतः[10] ॥ ६ ॥ [६
सोऽहं निमित्ते कस्मिंश्-चिद् विज्ञाताऽर्थो[11] द्विजोत्तम ।
७] मरणे हृदयं कृत्वा तपो-वनम् उपाऽगमम् ॥[12] ७ ॥ [७
सोऽहं वनम् इदं दुर्-गं निर्-मृगं पक्षि-वर्जितम् ।
८] प्र-विष्टस् तप आ-स्थातुम् अस्यैव[13] सरसोऽन्तिके ॥ ८ ॥ [८
भ्रातरं[14] सु-रथं राज्ये ह्य् अभि-षिच्य[14] नराऽधिपम् ।
९] इदं सरः समा-श्रित्य[15] ह्य्[16] अतपं सु-महत् तपः[16] ॥ ९ ॥ [९
सोऽहं वर्ष-सहस्राणि तपस्[17] तप्त्वा महा-मुने[18] ।
१०] शुभं[19] त्रि-विष्टपं[20] प्राऽऽपं[21] स्वर्ग-लोकम्[22] अन्-उत्तमम् ॥ १० ॥ [१०
ततो[23] मां स्वर्ग-संस्थं वै[23] क्षुत्-पिपासे द्विजोत्तम ।
११] बाधेते[24] परमोदार ततोऽहं बाधितेन्द्रियः ।[25]
गत्वा[26] त्रिभुवन-श्रेष्ठं[27] पिता-महम्[28] अथाऽब्रुवम्[28] ॥ ११ ॥ [११
१२] किम्[29] एवं[29] स्वर्ग-लोकोऽयं क्षुत्-पिपासा-विवर्जितः ।

---

१. च–वीर्यवान् । २. च–विप्र । भ$_1$–ब्रह्मन् । ३. च–धर्मेण सुसमाहितः । ४. च भ$_1$–वर्जं–वीर्यवान् । ५. च–°तेऽथ पि° । भ$_1$–ततः पितुरुपरते । ६. च भ$_1$–वर्जं–श्वेतं । ७. भ$_1$–कारयन् । ८. च–बहूनि समतिक्रमन् । भ$_1$–बहूनि समुपाद्रवन् । ९. भ$_1$–मह्यं । १०. च–सम्यक् पालयतो प्रजाः । भ$_1$–प्रजाश्च परिपालतः । ११. च–ज्ञात्वा चायुर् । १२. अत आरभ्य अ–११-शश्लोकपू र्धं यावन्नास्ति । च–मृत्युं दत्वा च मनसि तपो° । १३. च ल$_1$–अस्य वै । १४. च भ$_1$–राज्येभिषिच्य सुरथं भ्रातरं तं । १५. भ$_1$–समास्थाय । १६. च–तपस्तेपे सुदारुणं । भ$_1$–तपोऽतपं सुदारुणं । १७. ल$_3$ प्र–श्रीणि । १८. भ$_1$–तपोवनं । ल$_1$–तपोवने । १९. च–मृतस् । २०. भ$_1$–त्रिभुवनं । २१. च भ$_1$–प्राप्तो । २२. च भ$_1$–ब्रह्मलो° । २३. च भ$_1$–स्वर्गप्राप्तं तु मां तत्र । २४. अ भ$_1$ रा$_1$ ल$_1$ ल$_2$ प्र–बाधते । २५. भ$_1$–अबाधेतां भृशं चाहमभवं व्यथितेन्द्रियः । २६. भ$_1$–तत्र । २७. भ$_2$–वर्जं–°ने श्रेष्ठं । २८. भ$_1$–अवोचं वै पितामहं । २९. च भ$_1$–भगवन् ॥

कस्येयं कर्मणः प्राऽऽप्तिः क्षुत्-पिपासे यद् आप्नुवम्[1] । [१२
१३] आ-हारः कश्[2] च मे देव ब्रूहि त्वं[3] प्र-पितामह ॥१२॥ [१३
पिता-महस्[4] तु माम् आह तवाऽऽहारः[5] सुदेव-ज[5] ।
१४] स्वानि मांसानि स्वादूनि तानि भक्षय नित्य-शः ॥१३॥ [१४
स्व-शरीरं त्वया[6] पुष्टं[6] कुर्वता[7] तप उत्-तमम् ।
१५] अनु-उप्तं रोहते श्वेत न किं-चिद् वै महा-मते ॥[8]१४॥ [१५
१७उ] अपि चेद्[9] भिक्षमाणाय भिक्षा वै यतये पुरा ।[10]
नहि दत्ता त्वया तत्र मोहाद् अ-तिथयेऽपि[11] वै[11] ।[12] [१६
१६] तेन स्वर्ग-गतो वत्स क्षुत्-पिपासा-युतो ह्य् असि ॥[13]१५॥ [१७उ
स त्वं सु-पुष्टम् आ-हारैः स्व-शरीरम् अनु-उत्तमम् ।
२१] भक्षयस्वाऽमृत-रसं[14] सा ते तृप्तिर् भविष्यति ॥१६॥ [१८
यदा श्वेत अगस्त्यस् ते काननं सु-महातपाः ।[15]
२२] आ-गमिष्यति दुर्-धर्षस् तदा कृच्छ्राद् वि-मोक्ष्यसे[16] ॥१७॥ [१९
स हि तारयितुं शक्तो नाऽन्यस्[17] त्वां वै महा-मते[17] ।
२३] शक्तः सुर-गणांस् त्रातुं किं पुनस् त्वां सुरोत्तम ॥[18]१८॥ [२०
सोऽहं भग-वतः श्रुत्वा देव-देवस्य भाषितम् ।
२४] आ-हारं गर्हितं भुञ्जे स्व-शरीरं द्विजोत्तम ॥[19]१९॥ [२१
बहून् वर्ष-गणान् ब्रह्मन् भुज्यमानं मया[20] त्व् इदम्[20] ।
२५] क्षयं नाऽभ्य्-एति[21] सु-भृशं[21] तृप्तिश् चाऽपि ममोत्-तमा ॥२०॥ [२२
स मां त्वं कृच्छ्रम् आ-पन्नं कृच्छ्राद् अस्माद् वि-मोचय ।
२६] अन्येषां न भवेच् छक्तिः कुम्भ-योनिम् ऋते द्वि-जम्[22] ॥२१॥ [२३

---

१. अ रा$_1$ ल$_2$ ल$_3$ प्र-°यात् । २. च-यश् । ३. च-°तं । ४. च एवमुक्तस् । ५. अ रा$_1$ ल$_1$ ल$_2$ ल$_3$ ब प्र-°रः स्वदेहजः । च-भोजनं पद्मसम्भवः भ$_1$-भोजनं ते सु° । भ$_2$-°रस्तु देहजः । ६. च-हि पुष्टं तु । भ$_1$-हि ते पुष्टं ७. च रा$_1$ प्र-कुर्वतस् । ८. भ$_1$-नादत्तं जायतेत्येतत्कदाचिद्धि महीपते । ९. भ$_1$ वै । १०. च-नास्ति । ११. अ-वा । १२. भ$_1$-°त्ता त्वयेन्द्राभ मोहादतिथये पुरा च-नहि दत्तमन्नपानं च भवेत्तस्मिंस्त्वयानघ । १३. भ$_1$-तेन ते स्वर्गतस्या क्षुत्पिपासे तथानुगे । १४. भ$_1$-°तमयं । १५. च-यदा तु चैतद्धि वनमगस्त्य सुमहानृषिः । भ$_1$-यदा चागस्त्यस्ते श्वेत का° । १६. अ भ$_1$ ल$_1$ ल$_2$-°क्षसे । १७ च भ$_1$-सेन्द्रानपि सुरासुरान् । १८. च-किं पुनस्त्वां महाबाहो क्षुत्पिपासावशं गतः भ$_1$-आहारं च जरं दातुं राजर्षे किं पुनस्तव । १९. भ$_1$-भुंजे बीभत्समाहारं स्वशरीरमनु मम् । २०. च-भक्षमाणस्य वर्तते । च-°नं च तन्मया । २१. च-न चैतदायाति २२. च-अन्या मम गतिर्नास्ति त्वामृते द्विजपुङ्गव । भ$_1$-नान्यस्य शक्तिर्भवति कुम्भ°

इदम् आ-भरणं सौम्य[1] तारणाऽर्थं द्विजोत्तम[1] ।
२७] महर्षे[2] प्रति-गृह्णीष्व प्र-सादं कर्तुम् अर्हसि ॥[3]२२॥ [२४
तस्याऽहं स्वर्गिणो वाक्यं श्रुत्वा दुःख-समन्वितम्[4] ।
३०] तारणायोप-जगृहे तदाऽऽभरणम् उत्-तमम् ॥[5]२३॥ [२७
मया[6] प्रति-गृहीते तु[6] तस्मिन्न् आ-भरणे शुभे ।
३१] मानुषः पूर्व-को देहो राजर्षेः[7] स ननाश[8] ह[8] ॥२४॥ [२८
प्र-णष्टे स्व-शरीरे स[9] राजर्षिः परया मुदा ।
३२] तृप्तः[10] प्र-मुदितो राम[10] जगाम त्रि-दिवं पुनः ॥२५॥ [२९
तेनेदं शक्र-तुल्येन दत्तम् आ-भरणं मम[11] ।
३३] तस्मिन् निमित्ते काकुत्स्थ दत्तम् अद्भुत-दर्शनम् । [३०
N] श्वेतो वैदर्भको राजा[12] तदाऽभूद् गत-कल्मषः ॥२६[13]॥ [N

इत्यार्षे रामायण उत्तर-काण्डे श्वेतोपाऽऽख्यानं
नामाऽशीतितमः सर्गः ॥ ८० ॥

---

## [ वं-८६ ]= [ एकाशीतितमः सर्गः ] =[ दा-७६ ]

तद् अद्भुत-तमं वाक्यं श्रुत्वाऽगस्त्यस्य राघवः ।
१] गौरवाद् वि-स्मयाच् चैव नम्रः[14] पुनर्[15] अभाषत[15] ॥ १ ॥ [१
भग-वंस् तद् वनं घोरं तपस्[16] तेपे स यत्र वै[16] ।
२] श्वेतो वैदर्भको[17] राजा[17] कथं[18] तद् अ-मृगं द्वि-ज[18] ॥ २ ॥ [२

---

१. च-दिव्यं वारणार्थं ममैत्र च । २. च भ$_1$ ल$_1$-ब्रह्मर्षे । ३. अतः परमधिकः पाठः—भ$_1$ ब ल$_1$ प्र-इह गावः सुवर्णं च धनं वस्त्रमनुत्तमम् । भक्ष्यं भोज्यं च विप्रर्षे ददाम्याभरणानि च ॥ सर्वान् कामान् प्रयच्छामि सर्वभोगाश्च ते द्विज । भ$_1$ प्र-तारणेन भवान्मह्यं प्रसादं कर्तुमर्हसि । ४. च भ$_1$-वर्जं-°न्वितः । ५. भ$_1$-°योपचक्राम तस्याभरणसम्पदां । प्र-°योपजग्राह तदाभ° । ६ भ$_1$ प्र-तदा गृहीते तु मया । ७. भ$_1$ रा$_1$ ल$_1$-वर्जं-°र्षे । ८. च-व्यनश्यत । भ$_1$-च नश्यत । ९. च-°सौ । भ$_1$-तु । १०. अ ल$_2$ प्र-ततः प्र° । च-प्रमुक्तोऽसौ महातेजा । भ$_1$-युक्तो राजविमानेन । ११. भ$_1$-शुभं । प्र-स्वकं । १२. भ$_1$-नाम । १३. च-एतद्धि तच्छक्रनिभेन तेन तस्मिन्निमित्ते मम दत्तमासीत् । भूषणं भूषितमद्भुतैर्गुणैर्दत्तं मया निर्विशंकः । १४. च-प्रह्वः । भ$_1$ प्र-भूयः । १५. भ$_1$ प्र-प्रष्टुं प्रचक्रमे । १६. च भ$_1$ प्र-यत्रासौ तप्तवान्नृपः । १७. ल$_3$ व-°र्भराजोपि । १८. च भ$_1$-तदभूद्ग्रामं कथं ॥

निः-सत्त्वं च वनं सर्वं[1] कथं मानुष-वर्जितम्[1] ।
३] तपः कर्तुं[2] प्र-विष्टोऽयं श्रोतुम् इच्छाम्य् अहं मुने ॥[2]३॥ [३
रामस्य भाषितं श्रुत्वा कौतूहल-समन्वितम्[3] ।
४] मुनिः[4] परम-तेजस्वी वाक्यम्[4] एतद् उवाच ह[5] ॥४॥ [४
पुरा[6] कृत-युगे[7] राम मनुर् दण्ड-धरः प्र-भुः ।
५] तस्य[8] पुत्रो महान् आसीद्[8] इक्ष्वाकुः कुल-नन्दनः[9] ॥५॥ [५
तं पुत्रं पूर्व-जं राज्ये नि-क्षिप्य भुवि सं-मतम् ।
६] पृथिव्यां राज-वंशानां[10] भव[11] कर्तेत्य्[11] उवाच ह ॥६॥ [६
तथेति च प्रति-ज्ञातं पितुः पुत्रेण राघव ।
७] ततः परम-संहृष्टः प्रत्य्-उवाच[12] महा-तपाः[12] ॥७॥ [७
प्रीतोऽस्मि परमोदार कर्ता चाऽसि[13] न सं-शयः ।
८] दण्डेन च प्र-जा रक्षन् न च दण्डम्[14] अ-कारणम्[15] ॥८॥ [८
अप-राधेषु यो दण्डः पात्यते पुरुषर्षभ[16] ।
९] स दण्डो विधि-वद् युक्तः स्वर्गं नयति पार्थिवम् ॥९॥ [९
तस्मिन्[17] दण्डे महा-बाहो यत्न-वान् भव पुत्र-क ।
१०] धर्मस् ते[18] परमो लोके कृत एव[18] भविष्यति ॥१०॥ [१०
इति तं चैव[19] सं-दिश्य मनुः[20] पुत्रं समाधिना ।
११] जगाम त्रि-दिवं हृष्टो ब्रह्म-लोकम् अनु-उत्तमम् ॥११॥ [११
तस्मिन् प्र-याते त्रि-दिवम् इक्ष्वाकुर् अमित-प्रभः ।
१२] जनयिष्ये कथं पुत्रान् इति चिन्ता-परोऽभवत् ॥१२॥ [१२
कर्मभिर् बहु-रूपैस् तु तैस् तैर् मनु-सुतः सुतान्[21] ।
१३] जनयामास धर्माऽऽत्मा[22] तदा[23] देव-सुतोपमान्[24] ॥१३॥ [१३

१. च-जातं शून्यं मा° । भ१-राजा शून्यं मृगविव° । २. च प्र-प्रविष्टस्तद्वनं तप आस्थातुं कथयस्व महामुने । भ१-प्रविष्टस्तप आस्थातुं कथं वद महामुने । ३. च भ१-°तः । ४. च-वाक्यं । भ१-ततः । ५. च भ१ प्र-वक्तुं समुपचक्रमे । ६. च भ१ प्र-वर्जं-पूर्व । ७. अ प्र-त्रेतायुगे । ८. भ१-तस्य पुत्रस्य नामासीद् । प्र-तनयस्तस्य नाम्नासीद् । ९. च भ१-अमितप्रभः । १०. च-रघुवं° । प्र-राज-कार्याणि । ११. च-भवान्भर्ते° । भ१-भवेत्कर्ते° । १२. च-मनुः पुनरथाब्रवीत् । भ१-पुनस्तं प्रत्युवाच ह । १३. च-वर्जं-चास्मि । १४. च-दंडो । भ१-दंड्या । १५. च-°णे । १६. च-मानवाग्रज । भ१-मानुषेषु वै । १७. च भ१-तस्माद् । १८. च-हि परमोदारं कुर्वन्नेवं । १९. च भ१ प्र-बहु । २०. च-पुनः । २१. च प्र-तदा । २२. भ१-पुत्राणां । २३. च-सुतान् । भ१-शतं । २४. भ१ प्र-°मं ॥

सर्वेषाम् अभवत् तेषां कनीयान् रघु-नन्दन ।
१४] मूढश् चाऽकृत-विद्यश् च न शुश्रूषुश् च पूर्व-जान् ॥१४॥ [१४
नाम तस्य च दण्डेति पिता चक्रे स[1] बुद्धि-मान्[1] ।[2]
१५] भविष्यं दण्ड-पतनं शरीरे ह्य्[3] अस्य[3] पश्यति[4] ॥१५॥ [१५
सं-पश्यमानस्[5] तं दोषं[6] घोरं पुत्रस्य[6] राघव ।
१६] स विन्ध्य-मलयोर् मध्ये राष्ट्रं प्राऽदाद् अरिं-दमः ॥[7]१६॥ [१६
स दण्डस् तत्र राजाऽभूद् रम्ये पर्वत-रोधसि ।
१७] पुरं चाऽप्रतिमं राम[8] न्य्-अवेशयत सं-मतम्[8] ॥१७॥ [१७
नाम तस्य पुरस्याऽथ मधु-मत्तेति[9] चाऽकरोत्[9] ।
१८] तथा चोशनसं विप्रं पुरो-धसम् अथाऽकरोत्[10] ॥१८॥ [१८
एवं स राजा तद् राज्यं चकार स-पुरोहितः ।
१९] प्रहृष्ट-जन-सङ्कीर्णे[11] देव-राजो[12] यथा दिवि[13] ॥[14]१९॥[१९

इत्यार्षे रामायण उत्तर-काण्डे मधुमत्त-निवेशनं
नामैकाशीतितमः सर्गः ॥ ८१ ॥

---

## [ वं–८७ ]= [ द्व्यशीतितमः सर्गः ] =[दा–८० ]

एतद्[15] आ-ख्याय रामस्य महर्षिः कुम्भ-सम्भवः ।
१] तस्याम्[16] एवाऽपरं[16] वाक्यं कथायाम् उप-चक्रमे ॥ १ ॥ [१
ततः स दण्डः काकुत्स्थ बहून्[17] वर्ष-गणाऽयुतान्[17] ।
२] अकरोत्[18] तत्र धर्माऽऽत्मा राज्यं निहत-कण्टकम् ॥ २ ॥ [२

---

१. रा$_1$–सुबु° । २. च–नाम चक्रे पिता तस्य कुबुद्धेर्दण्ड इत्युत । ३. च भ$_1$ रा$_1$ ल$_2$ ल$_3$–तस्य । ४. च–पार्थिव । ५. भ$_1$ रा$_1$ ल$_1$ ल$_3$ ब–वर्ज–स प° । ६. च–रोषाद्घोरं पुत्रं तु । ७. च–विंध्यशैलयोर्मध्ये तस्य राज्यमदात्पिता । भ$_1$–विंध्यशैल-वनात्पार्श्वे राज्यमस्य ददौ प्रभुः । प्र–विंध्यस्य श्रृंगयोर्मध्ये राज्यमस्मै ददौ प्रभुः । ८. च–राजन्न्यवेशयदुत्तमं । रा$_1$–निवेशयति संमितं । ९. भ$_1$ रा$_1$–मधुमत्तमिति स्वयं । १०. च–अनुत्तमं । ११. च भ$_1$ रा$_1$–°ष्टमनुजाकीर्णे । १२. च–देवदेवो । १३. भ$_1$–दिवं । १४. अतः परमधिकः पाठः—च–ततः स राजा मनुजेन्द्रपुत्रः सार्धं हि तेनोशनसा तदानीम् । चकार राज्यं सुमहन्महात्मा शक्रो दिवीवांगिरसा समेतः ॥ १५. भ$_1$–एवं । १६. अ–राममेवापरं । च रा$_1$–तस्यैव चापरं । १७. च रा$_1$–बहुवर्षगणायुतं । १८. च रा$_1$–वर्ज–कारयंस ॥

अथ[1] काले तु कस्मिंश्-चिद्[1] राजा[2] भार्गवम् आ-श्रमम्[2] ।
३] रमणीयम् उपाऽक्रामन् मासि[3] चैत्रे मनो-रमे[4] ॥ ३ ॥ [३
तत्र[5] भार्गव-कन्यां स[5] रूपेणाऽप्रतिमां भुवि ।
४] वि-चरन्तीं वनोद्देशे दण्डोऽपश्यद् अ-निन्दिताम्[6] ॥ ४ ॥ [४
तां स दृष्ट्वैव दुर्-मेधाः कन्दर्प-शर-पीडितः ।[7]
५] अभि-गम्य समुद्-विग्नः[8] कन्यां वचनम् अब्रवीत् ॥ ५ ॥ [५
कुतस् त्वम् असि सु-श्रोणि कस्य[9] चाऽसि[9] सुता[10] शुभे[10] ।
६] पीडितोऽहम् अन्-अङ्गेन पृच्छामि त्वां सु-मध्यमे ॥ ६ ॥ [६
तस्य[11] त्व् एवं ब्रुवाणस्य[11] मोहान्[12] मत्तस्य[12] कामिनः ।
७] भार्गवी प्रत्य्-उवाचेदं वचः साऽनु-नयं नृ-पम्[13] ॥ ७ ॥ [७
भार्गवस्य सुतां विद्धि शुक्रस्याऽक्लिष्ट-कर्मणः[14] ।
८] अ-रजां नाम राजेन्द्र ज्येष्ठाम् आश्रम-वासिनीम् ॥ ८ ॥ [८
गुरुः[15] पिता मे राजेन्द्र त्वं च शिष्यो महाऽऽत्मनः ।
९] व्य्-असनं सु-महत् क्रुद्धो[16] मा ते दद्यान् महा-यशाः[17] ॥ ९ ॥ [९
यदि वा ते मया कार्यं धर्म-दृष्टेन[18] कर्मणा[18] ।
१०] वरयस्व नर-श्रेष्ठ[19] पितरं मे महा-द्युतिम्[20] ॥१०॥ [१०
अन्य-था विपुलं दुःखं भवेद् घोराऽभिसंहितम्[21] ।
११] क्रोधेन हि पिता[22] मह्यं[22] त्रैलोक्यम् अपि निर्-दहेत् ॥११॥ [११
एवं स राजा तां कन्यां ब्रुवन्तीं भार्गवीं तदा[23] ।
१२] प्रत्य्-उवाच मदोन्मत्तः शिरसाऽभि-नतः[24] प्र-भुः[24] ॥१२॥ [१३
प्र-सादं कुरु सु-श्रोणि कामोन्मत्तस्य[25] भामिनि[25] ।
१३] त्वत्-कृते हि मम प्राणा वि-दीर्यन्ते[26] सु-मध्यमे[26] ॥१३॥ [१४

---

१. च रा$_1$–कस्यचिदथ कालस्य । २. रा$_1$–भार्गवस्याश्रमं शुभं । ३. च–मासे । ४. भ$_2$–मनोहरे । ५. रा$_1$–तत्रैव भार्गवीं कन्यां । ६. च भ$_1$–अनुत्तमां । ब ल$_3$ प्र–अनिर्मितां । ७. भ$_1$–स दृष्ट्वा तां सुदुर्मेधा ह्यनंगश° । ८. च–सुसंविग्नः । रा$_1$–तु संविग्नः । ९. रा$_1$–कस्यासि त्वं । १०. च भ$_1$ रा$_1$–शुभानने । ११. च रा$_1$–तस्यैवं प्रब्रु° । १२. च–मोहाविष्टस्य । भ$_1$–मदोन्मत्तस्य । ब–महाम° । १३. च भ$_1$ रा$_1$–वर्जं–परं । १४. च–देवस्या° । भ$_1$–विप्रस्या° । रा$_1$–द्विजस्या° । १५. च रा$_1$–वर्जे–वृद्धः । १६. भ$_1$–प्राप्तं । १७. रा$_1$–न संशयः । १८. च–सम्पदा धर्मयुक्तया । १९. भ$_1$–नृपश्रेष्ठ । २०. भ$_1$–°द्युते । २१. रा$_1$–°संश्रयं । २२. रा$_1$–पितास्माकं । २३. भ$_1$–ततः । २४ च रा$_1$–प्राञ्जलिप्रगृहो नृपः । २५. अ–°स्य भार्गवि । च–न कालं वक्तुमर्हसि । २६. च भ$_1$ रा$_1$–विशीर्यन्ति शुभानने ॥

त्वां प्राऽऽप्य तु वधो वाऽपि[1] वधाद् वाऽपि[1] यद् उत्-तरम्[2] ।
१४] भक्तं भजस्व मां भीरु त्वयि भक्तिर् हि मे परा[3] ॥१४॥ [१५
एवम् उक्त्वा तु तां[4] कन्यां दोर्भ्यां गृह्य बलाद् बली[4] ।
१५] वि-स्फुरन्तीं यथा-प्राणं[5] मैथुनायोप-चक्रमे ॥१५॥ [१६
तम् अन्-अर्थं महा-घोरं दण्डः कृत्वा सु-दारुणम् ।
१६] नगरं[6] स्वं जगामाऽऽशु[6] मधु-मत्तम् अन्-उत्तमम्[7] ॥१६॥ [१७
भार्गवी[8] रुदती दीना[8] आश्रमस्याऽविदूर-तः ।
१७] प्रतीऽऽक्षते स्म पितरं तत्र-स्था देव-संमितम् ॥[9]१७॥ [१८

इत्यार्षे रामायण उत्तरकाण्डे अरजा-प्रमाथो नाम
द्व्यशीतितमः सर्गः ॥ ८२ ॥

---

## [ वं–८८ ]= [ त्र्यशीतितमः सर्गः ] =[ दा–८१ ]

स[10] मुहूर्ताद् उप-स्पृश्य[10] महर्षिर्[11] अ-मितद्युतिः[12] ।
१] स्वम् आ-श्रमं शिष्य-वृतः क्षुधाऽऽर्तः संन्य्-अवर्तत[13] ॥ १ ॥ [१
सोऽपश्यद्[14] अ-रजां दीनां[14] रजसाऽभिपरि-प्लुताम्[15] ।
२] उषस्य् अरुण-संयुक्तां[16] ज्योत्स्नाम् इव निर्-अञ्जनाम्[17] ॥[18]२॥ [२
तस्य रोषः सम्-अभवत् क्षुधाऽऽर्तस्य महाऽऽत्मनः[19] ।
३] निर्-दग्धुम्[20] इव लोकांस् त्रीञ् शिष्यान् इदम्[20] उवाच ह ॥३॥[३

१. च–वोस्तु पापीयान्वा। २. च भ१ रा१–तथोत्तरं। च–भवाम्यहं। ३. रा१–सदा। ४. भ१–कन्यां तां बलात्संगृह्य बाहुना। ५. च भ१ रा१–यथाकामं। ६. अ–°रं संज°। च–स्वपुरं प्रययावाशु। रा१–स्वपुरं प्रययौ चाशु। ७. ल१–अनिन्दितं। ८. च–विरजापि रुदन्ती सा। रा१–अरुजा रुदती तत्र। ९. च–°ते स्म संत्रस्ता पितरं देवसन्निभं। भ१–प्रत्यपालयदुद्विग्ना पितरं दे°। रा१–प्रत्यलीयदुद्विग्ना पितरं दे°। अतः परमधिकः पाठः—च–इति कर्म सुदारुणं कृत्वा दण्डो दण्डमवाप्तवानुदग्रम्। शृणु सर्वमशेषतस्तमद्य कथयिष्ये तव राजसिंहवृत्तम्॥ १०. च–ततो राम मुहूर्तात्स। रा१–ततो राम मुहूर्तेन। ११. च–ब्रह्मर्षिर्। भ१–देवर्षिर्। १२. च भ१ रा१–°तप्रभः। १३. भ१–सोऽभ्यव°। १४. भ१–तमनर्थं महाघोरं। १५. च भ१ रा१–°सा समभिप्लुतां। १६. भ१–°संवृत्तां। १७. च–विराजिताम्। रा१–हतप्रभां। १८. अतः परमधिकः पाठः—रा१–स मुहूर्तमिव ध्यात्वा मुनिः किंचिदवाङ्मुखः। ज्ञात्वापराधं बुद्ध्या तु बभूव चलितेन्द्रियः॥ च रा१–स तामपृच्छच्च पिता सुतां परमदुःखिताम्। किमेतदिति सोवाच दण्डस्य दुरतिक्रमम्॥ १९. च रा१–विशेषतः। २०. च–दिव्येन चक्षुषा वीक्ष्य ततः शिष्यान्। रा१–°कांस्त्रीन्भृगुः शिष्यान्॥

पश्यध्वं[1] विपरीऽतस्य[2] दण्डस्याऽविजिताऽऽत्मनः[2] ।
४] वि-पतिं[3] घोर-सङ्काशां दीप्ताम्[4] अग्नि-शिखाम् इव[4] ॥[5] ४॥ [४
क्षयोऽस्य दुर्-मतेः प्राऽऽप्तः[6] साऽनु-गस्याऽजिताऽऽत्मनः[7] ।
५] यः प्रदीप्त-हुताऽशस्य ह्य् अर्चिषं स्पृष्टवान् इव ॥[8] ५॥ [५
यस्माच् च कृतवान् पापम् ईदृशं घोर-संमितम्[9] ।
६] तस्मात् प्राऽऽप्स्यति[10] दुर्-मेधाः पांसु-वर्षम्[11] अन्-उत्तमम् ॥६॥[६
सप्त-रात्रेण[12] राजाऽसौ[12] स-भृत्य-बल-वाहनः ।
७] पाप-कर्म-समाचारो वधं प्राऽऽप्स्यति दुर्-मतिः ॥ ७॥ [७
समन्ताद् योजन-शतं वि-षयं चाऽस्य दुर्-मतेः ।
८] धक्ष्यते[13] पांसु-वर्षेण महता[14] पाप-कर्मणः[14] ॥ ८॥ [८
यानि सत्त्वानि जानीत जङ्गमानि[15] स्थिराणि[15] च ।
९] सर्वेषां पांसु-वर्षेण क्षयः क्षिप्रं भविष्यति ॥[16] ९॥ [९
दण्डस्य वि-षयो यावत् तावत् स-वनम्[17] आ(?साऽऽ)श्रमम्[17] ।
१०] पांसु-भूतम् इवाऽसेव्यं सप्त-रात्राद् भविष्यति ॥१०॥ [१०
इत्य् उक्त्वा क्रोध-सम्पन्नः[18] स्वम् आश्रम-निवासिनम्[18] ।
११] जनं जन-पदाद्[19] बाह्ये[19] स्थीयताम्[20] इत्य् उवाच[21] ह[21] ॥११॥ [११
उक्त-मात्रे ह्य् उशनसा[22] स तत्र वि-षये जनः[22] ।
१२] निष्-क्रान्तो वि-षयात् तस्मात् स्थानं चक्रेऽथ[23] बाह्य-तः[24] ॥१२॥[१२

---

१. अ-पश्यत । २. भ$_1$ रा$_1$-वर्जं-°तन दण्डेनाविदितात्मना । भ$_1$-°स्यादीर्घदर्शिनः । ३. च-वर्जं-त्रिशता । ४. अ भ$_2$ ल$_1$ ल$_2$ ल$_3$ ब प्र-मत्समीपं दुरात्मना । च-आत्मनः शकटीकृतां । ५. अतः परमधिकः पाठः—च-व्याहारयति मे वाचं निगूढामपि कर्मणा । दण्डकोपसमुत्थेन प्रदीप्ताग्निशिखामिव ॥ रा$_1$-नास्ति । ६ च रा$_1$-जातः । ७. च रा$_1$-°गस्य दुरात्मनः । भ$_1$-°गस्य न संशयः । ८. च-प्रदीप्तामिव चाग्नेयीं शिखां संस्पृष्टवानिमां । ९ च रा$_1$-घोरदर्शनं । १०. रा$_1$ ल$_3$ प्र-वर्जं-प्राप्स्यसि । ११. च भ$_1$ रा$_1$ प्र-पांशुव° । १२. भ$_1$-सराजा सप्तरात्रे वै । १३. अ भ$_2$ ल$_1$ ल$_2$ ल$_3$ ब-महता । रा$_1$-स्वत्कृते । १४. अ भ$_1$ भ$_2$ ल$_1$ ल$_2$ ल$_3$-नाशं यास्यति दुर्मतिः । च प्र-°ता पाकशासनः । १५. च-वर्जं-°मस्थावराणि । १६ अ-दंडदोषात्पांशुवर्षमिह क्षिप्रं भ° । अतः परमधिकः पाठः – च भ$_1$ रा$_1$-वर्जं-सर्वेषां पांसुवर्षाणां पतनात्प्रलयो भवेत् । १७. च-चैव समुच्छ्रयं । १८ च-°संतप्तस्तदाश्र° । भ$_1$-क्रोधतप्तस्तु तस्याऽश्र° । च रा$_1$ प्र-वर्जं-°सिनां । १९. अ च भ$_1$ रा$_1$-°पदस्यांते । २०. अ ब ल$_1$-मंरब्धं । २१. च-अचोदयत् । भ$_1$-अनोदयत् । रा$_1$-अथाब्रवीत् । २२ च-अनेनासौ स तत्रावसथीकृतः । भ$_1$-°सा ह्याश्रमावसथीकृतः । रा$_1$-°सा संग्रामो दशयोजनः । २३ च रा$_1$-चक्रे च । २४. रा$_1$-वाक्यतः ॥

तं[1] तथोक्त्वा मुनि-जनम् अ-रजां[2] मुनिर्[3] अब्रवीत् ।
१३] इहैव वस दुर्-मेधे आ-श्रमे सु-समाहिता ॥[3]१३॥ [१३
इदं[4] योजन-पर्यन्तं सरः सु-रुचिर-प्रभम् ।
१४] अ-रजे वि-रजा भुङ्क्ष्व कालश्[5] चाऽत्र[6] प्रतीऽऽक्ष्यताम्[6] ॥१४॥[१४
त्वत्-समीपं च ये सत्त्वा वासम् एष्यन्ति चाऽनिशम्[7] ।
१५] अ-वध्याः पांसु-वर्षस्य[8] ते भविष्यन्ति नित्य-दा[9] ॥१५[10]॥ [१५
श्रुत्वा नि-योगं तस्यर्षेर्[11] अ-रजा[11] भार्गवी तदा ।
१६] तथेति पितरं प्राऽऽह भार्गवं[12] भृश-दुःखिता[13] ॥१६॥
१७पू] इत्य्-उक्त्वा भार्गवो वासम् अन्यत्र[14] समुपाऽगमत्[14] । [१६
N] स तु शप्तस् तदा तेन प्र-देशो ब्रह्म-वादिना ।[15] [N
१७उ] सप्ताऽहाद् भस्मसाद्-भूतो यथोक्तो[16] ब्रह्म-वादिना[16] ॥१७॥ [१७उ
तस्याऽसौ दण्ड-विषयो विन्ध्य-शैलस्य सानुषु ।[17]
१८] शप्तो ब्रह्मर्षिणा[18] तात तस्मिन् वै धर्षणे कृते[18] ॥१८॥ [१८
ततः-प्रभृति काकुत्स्थ दण्डकाऽरण्यम् उच्यते ।
१९] तपस्विनः स्थितास्[19] तत्र जन-स्थानम् अथाऽभवत्[19] ॥[20]१९॥[१९
एतत् ते सर्वम् आ-ख्यातं यत् त्वं[21] पृच्छसि[22] राघव[22] ।
२०] सं-ध्याम् उपाऽऽसितुं वीर[23] समयो ह्य्[24] अति-वर्तते[24] ॥२०॥ [२०

---

१. भ$_2$ रा$_1$ ल$_1$ ल$_3$ ब प्र–तत् । २. च भ$_1$ रा$_1$–विरजामिदं । ३. च–आश्रमे त्वं स्वधर्मेण वस चैव समाहिता । प्र–इहैव च सुदुर्मेधा आ° । ४. रा$_1$–दश । ५. भ$_1$–कालमत्र । ६. भ$_1$–समा सती । प्र–वर्ज–प्रतीक्षतां । ७. च ल$_1$ ल$_3$–वर्ज–वानि° । ८. च प्र–पांशुव° । ९. च–तां निशां । ल$_1$–नित्यशः । १०. भ$_1$ रा$_1$–नास्ति । ११. च–तमृषेः सा कन्या । भ$_1$–देवर्षेः सा कन्या । रा$_1$–विप्रर्षेः सा कन्या । १२. अ ल$_2$ ल$_3$ भ$_2$ प्र–भर्तारं । रा$_1$–भार्गवी । १३. च–भृगुनन्दनं । भ$_1$ रा$_1$–वर्ज–°खितं । १४. भ$_1$ रा$_1$–तस्मादन्यदुपाक्रमत् । १५. च भ$_1$ रा$_1$–नास्ति । १६. च–स चापि ब्रह्मतेजसा । १७. च–तस्य दण्डस्य विषयो मध्यशैवलविन्ध्ययोः । अतः परमधिकः पाठः—रा$_1$–शुक्रस्य दुहिता पूर्वमरजेति च विश्रुता । धर्षिता चाश्रमे मोहाद्दण्डेन पृथिवीभुजा ॥ १८. च–°णा राम पुरा वैधार्मिके कृते । भ$_1$ रा$_1$–ह्युशनसा राम तस्मिन्वैधार्मिके नृपे । १९. च–स्थिता यत्र तज्जनं स्थानमुच्यते । २०. भ$_1$ रा$_1$–नास्ति । २१. च भ$_1$–मां । २२. च–पृच्छति संशयं । २३. च–राम । २४. च–अरिसूदन ॥

एते महर्षयः सर्वे[1] पूर्ण-कुम्भाः समन्त-तः ।
२१] कृतोदका नर-व्याघ्र ह्य्[2] आदित्यं पर्युपाऽऽसते[3] ॥[3]२१॥ [२१
अन्यैर् ऋषिभिर् अभ्य्-अस्तैः सहितैर् ब्रह्म-वादिभिः ।[4]
N] रविर् अस्तं गतो राम गच्छोदकम् उप-स्पृश ॥२२[5]॥ [२२

इत्यार्षे रामायण उत्तर-काण्डे दण्डक-शापो[6] नाम
त्र्यशीतितमः सर्गः ॥ ८३ ॥

---

## [वं-८६ ]= [ चतुरशीतितमः सर्गः ] =[ दा-८२ ]

ऋषेर् वचनम् आ-ज्ञाय रामः सं-ध्याम् उपाऽऽसितुम् ।
१] उप-चक्राम तत् पुण्यम् अप्सरो-बहुलं[7] सरः[7] ॥ १ ॥ [१
तत्रोदकम् उप-स्पृश्य सं-ध्याम् अन्व्-आस्य पश्चिमाम् ।
२] आ-श्रमं प्राऽविशद् रम्यं[8] कुम्भ-योनेर् महौजसः ॥[9]२॥ [२
तस्याऽगस्त्यो बहु-विधं फल-मूलं[10] न्य्-अवेदयत्[10] ।
३] रस-वन्ति च शाकानि भोजनाऽर्थम् अकल्पयत्[11] ॥[12]३[12]॥ [३
स तु[14] भुक्त्वा नर-श्रेष्ठस्[14] तद् अन्नम्[15] अमृतोपमम् ।
४] प्रीतश्[16] च[16] परि-तुष्टश् च तां रात्रिं समुपाऽविशत् ॥४[13]॥ [४
प्र-भाते काल्यम् उत्थाय कृत्वाऽऽह्निकम्[17] अन्-उत्तमम्[17] ।
५] ऋषिं समुप-चक्राम गमनाय रघूऽद्वहः[18] ॥[19]५॥ [५
अभि-वाद्याऽब्रवीद् रामो[20] महर्षिं कुम्भ-सम्भवम्[20] ।
६] आ-पृच्छे त्वां[21] गमिष्यामि[21] माम् अनु-ज्ञातुम् अर्हसि ॥ ६ ॥ [६

---

१. भ१-राम । २. च-पूजयंति दिवौकसान् । ३. अतः परमधिकः पाठः—च-अभिष्टुतः सुरवरदेवसंघैः गतो रविः सुरुचिरमस्तशैलम् । त्वमथ तत्र गच्छ रघुवर सन्ध्यामुपासितुं प्रयतमना नरेन्द्र ॥ ४. भ१-सत्यैरेभिर्ब्रिरस्यभ्यस्ते स्तोत्रे ब्रह्मादिनिर्मिते । ५. च-नास्ति । ६. च-दण्डोपाख्यानो । ल१-दंडकारण्यशापो । ७. च-°रोगणसेवितं । ८. ल१-पुण्यं । ९. च-पूर्वश्च परितुष्टश्च तां रात्रिं समुपाविशत् । १०. भ१-फलमूलं सखांडवं । ११. ल१ ल२-उपाहरत् । १२. अ-नास्ति । १३. च-नास्ति । १४. भ१-भुक्त्वाऽऽनरव्याघ्रस् । १५. अ भ१-दत्तं । १६. ल१ ल२ ब प्र-प्रीतस्य । १७. च-कृत्वा पौर्वाह्णिकीं विधिं । भ१-°कमरिंदमः । १८. भ१-रघूत्तमः । १९. च-अनुज्ञापयितुं रामो महर्षिमुपचक्रमे । २०. च-चापि तमृषिं शंसितव्रतं । २१. च-साधु यास्यामि । भ१-साधये ब्रह्मन् ॥

धन्योऽस्म्य् अनु-गृहीतोऽस्मि दर्शनेन महा-मुने:[1] ।
७] द्रष्टुं[2] चैवाऽऽगमिष्यामि[2] पावनाऽर्थम् इतो[3] गतः[3] ।। ७ ।। [७
तथा[4] वदति[4] काकुत्स्थे वाक्यम् अद्भुत-दर्शनम् ।
८] उवाच परम-प्रीतः सोऽगस्त्यो[5] हर्षितस् तदा[5] ।। ८ ।। [८
अत्य्-अद्भुतम् इदं वाक्यं तव राम शुभाऽक्षरम् ।
९] पावनः सर्व-भूतानां त्वम्[6] एव[6] रघु-नन्दन ।। ९ ।। [९
मुहूर्त्तं[7] येऽपि[7] राम त्वां नेत्रैर् ईक्षन्ति मानवाः[7] ।
१०] पाविताः सर्व-शस् ते वै कथ्यन्ते दिवि दैवतैः ।।[8]१०।। [१०
११पू] ये च त्वां घोर-चक्षुभिर्[9] निर्-ईक्षन्तीऽह[10] मानवाः[10] ।[11] [११पू
N] ते सर्वे भयम् आ-पन्ना यान्ति वै निर्-अयं तथा ।।[12]११।।[N
गच्छ चाऽरिष्टम् अ-व्यग्रः पन्थानम् अ-कुतोभयम् ।[13]
१३] प्र-शाधि राज्यं धर्मेण गतिर् हि जगतो[14] भवान् ।।[15]१२।।[१३
एवम् उक्तस्[16] तु मुनिना प्राऽञ्जलिः[17] प्र-श्रयान्[17] नृ-पः ।
१४] अभि-वादं[18] तदा[18] चक्रे सोऽगस्त्यम् ऋषि-सत्तमम् ।।१३।। [१४
अभि-वाद्य मुनि-श्रेष्ठं[19] तांश् च सर्वांस् तपो-धनान्[20] ।
१५] अध्याऽरोहत्[21] तद् अ-व्यग्रः[21] पुष्पकं हेम-भूषितम् ।।[22]१४।।[१५
तं प्र-यान्तं मुनि-गणा आशीर्-वादैः[23] समन्त-तः ।
१६] अपूजयन् महाऽऽत्मानं[24] सहस्राऽक्षम् इवाऽमराः ।।[25]१५।। [१६

---

१. अ भ$_1$ रा$_1$ ल$_3$-°ने। च-महात्मनः। २. च-पुनश्चाग° । ३. च भ$_1$-इहागतः । ४. भ$_1$-एवं ब्रुवति । ५. च-°स्त्यो मुनिसत्तमः । भ$_1$-बाष्पनेत्रस्तपोधनः । ६. भ$_1$ ल$_1$ ल$_2$-वर्जं-त्वामेव । भ$_1$-त्वयोक्तं । ७. च-अपि ये रामं मर्त्याः पश्यंति केचन । भ$_1$-अपि राजंस्त्वां मैत्रेण क्षत्रिया नराः । भ$_2$ रा$_1$ ल$_1$ ल$_2$ ल$_3$ ब प्र-°त्रैरीक्ष्यन्ति मा° । ८. च- पार्थिवाः प्राणिनस्ते वै क्रीडंति त्रिदिवेश्वरैः । ९. च-अक्षिभिर्घोरैर् । १०. च-°ह पार्थिवाः । भ$_1$-ईक्षंते प्राणिनो भुवि । ११. अतः परमधिकः पाठः—च भ$_1$-हतास्ते ब्रह्मदण्डेन सद्यो निरयगामिनः। ईदृशस्त्वं रघुश्रेष्ठ पावनः सर्वदेहिनाम् । लोके त्वां कथयन्तो हि सिद्धिमेष्यन्ति मानवाः ।। १२. च भ$_1$-नास्ति। १३. च-नास्ति। १४. भ$_1$ प्र-परमा । १५. अ रा$_1$ ल$_2$ ल$_3$ ब-नास्ति । १६. अ रा$_1$ ल$_2$ ल$_3$ ब प्र-उक्त्वा । १७. भ$_1$-सांजलिं प्रयतो । १८. अ रा$_1$ ल$_2$-°दं तथा। च भ$_1$ ल$_1$-°दयितुं। १९. अ च-मुनिः श्रेष्ठं। २०. च-महामुनीन् । २१. अ भ$_1$-°हत्तदाव्यग्रः । ल$_2$-त्रुटितः । २२. अतः परमधिकः पाठः--भ$_1$- अभ्यर्चितस्तु ऋषिभिर्जगामाशु महामतिः ।। २३. रा$_1$ ल$_1$ ल$_3$ प्र-ह्याशी° । २४. भ$_1$-महेन्द्राभं । २५. च-अर्चयांचक्रिरे सर्वे महेन्द्रममरा इव । भ$_1$-°यन्महेंद्राभं सह° ।।

स्व-स्थः स ददृशे रामः पुष्पकेन[1] वि-भूषितः[2] ।
१७] चन्द्रो मेघ-समूह-स्थो यथा जलधराऽऽगमे[3] ॥१६[4]॥ [१७
ततोऽर्ध-दिवसे प्राऽऽप्ते रामः[4] पर-पुरं-जयः[4] ।
१८] अयोध्यां प्राऽऽप काकुत्स्थः कक्षाऽन्तरम्[5] अवाऽतरत्[5] ॥१७॥ [१८
वं.९०]ततो वि-सृज्य रुचिरं पुष्पकं काम-गामिनम् ।[6]
१] कक्षाऽन्तर-विनिक्षिप्तान्[7] द्वाः-स्थान् रामोऽब्रवीद् वचः ॥[8]१८॥[१९
लक्ष्मणं भरतं चैव गत्वाऽतो लघु-विक्रमाः[9] ।
२] ममाऽऽगमनम् आ-ख्याय शब्दापयत[10] मा चिरम् ॥१९॥ [२०

इत्यार्षे रामायण उत्तर-काण्डे राम-प्रत्यागमनं नाम[11]
चतुरशीतितमः सर्गः ॥ ८४ ॥

---

## [ वं-९० ]= [ पञ्चाशीतितमः सर्गः ] =[ दा-८३ ]

श्रुत्वा तु भाषितं तस्य रामस्याऽक्लिष्ट-कर्मणः ।
३] द्वाः-स्थः कुमाराव् आ-हूय राघवाय न्य्-अवेदयत् ॥ १ ॥ [१
दृष्ट्वा तु राघवौ प्राऽऽप्तौ प्रियौ भरत-लक्ष्मणौ ।
४] परि-ष्वज्य ततो[12] रामो[12] वाक्यम् एतद् उवाच ह ॥ २ ॥ [२
कृतं मया यथा-तथ्यं[13] द्विज-कार्यम् अनु-उत्तमम् ।
५] धर्म-सेतुम्[14] अतो[15] भूयः कर्तुम् इच्छामि राघवौ ॥ ३ ॥ [३
भवद्भ्याम् आत्म-भूताभ्यां राज-सूयम् अनु-उत्तमम् ।
६] सहितो यष्टुम् इच्छामि तत्र[16] धर्मो हि शाश्वतः ॥ ४ ॥ [५
इष्ट्वा हि राज-सूयेन मित्रः शत्रु-निबर्हणः ।
७] सु-हुतेन[17] सु-यज्ञेन[17] वरुण-त्वम् उपाऽगमत् ॥ ५ ॥ [६

---

१. च-°के हेमभूषिते । २. च-गच्छन्निजां पुरीं । ३. भ$_1$-नास्ति । ४. च-हृष्टपुष्टजनैर्युतां । भ$_1$-प्राप्तः सर्वार्थनिश्चयः । ५. च भ$_1$-वर्जे-विमानादवरुह्य च च-मध्यकक्षामवा° । ६. च-नास्ति । अतः परमधिकश्च पाठः—ततस्तु तद् ब्रह्म विनिर्मितं शुभं वरं विमानं बहुरत्नमण्डितम् । विसृज्य वीरो रघुवंशवर्धनं व्यचिंतयद्यज्ञविधिं महात्मा ॥ इत्यार्षे रामायण उत्तरकांडे रामप्रत्यागमनो नाम सर्गः । ७. भ$_2$ रा$_1$ ल$_1$ ल$_3$ ब प्र-कक्ष्यांत° । ८. अग्रिमसर्गस्य पाठः—च-सन्निपत्यासने शुभ्रे द्वास्थं राजाब्रवीदिदं । ९. अ च-°मः । भ$_2$ ल$_1$ ल$_2$ ल$_3$ प्र-°म । १०. च-शीघ्रमानय । ११ च रा$_1$ ल$_1$-नात्र सर्गसमाप्तिः । १२. भ$_1$-रामस्तौ । १३. च-यथोद्दिष्टं । १४. च-वर्जे-धर्महेतुं । १५. च-ततो । १६. ल$_2$-ततो । १७. च-सुसमृद्धेन विधिवद् ॥

इष्ट्वा[2] हि[2] राज-सूयेन सोमो[1] धर्मेण[2] धर्म-वित् ।
८] प्राऽऽप्तवांल् लोक-विख्यातं कीर्ति-स्थानं च शाश्वतम् ||[3] ६ || [७
तद् भवन्तौ[4] सु-संचिन्त्य कार्येऽस्मिन् यत् क्षमं हितम् ।[5]
९] अस्मिन्न्[5] अहनि यद् युक्तं प्र-यतौ[5] वक्तुम् अर्हथः || ७ || [८
श्रुत्वा तु राघवस्यैतद्[6] वाक्यं धर्म-समन्वितम्[7] ।
१०] भरतः प्राऽञ्जलिर् भूत्वा वाक्यम् एतद् उवाच ह || ८ || [९
त्वयि[8] धर्मः परः[8] साधो त्वयि सर्वा वसु-धरा ।
११] प्रति-ष्ठा हि महा-बाहो लोकानाम् अ-व्ययं यशः ||[9] ९ || [१०
मही-पालाश् च सर्वे त्वां प्रजा-पतिम् इवाऽमराः ।
१२] निर्-ईक्षन्ते[10] महाऽऽत्मानो लोक-नाथं[11] यथा[11] वयम् ||१०|| [११
प्र-जाश् च पितृ-वद् राजन् पश्यन्ति त्वां महा-मते[12] ।
१३] पृथिव्यां गति-भूतोऽसि[13] प्राणिनाम् अपि राघव[13] ||११|| [१२
स त्वम् एवं-विधं[14] यज्ञम् आ-हर्ता तु कथं नृ-प ।
१४] पृथिव्यां[15] सर्व-भूतानां वि-नाशो ह्य् अत्र दृश्यते ||[16]१२|| [१३
श्रूयते राज-शार्दूल[17] सोमस्य मनुजेश्वर[18] ।
१६] ज्योतिषां सु-महद् युद्धं सं-ग्रामे तारका-मये ||१३|| [N
वरुणस्य महा-घोरे[19] सं-ग्रामे मत्स्य-कच्छपाः[19] ।
१७] निर्-वृते[20] राज-शार्दूल यत्र क्षीणा जले-चराः ||१४|| [N

१. च–सोमश्च । २. अ $भ_2$ $रा_1$ $ल_1$ $ल_2$ $ल_3$ ब–राजयज्ञेन । च–यज्ञेनेष्ट्वा हि । ३. च–प्राप्तवान्सर्वलोकेषु की° । $भ_1$–प्राप्तः सर्वेषु लोकेषु कीर्तिस्थानं च शाश्वतं । ४. च–तन्मा भवन्तौ संचिन्त्य कार्येऽस्मिन्वक्तुमर्हतः । $भ_1$–तस्माद्भवंतौ यत्नेन कार्येस्मिन्मत्कृतं हितम् । ५. च–हितं वा यदि वा युक्तं प्र° । $भ_1$–यदायत्यां तदात्वे च युक्तं तद् । ६. च–°स्येदं । ७. च $भ_1$–वाक्यविशारदः । ८. च $भ_1$–त्वं धर्मः परमः । प्र–त्वयि धर्मपरे । ९. च–°ष्ठिता महा बाहो यशश्चामित्रकर्षण । $भ_1$–°हो यस्य त्वमितविक्रमः । १०. $भ_2$–वर्जं–°क्ष्यंते । ११. अ $ल_2$–°नाथाखिला । $भ_1$–°नाथ यथा । $भ_2$–°नाथ तथा । १२. $भ_1$–महाव्रत । १३. च–°तोऽपि सर्वेषां प्राणिनां प्रभो । १४. $भ_1$–एव कथं । १५. $भ_1$–जगत्यां । १६. अतः परमधिकः पाठः—च–ये केचित्पुरुषा राजन् पौरुषं समुपागताः । सर्वेषां भविता चात्र क्षयः कालान्तकोपमः ॥ १७. च–राजसूये हि । १८. च–हि महौजसः । १९. च–°घोरं संग्रामो मत्स्यकच्छपौ । २०. अ $ल_2$–निर्मिते । च $भ_1$–वर्जं–निर्वृतो ॥

श्रूयते राज-सूये[1] तु[1] मित्रस्याऽक्लिष्ट-कर्मणः[2] ।
१८] देवाऽसुरं महा-युद्धं[3] सर्वोत्साह-निवर्तकम्[4] ॥१५॥ [N
हरिश्-चन्द्रस्य यज्ञाऽन्ते राज-सूयस्य राघव ।
१९] आडी(?दी)व(?र्घ)कं[5] महा-युद्धं[6] सर्व-क्षत्र-विनाशकम्[7] ॥१६॥[N
पृथिव्याम् ए(?ये)व(?च) राजानो राज-पौरुषम् आ-श्रिताः ।
२०] सर्वेषां भविता तत्र क्षयः संवर्तकोपमः ॥१७[8]॥ [N
स त्वं पुरुष-शार्दूल बुद्ध्या[9] सं-चिन्त्य राघव[9] ।
२१] प्राणिनां चिन्तय शुभं त्वं हि तेषां परा गतिः ॥[10]१८॥[१
भरतस्य तु[11] तद् वाक्यं श्रुत्वाऽमृत-रसोपमम्[12] ।
२२] प्र-हर्षम् अ-तुलं लेभे रामः सत्य-परा-क्रमः[13] ॥१९॥ [१
उवाच च शुभां[14] वाचं[14] कैकेय्य्-आनन्द-वर्धनम्[15] ।
२३] एतेन परि-तुष्टोऽस्मि परेण वचनौजसा ॥[16]२०॥[१
इदं वचनम् अ-क्लीबं त्वया धर्म-समाहितम् ।[17]
२४] व्या-हृतं पुरुष-व्याघ्र पृथिव्याः परि-पालनम्[18] ॥२१॥ [१
एष तस्माद् अभिप्राऽयो राज-सूये[19] हि मे परः[19] ।
२५] नि-वर्तितो महा-बाहो त्वया तु व्या-हृतेन वै ॥[20]२२॥[१
२६उ] तस्माद् गृह्णामि ते वाक्यं साधूऽक्तं तु समा-हितम् । [२
N] प्र-जानां पालनो धर्मो राज्ञां यज्ञेन सं-मितः[21] ॥[21]२३[22]॥[N

इत्यार्षे रामायण उत्तर-काण्डे भरत-वाक्यं नाम
पञ्चाशीतितमः सर्गः ॥ ८५ ॥

---

१. भ$_{1}$–वर्जं–राजशार्दूल । २. भ$_{1}$–वर्जं–क्षत्रस्या° । च–शक्रस्य ३. अ भ$_{1}$ भ$_{2}$–महद्युद्धं । च–अभूद्युद्धं । ४. च–यत्र वर्षमवर्तत । ५. च–अः वन् । भ$_{1}$–आटवीकं । ६. च–महद्युद्धं । ७. च भ$_{2}$ रा$_{1}$ ब प्र–°शनं । ८. च पृथिव्यां यानि सत्त्वानि तिर्यग्योनिगतान्यपि । पार्थिवानां प्रजानां वै राज क्रतुक्षयः ॥ ९. च–गुणैरमितविक्रम । १०. च–पृथिवीं नार्हसे हंतुं वशे हि वर्तते । ११. च–हि । १२. च भ$_{1}$–°तमयं यथा । १३. भ$_{1}$–प्राणभृतां वरः । च भ$_{1}$–परिष्वज्य । १५. अ–°नः । १६. च भ$_{1}$–प्रीतोस्मि परितुष्टश्च वाक्ये सुव्रत । १७. अतः परमधिकः पाठः—भ$_{1}$ ल$_{1}$ ब प्र–हृद्यं तथ्यं च पथ्य सर्वस्य प्रीतिवर्धनम् । १८. भ$_{1}$–°ने । १९. च भ$_{1}$–°यात्क्रतूत्तमात् । २० ल$_{2}$–नास्ति । २१. रा$_{1}$ ल$_{1}$ ल$_{3}$ ब–वर्जं–संमतं । २२. अतः परमधिकः पाठः ल$_{2}$ प्र–दण्डश्च धर्मयोगेन प्रभ्रष्टोऽसौ शतक्रतुः । २३. च–बालानामपि हि वचो निशम्य ग्राह्यं वै रघुवर पूर्वजैरपीह । तत्रेदं वचनमनुत्तमं महार्हं श्रुत्वेदं प्रयत करोमि सर्वम् ॥

तथोक्तवति[1] रामे तु भरते[2] च महाऽऽत्मनि[2] ।
१] लक्ष्मणोऽपि शुभं वाक्यम् उवाच रघु-नन्दनम् ॥[3] १ ॥ [१
अश्व-मेधो महा-यज्ञः[4] पापानां[5] पावनः परः[5] ।
२] अ-पापस्याऽपि[6] दुर्-धर्षो रोचतां ते[7] क्रतूऽत्तमः[7] ॥ २ ॥ [२
श्रूयते हि पुरा-वृत्तं वासवः परमाऽऽत्मवान् ।[8]
३] ब्रह्म-हत्याऽऽवृतः[9] श्री-मान् हय-मेधेन पावितः ॥ ३ ॥ [३
पुरा किल महा-बाहो[10] देवाऽसुर-समागमे ।
४] वृत्रो नाम[10] महान् आसीद् दैतेयो लोक-सम्मतः ॥ ४ ॥ [४
त्रि-स्तीर्णो योजन-शतम् उच्-छ्रितो[11] द्वि-गुणं[12] ततः[13] ।
५] अनु-रागेण तं लोकाः स्नेहात् पश्यन्ति[14] सर्व-तः ॥ ५ ॥ [५
धर्म-ज्ञश् च कृत-ज्ञश्[15] च बुद्ध्या[15] च परिनि-ष्ठितः ।
६] प्र-शास्ति पृथिवीं सर्वां धर्मेण सु-समाहितः ॥ ६ ॥ [६
तस्मिन् प्र-शासति महीं सर्व-काल-फला[16] द्रुमाः[16] ।
७] रस-वन्ति प्रसूनानि[17] वासांसि त्रि-विधानि च ॥[18] ७ ॥ [७
अकृष्ट-पच्या पृथिवी निः-सपत्ना महाऽऽत्मनः ।
८] स राजा तादृशीं भुङ्क्ते स्फीताम् अद्भुत-दर्शनाम् ॥ ८[18] ॥ [८
तस्य बुद्धिः समुत्-पन्ना[19] तपश् चरितुम् उत्-तमम्[19] ।
९] तपो हि परमं श्रेयस् तपो[20] हि परमं सुखम्[20] ॥ ९ ॥ [९

---

१. च-अथो° । अत आरभ्य अ $ल_2$-सर्गान्तं यावन्नास्ति । २. च-वर्ज-भरतेन महात्मना । ३. अतः परमधिकः पाठः—च $भ_2$ $रा_1$-शृणु राजन्पुरावृत्तं तदा देवासुरे युधि । दैत्याः सुरैर्भर्त्स्यमाना भृगुपत्नीं समाश्रिताः । तया दत्ताभयास्तत्र न्यवसन्निर्भयास्तदा ॥ तथा परिगृहीतांस्तान् दृष्ट्वा क्रुद्धः सुरोत्तमः । चक्रेण शितधारेण भृगुपत्न्याः शिरोहरत् ॥ ततस्तां निहतां दृष्ट्वा भृगुपत्नीकुलोद्वहः ॥ ४. च-भिन्नेषु-महाराज । ५. च-पावनः सर्वपावनः । $रा_1$ ब-°वनः परं । ६. च-वर्ज-°पस्त्वं हि । ७. च-भिन्नेषु-क्रतुरुत्तमः । ८. च-श्रूयतां च यथापूर्वं वासवः सुमहायशाः । ९. च-वृत्रह° । १०. $भ_2$-नास्ति । ११. $भं_1$-°च्छ्रितं । १२. च-त्रिगुणं । १३. च $भ_2$-वर्ज-तथा । १४. $भ_1$ $भ_2$-पश्यति । १५. च-वदान्यश्च बुद्धौ । १६. च-वर्ज-°कामफ° । $भ_2$-°कामफलप्रदाः । १७. $भ_1$ $भ_2$ $ल_1$-प्रभूतानि । १८. च $ल_1$-नास्ति । १९. च-अथोत्पन्ना तपः कर्तुमनुत्तमं । २०. च-तत्र सर्वं प्रतिष्ठितं । $भ_1$-संमोहमितरं सुखं । $भ_2$-संमोह इतरत्सुखं ॥

नि-क्षिप्य स सुतं[1] ज्येष्ठं[2] सर्व-लोक-महेश्वरम्[3] ।
१०] तप उग्रं समाऽतिष्ठत् तापयन्[4] सर्व-देवताः[4] ॥१०॥ [१०
ताप्यमानेषु देवेषु[5] वासवः परमाऽऽर्त-वत्[5] ।
११] विष्णुं परम-तेजोऽग्रयं[6] वाक्यम् एतद्[7] उवाच ह[7] ॥११॥ [११
तपस्यता[8] महा-बाहो[9] लोका वृत्रेण तापिताः[10] ।
१२] बल-वान् एष[11] धर्मेण[11] नैनं[12] शक्नोमि बाधितुम्[12] ॥[13]१२॥[१४
यद्य् असौ तप आ-तिष्ठेद् भूय एव सुरेश्वर ।[14]
१३] यावल् लोका धरिष्यन्ति[15] तावत् स्थास्यन्ति[16] तद्-वने(?शे)[16] ।१३[१३
त्वम् एनं परमोदार[17] किम्[18] उपेक्षसि सु-व्रत[18] ।
१४] क्षणेन[19] न[19] भवेद् वृत्रः क्रुद्धे त्वयि सुरेश्वर[20] ॥१४॥ [१४
यदा-प्रभृति सं-योगं तव[21] विष्णो समा-गताः[21] ।
१५] तदा-प्रभृति देवा[22] वै[23] नाथ-वन्तस्[23] त्वया वि-भो[23] ॥१५॥ [१५
स त्वं प्र-सादं देवानां[24] कुरुष्व सु-महा-बलः[25] ।
१६] त्वत्-कृतेन[26] हि[26] सर्वं स्यात् प्रशान्तोपद्रवं[27] जगत् ॥१६॥ [१६
इमे हि विष्णो सर्वे त्वां निर्-ईक्षन्ते दिवौकसः ।[28]
१७] वृत्र-घातेन महता तेषां[29] साह्यं कुरुष्व ह[29] ॥१७॥ [१७

---

१. प्र-शरं । २. भ$_1$ रा$_1$ ल$_1$ ल$_3$-श्रेष्ठं । भ$_2$-वीरं । ३. भ$_1$-°कसुरेश्वरं । भ$_2$-राज्ये चैवासुरेश्वरः । प्र-वीरं चैवासुरेश्वरं । ४. भ$_2$-सर्वलोकभयावहं । ५. अ च-वर्ज-लोकेषु देवताः परमौजसा । ६. च-°तेजस्वी । ७. अ च-वर्ज-ऊचुः समाहिताः । ८. च-वर्ज-ताप्यन्ते । ९. भ$_1$ ल$_1$ ल$_3$ ब प्र-ते महात्मानो । भ$_2$-देवदेवेश । १०. भ$_1$-निर्जिताः । ११. च-चैव धर्मी च । १२. भ$_1$-नैनं शक्ष्यामि बा° । भ$_2$-दैत्येयो सर्वतः प्रभो । ब-नैनं शक्यमबाधितुं । प्र-न शक्ताः स्मो विबा° । १३. अत आरभ्य रा$_1$ ल$_3$-सर्गांतं यावन्नास्ति । १४. च-तप्यते यद्यसौ भूयस्तप एव सुरोत्तम । १५. भ$_2$-प्रवर्तन्ते । १६. भ$_1$ ल$_1$ ब प्र-देववशानुगाः । भ$_2$-ते यश उत्तमं । १७. च-°दारं । भ$_1$ ल$_1$ प्र-°दारः । १८. च-उपेक्षसि च नित्यशः । १९. भ$_1$ भ$_2$ ल$_1$ ब प्र-क्षणाद्धि । २०. च-°रः । २१. भ$_1$ ल$_1$ ब प्र-त्वं हि विष्णो विभागतः । भ$_2$-त्वत्कृतं न सुरेश्वर । २२. भ$_1$-लोका वो । ब-लोका वै । प्र-लोकोऽयं । २३. भ$_1$ भ$_2$ ब प्र-नाथत्वमुपलेभिरे । २४. भ$_1$ भ$_2$ ल$_1$ ब प्र-लोकानां । २५. भ$_1$ भ$_2$ ल$_1$ ब प्र-सुसमाहितः । २६. भ$_2$-°ते चैव । २७. भ$_1$ ल$_1$ ब-प्रशान्तमजरं । प्र-प्रशान्तमरजो । २८. भ$_1$ भ$_2$ ल$_1$ ब प्र-वयं हि सर्वे विष्णो त्वां पश्याम पुरुषोत्तमं । २९. भ$_1$-साह्यमस्मत्कुरुष्व वै । भ$_2$-साह्यं नः कुरु सत्तम ॥

त्वया हि नित्यं साहाय्यं[1] कार्यम् एव महा-मते[2] ।
१८] न चाऽपरेषां गतिर् अद्य विद्यते कुरु तत् स्वयम् ॥[3]१८॥ [१८

इत्यार्षे रामायण उत्तर-काण्डे लक्ष्मण-वाक्यं[4] नाम
षडशीतितमः सर्गः ॥ ८६ ॥

---

## [वं-९१,९२]= [ सप्ताशीतितमः सर्गः ] =[दा-८५]

लक्ष्मणस्य तु तद् वाक्यं श्रुत्वा शत्रु-निबर्हणः ।
१९] वृत्र-घातम् अनु-ध्यात्वा कथयस्वेति चाऽब्रवीत् ॥ १[5]॥ [१
राघवेणैवम् उक्तस् तु सुमित्राऽऽनन्द-वर्धनः ।
२०] भूय एव कथां दिव्यां कथयामास लक्ष्मणः ॥ २[5]॥ [२
वं-९२]सहस्राऽक्ष-वचः[5] श्रुत्वा सर्वेषां च दिवौकसाम् ।
१] विष्णुर् देवान् उवाचेदं सर्वान् इन्द्र-पुरो-गमान् ॥ ३ ॥ [३
पूर्व-सौहृद-बद्धोऽस्मि[6] वृत्रस्येह[7] महाऽऽत्मनः ।
२] तेन सर्वं[8] सहाम्य्[9] अस्य[9] न च[9] हन्मि महाऽसुरम् ॥ ४ ॥ [४
अवश्यं करणीयं च भवतां हितम्[10] उत्-तमम्[10] ।
३] तस्माद् उपाऽयम् आ-ख्यास्ये येन वृत्रं वधिष्यथ[11] ॥ ५ ॥ [५
त्रिधा-भूतं करिष्यामि शरीरं सुर-सत्तमाः ।[12]
४] तेन वृत्रं सहस्राऽक्षो हनिष्यति[13] न सं-शयः ॥ ६ ॥ [६
एकोऽशंस्[14] त्वाम् इहाऽऽयातु[14] द्वितीयो वज्रम् एव च[15] ।
५] तृतीयो भू-तले शक्र ततो वृत्र-वधं कुरु ॥ ७ ॥ [७
तथा ब्रुवन्तं देवेशम् अब्रुवन् सर्व-देवताः ।[16]
६] एवम् एतन् महा-बाहो यथा वदसि दैत्य-हन्[17] ॥[18]८॥ [८

---

१. च–गुरुणा महात्मना दिवौकसः । २. भ$_1$ भ$_2$ ल$_1$ ब प्र–अस्माकमपि सर्वेषामगतीनां गतिर्भवान् । ३. च–वृत्रघातोद्यमो । भ$_1$–वधविज्ञप्तिर् । ल$_1$ ब–वधार्थं विज्ञप्तिर् । ४. भ$_1$ भ$_2$ ल$_1$–वर्जं–नास्ति । ५. च–म शक्रवचनं । अत आरभ्य अ रा$_1$ ल$_2$ ल$_3$ प्र–१६-शश्लोकं यावन्नास्ति । ६. ल$_1$ ब–°सौहार्दब° । ७. भ$_1$–वृत्रस्य च । भ$_2$–वृत्रस्य तु । ल$_1$ ब–वृत्रस्तु । ८. च–हृदं सोढा । ९. भ$_1$–हि । १०. च–कारणाय च । भ$_1$ ल$_1$ ब–सुखमु° । ११. च ल$_1$–°थः । भ$_1$ भ$_2$ ब–हनिष्यति । १२. च–°रिष्येहमात्मानं वा सुरोत्तमाः । भ–नास्ति । ल$_1$ ब–तथाभूतं क° । १३. भ$_2$–वधिष्यामि । १४. ल$_1$ ब–एकांशो वासवो भूय । १५. भ$_1$ ल$_1$ ब–तु । १६. च–°वति गोविन्दे देवा वाक्यमथाब्रुवन् । भ$_2$–विष्णुना चोपदिष्टास्ते सर्व एव दिवौकसः । १७. भ$_1$ ल$_1$ ब–वृत्रहन् । १८. भ$_2$–नास्ति ॥

भद्रं तेऽस्तु गमिष्यामो वृत्राऽसुर-वधैषिणः ।
७] भजस्व[1] परमोदारं[1] वासवं स्वेन तेजसा ॥९॥ [९
ततो देवा[2] महाऽऽत्मानः सहस्राऽक्ष-पुरोगमाः[3] ।
८] तद्[4] अरण्यम् उपाऽक्रामन् यत्र[3] वृत्रो महाऽसुरः[3] ॥१०॥ [१०
अपश्यंस् तेजसा भूतं तप्यन्तम् असुरोत्तमम् ।[6]
९] पिबन्तम् इव लोकांस् त्रीन् निर्-दहन्तम् इवाऽमरान्[7] ॥११[8]॥ [११
दृष्ट्वैवाऽसुर-श्रेष्ठं देवाश् चिन्ताम् उपाऽगमन् ।
१०] कथं त्व् एनं वधिष्यामः कथं त्व् अस्य परा-जयः ॥१२[8]॥ [१२
तेषां चिन्तयतां तत्र सहस्राऽक्षः पुरं-दरः ।
११] वज्रं वि-गृह्य बाहुभ्यां प्राऽहिणोद् वृत्र-मूर्धनि ॥१३॥ [१३
तं[9] कालम् इव दीप्ताऽऽस्यं तथाऽन्त-कम्[9] इवाऽऽहतम्[10] ।
१२] वज्रं दृष्ट्वाऽस्य[11] शिरसि जगत् त्रासम् उपाऽगमत् ॥[12]१४॥ [१४
अ-सम्भाव्यं वधं तस्य वृत्रस्य विबुधाऽधिप ।
१३] चिन्तयानो जगामाऽऽशु लोकस्याऽन्तं महा-यशाः ॥१५[12]॥ [१५
दीप्तेनाऽथ[13] वज्रेण वृत्रस् तत्राऽभ्य्-अहन्यत[14] ।
१४] तेन चाऽधर्म-योगेन स्पृष्टस् तत्र शत-क्रतुः ॥[15]१६[16]॥ [N
तम् इन्द्रं[17] ब्रह्म-हत्या तु गच्छन्तम् अनु-धावति ।
१५] अपतच् चाऽस्य गात्रेषु यथेन्द्रो[18] दुःखम् आऽविशत् ॥१७॥ [१६
ततः[19] सर्वे तु नष्टेन्द्रा[19] देवाः साऽग्नि-पुरो-गमाः ।
१६] विष्णुं त्रिभुवन-श्रेष्ठं मुहुर्-मुहुर्[20] अपूजयन्[20] ॥[21]१८॥ [१७

---

१. च–भगवांस्तं संचचार । ल$_{1}$ ब–°दारं । २. भ$_{1}$ भ$_{2}$ ल$_{1}$ ब–सर्वे । ३ भ$_{1}$ भ$_{2}$ ल$_{1}$ ब–महेन्द्रेण दिवौकसः । ४. च–तं । ५. च–कथमेनं वधिष्यामः । ६. भ$_{2}$–अगम्यं तेजसा युक्तं तप्यन्तमकुतोभयं । ७. भ$_{2}$–महासुरान् । ८. भ$_{1}$ भ$_{2}$ ल$_{1}$ ब–वर्जं–नास्ति । ९. च ल$_{1}$–ततः कालोपमास्येन प्रदीप्तेन । भ$_{1}$–तं कालमिव दीप्ताग्निमन्तेन्तकम् । भ$_{2}$–प्रदीप्तमिव कालाग्निमंतकाले । १०. च–महार्चिषा । भ$_{2}$–महामनाः । ल$_{1}$ ब–इवाहितं । ११. भ$_{1}$ भ$_{2}$ ल$_{1}$ ब–वृत्रस्य । १२. च–नास्ति । १३. भ$_{1}$–भ्रष्टेन चाथ । १४. भ$_{1}$–तस्याऽभ्यह° । १५. भ$_{1}$–न चाधर्मस्य यो° । रा$_{1}$ ल$_{3}$–दण्डश्चाधर्मयोगेन प्रभ्रष्टोऽसौ श° । १६. च ब–नास्ति । १७. च–शक्रं । प्र–मित्रं । १८. भ$_{1}$–तथेन्द्रो । १९. च भ$_{1}$–हते वृत्रे प्रनष्टेन्द्राः । २०. भ$_{1}$–पूजयन्ति मुहुर्मुहुः । २१. अतः परमधिकः पाठः—च–ऊचुश्च ते सुराः सर्वे पूजयित्वा यथाविधि ॥

१७उ] त्वं[1] गतिः[1] परमो देवस् त्वं पूर्वो[2] जगतः[2] प्र-भुः ।
रक्षाऽर्थं[4] सर्व-भूतानां विष्णु-त्वम् इह[3] जग्मिवान्[3] ॥१९॥ [१८
१८] हतो वृत्रस्[5] त्वया देव ब्रह्म-हत्या च वासवम् ।
बाधते[6] सुर-शार्दूल मोक्षं तस्य[6] विनिर्-दिश[6] ॥२०॥ [१९
१९] तेषां तद् वचनं श्रुत्वा देवानां विष्णुर् अब्रवीत् ।
माम् एव यजतां शक्रः पावयिष्ये[7] पुरं-दरम्[7] ॥२१॥ [२०
२०] पुण्येन हय-मेधेन माम् इष्ट्वा पाक-शासनः ।
२१पू] पुनर् एष्यति देवानाम् इन्द्र-त्वम्[8] अ-कुतोभयम् ॥२२॥ [२१
N] एवम् उक्त्वा स देवानां[9] तां वाणीम् अमृतोपमाम् ।
२१उ] जगाम विष्णुर् आ-काशं सुराश्[9] च दिवम् आऽविशन् ॥[10]२३॥[२२

इत्यार्षे रामायण उत्तर-काण्डे वृत्र-वधो नाम
सप्ताशीतितमः सर्गः ॥[11]८७॥

---

## [वं-९३]= [अष्टाशीतितमः सर्गः] =[दा-८६]

अथ वृत्र-वधं सर्वं[12] वि-नयेन[12] स[12] लक्ष्मणः ।
१] कथयित्वा रघु-श्रेष्ठं[13] कथा-शेषम् अथाऽब्रवीत् ॥ १ ॥ [१
ततो हते महा-वीर्ये वृत्रे देवभयं-करे ।
२] ब्रह्म-हत्याऽऽवृतः शक्रः सं-ज्ञां लेभे[14] न वृत्र-हा[14] ॥ २ ॥ [२
सोऽन्तम् आ-श्रित्य लोकानां नष्ट-संज्ञो वि-चेतनः ।
३] कालं तत्राऽवसत् कं-चिच् चेष्टमानो[15] यथोरगः[16] ॥ ३ ॥ [३
अथ नष्टे सहस्राऽक्षे उद्-विग्नम्[17] अभवज् जगत्[17] ।
४] भूश्[18] च निःस्नेह-सङ्काशा[19] वि-ध्वस्ता[18] शुष्क-कानना ॥४॥ [४

---

१. भ$_1$–विश्रुतः । २. भ$_1$–सर्वज° । ३. च–उपज° । भ$_1$–अपि ज° । ४. च–वर्जं–चार्यं । ५. अ–वृणोति । ६. च भ$_1$–वर्जं–तस्याशु नि° । ७. च–°ष्ये शतक्रतुं । भ$_1$–°ष्यामि वज्रिणं । ८. अ–नास्ति । ९. भ$_1$–जग्मुर्देवास्तदन्तरं । १०. च–नास्ति । अतः परमधिकः पाठः—च–प्राणान्प्रशास्य सर्वानविधिवदभिप्रणतश्च तैर्महात्मा । अतुलबलपराक्रमोऽथ विष्णुः स्वभवनमेव ययौ त्रिविष्ट……॥ ११. भ$_1$ ल$_1$ ब–वर्जं–नास्त्यत्र सर्गसमाप्तिः । १२. च–अखिलेन स । भ$_1$–अखिलेनैव । १३. च–नरश्रेष्ठः । १४. भ$_1$–वोपलभेत्पुनः । १५. च भ$_2$–वर्जं–वेष्टमानो । १६. भ$_1$–ह्यधोगतिः । १७. भ$_1$–जगदुद्विग्नचेतसं । १८. च–भूमिश्च ध्वस्तसं° । भ$_1$–भूमिश्चैवाभवत्त्रस्ता । १९. च–निःस्नेहा ॥

निः-स्रोतसश् च[1] सरसो ह्रादाश् चाऽविमलोदकाः[1] ।
५] सं-क्षयश्[2] चैव भूतानाम्[3] अनावृष्टि-कृतोऽभवत् ॥५॥ [५
प्र-क्षीयमाणे लोकेऽस्मिन् सं-त्रस्ताः[4] सर्व-देवताः ।
६] यद् उक्तं विष्णुना पूर्वं तं यज्ञं समुपाऽनयन् ॥६॥ [६
ततः सर्वे सुर-गणाः साध्याश्[5] चैव महर्षिभिः[5] ।
७] जग्मुस्[6] तं देशम् आ-श्रित्य[6] यत्रेन्द्रो भय-मोहितः ॥७॥ [७
८उ] दीक्षयित्वा[8] सहस्राऽक्षं मुहूर्ते[8] यज्ञ-जे वि-धौ[8] ।
पुरस्-कृत्य सुराः सर्वे हय-मेधम् उपाऽहरन् ॥[9]८॥ [८
९] तत्राऽश्व-मेधः[10] सु-महान् अवर्तत[11] शत-क्रतोः[11] ।
पावनाऽर्थं[12] तदा तत्र ब्रह्म-हत्या-निशातनः ॥[12]९॥ [९
१०] ततो यज्ञ-समाप्तौ तु ब्रह्म-हत्या सुरर्षभात्[13] ।
अभि-गम्याऽब्रवीद् वाक्यं क मे स्थानं वि-धास्यथ ॥१०॥ [१०
११] ताम्[14] ऊचुर् ब्रुवतीं देवा[15] हृष्टाः प्रीति-समन्विताः ।
चतुर्-धा वि-भजाऽऽत्मानम् आत्मन्य् एव दुरा-सदे ॥११॥ [११
१२] देवानां भाषितं श्रुत्वा ब्रह्म-हत्या महाऽऽत्मनाम्[16] ।
सन्नि-धौ[17] वासम्[18] अन्य-त्र[18] वरयामास[18] दुर्-मनाः[19] ॥१२॥ [१२
१३] प्रथमांऽशेन तोयेषु[20] नि-वसामि[20] सुरोत्तमाः ।[21] [१३पू
द्वितीयेन तु वृक्षेषु सत्यम् एतद् ब्रवीमि वः ॥१३॥ [१४उ
१५] तृतीयो यश्[22] च मे[22] भागः स[23] स्त्रीणां रजसि भवेत्[23] ।
चत्वार्य् अहानि भविता ताभिः सं-वसते पुमान् ॥[24]१४॥ [१५

---

१. च–चांबुवाहाः सरांसि सरितस्तथा । २. अ $भ_2$ $रा_1$ $ल_1$ $ल_2$ $ल_3$ ब प्र–संशयश् । ३. च $भ_1$–सत्वानां । ४. च $भ_1$–सम्भ्रान्ताः । ५. अ $ल_2$–°ध्याः सह म° । च $भ_1$–सोपाध्यायाः सह° । ६. च–तं देशं सहिता जग्मुः । ७. ते तु दृष्ट्वा । ८. च–मोहितं ब्रह्महत्यया । $भ_1$–सुमुहूर्ते यथाविधौ । ९. च–तं पुरस्कृत्य देवेशमश्वमेधं प्रचक्रिरे । १०. च–ततो° । ११. च $भ_1$–महेन्द्रस्य महात्मनः । १२. च–ववृधे ब्रह्महत्यायाः पावनार्थं शचीपतेः । $भ_1$–ववृते पावनार्थाय पावनार्थं विनाशनः । $ल_3$–°त्यानि सुरर्षभं । १३. अ $रा_1$ $ल_2$ ब प्र–°र्षभं । च–महात्मनः । १४. च $भ_1$ $भ_2$–वर्जं–ताम् । १५. च–दृष्ट्वा । १६. $भ_1$–ततस्तदा । १७. च–सन्निधिस्थानं । $भ_1$–चतुर्धा भज्य । १८. $भ_1$–चात्मानं वासयामि सु° । १९. च $भ_1$–दुर्वसा । २०. $भ_1$–सलिले निवत्स्यामि । २१. च–भागेनैकेन सलिले वसेऽहं सुरसत्तमा । २२. च–मेऽस्ति यो । $भ_1$–यस्तु मे । २३. अ–स्त्रीणां विरजसे भवेत् । च–स्त्रीणां सोऽस्तु रजस्वला । २४. च–नास्ति ॥

१६] हन्तारो ब्राह्मणं[1] ये[2] तु[2] प्रेक्ष्य(?क्षा-) पूर्वं च दुष्-कृतम्(?तः)[2]।
तांश् चतुर्थेन भागेन श्रयिष्यामि सुरर्षभाः[3] ॥१५॥ [१६

१७] ताम् ऊचुश् च[4] ततो देवा यथा वदसि दुर्-धरे[4]।
तथा भवतु भद्रं ते साधयस्व दुरा-सदे[5] ॥१६॥ [१७

१८] ते प्रीत-मनसो देवाः सह शक्रेण रेमिरे।[6]
वि-ज्वरो धूत-पाप्मा[7] च वासवः पदम्[8] आप्तवान् ॥१७॥ [१८

१९] प्र-शान्तं च जगत् सर्वं सहस्राऽक्षे प्रति-ष्ठिते।
यज्ञम् अद्भुत-सङ्काशं[9] तदा शक्रोऽभ्य्-अपूजयत् ॥१८॥ [१९
ईदृशो ह्य् अश्व-मेधस्य प्र-भावो रघु-नन्दन।

२०] यजस्व तेन राजेन्द्र हय-मेधेन राघव[10] ॥१९[11]॥ [२०

इत्यार्षे[12] रामायणे[12] उत्तर-काण्डे लक्ष्मण-मन्त्रो[13]
नामाष्टाशीतितमः सर्गः ॥ ८८ ॥

---

## [वं-९४]= [एकोननवतितमः सर्गः] =[दा-८७]

श्रुत्वा तु लक्ष्मणेनोक्तं वाक्यं वाक्य-विदां[14] वरः[14]।

१] प्रत्य्-उवाच महा-तेजाः प्र-हसन्[15] राघवो[15] वचः[15] ॥ १ ॥ [१
एवम् एतन् नर-श्रेष्ठ यथा वदसि लक्ष्मण।

२] वृत्र-घातम्[16] अ-शेषेण हयमेध-गुणं च[17] यत्[17] ॥[18]२॥ [२
श्रूयते च[19] पुरा सौम्य कर्दमस्य प्रजा-पतेः।

३] पुत्रोऽथ[20] वाह्लिको[21] राजा[22] इडो[23] नाम महा-यशाः[23] ॥ ३ ॥ [३

---

१. भ१-ब्राह्मणानां। २. च-वै प्रेक्षापूर्वमुपेक्षकाः। भ१-च प्रेक्षता कर्म दुष्करं। ३. ल१-सुरोत्तमाः। ४. च-ते सुराः सर्वे यथा वदसि दुर्वंशे। ५. च-यथेप्सितं। ६. च-ततः प्रीत्याम्बिता देवाः सहस्राक्षं ववन्दिरे। ७. च-पूत°। ८. च-समपद्यत। ९. च भ१-चाद्भुत°। १०. च भ१-पार्थिव। ११. अतः परमधिकः पाठः—अ भ२ रा१ ल१ ल२ ल३ ब प्र-निष्कृतिश्चापि तेषां तु शृणु त्वं समयो यथा। अल्पोदकं जलं यत्र स्त्रीं भुक्त्वा न हितस्तथा॥ हंतारो ब्राह्मणं ये तु प्रेक्ष्य पूर्वं सुदुष्कृतं। च भ१-इति लक्ष्मणवाक्यमुत्तमं नृपतिरतीव मनोहरं महामनाः। परितोषमवाप हृष्टचेताः स निशम्येन्द्र-समानविक्रमौजाः॥ १२. भ१-इति श्रीरामायणे वाल्मीकीये। १३. प्र-°मन्त्रणं। १४. च रा१ ब ल३ प्र-°विशारदः। १५. अ भ२-स ह°। १६. ल१-°वस्तदा। १७. भ२ रा१ ब ल२ ल३ प्र-वृत्रपातम्। १८. भ१-तथा। १९. च-हयमेधफलश्चैव वृत्रस्य च महावधः। २०. च भ१-हि। २१. च-पुत्रो वाग्मीश्वरो। २२. भ१-नाम। २३. च-सरलो नाम राघव॥

स राजा पृथिवीं[1] सर्वां वशे कृत्वा महा-बलः[2] ।
४] राज्यं[3] चैव नर-व्याघ्र[3] पुत्र-वत् पर्य्-अपालयत्[4] ॥ ४ ॥ [४
सुरैश् च परमोदारैर् दैतेयैश् च महाऽसुरैः[5] ।
५] नाग-राक्षस-गन्धर्वैर् यक्षैश्[6] च सु-महाऽऽत्मभिः[6] ॥ ५ ॥ [५
पूज्यते[7] नित्य-शः सौम्य भयेन[7] रघु-नन्दन ।
६] बिभ्यति स्म[8] त्रयो लोकाः[8] स-रोषस्य[9] महाऽऽत्मनः ॥ ६ ॥ [६
स राजा तादृशो ह्य् आसीद् वीर्ये धर्मे च वि-श्रुतः ।[10]
७] बुद्धया च परमोदारो वाह्लीकानां[11] महा-यशाः ॥ ७ ॥ [७
स[12] हि चक्रे महा-बाहुर्[12] मृगयां रुचिर-प्रभः[13] ।
८] चैत्रे मनो-रमे मासि स-भृत्य-बल-वाहनः ॥ ८ ॥ [८
उद्-देशे स नृ-पो रम्ये मृगान् बहु-सहस्र-शः ।[14]
९] जघान नैव तृप्तिस् तु आसीत् तस्य महाऽऽत्मनः ॥[15] ९ ॥ [९
ततो मृगाणाम् अयुतम् वध्यमानं महाऽऽत्मना ।
१०] यत्र जातो महा-सेनस् तं देशम् उप-चक्रमे ॥ १० ॥ [१०
तस्मिन् देशे[16] तु देवेशः[16] शैलराज-सुतां हरः ।
११] रमयामास दुर्-धर्षः सर्वैर् अनु-चरैः सह[17] । ॥ ११ ॥ [११
कृत्वा स्त्री-भूतम्[18] आत्मानं स[19] सर्वान् पार्षदांस् तथा[19] ।
१२] देव्याः प्रिय-चिकीर्षाऽर्थं तस्मिन्[20] पर्वत-रोधसि[21] ॥ १२ ॥ [१२
ये[22] च[22] तत्र[23] वनोद्देशे सत्त्वाः पुरुष-लिङ्गिनः ।
१३] वृक्षाः पुरुष-नामानो[24] ये हि[24] ते[25] स्त्री-कृतास् तदा[25] ॥ १३ ॥ [१३

---

१. भ$_1$–धरणीं । २. च–सपर्वतां । ३. च–पृथिव्यां पार्थिवांश् चैव । ४. च भ$_1$–वर्जे–परिपालयन् । ५. भ$_1$–महाबलैः । ६. च–सिद्धचारणकिन्नरैः । ७. च भ$_1$–स पूज्यते नित्यकालं भयार्त्तैं । ८. च भ$_1$–ह्यस्य रोषात्तु । भ–°यो देवाः । ९. च भ$_1$–लोकाः सर्वे । १०. च–सोऽधिराजो महानासीद्धर्मे वीर्ये व्यवस्थितः । भ$_1$–°सीद्धर्मे वीर्ये च संमतः । ११. च–वाग्मीराजो । १२. च–स जगाम म° । भ$_1$–स चक्रे सुम° । प्र–प्रचक्रमे म° । १३. च–विक्रमास्थितः । १४. च–महद्बलमुपागम्य मृगाञ्छतस° । भ$_1$–प्रतस्थे सोभ्युपागम्य मृगाञ्छतस° । १५. भ$_1$–निघ्नन्नपि न तृप्तोऽभूत्स राजा वाह्लिकांशजः । १६. च–च देवदे° । भ$_1$–प्रदेशे दे° । १७. च–वृतः । १८. भ$_1$–स्त्रीरूपम् । १९. च–सर्वाननुचरांस्तथा । भ$_1$–सर्वेषां पार्षदां महत् । २०. च–तत्र । २१. च–°तमूर्धनि । भ$_1$–°तनिर्झरे । २२. च भ$_2$–वर्जं–तत्र । २३. भ$_1$–तस्मिन् । २४. च–पुन्नामधेयाश्च सर्वे । भ$_1$–°मानः सर्वे । २५. भ$_1$–स्त्रीषु कृतं त्वभूत् ॥

एतस्मिन्न् अन्तरे राजा कर्दमस्य[1] सुतस्[1] त्व् इडः ।
१४] नि-घ्नन् मृग-सहस्राणि तं देशम् उप-चक्रमे[2] ॥१४॥ [१४
स दृष्ट्वा स्त्री-कृतं[3] सर्वं स-व्याल-मृग-पक्षिणम्[4] ।
१५] आत्मानं साऽनु-गं चैव स्त्री-कृतं रघु-नन्दन[5] ॥[6]१५॥ [१५
तस्य दुःखं समुत्-पन्नं[7] दृष्ट्वाऽऽत्मानं[8] तथा गतम् ।[6]
१६] उमा-पतेस् तु तत् कर्म[9] ज्ञात्वा त्रासम् उपाऽगमत् ॥१६॥ [१६
ततो देवं महाऽऽत्मानं शिति-कण्ठं कपर्दिनम् ।
१७] जगाम शरणं राजा स-भृत्य-बल-वाहनः ॥१७॥ [१७
ततः प्र-हस्य वर-दः सह देव्या त्रिशूल-धृत्[10] ।
१८] प्रजापति-सुतं वीरम् उवाच मधुरा[11] गिरः[11] ॥१८॥ [१८
उत्-तिष्ठोत्-तिष्ठ राजर्षे कार्दमेय महा-मते ।
१९] पुरुष-त्वम् ऋते वीर ब्रूहि किं करवाणि ते ॥१९॥ [१९
ततः स राजा शोकाऽऽर्त्तः प्रत्या-ख्यातो महाऽऽत्मना[12] ।
२०] स्त्री-भूतोऽन्यं न जग्राह वरं पुंस्-त्वाद् ऋते तदा[13] ॥२०॥ [२०
ततः शोकेन महता[14] शैलराज-सुतां नृ-पः[15] ।
२१] प्रणि-पत्य महा-देवीम् उवाच[16] नाऽन्य-मानसः ॥२१॥ [२१
ईशे वराणां वर-दे लोकानां चाऽसि भामिनि ।
२२] अमोघ-दर्शना देवि भव सौम्या शुभाऽऽनने ॥२२॥ [२२
हृद्-गतं तस्य राजर्षेर् वि-ज्ञाय हर-सन्निधौ ।
२३] प्रत्य्-उवाच शुभं वाक्यं देवी रुद्रस्य सन्नि-धौ[17] ॥२३॥ [२३
अर्धस्य[18] वर-दो देवो[18] वर-दाऽर्धस्य चाऽप्य् अहम् ।
२४] तस्माद् अर्धं गृहाण त्वं स्त्री-पुंसोर् वा[19] यदीऽच्छसि[19] ॥२४॥ [२४

---

१. च-°मस्यात्मजस् । २. च-समुपागमत् । ३. च-स्त्रीमयं । ४. भ$_1$-°गसेवितं । ५. भ$_2$ रा$_1$ ल$_2$ ल$_3$ प्र-°न्दनौ । ब-रघुभ्रातरौ । ६. च-आत्मानं सबलं चैव स्त्रीभूतं कर्दमात्मजः । ७. अ-महच्चासीद् । ८. च भ$_1$-वर्जं-नास्ति । ९. च-राजाऽतप्यत दुःखेन तथा ज्ञानं तथाविधं । १०. च भ$_1$ भ$_2$-°लभृत् । ११. च भ$_1$-मधुरं वचः । १२. च-महायशाः । १३. भ$_1$-भवान् । १४. भ$_1$-संतप्तः । १५. ल$_1$-तदा । १६. अ ल$_2$-अत आरभ्याग्रिमश्लोकस्य ३-यपादं यावत् नास्ति । भ$_1$ रा$_1$ ल$_1$ ल$_3$-उवाचानन्यमा° । १७. च-सम्मता । भ$_1$-सम्मतं । १८. च-अवश्यं ते वरो देयो । १९. च भ$_1$-यावद् इच्छसि ॥

तद् अद्भुत-तमं वाक्यं देव्या व्या-हृतम्[1] उत्-तमम्[1] ।
२५] सम्प्रहृष्ट-मनाः श्रुत्वा[2] राजा[3] वचनम् अब्रवीत्[3] ॥२५॥ [२५
यदि देवि प्र-सन्नाऽसि रूपेणाऽप्रतिमा भुवि ।
२६] स्त्री भवेयम् अहं मासं मासं च पुरुषस् तथा[4] ॥२६॥ [२६
ईप्सितं तस्य वि-ज्ञाय देवी सु-रुचिराऽऽनना[5] ।
२७] प्रत्य्-उवाच शुभं[6] वाक्यम्[6] एतत्[7] तव[7] भविष्यति ॥२७॥ [२७
राजन्[8] पुरुष-भूतस् त्वं[8] स्त्री-भावं[9] न स्मरिष्यसि ।
२८] स्त्री-भूतश्[10] चाऽपरं मासं[10] न स्मरिष्यसि पौरुषम् ॥२८॥ [२८
एवं स राजा पुरुषो मासं भवति कर्हि-चित्[11] ।
२९] त्रिलोक-सुन्दरी[12] नारी मासम् एकम् इडाऽभवत् ॥२९॥ [२९

इत्यार्षे रामायण उत्तर-काण्डे इडोपाख्यानं[13]
नामैकोननवतितमः सर्गः ॥ ८९ ॥

---

## [ वं-९५ ]= [ नवतितमः सर्गः ] =[ दा-८८ ]

तां कथाम् इड-सम्बन्धां[14] रामेण समुद्-ईरिताम्[14] ।
१] लक्ष्मणो भरतश् चैव श्रुत्वा परम-विस्मितौ ॥ १ ॥ [१
राघवम् प्राऽञ्जली-भूतौ तस्य[15] राज्ञो महाऽऽत्मनः ।
२] वि-स्तरं तस्य वाक्यस्य[16] सं-प्रष्टुम्[16] उप-चक्रतुः[16] ॥ २ ॥ [२
कथं स राजा स्त्री-भूतो वर्तयामास दुर्-गतिम्[17] ।
३] पुरुषो[18] वा पुनर् भूत्वा[18] कां स्म वृत्तिम् अवर्तत ॥ ३ ॥ [३
तयोस् तद् वचनं श्रुत्वा कौतूहल-समन्वितम्[19] ।
४] कथयामास काकुत्स्थस् तस्य राज्ञो यथाऽभवत् ॥ ४ ॥ [४
तम् एवं प्रथमं मासं स्त्री-भूता[20] लोक-सुन्दरी ।
५] ताभिः परि-वृता स्त्रीभिर् यास् तु तस्य पदाऽनु-गाः ॥ ५ ॥ [५

---

१. च-श्रुत्वा महीपतिः । २. च $भ_2$-भूत्वा । ३. च-वाक्यमेतदुवाच ह । $भ_1$-प्रत्युवाच नराधिपः । ४. $भ_2$ $रा_1$ $ल_1$ $ल_3$ प्र-तदा । ५. च $भ_1$-°चिरं वचः । ६. च-नरेन्द्रं तं । ७. $भ_1$-एवमेतद् । ८. च-यदा त्वं पुरुषीभूतः । $भ_1$-पुरुषस्य पुनर्भूत्वा । ९. $भ_1$-स्त्रीत्वं च । १०. $भ_1$-यदा तु प्रमदा भूत्वा । ११. च-कार्दमिः । $भ_1$-कार्दमः । १२. च-त्रैलोक्यसु° । १३. च-इडोत्पत्तिर् । १४. च-दिव्यसंकाशां काकुत्स्थेन समीरितां । १५. च-नास्ति । १६. $भ_1$-संप्रज्ञातुं तमूचतुः । १७. $भ_1$-°गतिः । १८. च-यदा च पुरुषो भूतः । १९. च $भ_1$-वर्ज-°न्वितः । २०. $भ_1$-वर्ज-°भूतो । च-स्त्री भूत्वा ॥

ता: काननं वि-गाहन्त्यो भजन्त्यः पुष्पितान्[1] द्रुमान्[1] ।
६] गुल्माद् गुल्मं च गच्छन्त्यश् चेलुः पद्मदलेक्षणाः ॥[2]६ ॥ [६
वाहनानि च सर्वाणि सं-त्यक्तानि[3] समन्त-तः ।
७] पर्वताSSभोग-विवरे तस्मिन् रेमे[4] इडा तदा[4] ॥ ७ ॥ [७
ततस् तस्मिन् वनोद्देशे पर्वतस्याSविदूर-तः[5] ।
८] सरः सु-रुचिर-प्रख्यं पुण्यं पक्षि-गणाSSयुतम्[6] ॥ ८ ॥ [८
ददर्श[7] सा इडा नाम[7] बुधं सोम-सुतं तदा ।
९] ज्वलन्तं स्वेन वपुषा पूर्ण-चन्द्रम् इवोदितम् ॥ ९ ॥ [९
तपस्यन्तं तपस् तीव्रम् अम्भो-मध्ये[8] दुरा-सदम् ।
१०] यशस्-करं काम-गमं तारुण्ये[9] पर्यव-स्थितम्[9] ॥१०॥ [१०
सा तं जलाSSशयं सर्वं[10] क्षोभयामास वि-स्मिता[10] ।
११] सह तैः पुरुषै रेमे स्त्री-भूतै रघु-नन्दनौ[11] ॥११॥ [११
बुधस् तु तां निर्-ईक्ष्यैव काम-बाण-वशं[12] गतः[12] ।
१२] नोप-लेभे तदाSSत्मानं[13] प्र-चचार[13] ततोSम्भसि ॥१२॥ [१२
इडां[14] निर्-ईक्षमाणः स[14] त्रैलोक्यस्याSधिकां[15] शुभाम्[15] ।
१३] चिन्ताम् अभ्यति-चक्राम[16] का न्व् इयं देवताSधिका ॥[17]१३॥[१३
न देवीषु न यक्षीषु गन्धर्वीष्व्[18] अप्सरःसु[18] च ।
१४] दृष्ट-पूर्वा मया का-चिद्[19] रूपेणाSनेन[20] शोभना[20] ॥१४॥ [१४
ममेयं सदृशी स्यात्[21] तु यदि नाSस्याः परि-ग्रहः[21] ।
१५] इति बुद्धिं समा-स्थाय जलात् स्थलम् उपाSगमत् ॥१५॥ [१५
सोSथाSSश्रमम् उपा-गम्य चतस्रः प्र-मदास् तदा ।[22]
१६] आ-ह्वयामास धर्माSSत्मा न[23] तु ताश् चाSभ्य्-अवादयन्[23] ॥१६॥[१६

---

१. च–पुष्पशोभनम्। २. च–द्रुमगुल्मलताकीर्णं पद्माः पद्मदलेक्षणाः। ३. च–त्यक्त्वा चैव। ४. $भ_1$–भ्रमति सा इडा। ५. $भ_1$ प्र–वर्जं–°तस्य वि°। ६. च–°गणान्वितं। $भ_1$–पक्षिमृगायुतं। $ल_1$–°गणैर्युतं। ७. च $भ_1$–इडा ददर्श तस्मिंस्तु। ८. $भ_1$–पुण्याम्भसि। ९. अ $ल_2$–तारुण्योपर्य°। च–°ण्ये प्रत्यव°। $भ_1$–°ण्ये समव°। १०. $भ_1$–भामिनी। ११. $भ_2$–वर्जं–°न्दन। १२. च–मन्मथेनाभिपीडितः। १३. च–तदा शर्म चचार च। १४. $भ_1$–निरीक्ष्यमाणः स बुधस्। १५. च–°क्याभ्यधिकां स्त्रियं। $भ_1$–°कां तदा। १६. $भ_1$–अभ्यधिच°। $रा_1$ $ल_1$–अस्यातिच°। १७. च–वृत्तं चित्रादपाक्रामद्वै लक्ष्मी महोदधिः। १८. $भ_1$ $रा_1$ $ल_1$–न नारीष्वप्स°। ब $ल_3$ प्र–न तथा चाप्स°। १९. च–नारी। २०. $भ_1$–नाना या रूपसंपदः। २१. च–भार्या यदि नास्यपरिग्रहा। २२. च–आश्रमं समुपागम्य स तस्य प्रमदास्ततः। २३. च–ताश्चैव न सुवचन्दिरे॥

स[1] ताः पुनर् उवाचेदं[1] कस्यैषा लोक-सुन्दरी ।
१७] किम्-अर्थम् आ-गता चेह[2] सत्यम् आ-ख्यात मा चिरम्[2] ॥१७॥[१७
श्रुत्वा बुधस्य तद् वाक्यं मधुरं मधुराऽक्षरम् ।
१८] प्रत्य्-ऊचुर् अभि-पूज्यैनं परं श्लक्ष्णया[3] गिरा ॥१८॥ [१८
अस्माकम् एषा सु-श्रोणी प्रभु-त्वे वर्तते सदा ।
१९] रमते[4] कानना॰न्तेषु सदाऽस्माभिश्[4] चरत्य्[5] अपि[5] ॥१९॥ [१९
तद् वाक्यम् अ-व्यक्त-पदं ताभ्यः स्त्रीभ्यो नि-शम्य[6] तु[7] ।
२०] विद्याम् आ-वर्तिनीं[8] दिव्याम्[9] आऽवर्तयत[9] धर्म-वित् ॥२०॥ [२०
सोऽथ[10] विदित्वा नि-खिलं[10] तस्य राज्ञो यथा-तथम्[11] ।
२१] सर्वा[12] एव स्त्रियस् तास् तु बभाषे[12] मुनि-सत्तमः ॥[13]२१॥[२१
अत्र[14] किं-पुरुषा[15] रामा[15] यूयं[16] शैलस्य रोधसि[16] ।[17]
२२] वासं(?स)श् चाऽस्मिन् गिरौ शीघ्रम् अव-काशो वि-धीयताम्[17]२२[२२
मूल-पत्र-फलैः[18] सर्वा[18] वर्तयिष्यथ नित्य-दा[19] ।
२३] स्त्रियः किं-पुरुषा(न्)नाम भर्तॄन् समुप-लप्स्यथ ॥२३॥ [२३
ताः[20] श्रुत्वा[20] सोम-पुत्रस्य सर्वाः किंपुरुषी-कृताः[21] ।
२४] जग्मुस्[22] तं पर्वतोद्देशं[22] सोम-पुत्रस्य शासनात् ॥[23]२४॥[२४

इत्यार्षे रामायण उत्तर-काण्डे इडोपाख्याने किंपुरुषोत्पत्तिर्[24] नाम

नवतितमः सर्गः ॥ ९० ॥

---

१. च–स ताः पप्रच्छ धर्मात्मा । भ$_1$–सोऽपृच्छत धर्मात्मा । २. च–चैव श्रोतुमिच्छामि कथ्यतां । ३. प्र–परमं लोकया । ४. च–अपतिर्वाद्वनान्तेषु सहास्मा° । भ$_1$–अपतिः काननान्तेषु सहास्मा° । ५. च भ$_1$–वजं–चरेदिह । ६. भ$_1$ भ$_2$ रा$_1$ ब ल$_1$ ल$_2$–निशाम्य । ७. च–वै । ८. भ$_1$ रा$_1$ ब ल$_1$–आवर्त्तनीं । ९. च भ$_1$–पुण्यामावर्तयति । १०. च–विदित्वा सर्वमर्थं च । ११. भ$_2$–तथा गतिं । अ ब ल$_1$ ल$_2$–यथायथम् । १२. च–ताः सर्वा योषितः सोऽथ प्रोवाच । १३. भ$_1$–नास्ति । १४. च–यूयं । १५. अ–°रुषो नाम । प्र–°षा यूयं । च–°षा भूत्वा । १६. च–पर्यटध्वं शिलोच्चये । प्र–प्राप्ताः शै° । १७. च–वासं शैलवरे रम्ये यत्रास्मिन्नधिगच्छथ । भ$_1$–वासं शैलवने पुण्ये किं चास्मिन्नधिगच्छथ । १८. भ$_1$–मूलैः पुष्पैः फलैर्वापि । १९. च–सर्वदा । भ –नित्यशः । २०. च भ$_1$ ल$_1$–तच्छ्रुत्वा । २१. च–°रुषा भवन् । भ$_1$–°रुषास्ततः । २२. अ–जग्मुः पूर्वतो देशं । च–जग्मुः शैलावृतं देशं । भ$_2$–आजग्मुः प° । २३. अतः परमधिकः पाठः—च–उपासांचक्रिरे चैव शैलं सर्वा ह्यशेषतः ॥ २४. भ$_1$–किंपुरुषीयो । अ रा$_1$ ब ल$_2$ प्र–इडोपाख्यानं । ल$_1$–बुधदर्शनं ॥

श्रुत्वा किंपुरुषोत्पत्तिं भरतो[1] लक्ष्मणस् तथा[1] ।
१] आश्चर्यम् इति[2] ता(?तौ)ब्रूत[2] उभौ[3] रामं जनेश्वरम्[3] ॥ १ ॥ [१
अथ रामः कथाम् एतां भूय एव महा-यशाः ।
२] कथयामास धर्माऽऽत्मा प्रजापति-सुतस्य[4] वै[4] ॥ २ ॥ [२
सर्वास् ता वि-द्रुता दृष्ट्वा किन्नरीर् ऋषि-सत्तमः[5] ।[5]
३] उवाच रूप-सम्पन्नां स्त्रियं तां प्र-हसन् वचः[6] ॥ ३ ॥ [३
सोमस्याऽहं सु-दयितः सुतः सु-रुचिराऽऽनने ।
४] भजस्व मां वराऽऽरोहे भक्त्या[8] स्निग्धेन चक्षुषा[8] ॥ ४ ॥ [४
तस्य तद् वचनं श्रुत्वा शून्ये स्व-जन-वर्जिता ।
५] इडा सुरुचिर-प्रख्यं प्रत्य्-उवाच महा-ग्रहम्[9] ॥ ५ ॥ [५
इयं काम-करी सौम्य तवाऽस्मि वश-वर्तिनी ।
६] प्र-शाधि मां सोम-सुत यथेच्छसि तथा कुरु ॥ ६ ॥ [६
तस्यास् तद् अद्भुत-प्रख्यं श्रुत्वा हर्ष-समन्वितः ।
७] स च कामी सह तया रेमे चन्द्रमसः सुतः ॥७[10]॥ [७
तस्य[11] मासस् ततश् चैक[11] इडां सु-रुचिराऽऽननाम् ।
८] क्षण-भूत इवाऽत्य्-अर्थं तथा[12] रमयतो गतः[12] ॥ ८ ॥ [८
अथ मासे तु सं-पूर्णे पूर्णेन्दु-सदृशाऽऽननः ।
९] प्रजापति-सुतः श्री-माञ् छयनात्[13] प्रत्य्-अबुध्यत ॥ ९ ॥ [९
सोऽपश्यत् सोम-जं तत्र तप्यन्तं[14] सलिलाऽऽशये[15] ।
१०] ऊर्ध्व-बाहुं निरा-लम्बं तं राजा प्रत्य्-अभाषत ॥१०॥ [१०
भग-वन् पर्वतं दुर्गं प्र-विष्टोऽस्मि बलाऽनु-गः[16] ।
११] न च पश्यामि तत् सैन्यं कुत्र ते मामका गताः ॥११॥ [११

---

१. भ$_{1}$–उभौ भरतलक्ष्मणौ । रा$_{1}$–°णस्तदा । २. च–इत्यवोचतां । भ$_{1}$–काकुत्स्थं । भ$_{2}$–इति तावूचुः । ३. भ$_{1}$–तदा प्रत्यनन्दतां । ४. च भ$_{1}$ भ$_{2}$–°सुतस्थले । ५. च भ$_{1}$–वर्जं–गिरिसत्तमान् । रा$_{1}$–गिरिसत्तमम् । ६. च–अथवा तां विद्रुतां दृष्ट्वा किन्नरीं शशिनः सुतः । ७. भ$_{1}$–इव । ८. च–तत्त्वं पश्य स्निग्धेन चक्षुषा । ९. भ$_{1}$–सुखावहं । १०. अ भ$_{1}$ ल$_{3}$–नास्ति । प्र–ततस्तस्य मधुरं वाक्यं श्रुत्वा हर्षसमन्वितः । तां स कन्यां विहाराय प्रतिजग्राह वीर्यवान् ॥ ११. च–स तस्य माधवो मास । भ$_{2}$–स तस्य मासपर्यंतं । रा$_{1}$ ब ल$_{1}$ ल$_{2}$–स तस्य नृपते मास । १२. भ$_{1}$–व्यपयाद्रमतोर्वने । १३. च–शयानः । १४. भ$_{1}$–तपंतं । १५. अ–°शयं । च–तु जलाशये । १६. च भ$_{1}$–सहानुगः ॥

तच् छ्रुत्वा तस्य राजर्षेर् नष्ट-संज्ञस्य भाषितम् ।
१२] प्रत्य्-उवाच बुधो वाक्यं सान्त्वयञ्[1] श्लक्ष्णया गिरा[1] ॥१२॥ [१२
शृणु सर्वं[2] यथा-तत्त्वं[2] राजर्षे शुभ-लक्षण ।
१३] सं-स्तम्भय[3] त्वम् आत्मानं मा च शोके मनः कृथाः ॥१३॥ [N
अश्म-वर्षेण महता भृत्यास् ते विनि-सूदिताः[4] ।
१४] त्वम् आश्रम-पदे[5] सुप्तो वात-वर्ष-भयाऽर्दितः ॥१४॥ [१३
समा-श्वसिहि राजेन्द्र[6] निर्-भयो विगत-ज्वरः ।
१५] फल-मूलाऽशनो वीर वसेह[7] कति-चित् क्षपाः[7] ॥१५॥ [१४
स राजा तेन वाक्येन प्रत्या-श्वस्तो महा-यशाः ।
१६] प्रत्य्-उवाच शुभं वाक्यं दीनो भृत्य-जन-क्षयात् ॥[8]१६॥ [१५
त्यक्ष्याम्य् अहं स्व-कं[9] राज्यं न हि भृत्यैर् विना-कृतः[9] ।
१७] वर्तयेयम्[10] अहं[10] ब्रह्मन् समनु-ज्ञातुम् अर्हसि ॥१७॥ [१६
सुतो धर्म-परो ज्येष्ठो मम राजा[11] महा-यशाः ।[8]
१८] शश-बिन्दुर् इति ख्यातो राज्यं मे[12] समवाऽऽप्स्यति[12] ॥१८॥ [१७
न हि शक्ष्याम्य् अहं गन्तुं[13] पुत्र-दारान् सुखैधितान्[13] ।
१९] प्रति-वक्तुं महा-सत्त्व किं-चिद्[14] अप्य् अ-शुभं वचः[14] ॥१९॥ [१८
तथोक्तवति राजेन्द्रे बुधः सोम-सुतः शुभः[15] ।
२०] प्रत्य्-उवाच शुभं वाक्यं दुःखाऽऽर्तं[16] राज-सत्तमम् ॥२०॥ [१९
२१पू] न सं-तापस् त्वया कार्यः कार्दमेय महा-यशः[17] ।
२२पू] सं-वत्सरे गते वीर कथयिष्यामि ते शुभम् ॥[17]२१॥ [२०
तस्य[18] तद् वचनं[18] श्रुत्वा बुधस्याऽक्लिष्ट-कर्मणः ।
२३] वासाय वि-दधे बुद्धिं यद्[19] उक्तं[19] ब्रह्म-वादिना ॥२२॥ [२१

---

१. च-°यन्मधुर तदा । २. च-°तथ्यं । ३. च-विष्टम्भय । ४. च-विनिपातिताः । ५. च भ-चाश्र° । ६. च भ₁-राजर्षे । ७. च-केचित्कालं ममाश्रमे । ८. रा₁-नास्ति । ९. अ ल₂ ल₃ प्र-शुभं वाक्यं न तु भृत्यविनाकृतः । १०. च-°येहं क्षणं । ११. च भ₁-ब्रह्मन् । १२. भ₁-वै प्रतिपत्स्यते । १३. च-गत्वा भृत्यदारान्सुखस्थितान् । भ₁-गन्तुं भृत्यदारविनाकृतः । १४. भ₁-पुरं देवपुरोपमं । १५. च-प्रभुः । १६. च-महाद्युते । भ₁-महामते । १७. च-°त्सरोषितस्याहं क° । भ₁-संवत्सरोषितो वीर कथयिष्ये शुभं त्वयि । अतः परमधिकः पाठः—च-पुनः समेष्यति भवान् सर्वभृत्यजनैः सह । १८. भ₁-इति तस्य वचः । १९. च भ₁-यथोक्तं ॥

स मासं स्त्री-गतो भूत्वा रमयत्य्[1] अ-निशं निशाम्[1] ।[2]
२४] मासं च पुरुषो भूत्वा धर्म-बुद्धिं चकार ह ।।[3]२३।। [२२
ततः सा नवमे मासि इडा[4] सोम-सुताद् बुधात्[5] ।
२५] जनयामास सु-श्रोणी पुरूरवसम् ऊर्जितम्[6] ।।२४।। [२३
जात-मात्रं बुधः पुत्रं पितुर् हस्ते न्य्-अवेशयत् ।
२६] सोमस्य सोम-पुत्राऽऽभम्[7] इडा-पुत्रं महा-यशाः[8] ।।२५।। [२४
बुधोऽपि पुरुषी-भूतं समा-श्वास्य नराऽधिपम् ।
२७] शुभाभिर् धर्म-युक्ताभिः कथाभिः सोऽभ्य्-अरोचयत् ।।२६।। [२५

इत्यार्षे रामायण उत्तर-काण्डे पुरूरवसो जन्म
नामैकनवतितमः सर्गः ॥ ९१ ॥

---

## [वं–९७]= [ द्विनवतितमः सर्गः ] =[दा–९०]

तथोक्तवति रामे तु पुत्र-जन्म[9] तद् अद्भुतम्[9] ।
१] उवाच लक्ष्मणो भूयो भरतश्च महा-यशाः ।।[10]१।। [१
सा[11] इडा[11] सोम-पुत्रस्य संवत्सरम्[12] अथोषिता[12] ।
२] अकरोत् किं नर-श्रेष्ठ तत् त्वं शंसितुम् अर्हसि ।।२[13]।। [२
तयोस् तद् वाक्य-माधुर्यं नि-शम्य[14] परि-पृच्छतोः ।[15]
३] रामः[16] पुनर् उवाचेदं प्रजापति-सुते[16] कथाम् ।। ३ ।। [३
पुरुष-त्वं गते शूरे बुधः परम-धर्म-वित्[17] ।
४] सं-वर्तं परमोदारम् आ-जुहाव महा-यशाः ।। ४ ।। [४
च्यवनं भृगु-पुत्रं च मुनिं चाऽरिष्ट-नेमिनम्[18] ।
५] प्र-मोदनं मोद-करं दुर्-धरं लोक-पूजितम् ।।[19]५।। [५

---

१. च–रमयामास तं महं । २. भ$_1$–भूत्वा स्त्री बुधं मासं रमयत्येव भामिनी। ३. च–नास्ति । ४. च भ$_1$–बुधात् । ५. च–तदा । ६. च–ऊर्जितः । ७. च–सोमवर्णाभं । ८. च–महाबलं । ९. च–ऐडजन्म तदुत्तमं । भ$_1$–इडापुत्रस्य जन्म तत् । १०. च भ$_1$–लक्ष्मणो भरतश्चैव पुनर्वचनमूचतुः । ११. च–स राजा । १२. च–°रसुखोषितः । १३. भ$_1$–साश्रमे राजशार्दूल कां तु बुद्धिमवर्तत । १४. भ$_2$–आकर्ण्य । १५. च–तयोस्तद्वचनं श्रुत्वा भ्रात्रोः स रघुनन्दनः । १६. च–उवाच पुनरेवाथ कार्दमे प्रथितां । १७. च–°मवीर्यवान् । भ$_1$–°बुद्धिमान् । १८. च भ$_1$–वर्ज–°मिजं । १९. च–तमोविकरणप्रख्यं मुनिं दुर्वाससं तथा । भ$_1$–प्रमोहनं मोहनकं दुर्धर्षं चापराजितं । प्र–प्रमोदकं प्रमुदिकं दुर्धर्षं लो° ॥

एतान् सर्वान् समा-हूय[1] वाक्य-ज्ञस् तीक्ष्ण-विक्रमः[1] ।
६] उवाच सर्वान् सु-हृदो धैर्येण सु-समाहितः ॥ ६ ॥ [६
अयं राजा महा-बाहुः[2] कर्दमस्य सुतो बली[2] ।
७] वे(?वि)त्थ बुद्ध्या यथा-भूतस्[3] तच् छ्रेयोऽस्य[3] वि-धीयताम् ॥७॥[७
बुधे[4] तथा ब्रुवति तांस्[4] तम् आ-श्रमम् उपाऽगमत् ।
८] कर्दमः सु-महातेजा द्वि-जैः सह महाऽऽत्मभिः ॥ ८ ॥ [८
पुलहश् च क्रतुश् चैव वषट्-कारस् तथैव च ।
९] ओं-कारश् च महा-तेजास् तम् आ-श्रमम् उपाऽगमन् ॥ ९ ॥ [९
ते सर्वे हृष्ट-मनसः सरस्-तीरम्[5] उपाऽगमन्[5] ।
१०] हितैषिणो वाह्लि-पतेः पृथग् वाक्यम् उद्-ऐरयन् ॥१०॥ [१०
कर्दमस् त्व् अब्रवीद् वाक्यं सुताऽर्थेऽमर-संहितम्[6] ।[7]
११] द्वि-जाः[8] शृणुत तत् सर्वं[8] यच् छ्रेयः पार्थिवस्य हि ॥[9]११॥ [११
नाऽन्यत् पश्यामि[10] भैषज्यम्[10] ऋते तु वृषभ-ध्वजम् ।
१२] तस्माद् यत्नेन महता पूजयामो महेश्वरम्[11] ॥१२॥ [१२
अश्व-मेधः परो यज्ञः प्रियश् चैव महाऽऽत्मनः ।[12]
१३] तं[13] वै[13] यजामहे सर्वे पार्थिवाऽर्थे दुरा-सदम् ॥१३[14]॥ [N
कर्दमेनैवम् उक्तास् तु सर्व एव द्विज[15]भाः[15] ।
१४] अरोचयन्[16] महा-यज्ञं[16] रुद्रस्याऽऽराधनं प्रति ॥१४॥ [१३
सं-वर्त्तस्य तु विप्रर्षेः[17] शिष्यः पर-पुरं-जयः[17] ।
१५] मरुत्त इति वि-ख्यातो यज्ञं तं समुपाऽहरत् ॥[18]१५॥[१४
ततो[19] यज्ञो महान् आसीद् बुधाऽऽश्रम-समीप-तः ।
१६] रुद्रस् तु[20] परमं तोषम् आ-जगाम महा-यशाः[21] ॥१६॥ [१५

---

१. च–समानीय वाक्यज्ञो वाक्यकोविदः । २. च–महाबुद्धिः कर्दमस्य सुतस्त्विडः । ३. च–°भूतं श्रेयो ह्यस्य । भ$_1$–°भूतं श्रेयो ह्यस्मै । ४. च भ$_1$–तेषां तु वदतामेवं । ५. च–परस्परसमागमे । ६. अ–वर्जं–°र्थे परमं हितं । च–नास्ति । ७. भ$_1$–तथा कुरुत सर्वे वै पुरुषोयं भवेदिति । ८. च–नास्ति । ९. भ$_1$–नास्ति । १०. भ$_2$ रा$_1$ ब ल$_1$ ल$_2$ ल$_3$–पश्याम्यहं बुद्धया । ११. च–कपर्दिनं । १२. च–न चाश्वमेधात्परमो यज्ञोऽभीष्टः पिनाकिनः । १३. च–तस्माद् । १४. च प्र–वर्जं–नास्ति । १५. च–द्विजातयः । १६. च–अरोचत महाप्राज्ञो । १७. च–ते सर्वे शिष्यत्वमुपपेदिरे । १८. च–मरुत्तयज्ञप्रतिम ऐडो यज्ञस्तदा बभौ । १९. च–स च । २०. भ$_1$–च । रा$_1$ ल$_3$–तं । २१. भ$_1$–महामनाः ॥

अथ यज्ञ-समाप्तौ तु प्रीतः परमया मुदा ।
१७] उमा-पतिर् द्वि-जान् सर्वान् उवाचेन्द्र(?ड)-समीपतः[1] ॥१७॥ [१६
प्रीतोऽस्मि हय-मेधेन भक्त्या च द्विज-सत्तमाः ।
१८] अस्य वाह्लि-पतेश् चैव किं करोमि शुभं प्रियम्[2] ॥१८॥ [१७
तथोक्तवति देवेशे द्वि-जास् तत्र[3] समा-हिताः[3] ।
१९] देवं प्र-सादयित्वाऽऽहुः पुरुषोऽयं भवत्व् इति ॥[4]१९॥ [१८
ततः प्रीत-मना रुद्रः पुरुष-त्वं पुनर् ददौ ।
२०] इडायाः[5] सु-महातेजा रुद्रस्[6] त्व् अन्तर्-अधीयत[6] ॥२०॥ [१९
वृत्ते[7] यज्ञ-विधौ तस्मिन्[7] गते चाऽदर्शनं हरे ।
२१] यथाऽऽगतं द्वि-जाः[8] सर्वे[9] प्र-ययुश्[9] चिर-जीविनः[9] ॥२१॥ [२०
राजा तु वाह्लिम् उत्-सृज्य मध्य-देशे ह्य्[10] अनुत्-तमम्[10] ।
२२] नि-वेशयामास पुरं प्रति-ष्ठानं यशस्-करम् ॥२२[11]॥ [२१
शश-बिन्दुस् तु[12] राजर्षिर्[13] वाह्लि-देशेऽभवन् नृ-पः[13] ।[12]
२३] इडो राज्यं प्रति-ष्ठाने प्रजापति-सुतो बली[14] १ ॥२३॥ [२२
परमं[15] प्राऽऽप्तवांल् लोकम् इडो[16] ब्रह्म सनातनम्[16] ।
२४] ऐडो बुध-सुतो[17] राज्यं प्रति-ष्ठानेऽकरोत्[18] तदा[18] ॥२४॥ [२३
ईदृशो ह्य् अश्व-मेधस्य प्र-भावः पुरुषर्षभौ[19] ।
२५] स्त्री-भूतः पौरुषं लेभे यद्[20] अनेन सु-दुर्लभम्[20] ॥२५॥ [२४

इत्यार्षे रामायण उत्तर-काण्ड इडा-पुरुषत्व-प्राप्तिर्[21] नाम
द्विनवतितमः सर्गः ॥ ९२ ॥

———

१. च-°च च इडं प्रति । २. च-हितं । ३. च-तं सुमहौजसः । ४. च-प्रसादयंति देवेशं पुमान्राजा भवेदिति । ५. भ$_1$-इडस्य । ६. च भ$_1$ प्र-दत्वा चान्तर्° । ७. च-निवृत्ते हयमेधे च । ८. भ$_1$-तथा जग्मुः । ९. च-जग्मुस्ते दीर्घजी° । भ$_1$-सर्वे ते दीर्घजी° । १०. भ$_1$-मनोरमे । ११. अ-नास्ति । १२. भ$_1$-च । १३. भ$_1$ ब ल$_1$-राजाभूद् भूमौ परमदुर्जयः । १४. च भ$_1$-°भवत् । १५. च-स काले । १६. च-इडो ब्रह्माणमुत्तमं । भ$_1$-इन्द्रलोकमनुत्तमं । १७. च-पुरूरवा । १८. च-°ने चकार ह । भ$_1$-°ष्ठानं गतः प्रभुः । १९. प्र-रिपुमर्दनः । २०. भ$_1$ प्र-कांक्षितं येन केनचित् । २१. अ रा$_1$-पुरुषत्व° । भ$_1$-इडाशापो । भ$_2$-इडोपाख्यानं । ब ल$_1$-पुरूरवस उपाख्यानं । प्र-शशबिन्दोरुपाख्यानं ॥

एतद्[१] आ-ख्याय[१] काकुत्स्थो भ्रातराव्[२] अमितौजसौ[२] ।
१] लक्ष्मणं[३] पुनर् एवाऽऽह[३] धर्म-युक्तम् इदं वचः ॥ १ ॥ [१
वसिष्ठं वाम-देवं च जाबालिम् अथ कश्यपम्[४] ।
२] द्वि-जांश् च सर्वान् प्र-वरान् अश्वमेध-पुरस्कृतान् ॥[५] २ ॥ [२
एतान् सर्वान् समा-हूय मन्त्रयित्वा[६] च लक्ष्मण ।
३] हयं[७] लक्ष्म(?क्ष)ण-सम्पन्नं वि-मोक्षामि[७] समा-धिना ॥ ३ ॥ [३
४उ] तद् वाक्यं राघवेणोक्तं श्रुत्वा त्वरित-विक्रमः ।
५पू] द्वि-जान् सर्वान् समा-हूय[८] दर्शयामास[८] राघवम्[८] ॥ ४ ॥ [४
दृष्ट्वा स्थितांस् तु तान् सर्वान् प्र-दीप्तान् इव भास्-करान्[९] ।[१०]
तान् आ-गतान् विदित्वा च रामः पर-पुरं-जयः ।
N] निश्-चक्राम स्व-भवनात् पूजयिष्यन् यथाऽर्ह-तः ॥५[११]॥ [N
५उ] तान् दृष्ट्वा देव-सङ्काशान् कृत्वा पादाऽभि-वन्दनम् । [१५पू
अर्चयित्वा यथा-न्यायं[१२] स्वयम् एव समा-धिना[१३] ॥ ६ ॥ [N
६] ततो विनीत-वत्[१४] सर्वान्[१५] राघवो[१६] द्विज-सत्तमान्[१६] ।
उवाच धर्म-संयुक्तम् अश्व-मेधाय[१७] पार्थिवः[१७] ॥ ७ ॥ [६
७] तत् तेषां द्विज-मुख्यानां रुचितं परमाऽद्भुतम् ।
अश्वमेध-मतं[१८] राज्ञः साधु साध्व् इति चाऽब्रुवन् ॥ ८ ॥ [८
८] वि-ज्ञाय रुचितं तेषां रामो[१९] लक्ष्मणम्[१९] अब्रवीत् ।
प्रेषयस्व महा-बाहो सु-ग्रीवाय महाऽऽत्मने ॥ ९ ॥ [९
९] यथा महद्भिर् हरिभिर् बहुभिर् ऋक्ष-पुङ्गवैः ।

---

१. च–एवमाख्याय । भ$_1$–एवमुक्त्वा स । २. च भ$_1$–भ्रात्रोरमिततेजसोः । ३. च–°नरेवासौ । भ$_1$–उवाच लक्ष्मणं भूयो । ४. च प्र–काश्यपं । ५. च–अन्यांश्च विप्रप्रवरान् यज्ञकर्मविशारदान् । अतः परमधिकः पाठः—रा$_1$ ल$_3$ ब–एतान्सर्वान्समाहूय दर्शयन्तु ममाग्रतः । ६. च भ$_1$ प्र–नास्ति । ७. च भ$_1$–हयो लक्ष्मणसंपन्नः परीक्ष्योपि । ८. प्र–न्यवेदयत राघवे । ९. भ$_1$–पावकान् । १०. प्र–नास्ति । ११. च–नास्ति । १२. च–तु विधिवत् । १३. च–महामतिः । भ$_1$–महायशाः । १४. भ$_1$–न्यमन्त्रयत् । १५. च–भूत्वा । १६. प्र–राज्ञस्तान्संहृताम्प्रभुः । १७. भ$_1$ प्र–°मेधाश्रितं वचः । १८. प्र–°मधाश्रितं । १९. अ–लक्ष्मणो वाक्यं ॥

सार्धम् आ-याति भद्रं ते यज्ञं स प्लवगेश्वरः ॥१०[1]॥ [१०
१०] अङ्ग-दं हनु-मन्तं[2] च नलं नीलं च[3] पाटलम्[3] ।
गजं गवाऽक्षं पनसं[4] सर्वान् एतान् नि-मन्त्रय ॥११॥ [N
११] वीरं शत-बलिं मैन्दं[5] द्वि-विदं गन्ध-मादनम्[5] ।
वीर-बाहुं केसरिणं[6] सर्वान् एतान् नि-मन्त्रय ॥१२[7]॥ [N
१२] सूर्याऽक्षं[8] कु-मुदं चैव सु-षेणं[9] हरि-यूथ-पम्[10] ।[9]
ऋषभं वि-नतं चैवं[9] सर्वान् एतान् नि-मन्त्रय ॥१३॥ [N
१३] ये चाऽन्ये कृत-कर्माणो मद्-अर्थे त्यक्त-जीविताः ।
पृथिव्यां[11] वानराः[12] सर्वे[12] तान् अपीऽह नि-मन्त्रय ॥१४॥ [N
१४] गो-लाङ्गूलं महा-राजं गवाऽक्षं भीम-विक्रमम्[13] ।[14]
ऋक्षेशं[15] जाम्ब-वन्तं[15] च सह-सैन्यं[16] नि-मन्त्रय[16] ॥१५॥ [N
१५] वि-भीषणश् च रक्षोभिः काम-गैर् बहुभिर्[17] वृतः[17] ।
अश्व-मेधं महा-बाहुः[18] प्राऽऽप्नोतु लघु-विक्रमः[18] ॥१६॥ [११
१६] पृथिव्यां पार्थिवाश् चैव ये नः[19] प्रिय-चिकीर्षवः[19] ।
साऽनु-गाः क्षिप्रम् आ-यान्तु हय-मेधम् अनु-उत्तमम् ॥१७॥ [१२
१७] देशाऽन्तर-गता ये च द्वि-जा धर्म-पराऽयणाः ।
नि-मन्त्रयस्व[20] तान् सर्वान् हय-मेधाय लक्ष्मण ॥१८॥ [१३
१८] देवर्षयश् च[21] ये[21] सर्वे ब्रह्म-लोक-गताश्[22] च ये[22] । [१४पू
१९पू] आ-हूयन्तां महाऽऽत्मानः क्षिप्रं सप्तर्षिभिः सह ।[23]
N] संहिताऽध्यायिनो ये च ये च पृष्ठाऽभिभाषिणः ॥१९॥ [N
आ-हूयन्तां महाऽऽत्मानः सिद्धाश् चक्र-व(?ध)राश् च ये ।[23]
N] न्याय-मीमांसकाश् चैव वैयाकरण-पुङ्गवाः ॥[24]२०॥ [N

---

१. च–वक्तव्यश्च महाबाहुर्बहुभिः सह वानरैः । क्षिप्रमागच्छ भद्रं ते हय-मेधोऽनुभूयतां ॥ २. भ१–हनूमंतं । ३. च–सुपा° । ४. च–गवयं । ५. च–मैंदं च द्विविदं तथा । ६. च भ१–सुबाहुं च । ७. व ल३ प्र–नास्ति । ८. च–वर्ज-सूर्याभं । ९. अ–नास्ति । १०. च–गंधमादनं । ११. भ१–धरिञ्यां । १२. च–बानरान्सर्वान् । १३. च–सह यूथपैः । १४. च भ१ प्र–वर्ज–जांबवंतं महाबाहुं विनतं चैव यूथपं । १५. च भ१ प्र–वर्ज–दरीमुखं सुबाहुं । १६. अ ल२–निमंत्रय विभीषणं । भ२ रा१ ब ल१ ल३–गवयं च निमंत्रय । १७. भ१ प्र–कामरूपिभिः । १८. च–क्रतुं द्रष्टुमागच्छेति निमंत्रिताः । १९. च–मे हितचिकीर्षया । २०. च–आमंत्रय च । २१. अ ल२–च ते । भ१–चैव । २२. च–°लोकर्षयस्तथा । भ१–°लोकादुपाहृय । २३. अ–नास्ति । २४. च–नास्ति ॥

१९उ] ऋषयः शिष्य-सहिताः प्र-ब्रूयन्तां महा-मते । [N
N] देशाऽन्तर-गताः सर्वे स-दाराश् च महर्षयः ॥२१[1]॥ [१४उ
२०पू] यज्ञ-वाटश् च सु-महान् गो-मत्यां नैमिषे वने[2] ।
२१पू] आ-ज्ञाप्यतां महा-बाहो तद् धि पुण्यम् अन्-उत्तमम् ॥[3]२२॥ [१५
शत्रु-घ्नश् चा(?श्वो)ऽपि तेजस्वी सान्त्व-पूर्वं[4] महा-यशाः[4] ।
N] आहूयतां(?य तान्) महाऽऽत्मा(?त्म)नः सकलं नैमिषं वनम् ॥२३॥[N
२१उ] शतं शत(?वाह)-सहस्राणां तण्डुलानां वपुष्-मताम् । [१९पू
N] [5]तैलाऽऽज्यस्य तु द्रव्यस्य परि-संख्या न विद्यते ॥[5]२४॥ [N
२२पू] अ-युतं तिल-मुद्गानां[6] गच्छत्व् अग्रे महा-बलं[7] । [१९उ
N] चणकानां कुलत्थानां माषाणां लवणस्य च ॥[8]२५॥ [२०पू
२२उ] सुवर्ण-कोटयो[9] बहु-ला[9] हिरण्यस्य दशोत्तराः ।[10] [२१पू
२५उ] कर्माऽन्तिकांश् च कुशलान् शिल्पिनश् च सु-पण्डितान् ॥२६॥[२४पू
२४उ] अन्तराऽऽपण-वीथीश् च सर्वांश् च नट-नर्तकान् । [२२पू
२५पू] नैगमान् बाल-वृद्धांश् च द्वि-जांश्[11] च सु-समाहितान्[11] ॥२७[12]॥[२३उ
मातॄश्[13] च नस्[13] तथा सर्वाः साऽन्तःपुर-कुमारिकाः ।[14] [२४उ
काञ्चनीम् अपि मे पत्नीं दीक्षितां[15] यज्ञ-कर्मणि ।[14]
२६] अग्र-तो भरतः कृत्वा गच्छत्व्[16] अग्रे समा-हितः[16] ॥२८॥ [२५

इत्यार्षे रामायण उत्तर-काण्डे यज्ञ-वाट-प्रयाणं[17] नाम
त्रिनवतितमः सर्गः ॥ ९३ ॥

---

१. च-द्विजा वैखानसाः साध्या वालखिल्या मनीषिणः । आहूयंतां महात्मानो नाकपृष्ठान्महर्षयः । २. च भ$_{१}$-वर्ज-तथा । ३. च-लक्ष्मण क्रियतां साधुवद्धि पुण्यं तपोवनं । आज्ञाप्यतां च तत्सर्वं यद्वसिष्ठाय च रोचते ॥ ४. च-सदारः सुम° । ५. च-नास्ति । ६. च-°मुद्गस्य । ७. च-समाहितं । ८. च भ$_{१}$-नास्ति । ९. च-दश कोट्यः सुवर्णस्य । १०. अतः परमधिकः पाठः—च-चैलादीनामथान्येषामनंतं नीयतां तथा । ११. च-वृद्धा ये च द्विजातयः । भ$_{१}$-ये च केचिद् द्विजातयः । १२. अतः परमधिकः पाठः—भ$_{१}$-आप्यकुंभान्महाबाहुर्भरतोऽथ सहस्रशः । गव्यानामपि संपूर्णान् नीत्वा गच्छतु सत्वरम् ॥ १३. भ$_{१}$-वर्जं-समं मातॄस । १४. ल$_{१}$-नास्ति । १५. अ रा$_{१}$ ब ल$_{२}$-दीक्षतां । भ$_{२}$-दीक्ष्यतां । १६. च भ$_{१}$-यातु शीघ्रमरिंदम । ल$_{१}$-गृहीत्वाग्रे समाधिना । १७. च-अश्वमेधसंभवो । भ$_{१}$ रा$_{१}$-यज्ञप्रयाणं ॥

तत् सर्वम् अ-खिलेनाऽऽशु[1] प्र-स्थाप्य रघु-नन्दनः[2] ।
१] हयं लक्षण-संपन्नं कृष्ण-सारं व्य्-अमोचयत् ॥ १ ॥ [१
ऋत्विग्भिर् लक्षणं चैव हयस्य विनि-युज्य[3] सः ।
२] ततोऽभ्य्-अगच्छत्[4] काकुत्स्थः सह सैन्येन[4] नैमिषम् ॥ २ ॥ [२
यज्ञ-वाटं महा-बाहुर् दृष्ट्वा परमम् अद्भुतम् ।
३] प्र-हर्षम् अ-तुलं लेभे साधु[5] साध्व्[5] इति चाऽब्रवीत् ॥ ३ ॥ [३
नैमिषे वसतस् तस्य सर्व एव नराऽधिपाः ।
४] आ-जग्मुः सर्व-राष्ट्रेभ्यस् तान्[6] रामः प्रत्य्-अपूजयत्[6] ॥ ४ ॥ [४
अथ कार्ये महर्षीणां पार्थिवानां तथैव च ।
५] साऽनु-रागो नर-श्रेष्ठो व्या-दिदेश महा-द्युतिः ॥ ५[7] ॥ [५
अन्न-पानानि[8] वस्त्राणि[8] शयनान्य्[9] आसनानि च[9] ।
६] भरतः[10] सं-दधे चाऽऽशु[10] शत्रुघ्न-सहितस्[11] तदा[11] ॥ ६ ॥ [६
वानराश् च महा-वीर्याः[12] सुग्रीव-सहितास् तदा[13] ।
७] धि-ष्ठिता वि-स्मिता भूत्वा चक्रिरे परि-वेषणम् ॥[14] ७ ॥ [७
वि-भीषणश् च रक्षोभिः स्रग्विभिर्[15] बहुभिर् वृतः[15] ।
८] ऋषीणाम् उग्र-तपसां किं-करः सम्-अपद्यत[16] ॥ ८ ॥ [८
एवं सु-विहितो यज्ञो हय-मेधः प्र-वर्तितः[17] ।
९] लक्ष्मणेन[18] भृशं गुप्तो[18] यथा[19] शक्रस्य धी-मतः[19] ॥ ९ ॥ [९
ततः[20] शब्दोऽभवत् तस्मिन् हय-मेधे[21] महाऽऽत्मनः । [१०उ
१०] दीयतां भुज्यतां चैव लिह्यतां भक्ष्यताम्[22] इति ॥[23] १० ॥ [११पू

---

१. च-संविधायाशु । २. च-भरताग्रजः । भ$_1$-भरतं नृपः । ३. च-विनिरूप्य । ४. च-ततो जगाम काकुत्स्थो मासमात्रेण । ५. च-श्रीयुक्तम् । ६. अ-सन्नमस्याभ्य° । ७. च-उपकार्या महार्हांश्च पार्थिवानां महात्मनां । सानुगानां निवासार्थं व्यादिशत्स्वर्गसंमिताः ॥ ८. च-अन्नपानमथो वस्त्रं । ९. च-सानुगानां सहस्रशः । भ$_1$-सानुगानां महात्मनां । १०. च-°तः सहशत्रुघ्नो । भ$_1$-°तोऽयं विधायाथ । ११. च-यथोचितमथो ददौ । १२. च-महात्मानः । १३. च-समं । भ$_1$-तु वै । १४. च-परिवेषणं विप्राणां प्रयाताः संप्रचक्रिरे । १५. च-बहुभिः सुसमाहितः । १६. च-वर्ज-समधिष्ठितः । १७. भ$_1$-प्रवर्तते । १८. च-°णेनाभिसंगुप्तो । १९. भ$_1$-साहचर्यां प्रवर्तिता । २०. च भ$_1$-नाऽन्यः । २१. च-अश्वमेधे । २२. अ ब ल$_2$-भुज्य° । २३. भ$_1$-देहि छंदेन विश्रब्धं यात तुष्यन्तु याचकाः ॥

एवं शत-सहस्राणां भक्ष्य-भोज्यम् अन्-अन्तकम् ।[1]
११] वानरै राक्षसैश् चैव दत्तम् एवोप-दृश्यते[2] ॥११॥ [१२
मलिनाऽम्बरो न तत्राऽऽसीद् दीनो वाऽप्य् अथ कर्षि(?र्शि)तः ।[3]
१२] तस्मिन् यज्ञ-वरे राज्ञो हृष्ट-पुष्ट-जनाऽऽवृते ॥१२॥ [१३
ये च तत्र महाऽऽत्मान ऋषयश्[4] चिर-जीविनः ।
१३] तेऽपि ताम् अद्भुताम् राज्ञो यज्ञर्द्धिम् अनु-मेनिरे ।।[5]१३॥ [१४
रजतस्य सु-वर्णस्य रत्नानाम् अथ वाससाम् ।
१४] अ-निशं दीयमानानां नाऽन्तः समुप-दृश्यते[6] ॥१४॥ [१६
न शक्रस्य न सोमस्य यमस्य वरुणस्य च ।
१५] अभवत् तादृशो यज्ञो राघवस्य यथा-विधः[7] ॥१५॥ [१७
सर्व-त्र वानरा दृश्याः सर्व-त्रैव च राक्षसाः ।
१६] वस्त्राऽन्न-दान-धन-दाः काम-तो लोक-वासिनाम् ॥१६[8]॥ [१८
ईदृशो राज-सिंहस्य स यज्ञः परमाऽद्भुतः[9] ।
१७] अ-हीनः सर्व-करणैः संवत्सरम् अवर्तत ॥१७॥ [१९

इत्यार्षे रामायण उत्तरकाण्डे यज्ञ-समृद्धिर्[10] नाम

चतुर्नवतितमः सर्गः ॥ ९४ ॥

---

## [ वं-१०० ]= [ पञ्चनवतितमः सर्गः ] =[दा-९३ ]

वर्त-माने महा-यज्ञे वि-स्तीर्णे परमाऽद्भुते ।
१] स-शिष्योऽभ्या-जगामाऽऽशु वाल्मीकिर् भग-वान् ऋषिः ॥१[11]॥[१
स दृष्ट्वा दिव्य-सङ्काशं यज्ञ-वाटम्[12] अन्-उत्तमम्[12] ।
२] ऋषि-वाटेषु मुख्येषु[13] वासं[14] समुप-चक्रमे[14] ॥ २ ॥ [२

---

१. भ$_1$-अतिस्मृता भवंस्त्वन्ये दातृणां नु क्वचिन्न तु । २. च-एव ह्यदृश्यत । ३. च-न मलिनस्तत्र न दीनो न च···कर्शितः । भ$_1$-न कश्चिन्मलिनस्तत्र न दीनो नातिकर्षितः । ४. च-मुनयश् । ५. च-शशंसुरद्भुतां राज्ञो यज्ञर्द्धिमनुत्तमां । भ$_1$-नास्मरंस्तादृशं यज्ञं नानादेशमलंकृतं । ६. च-°पलभ्यते । ७. च-यथाभवत् । रा$_1$-महात्मनः । प्र-°विधिः । ८. च-सर्वत्र वानरा यज्ञे राक्षसाश्च समाहिताः । धना-न्नपानैर्विविधैरदृश्यंत समंततः ॥ ९. च-परमभास्वरः । १०. लं$_1$-यज्ञनिरूपणं । ११. च-°ने तथा तस्मिन्वाजिमेधे महाक्रतौ । आजगामाथ वाल्मीकिस्सशिष्यो यज्ञसन्निधिं । १२. च-क्रतुमद्भुतदर्शनं । भ$_1$-यज्ञमद्भुतदर्शनं । १३. च भ$_1$-पुण्येषु । रा$_1$ ल$_3$ प्र-मध्येषु । १४. भ$_1$-कारयामास वाटकम् ॥

तत्र[1] सं-पूजितो राज्ञा[1] मुनिभिश् च महाऽऽत्मभिः ।
३] वाल्मीकिः सु-महातेजा न्य्-अवसत्[2] परमाऽऽत्म-वान्[2] ॥ ३ ॥ [४
स शिष्याव् अब्रवीद् वाक्यं कुमारौ देव-रूपिणौ ।[3]
४] गत्वा भवन्तौ तत्रैव रामाऽयणम् अ-तन्द्रितौ ॥ ४ ॥ [५
अ-निशं गायताम् एवं नाऽन्तः समुप-दृश्यते ।[3]
N] यज्ञ-वाटेषु मुख्येषु गो-मत्याम् अ-विदूरतः ॥ ५ ॥ [N
ऋषि-वाटेषु मुख्येषु[4] ब्राह्मणाऽवसथेषु[5] च ।
५] रथ्यासु राज-मार्गेषु राज-द्वारेषु[6] चैव हि[6] ॥ ६ ॥ [६
रामस्य भवन-द्वारि यत्र कर्म च वर्तते ।
६] उदारेषु[7] तथाऽन्येषु सं-गमेषु विशेष-तः ॥ ७ ॥ [७
इमानि फल-मूलानि स्वादूनि च[8] मृदूनि[8] च ।
७] ऋषिभिः[9] समुपात्तानि भुक्त्वा[10] भुक्त्वा[10] प्र-गीयताम् ॥ ८ ॥ [८
न यास्यथः श्रमं[11] वत्सौ भक्षयित्वा फलानि[12] वै[12] ।
८] मूलानि परमोदारौ ताव् उच्चैर् उप-गास्यथः ॥[13] ९ ॥ [९
यदि शब्दं युवां रामः शृणुयात् स महा-मतिः ।[14]
९] महर्षिषूऽप-विष्टेषु[15] गायेतां[16] सु-समाहितौ[16] ॥१०॥ [१०
दिवसे दिवसे[17] सर्व[17] गायेतां[18] परया गिरा ।
१०] प्र-माणैर् बहुभिर् युक्तं[19] यथाऽऽदिष्टं[19] मया पुरा ॥११॥ [११
लोभश् चाऽपि न कर्तव्यः स्व्-अल्पोऽपि धन-काङ्क्षया ।
१४] निर्-धनैः फल-मूलाऽशैर् वस्तव्यं स्वाऽऽश्रमे सदा ॥[20] १२॥[१२
परि-पृच्छेत काकुत्स्थः पुत्रौ कस्य युवाम् इति ।[21]
१५] वाल्मीकि-शिष्याव् आवां हि[22] इति वाच्यः स पार्थिवः[22] ॥१३॥ [१३

---

१. भ१-अथ संपूजितो रामो । २. च भ१-वर्जं-न्यविशत् परमासने । ३. अ ब ल३ प्र-नास्ति । ४. च भ१-पुण्येषु । ब प्र-मध्येषु । ५. च-°णायतनेषु । भ१-देवतावस° । ६. च भ१-पार्थिवानां गृहेषु च । ७. च-उद्यानेषु । ८. च भ१-रुचिराणि । ९. च भ१-गिरिभ्यः । १०. च-जग्ध्वा जग्ध्वा । ११. च-वर्जं-क्षयं । १२. च-स्विदं फलं । १३. च-मूलं च परमोपेतं दत्तं चैव निरस्य तं । भ१-मूलं च परमोदारं नगानि परियास्यथः । १४. च-यदि चाहूय रामो वा शृणुयात्स महारथः । भ१-यदि च शब्दयेद्रामः श्रवणाय महारथः । १५. भ१-ऋषीणामुपविष्टानां । १६. च-ततो गेयं विशेषतः । १७. च भ१-विंशतिं सर्गान् । १८. प्र-गीयतां । १९. च भ१-प्रोक्तं यथोद्दिष्टं । २०. च-किं वने आश्रमपदे फलमूलसमाहिते । २१. च-यदि पृच्छेच्च काकुत्स्थो युवां कस्य कुमारकौ । २२. च भ१-तथ्यो वाच्यः स पुत्रकौ ॥

समं तन्त्र्या सु-मधुरं सूक्ष्मया नारदोक्तया ।[1]
१६] मूर्च्छयित्वा सु-मधुरं गायेतां[2] परया गिरा[2] ॥१४॥ [१४
आदौ प्रभृति गातव्यं न चाऽव-ज्ञाय पार्थिवम् ।
१७] पिता हि सर्व-भूतानां राजा भवति धर्म-तः ॥१५॥ [१५
तौ युवां हृष्ट-मनसौ श्वः प्र-भाते समा-हितौ ।
१८] गायेतां मधुरं गीतं[3] तन्त्री-लय-समन्वितम् ॥१६॥ [१६
इति सं-दिश्य माधुर्यम्[4] ऋषिः[4] प्राचेतसः प्र-भुः ।
१९] वाल्मीकिः सु-महातेजास्[5] तूष्णीम् आसीन्[6] महा-तपा[6]ः ॥१७॥ [१७
तथेति[7] तां[7] तौ हृदये कुमारौ[8]
नि-धाय[9] वाणीम् ऋषि-भाषितां शुभाम् ।
समुत्-सुकौ तौ च सम्-ऊषतुर् निशाम् ।
N] यथाऽश्विनौ[10] भृगु-तनयेन सं-स्थितौ[10] ॥१८॥ [१९

इत्यार्षे रामायण उत्तर-काण्डे वाल्मीक्य्-अनुशासनं[11] नाम
पञ्चनवतितमः सर्ग. ॥ ९५ ॥

---

## [ बं-१०१ ]= [ षण्णवतितमः सर्गः ] =[ दा-९४ ]

तौ[12] रजन्यां व्यतीऽतायां[12] स्नातौ हुत-हुताऽशनौ ।
१] यथोक्तम् ऋषिणा पूर्वं तत्र तत्राऽभ्य्-अगायताम् ॥ १ ॥ [१
तां स[13] शुश्राव काकुत्स्थः पूर्व-चर्यां ततः शुभाम्[14] ।
२] अ-पूर्वां पाठ्य-जातां च गेयेन समभि-प्लुताम् ॥[15] २ ॥ [२
स्वरैस्[16] तु सप्तभिर्[16] बद्धां तन्त्री-लय-समन्विताम् ।
३] बालयो राघवः श्रुत्वा कौतूहलम्[17] उपेयिवान्[17] ॥ ३ ॥ [३

---

१. च-इमाश्च तंन्त्रीर्मधुराः श्लक्ष्णरागोपयोजिताः । २. च-ततो गेयं नृपाग्रतः । ल२-अत आरभ्य १६-शश्लोकस्य तृतीयपादं यावन्नास्ति । ३. च-गेयं । ४. च-तौ बालौ मुनिः । ५. च-परमोदारस् । ६. भ१-आस महायशाः । च-आसीत्संसमाहितः । ७. भ१-तामुद्भुतां । ८. च भ१-कुमारकौ । ९. भ१-निशम्य । १०. च-यथाश्विनेयौ भृगुपुत्रसत्कृतौ । भ१-°नौ भार्गवसत्कृतौ पुरा । ११. च-कुशलवानुशासनं । १२. च-ततो रजन्यां व्यस्तायां । १३. च-तु । १४. च-ततः । १५ अ भ१ ब ल२ ल३-अपूर्वौ दृश्येते बालौ गेयेन समुपप्लुतौ । १६. च-स्वरैश्च स° । भ१-प्रमाणैर्बहुभिर् । १७. च-°लपरोऽभवत् ॥

अथ कर्माऽन्तरे रामः[1] समा-नीय महा-मुनीन्[1] ।
४] राज्ञश् चैव नर-व्याघ्रान् पण्डितांश्[2] चैव नैगमान्[2] ॥ ४ ॥ [४
७उ] ये[3] च पौराणिका वृद्धास् तत्र ये च[3] द्वि-जातयः । [५पू
सर्वांस् तांश् च समा-नीय गातारौ सम्प्राऽवेशयत् ॥ ५ ॥ [१०उ
८] ते[4] प्र-हृष्टा[4] ऋषि-गणा राजानश् च महा-बलाः[5] ।
वीऽऽक्षन्ते सततं नेत्रै राघवं दार-कौ च तौ ॥[6] ६ ॥ [११
९] परस्-परम् अथोचुस्[7] ते[7] सर्व एव समा-गताः ।
उभौ रामस्य सदृशौ दीपाद्[8] दीपाव्[8] इवोद्-धृतौ ॥ ७ ॥ [१२
१०] जटिलौ यदि[9] न स्यातां न च वल्कल-धारिणौ[9] ।
वि-शेषं नाऽव-गच्छामो राघवस्याऽनयोस् तथा ॥[10] ८ ॥ [१३
११] तथा च वदताम् एव वि-स्मितानां परस्-परम् ।[11]
उप-चक्रमतुर् गातुं ताव् उभौ मुनि-दारकौ ॥ ९ ॥ [१४
१२] ततः प्र-वृत्तं मधुरं गान्धर्वम् अति-मानुषम् ।
श्लोकै रामाऽयणं बद्धं विचित्र-पदम् अर्थ-वत् ॥१०॥ [१५
१३] प्र-वृत्तिम् आदि-तः कृत्वा सर्गो[12] नारद-दर्शिताम्[12] ।
ततः-प्रभृति सर्गांश् च विंशतिं ताव् अगायताम् ॥११॥ [१६
१४] ततोऽपराऽह्ण-समये राघवः प्रत्य्-अभाषत[13] ।
श्रुत्वा विंशति-सर्गाऽन्तं भरतं भ्रातृ-वत्सलम् ॥१२॥ [१७
१५] आभ्यां दश सहस्रं[14] तु[14] सु-वर्णं[15][16] तत्[15] कृताऽकृतम्[16] ।
ददस्व[17] शीघ्रं काकुत्थ यद् वाऽन्यद् अभि-काङ्क्षितम्[18] ॥१३॥ [१८
१६] एवम् उक्तस् तु रामेण भरतः कैकयी-सुतः ।
यथाऽऽज्ञप्तं नरेन्द्रेण तत्राऽऽभ्यां दातुम् उद्-यतः ॥१४[19]॥ [N

---

१. च-राजा ऋषीनाहूय सर्वशः । २. च-नैगमान्पंडितांस्तथा । ३. च-पौराणिकांश्च विविधान् ये च वृद्धा । भ१-पौराणिकाश्छंदोविदो ये च वृद्धा । ४. च-उपविष्टा । ५. च-महौजसः । ६. च-पिबंत इव चक्षुर्भ्यां पश्यंति स्म कुशीलवौ । भ१-प्रेक्षंते सततं तत्र गातारौ तत्र दारकौ । ७. च-इदं चोचुः । ८. च-बिंबाद्बिंब । ९. च भ१ रा१-वर्जं-चैव रुचिरौ चीरव° । १०. च-विशेषो नाधिगम्येत अनयो राघवस्य च । ११. च-तेषां संवदतामेवं श्रोतॄणां विस्मितात्मनां । १२ च भ१-सर्गान्नारददर्शनम् । १३. च-°षयत् । भ१-समभा° । १४. च-वर्जं-सहस्राणि । १५. च भ१-सुवर्णस्य । १६. भ१-महामते । १७. च-प्रयच्छ । १८. भ२ रा१ ब ल२ प्र-अपि का° । १९. च-वर्जं-नास्ति ॥

१७] दीयमानं सु-वर्णं तु न तौ जगृहतुस् तदा ।
ऊचतुश् च हिरण्यैर्[1] हि किं करिष्याम इत्य् अपि[1] ॥१५॥ [१९

१८] वन्येन फल-मूलेन नि-रतानां वनौकसाम् ।
किम् अस्माकं हिरण्येन सु-वर्णेनाऽपि वा नृप[2] ॥१६॥ [२०

१९] तयोस्[3] तु ब्रुवतोस् तत्र[3] कौतूहल-समन्वितः(?तान्) ।
२०पू] सदस्यान् राघवः प्रेक्ष्य सर्वान् एव वनौकसः ॥[4]१७॥ [२१

तस्य चैवाऽऽगमं रामः काव्यस्य परमाऽद्भुतम् ।[5]
२१] प्र-माणं चैव पप्रच्छ ताव्[6] उभौ[6] मुनि-दारकौ ॥[7]१८॥ [२२

२२पू] अस्य नि-ष्ठा कृता केन काव्यस्य सु-महाऽऽत्मना ।[8]
कर्ता काव्यस्य महतः कश्[9] चाऽसौ मुनि-पुङ्गवः ॥१९॥ [२३पू

२३] पृच्छमानं[10] तु[10] काकुत्स्थं ताव् ऊचतुर् अरिं-दमौ[11] ।[12] [२४
२४उ] राजस् तवेदं चरितं कृतं[13] वाल्मीकिना शुभम् ॥२०॥ [२५पू

२५पू] आदौ प्रभृति राजेन्द्र पञ्च सर्ग-शतानि वै । [२७पू
N] प्र-तिष्ठा जीवितं चैव[14] तव राजन् कृतं शुभम्[14] ॥२१[15]॥ [२८

यदि बुद्धिः कृता राजञ् छ्रवणे ते रघूऽद्वह[16] ।
२९] कर्माऽन्तरे क्षणी-भूतस् ततः शृणु महा-मते ॥२२॥ [२९

३०पू] एवम् उक्तस् तु काकुत्स्थो ह्य् उवाच मुनि-दारकौ ।
N] युवाम् अनु-उपरोधेन श्रोतुम् इच्छामि सर्व-शः ॥[17]२३॥ [N

---

१. च–महात्मानौ किं धनेन विशांपते । भ$_1$–ततस्तौ तु किमनेन धनेन वा । २ भ$_1$–पुनः । ३. च–तथा तयोः प्रब्रुवतोः । ४. च–राघवस्ते च राजानः श्रोतारस्तत्र चापरे । अतः परमधिकश्च पाठः—विस्मयं परमं गत्वा मुहूर्तं ध्यानतत्पराः । ५. च–तयोरागमनं रामः काव्यस्य च समुद्भवम् । ६. च भ$_1$–तौ तदा । ७. अतः परमधिकः पाठः—च–कस्मिन्निष्ठागतं काव्यं कुतश्चैव प्रवर्तितम् । ८. च–केन चैव कृतं वत्सौ केन चैव प्रकाशितम् । ९. भ$_1$–क । १०. च–पृच्छंतमेवं । ११. च–अतंद्रितौ । १२. अतः परमधिकः पाठः—च–आवां वाल्मीकिशिष्यौ तु तेन सार्धमिहागतौ । १३ च–प्रोक्तं । १४. च–यावत्कृतं तव शुभाशुभं । १५. अतः परमधिकः पाठः—च–तव जन्म च काकुत्स्थ मृत्युर्दशरथस्य च । परिक्रिया च या चैव तथा वा राम कर्षणम् ॥ वालिनश्च वधो राम सागरे सेतुबन्धनम् । सह राक्षसकोटीभी रावणस्य वधो महान् ॥ एतत्सर्वं भगवता काव्येस्मिन्निबहितं नृप । आवयोरुपदिष्टं च आवाभ्यां चाभिभाषितम् ॥ ल$_2$–नास्ति । १६. च–कुतूहलम् । १७. च–नास्ति ॥

एतच् छ्रुत्वा तु वचनम् उभौ तौ मुनि-दारकौ ।　　[N
वि-सर्जितौ तु रामेण मानिना प्रयताऽऽत्मना ।[1]　　[N
N] वाटं तं जग्मतुः शीघ्रं[1] यत्राऽऽस्ते मुनि-सत्तमः[2] ॥२४॥ [३०उ
रामोऽपि मुनिभिः सार्धं पार्थिवैश् च महाऽऽत्मभिः ।
३१] श्रुत्वा[3] तद् गीत-माधुर्यं[3] कर्म-शालाम् उपाऽगमत् ॥२५॥ [३१
श्रुत्वा तु तत् तालल्योपपन्नं
सर्गाऽन्वितं सौष्ठवम् अर्थ-युक्तम् ।
तन्त्री-लय-व्यञ्जन-योग-युक्तं
N] कुशीलवाभ्यां परि-गीयमानम् ॥२६[4]॥ [३२

इत्यार्षे रामायण उत्तर-काण्डे गीत-श्रवणं[5] नाम
षण्णवतितमः सर्गः ॥ ९६ ॥

---

## [वं-१०२]= [सप्तनवतितमः सर्गः] =[दा-६५]

एवं बहून् स दिवसान् गेयम् अद्भुत-विस्तरम् ।[6]
१] शुश्राव मुनिभिः सार्धं राजभिश्[7] च स-वानरैः[7] ॥१[8]॥ [१
तस्मिन् गीते स[9] वि-ज्ञाय सीता-पुत्रौ कुशीलवौ ।
६] तस्याः परि-षदो मध्ये रामो वाक्यम् अथाऽब्रवीत्[10] ॥२[11]॥ [२
शत्रु-घ्नं वीर्य-सम्पन्नं हनू-मन्तं च वानरम् ।
७] वि-भीषणं च दुर्-धर्षं[12] सु-षेणं च परं-तपम् ॥३॥ [N
भग-वन्तं महाऽऽत्मानं वाल्मीकिम् ऋषि-सत्तमम् ।
८] आ-नयध्वम् इहोदारं स-सीतं देव-सम्मितम् ॥४[13]॥ [N
अस्यास् तु पर्षदो मध्ये प्रत्य्-अयं जनकाऽऽत्मजा ।
९] ददातु शीघ्रं विधि-वद् अनु-मान्य महा-मुनिम् ॥५॥ [४

---

१. च–नास्ति । २. च–यत्र वाल्मीकिर्भगवानृषिः । ३. च–अहो गीतमिति प्रोच्य । ४. च–नास्ति । ५. भ$_1$–श्रवणवर्णनो । ६ च–अहानि सुबहून्येवं रामो गेयमनुत्तमम् । ७. च–पार्थिवैश्च महात्मभिः । ८. अतः परमधिकः पाठः—च–कौशल्या च सुमित्रा च कैकेयी मातरश्च याः । प्रगृह्य बाहू दुःखार्ता रुरुदुश्च महास्वरम् ॥ सुग्रीवो हनुमांश्चैव नलो नीलस्तथांगदः । वर्तमानमिवातीतं तस्मिन्गीते समर्थवत् ॥ वसिष्ठो वामदेवश्च जाबालिरथ कश्यपः । एते ध्यानपराः सर्वे विश्वामित्रश्च कौशिकः ॥ तथा प्रध्यायतां तेषां सर्वेषाञ्च मुहुर्मुहुः । कर्मान्तरेषु न गेयमनुप्राप्तं यथाक्षरम् ॥ ९. भ$_1$–च । १०. भ$_1$–उदीरयत् । ११. भ$_2$ रा$_1$ व ल$_3$–नास्ति । १२. च–सर्वज्ञं । १३. अ रा$_1$–नास्ति ॥

मुनेस्[1] तु मतम् आ-ज्ञाय[1] सीतायाश् च मनो-गतम् ।
१०] प्रत्य्-अयं दातु-कामायास् ततः शंसत मा चिरम् ॥ ६ ॥ [५
चरित्र-युक्ता श्वः कल्ये मैथिली[2] जनकाऽऽत्मजा ।
११] करोतु पर्षदो मध्ये शपथं[3] मम कारणात्[3] ॥ ७ ॥ [६
श्रुत्वा तु राघवस्यैतद्[4] वचनं परमाऽद्भुतम्[4] ।
१२] जग्मुस् ते ऋषि-वाटं[5] तं[5] यत्र[6] प्राचेतसो मुनिः[6] ॥ ८ ॥ [७
अभि-वाद्य महाऽऽत्मानं वाल्मीकिम् अमित-प्रभम् ।
१३] ऊचुस् तद् आद्यं वचनं सर्व आदेश-कारिणः ॥[7] ९ ॥ [८
तेषां तद्[8] वचनं[8] श्रुत्वा रामस्य च मनो-गतम् ।
१४] वि-ज्ञाय च महा-तेजाः स मुनिर् वाक्यम् अब्रवीत्[9] ॥१०॥ [९
एवं भवतु भद्रं वो यथा तुष्यति राघवः ।
१५] तथा करिष्यते सीता देवता[10] हि पतिः स्त्रियः ॥११॥ [१०
तथोक्तं[11] मुनिना सर्व[11] राम-दूता[11] महौजसः ।
१६] प्रत्येत्य राघवं सर्वे[12] मुनि-वाक्यं तद् अब्रुवन् ॥१२॥ [११
ततः प्र-हृष्टः काकुत्स्थः श्रुत्वा तेषां वचस्[13] तदा[13] ।
१७] सर्वान् एव महर्षींस् तान् नृ-पतींश्[14] चाऽभ्य्-अभाषत[14] ॥१३॥[१२
ते[15] भवन्तः स-शिष्याश् च[15] साऽनुगाश् च नराऽधिपाः ।
१८] पश्यन्तु सीता-शपथं यश् चाऽन्योऽप्य् अभि-काङ्क्षति ॥१४॥[१३
तस्य तद् भाषितं[16] श्रुत्वा शपथ-स्थं[17] महाऽऽत्मनः ।
१९] सर्वेषाम् ऋषि-मुख्यानां[18] साधु-वादो महान् अभूत् ॥१५॥ [१४
राजानश् च महाऽऽत्मानः[19] प्र-शशंसुश् च[20] राघवम्[20] ।
२०] उप-पन्नं नर-व्याघ्र[21] त्वय्य् एतद् इति चाऽब्रुवन् ॥१६॥ [१५

---

१. च–छंदं मुनेश्च विज्ञाय । भ$_1$–ऋषेश्चिसं च विज्ञाय । २. प्र–प्रत्ययं । ३. च–चरित्रं प्रति सा पुनः । ४. च–°वस्येदं वचः परममद्भुतं । ५. च–त्वरिता दूता । भ$_1$–त्वरिता वाटं । ६. भ$_1$–यत्रास्ते मुनिपुंगवः । ७. च–ऊचुस्ते रामवाक्यानि मृदूनि रुचिराणि च । भ$_1$–ऊचू रामस्य वाक्यानि सूक्ष्माणि मधुराणि च । ८. भ$_1$–तद्भाषितं । भ$_2$–तु व° । ९. च–उवाच ह । १०. च भ$_1$–दैवतं । ११. च–तथोक्ता ऋषिणा सर्वे । १२. अ–नास्ति । १३. च–महौजसाम् । भ$_1$–महात्मनाम् । १४. च भ$_1$–वर्जं–°तिर्ह्यवभा° । १५. च–भगवंतः सशिष्या वै । १६. च–वचनं । १७. च–राघवस्य । अ भ$_1$–°थ तु । ब प्र–°थं च । १८. अ रा$_1$ ल$_2$–ऋषिसत्त्वानां । भ$_1$–मुनिमु° । १९. भ$_1$–वर्जं–महाबाहुं । च–नरव्याघ्रं । २०. च–रघूत्तमम् । २१. च भ$_1$–नरश्रेष्ठ ॥

२१५] एवं स निश्-चयं कृत्वा[1] श्वो-भूत इति राघवः।
N] ऋषींश्[2] च[3] पार्थिवांश् चैव गातारौ[3] च व्य्-असर्जयत्[3] ॥१७[4]॥[१६

इत्यार्षे रामायण उत्तर-काण्डे राम-वाक्यं[5] नाम
सप्तनवतितमः सर्गः ॥९७॥

---

## [वं-१०३]= [अष्टानवतितमः सर्गः] =[दा-९६]

तस्यां रजन्यां व्य्-उष्टायां यज्ञ-वाट-गतो नृ-पः।
१] सर्वांस्[6] तान् आ-नयामास[7] महर्षीन् रघु-नन्दनः ॥१॥ [१
वसिष्ठं वाम-देवं च जाबालिम् अथ कश्यपम्।
२] दुर्-वाससं मुनि-वरं विश्वा-मित्रं च कौशिकम्[8] ॥२॥ [२
भृग्व्-अगस्त्याव्[8] ऋषि-वरौ[8] शक्तिं गार्ग्यं च[9] वामनम्[9]।
३] मार्कण्डेयम् ऋषि-श्रेष्ठं मौद्गल्यं च महा-मुनिम् ॥३॥ [३
भार्गवं च्यवनं चैव शताऽऽनन्दं च लोहितम्[10]।
४] प्र-मतिं[11] च महा-भागम् अग्नि-पुत्रं[11] च सु-प्रभम् ॥[12]४॥ [४
एते चाऽन्ये च बहव ऋषयो[13] विविशुः सभाम्।
५] राजानश् च नर-व्याघ्राः सर्व एव समाऽगमन्[14] ॥५॥ [६
वानराश् च महा-वीर्या राक्षसाश् च महा-बलाः।
६] समा-पेतुर् महाऽऽत्मानः सर्व एवं कुतूहलम् ॥६[15]॥ [७
नागरश् च जनो मुख्यः कौतूहल-समन्वितः।
७] सीतायाः शपथं प्रेप्सुः सर्व एव समा-ययुः(?यौ) ॥७॥ [N
तथा समा-गतं सर्वम् अश्म-भूतम् इवाऽचलम्।
८] दृष्ट्वा मुनि-वरस्[16] तूर्णं स-सीतः समुपाऽगमत्[16] ॥८॥ [१०

---

१. अ प्र-बुद्ध्वा। २. भ१-वर्ज-ऋषयः। ३. भ१-वर्ज-°रौ शशंसिरे। च-शशंसुर्गायिनौ तदा। ४ अतः परमधिकः पाठः—च-इति संप्रविचार्य राजसिंहः श्वोभूते राघवस्य निश्चयं तम्। विससर्ज मुनीन्नृपांश्च सर्वान्स महात्मा सगणो महानुभावः॥ ५. भ१-श्वोभूतं। ६. च-सर्वानेवान°। ७. च-राघवः। ८. च-गार्गागस्त्यावृषी चोभौ। ९. भ१-समालवम्। १०. च-धर्मवित्। भ१-धार्मिकं। ११. च-विमतिं च महाभागमग्नेः पुत्रं। १२. च भ१ ल१ प्र-वर्ज-नास्ति। १३. च-मुनयो। १४. च भ१-समागताः। १५. प्र-नानादेशनिवासी च जनः कौतूहलान्वितः। क्षत्रिया वैश्यशूद्राश्च शतशोऽथ सहस्रशः॥ च भ१ ल१ प्र-६-७मश्लोकौ न स्तः। १६. च-वर्ज-°वरं तूर्णं ससीतं समुपागतम्॥

अग्र-तस् तम् ऋषिं कृत्वा तदा[1] किं-चिद् अवाङ्-मुखी[2] ।
९] कृताऽञ्जलिर् बाष्प-युता[3] सीता यज्ञं विवेश ह ॥९॥ [११
तां[4] दृष्ट्वा समा-यान्तीं[4] ब्राह्मणस्याऽनु-गामिनीम्[5] ।
१०] वाल्मीकेः पृष्ठ-तः सीतां साधु-वादो महान् अभूत् ॥१०॥ [१२
ततो हलहला-शब्दः सर्वेषाम्[6] अभवत् तदा[6] ।
११] शब्दाऽपिहित-कण्ठानां बाष्प-व्याकुलित-चक्षुषाम् ॥[7]११॥ १३
साधु रामेति तं[8] आहुः[8] सीते साध्व् इति चाऽपरे ।
१२] साध्व् इत्य् उभय-तोऽप्य्[9] अन्ये[9] प्रेक्षका वै[10] प्र-चुक्रुशुः[10] ॥१२॥[१४
ततो मध्ये जनौघस्य प्र-विश्य मुनि-पुङ्गवः ।
१३] सीता-सहायो[11] वाल्मीकिर् उप-चक्राम[11] राघवम् ॥१३॥ [१५
इयं दाशरथे सीता सु-व्रता धर्म-चारिणी ।
१४] अप-वादेषु[13] च[13] त्यक्ता ममाऽश्रम-समीप-तः ॥१४॥ [१६
लोकाऽपवाद-भीतेन त्वया राम महा-मते ।
१५] प्रत्य्-अयं दास्यते साऽद्य[14] तद् अनु-ज्ञातुम् अर्हसि ॥१५॥ [१७
इमौ च[15] पुत्रौ वैदेह्या[15] उभौ यमल-जातकौ[16] ।
१६] सुतौ तव तु[17] दुर्-धर्षौ[17] सत्यम् एतद् ब्रवीमि ते ॥१६॥ [१८
प्र-चेतसोऽहं दशमः[18] पुत्रो रघुकुलोद्वह[18] ।
१७] अन्-ऋतं न स्मराम्य् उक्तं यथेमौ तव पुत्र-कौ ॥१७॥ [१९
बहून् वर्ष-गणान् सौम्य तपश्-चर्या कृता मया ।
१८] नोपाऽश्नीयां[19] फलं तस्या दुष्टेयं यदि मैथिली ॥१८॥ [२०
कर्मणा मनसा वाचा कृतं[20] पूर्वं न किल्बिषम् ।
१९] नोपाऽश्नीयां फलं तस्या दुष्टेयं यदि मैथिली ॥१९[21]॥[२१

---

१. च–यान्तं । भ$_1$–याति । २. भ$_1$–°मुखा । ३. च–बाष्पवती । भ$_1$–बाष्पगला । ४. च–दृष्ट्वा श्रियमिवायांतीं । भ$_1$–दृष्ट्वा लक्ष्मीमिवायांतीं । ५. च भ$_1$–ब्राह्मणमनु° । ६. च–सर्वतः स समुत्थितः । ७. भ$_1$–दुःखशोकाभितप्तानां भाषतां बहुदा गिरः । ८. च–तत्रोचुः । ९. च–उभयोरपरे । १०. च–संप्रचु° । भ$_1$–समचु° । ११. अ ल$_2$–सीतामादाय । १२. च भ$_1$–इति होवाच । १३. च–अपापा त्वया । भ$_1$–अपापेति पुरा । १४. भ$_1$–सीता । १५. च–सीतातनयाव् । १६. च भ$_1$–वर्ज–°कपुत्रकौ । १७. च–दुराधर्ष । भ$_1$–सुदु° । भ$_2$–च दु° । १८. च–राजर्षेः पुत्रो राघवनन्दन । १९. च–प्राप्नुयां न । २०. भ$_2$ रा$_1$ ल$_1$ ल$_1$–भूतं । २१. अ ब ल$_3$ प्र–नास्ति ॥

अहं पञ्चसु भूतेषु मनः-षष्ठेषु राघव ।
२०] सीतां शुद्ध-समाचारां[1] दृष्ट्वा[2] ह समुपाऽनयम्[2] ॥[3]२०॥ [२२
सेयं शुद्ध-समाचारा निर्-दोषा[4] च[5] पति-व्रता[5] ।
२१] लोकाऽपवाद-भीतस्य प्रत्य्-अयं तव दास्यति ॥२१॥ [२३
इयम् एव महा-भागा भर्तृ-व्रतम् अनु-ष्ठिता[6] ।
N] करोतु शपथं सीता समीपे तव राघव ॥२२॥ [N

इत्यार्षे रामायण उत्तर-काण्डे वाल्मीकि-वाक्यं[7]
नामाष्टानवतितमः सर्गः ॥ ९८ ॥

---

## [वं–१०४]= [एकोनशततमः सर्गः] =[दा–९७]

वाल्मीकिनैवम् उक्तस् तु राघवः प्रत्य्-अभाषत ।
१] प्राऽञ्जलिः पर्षदो मध्ये शृणु त्वं देव-सम्मित ॥१[8]॥ [१
एवम् एतन् महा-ब्रह्मन्[9] यथा वदसि सु-व्रत ।
२] प्रत्य्-अयो जनितो मह्यं तव वाक्यैर् अ-किल्बिषैः ॥ २ ॥ [२
प्रत्य्-अयो हि पुरा दत्तो वैदेह्या[10] देव-सन्निधौ[11] ।
३] अभि-शस्तया[12] लङ्कायां[12] तेन वेश्म[13] प्र-वेशिता ॥ ३ ॥ [३
सेयं लोक-भयाद् ब्रह्मन् अ-पापा च सती[14] शुभा[15] ।
४] परि-त्यक्ता मया सीता तद् भवान् क्षन्तुम् अर्हति ॥ ४ ॥ [४
जानामि पुत्रौ चेमौ यमलौ[16] च[16] कुशीलवौ ।
५] शुद्धायाम् अद्य[17] वै सौम्य वैदेह्यां[17] प्रीतिर् अस्तु मे ॥ ५ ॥ [५
अभिप्राऽयं तु रामस्य वि-ज्ञाय सुर-सत्तमाः ।
६] पिता-महं पुरस्-कृत्य सर्व एव समाऽगमन् ॥ ६ ॥ [७

---

१. भ$_1$–°चारा । २. च–दृष्ट्वेह स° । भ$_1$–जग्राह वननिर्झरे । ३. ब–अत आरभ्य सर्गसमाप्तिं यावन्नास्ति । ४. भ$_1$–अपापा । ५. च भ$_1$–पतिदेवता । ६. च भ$_1$–नास्ति । ७. रा$_1$ ल$_1$–°किवादो । ८. च–वाल्मीकेस्तु वचः श्रुत्वा राघवो वाक्यमब्रवीत् । प्रांजलिर्जगतो मध्ये देवर्षीणां च शृण्वतां ॥ ९. च–महाभाग । १०. भ$_1$–जानक्या । ११. च भ$_1$–सुरस° । १२. च–लंकाद्वीपेभिशस्तायास् । १३. च भ$_1$ ल$_1$–वर्जे-वह्निं । १४. अ रा$_1$ ल$_2$–शुची । १५. च भ$_1$–पुरा । १६. च भ$_1$–यमजौ तौ । १७. च भ$_1$–जगतो मध्ये मैथिल्यां ॥

आदित्या वसवो रुद्रा अश्विनौ च महर्षिभिः ।
७] गन्धर्वाऽप्सरसश् चैव सर्व एव समा-गताः ॥७[1]॥ [८
तद् अद्भुतम् इवाऽचिन्त्यं निर्-ऐक्षन्त समा-गताः ।[2]
१०] मानवाः सर्व-राष्ट्रेभ्यः पूर्वं कृत-युगे यथा ॥८॥ [१३
सर्वान् समा-गतान् दृष्ट्वा सीता काषाय-वासिनी[3] ।
११] उदङ्-मुखी ह्य् अधो-दृष्टिः प्राऽञ्जलिर् वाक्यम् अब्रवीत् ॥९॥ [१४
यथाऽहं राघवाद् अन्यं मनसाऽपि न चिन्तये ।
१२] तथा मे धरणी[4] देवी विवरं दातुम् अर्हति ॥१०[5]॥ [१५
तथा शपन्त्याः[6] सीतायाः[6] प्रादुर्-आसीत् तद्[7] अद्भुतम्[7] ।
१५] भू-तलाद् दिव्यम् अत्य्-अर्थं सिंहाऽऽसनम् अनु-उत्तमम् ॥११॥[१८
ध्रियमाणं शिरोभिस् तु ह्य् उद्-अतिष्ठद् वराऽऽसनम् ।
१६] दिव्यं दिव्येन वपुषा नागैर्[8] अमित-विक्रमैः[8] ॥१२॥ [१९
तस्मिंस् तु धरणी देवी सीतां सं-गृह्य[9] बाहुना ।
१७] स्व्-आगतं साऽप्य[10] उवाचैनाम्[10] आसने चोप-वेशयत्[11] ॥१३॥[२०
ताम् आसन-गतां देवीं प्र-विशन्तीं रसा-तलम् ।
१८] पुष्प-वृष्टिर् अ-विच्छिन्ना दिव्या सीताम् अवाऽकिरत् ॥१४॥ [२१
साधु-शब्दश्[12] च सु-महान् देवानां परमाऽद्भुतः[13] ।
१९] श्लाघ्या[14] त्वम् असि वैदेहि यस्यास्[15] ते[15] गतिर् ईदृशी[16] ॥१५॥[२२
ऊचुर्[17] बहु-विधा वाचो[18] ह्य् अन्तरिक्ष-गताः सुराः[18] ।
२०] व्या-जहुस् ते सु-मनसो दृष्ट्वा सीता-प्रवेशनम् ॥[19]१६॥[२३

---

१. च–नास्ति । अतः परमधिकः पाठः—अ ब ल$_3$–वर्जं–ततो गंधवहः पुण्यो दिव्यो गंधवहः शुचिः । तं जनौघं सुरश्रेष्ठ ह्लादयामास सर्वशः ॥ नागा यक्षाः सुपर्णाश्च तथान्ये ये च धार्मिकाः । सीताशपथसंभ्रांताः सर्व एव समागताः ॥ २. भ$_1$ रा$_1$ ब–नास्ति । ३. अ भ$_1$ प्र–कौशेय° । ४. च भ$_1$–माधवी । ५. अतः परमधिकः पाठः—च भ$_1$ प्र–मनसा कर्मणा वाचा राममेव यथार्च्चये । तथा मे माधवी देवी विवरं दातुमर्हति ॥ यथैतत्सत्यमुक्तं मे न रामात्कामये परम् । तथा मे माधवी देवी विवरं दातुमर्हति ॥ ६. च–शपंत्यां सीतायां । भ$_1$–वदन्त्याः सी° । ७. च–महाद्भु° । भ$_1$–समंततः । ८. पन्नगैरमितप्रभैः । ९. च–आदाय । १०. च–ते तथोक्त्वा तां । ११. च–संन्यवे° । १२. च–साधुवादश् । १३. च–शुशुभे तदा । १४. च–धन्या । भ$_1$–दिष्ट्या । १५. भ$_1$–सीतां । १६. च–ते शीलमीदृशम् । भ$_1$–संगृह्य बाहुना । १७. च–एवं । १८. च–वाचः खगताः सुरसत्तमाः । अ ल$_2$–°गतस्वनाः । १९. भ$_1$–नास्ति ॥

यज्ञ-वाट-गताश् चाऽपि मुनयः सर्व एव ते ।
२१] राजानश् च नर-व्याघ्रा वि-स्मयं जग्मुर्[1] उत्-तमम्[2] ॥१७[3]॥ [२४
अन्तरिक्षे च भूमौ च सर्वे स्थावर-जङ्गमाः ।
२२] वानराश् च महाऽऽत्मानः[3] पाताले[4] पन्न-गास् तथा[4] ॥१८[5]॥ [२५
के-चिद् वि-नेदुः[6] सं-हृष्य[6] के-चिद् ध्यानं[7] समा-स्थिताः[7] ।
२३] के-चिद् रामं निर्-ऐक्षन्त[8] के-चित् सीताम् अचिन्तयन् ॥१९॥[२६
सु-मुहूर्त्तं[9] तु[9] तत् सर्वं तूष्णी-भूतम् अ-चेतनम्[10] ।
२४] सीता-प्रवेशनं दृष्ट्वा[11] बभूवाऽऽस्वस्थ-मानसम्[12] ॥२०॥ [२७

इत्यार्षे रामायण उत्तर-काण्डे सीता-भूमिप्रवेशो[13] नामैकोनशततमः सर्गः ॥९९॥

---

## [वं-१०५]= [शततमः सर्गः] =[दा-९८]

रसा-तलं प्र-विष्टायां सीतायां[14] सर्व-मानवाः[15] ।
१] वि-स्मयाच् च प्र-हर्षाच् च शोकाच् चैव प्र-चुक्रुशुः॥[16] १ ॥ [१
दण्ड-काष्ठम् अव-ष्टभ्य बाष्प-व्याकुलितेक्षणः[17] ।
३] अवाक्-छिरा दीन-मना रामोऽप्य् आसीत्[18] सु-दुःखितः[18] ॥२॥[२
स रुदित्वा चिरं कालं तत्-पूर्वं[19] बाष्पम् उत्-सृजन्[19] ।
४] क्रोध-शोक-समाविष्टो रामो वचनम् अब्रवीत् ॥ ३ ॥ [३
व्यतीऽताऽर्थे[20] तु मां शोको भूयः[20] सं-स्प्रष्टुम् अर्हति ।
५] पश्यतो मे यदा[21] नष्टा सीता लक्ष्मीर् इवाऽपरा[22] ॥ ४ ॥ [४
सा[23] ममाऽदर्शनान्[23] नीता लङ्का-पारे[24] महोदधेः ।
६] ततश् चाऽपि मयाऽऽनीता किं पुनर् वसुधा-तलात् ॥[25] ५ ॥ [५

---

१. च–परमं गताः । २. भ$_1$–नास्ति । ३. च भ$_1$–महाकायाः । ४. भ$_1$–नास्ति । ५. अतः परमधिकः पाठः— ल$_1$ ल$_2$–केचिच्चिन्तापरा हृष्टाः सीताशपथकारणात् । ६. भ$_1$–चिन्तापरा हृष्टाः । ७. च–ध्यानपरायणाः । ८. अ–समीक्षन्ते । ९. च–मुहूर्तमिव । १०. भ$_2$ रा$_1$ ल$_2$–°तसम् । ११. भ$_1$–श्रुत्वा । १२. च–जगदासीत्समाकुलं । भ$_1$–ससंमोहितं जगत् । १३. च भ$_2$–रसातलप्रवेशः । १४. वैदेह्यां । १५. च–सर्वपार्थिवाः । १६. अतः परमधिकः पाठः—च–हाहाकारो महानासीद्देवानां सुमहदद्भुतः । दृष्ट्वा ऋषिगणानां च पार्थिवानां च विस्मयम् ॥ १७. अ–बाष्पेण व्याकुलेन्द्रियाः । १८. भ$_1$–अश्रूण्यवर्तयत् । १९. च–उष्णं बाष्पमथासृ° । २०. च–व्यतीतेर्थे हि शोको मे मनः । भ$_1$–अपूर्वभूतशोको मे पुनः । २१. भ$_1$–यथा । २२. भ$_1$–इवार्थिनः । २३. भ$_1$–अदर्शनं पुरा । २४. टि.=कस. । २५. रा$_1$–नास्ति ॥

वसु-धे देवि[1] भवति[1] सीतां निर्-यातयस्व[2] मे[2] ।
७] दर्शयिष्यामि वै[3] क्रोधं सर्वम् आपो भविष्यसि[3] ॥ ६ ॥ [६
वसुं-धरे[4] पुरा लब्धा[4] त्वत्-सकाशाद् धि मैथिली ।
८] कर्षता हल-हस्तेन जनकेनोद्-धृता[5] पुरा[5] ॥ ७ ॥ [७
तस्मान् निर्-यात्यतां सीता यद्य्[6] अपेक्षा स्थिता मयि । [८पू
९] दुहिता तव सीतेति[7] नवा घृष्टिर्[7] इवाऽऽगता ॥ ८ ॥ [N
एवं प्र-साद्यमानाऽपि त्वं[8] मया[8] बहु-मान-तः ।
१०] नैव[9] दर्शयसे सीतां संबद्धस्यो(?स्याऽ)प्य् अ-कारणम् ॥ ९ ॥ [N
साधु निर्-यात्यतां सीता[9] विवरं वा प्र-देहि[10] मे ।
११] पाताले नाक-पृष्ठे वा[11] वसेयं सहितस्[12] तया[12] ॥१०॥ [८उ
आ-नयध्वं खनित्रं[13] हि सु-तीक्ष्णं[13] मैथिली-कृते । [९पू
१२] भवताम्[14] ईक्षतां कृत्स्नां खनिष्येऽहं[14] वसुं-धराम् ॥[15]११॥ [११पू
आ-नयै(?य) तद्(?त) धनुः-श्रेष्ठं स-शरं मैथिली-कृते ।[15]
N] भेत्स्यामि वसु-धाम् एतां ततो वि-ज्ञाय तन् मतम् ॥१२[16]॥ [N
अद्य दास्यति वा सीतां तथा-भूतां[17] महीं त्व् इमाम्[17] ।
१३] नाशयिष्यामि वा भूमिं न[18] मे पापं[18] भविष्यति ॥१३[19]॥ [१०
एवं ब्रुवति काकुत्स्थे क्रोध-शोक-समन्विते ।
१४] स्वयं-भूः सर्व-गो[20] देवो ब्रह्मा वचनम् अब्रवीत् ॥१४॥ [११
राम-राम न सं-तापं कर्तुम् अर्हसि सु-व्रत ।
१५] स्मरस्व पूर्व-जं भावम् आत्मानं च महौजसम्[21] ॥१५॥ [१२
इमं मुहूर्तं दुर्-धर्षं स्मारयेयं[22] तवाऽन्-अघ[22] । [१३उ
१६] अस्मिंस् तु पर्षदो[23] मध्ये न वक्ष्ये[24] त्वत्-समुद्भवम्[24] ॥१६॥ [१५उ

---

१. भ$_1$ रा$_1$-वर्जं-हे भगवति । च-त्वं भगवति । २. भ$_1$-°यात्यतां मम । ३. च-वा रोषं यथा त्वमवगच्छसि । भ$_1$-वा रोषं सर्वमापो भविष्यति । ४. च भ$_1$ भ$_2$-कामं श्वश्रूर्ममैव त्वं । रा$_1$ ब ल$_1$-नास्ति । ५. भ$_1$-°केन समुद्धृता । ६. भ$_1$-नास्ति । ७. च-सीता हि नष्टावृत्तिर् । ८. च-वर्जं-प्रसाद्य । ९. च-न चेद् । १०. च भ$_1$-प्रयच्छ । ११. च भ$_1$ भ$_1$-वर्जं-च । १२. च-सह सीतया । १३. च-°त्रं मे अद्याहं । भ$_1$-धनुःश्रेष्ठं सशरं । १४. च-सपर्वतवनां कृत्स्नां खनिष्यामि । १५. भ$_1$-नास्ति । १६. च-नास्ति । १७. च-तथारूपां स्वयं महीम् । १८. च-सर्वमापो । १९. भ$_1$-नास्ति । २०. च भ$_1$-पूर्वजो । २१. च भ$_1$-महाभुजम् । २२. च-भवन्तं स्मारयाम्यहं । २३. च-जगतो । २४. च-ब्रुवेते समु° ॥

एतद् एव महा-काव्यं गेयेन समभि-प्लुतम्[1] ।
१७] सर्वं विस्तर-शो राम व्या-ख्यास्यति[2] गुणांस् तव[2] ॥१७॥ [१६
जन्म-प्रभृति काकुत्स्थ तव सर्वं शुभाऽशुभम् ।
१८] भविष्यम् उत्-तरं चैव सर्वं वाल्मीकिना कृतम् ॥१८॥ [१७
श्रुतं हि सर्वम् एवैतन् मया सार्धं सुरर्षिभिः[3] ।
N] दिव्यम् अद्भुत-रूपं च सत्यं चाऽनृत-वर्जितम् ॥१९॥ [१९
आदि-काव्यम् इदं राम त्वद्-वृत्तम् अ-खिलं कृतम् ।
१९] नाऽर्हति श्रोतुम् अन्यो हि पार्थिवे त्वयि तिष्ठति ॥२०॥ [१८
स त्वं पुरुष-शार्दूल धैर्येण सु-समाहितः । [२०पू
२०] त्यज शोकं महा-राज बुद्धि-मांस् त्वं हि राघव ॥[4]२१॥ [N
२१उ] अवधान-परश् चैव सहैभिर् मुनि-पुङ्गवैः ।[4] [२०उ
N] शेषं भविष्यं[5] काकुत्स्थ काव्यं[5] रामाऽयणं शुभम्[6] ॥२२॥ [N
कथितं तव काकुत्स्थ शेषम् अत्र महा-मते ।
२२] तच् छृणुष्व महा-सत्त्व मुनिभिर् देव-सन्निभैः ॥२३[7]॥ [२१
न खल्व् अन्येन काकुत्स्थ श्रोतव्यम् इदम् उत्-तमम् ।
२३] ऋते महर्षिभिर्[8] वीर[8] त्वया पार्थिव-धर्मिणा[9] ॥२४॥ [२२
एतावद्[10] उक्त्वा[10] भग-वान् ब्रह्मा त्रिभुवनेश्वरः ।
२४] जगाम सहसा[11] तत्र[11] सह देवैः स्वम्[12] आ-लयम्[12] ॥२५॥ [२३
येऽपि तत्र महाऽऽत्मानो मुनयो ब्रह्म-वादिनः[13] ।
२५] तेऽनु-ज्ञां[14] ब्रह्मणः प्राऽऽप्य[14] न्य्-अवर्तन्ताऽमितौजसः॥२६॥
उत्-तरं श्रोतु-मनसो भविष्यं यत्र राघवे । [२४
२६] कीर्तिं चैवाऽस्य लोकेषु प्राऽऽपयन्तः[15] पुनर् दिवि ॥२७॥ [N

---

१. च भ$_1$ भ$_2$–वर्जं–तदभि° । २. च–वर्जं–°ति गुरुस्तव । भ$_1$–व्याख्यातं त्वद्गुणान्वितं । ३. च भ$_1$–वर्जं–शुभाशुभैः । भ$_2$ ल$_1$–सुरासुरैः । ४. भ$_1$–नास्ति । ५. च–°व्यदखिलं गेयं । भ$_1$–°व्य तत्सर्वं काव्यं । ६. च–श्रृणु । ७. च–उत्तरं राम काव्यस्य शेषमेतन्महीपते । श्रृणु राम महाबाहो मुनिभिः सार्धमक्षयैः ॥ ८. च–मामृषिभिर्दिव्यैस् । ९. च–त्वां चैव रघुनंदन । भ$_1$–त्वया वा परमर्षिणा । १०. च–एवमुक्त्वा तु । ११. च भ$_1$–त्रिदिवं देवो । १२. च–सत्रासवैः । भ$_1$–दिवौकसैः । १३. च–ब्रह्मलौकिकाः । १४. च–ब्रह्मणा तेऽभ्यनुज्ञाता । १५. च–प्राप्य लोकं च कीर्तिं तद्यथा यातः ॥

एतस्मिन्न् अन्तरे वाणी निः-सृता वसुधा-तलात्[1] ।
२७] मुञ्च[2] त्वं तात[2] सं-तापं कृताऽन्तो ह्य् अत्र कारणम् ॥२८॥ [N
काङ्क्षसे यदि[3] वैदेहीं वृथा तेऽयं परि-श्रमः[3] ।
२८] दुर्-लभं दर्शनं तस्यास् त्रि-दिवे[4] सा प्रति-ष्ठिता ॥२९॥ [N
इह-स्था भुज्यते नागैर्[5] मर्त्य-लोके च मानवैः[6] ।
२९] पितॄणां सा स्वधा स्वर्गे सा तृप्तिर् अमृताऽशिनाम् ॥३०॥ [N
श्रीवत्स-वक्षसो[7] देहे सा च[8] लक्ष्मीः प्रति-ष्ठिता ।
३०] सिद्धानां स्वर्ग-संस्थानां सा च मूर्ध्नि[8] प्रति-ष्ठिता ॥३१॥ [N
नि-वर्तय मनो राम वैदेह्या दर्शनं प्रति ।
३१] द्रष्टव्या यदि ते[9] वीर[9] पुत्रौ पश्य कुशीलवौ ॥३२॥ [N
श्रूयतां च शुभं काव्यं[10] सत्यं वाल्मीकिना कृतम् ।
३२] उत्-तरं यद् भविष्यं च[11] यथा प्राऽऽह[11] पिता-महः ॥३३॥ [N
ततो रामः शुभां[12] वाणीं[12] श्रुत्वा तां वसुधा-तलात् ।
३३] पितामह-वचः कुर्वन्[13] वाल्मीकिम् इदम् अब्रवीत् ॥३४॥ [२५
भग-वञ् छ्रोतु-मनसो मुनयो देव-सम्मिताः[14] ।
३४] भविष्यम् उत्-तरं यन् मे श्वो भूते सम्प्र-वर्तताम्[15] ॥३५॥ [२६
एवं विनिश्-चयं कृत्वा सं-गृह्य च कुशीलवौ ।
३५] नि-वार्य[16] च जनं रामः कर्म-शालाम् उपाऽगमत् ॥३६[17]॥ [२७

इत्यार्षे रामायण उत्तर-काण्डे पितामह-वाक्यं[18] नाम

शततमः सर्गः ॥ १०० ॥

---

१. च—धरणीतलात् । २. च—जहीहि राम । भ$_1$—राम वर्जय । ३. च—यद्वैदेहीं तद्वृथा परितप्यसे । ४. च—त्रैलोक्ये । ५. भ$_1$ प्र—लक्ष्मीर् । ६. च—मानुषैः । ७. भ$_1$ प्र—°त्ससहिता नित्यं विष्णोर् । ८. च—देवी । ९. च—ते सीता । भ$_1$—वैदेहि । १०. च भ$_2$—वर्जं—वाक्यं । ११. च—तथथोवाच । १२. च—वर्जं—सतां वा° । भ$_1$—महात्मा वै । १३. च—तद्धि । भ$_1$—श्रुत्वा । १४. च—वर्जं—°संमताः । १५. च भ$_1$—तत्प्रवर्त्यताम् । १६. च—विसृज्य । १७. अतः परमधिकः पाठः—रा$_1$ ल$_1$—दीप्तिमंतं तदात्मानं कुपितं दीप्ततेजसम् । विसृज्य वचनं रामः कर्मशालामुपागतम् ॥ १८. ब ल$_1$ ल$_2$ ल$_3$ प्र—पिताममहदर्शनं ॥

स रजन्यां प्र-भातायां[1] समा-नीय मुनींस्[2] तदा[3] ।
१] ताव्[3] उवाच स[3] काकुत्स्थो गीयतां निर्वि-शङ्कितौ ।[4] १ ॥ [१
ततः समुप-विष्टेषु[5] महर्षिषु महाऽऽत्मसु ।
२] भविष्यम् उत्-तरं काव्यम् अगायेतां[6] कुशीलवौ ॥ २ ॥ [२
N] उत्-तरं वै भविष्यं च रामः श्रुत्वा[7] महा-मतिः ।[8] [N
४पू] यज्ञस्याऽव-भृथे रामस् तदा परम-दुर्मनाः ॥[8] ३ [9]॥
प्र-विष्टायां तु वैदेह्यां भू-तलं स नृपस् तदा ।[10]
N] हुताऽवसाने यज्ञस्य रामः परम-दुर्मनाः ॥ ४ ॥ [३
४उ] अ-पश्यमानो वैदेहीं शून्यं जगद् अमन्यत ।[11]
शोकेन परम् आ-यस्तः शान्तिं लेभे न वै तदा ॥[12] ५ ॥ [४
५] वि-सृज्य पार्थिवान् सर्वान् ऋक्ष-वानर-राक्षसान् ।
जनौघं द्विज-मुख्यांश् च वित्त-पूर्णान् व्य्-असर्जयत् ॥ ६ ॥ [५
६] तथा वि-सृज्य तान् सर्वान् रामो राजीव-लोचनः । [६उ
हृदि कृत्वा तदा सीताम् अयोध्यां[13] प्र-विवेश ह ॥ ७ ॥ [७पू
७] न सीता-विरहे भार्याम् अन्यां दध्रे स राघवः ।[14]
यज्ञे-यज्ञे हि[15] पत्न्य्-अर्थं काञ्चनीं ताम् अकारयत्[15] ॥ ८ ॥ [८
८] दश वर्ष-सहस्राणि वाजि-मेधान्[16] उपाऽहरत्[17] ।[18]
वाज-पेयान् दश-गुणान् बहून् बहु-सुवर्णकान् ॥ ९ ॥ [९

---

१. च-व्यतीतायां । २. भ१-महामुनीन् । ३. च-पुत्रावुवाच । ४. भ१-गीयतां शंकया हीनं रामः पुत्रावुवाच ह । ५. भ१-सुखोप° । ६ च-जगतुस्तौ । भ१-गायतस्तौ । प्र-अगोयतां । ७. रा१ ल१-कृत्वा । ८. भ१-नास्ति । ९. च-संस्तम्भयन्नपि मनो न विसस्मार मैथिलीं । १०. च-नास्ति । ११. च-अपश्यन्मैथिलीं रामो मेने शून्यमिदं जगत् । भ१-°हीं मेने शून्यमिदं जगत् । १२. च-शोकमोहारसंछन्नः शांतिं लेभे तदा न च । भ१-°स्तः शमं नैवोपलब्धवान् । १३. च भ१ ब ल१-सोयो° । १४. च-न चासावपरां भार्यां वव्रे राघवनंदनः । भ१-सीतायाः परमं भावं वृणोति स्म रघूत्तमः । १५. भ१-प्रकुरुते सीतां पत्नीं हिरण्मयीं । १६. च-वर्जं-वाजपेयान् । भ१-°मेधम् । १७. भ१-उपागमत् । १८. अतः परमधिकः पाठः—च-ईजे स रामो धर्मात्मा गुणैः सुबहुभिर्युतः ॥

९] अग्निष्टोमाऽतिरात्राभ्यां गो-सवैश् च महा-वरैः ।
सौत्रामणि-शतैश् चैव पार्थिवो रघु-नन्दनः । [N
१०] ईजे क्रतुभिर् अन्यैश्[1] च स श्री-मान् आप्त-दक्षिणैः ॥१०[1]॥ [१०उ
एवं स कालः सु-महान् राज्य-स्थस्य[2] महाऽऽत्मनः ।
११] धर्मं प्र-यतमानस्य राघवस्य जगाम ह ॥११॥ [११
अन्व्-अरज्यन्त राजानं प्रत्य्-अहं[3] रघु-नन्दनम्[3] ।
१२] ऋक्ष-वानर-रक्षांसि तस्य[4] रामस्य शासनम्[4] ॥१२॥ [१२
काले वर्षति पर्जन्यः सु-भिक्षं नी-रुजः[5] प्र-जाः[5] ।
१३] हृष्ट-पुष्ट-जनाऽऽकीर्णं[6] पुरं जन-पदं[6] तथा ॥१३॥ [१३
बालो[7] न कश्-चिन् म्रियते[7] न व्या-धिः प्राणिनाम् अभूत्[8] ।
१४] सं-बभूव[9] न चाऽधर्मो[9] रामे राज्यं प्र-शासति ॥१४॥ [१४
अथ दीर्घस्य कालस्य राम-माता तपस्विनी[10] ।
१५] पुत्र-पौत्रैः परि-वृता काल-धर्मम् उपाऽगमत्[11] ॥[12]१५॥ [१५
अनु-पश्चं[13] च कैकेयी सु-मित्रा च तपस्विनी[14] ।
१६] धर्मं कृत्वा बहु-विधं त्रि-दिवे[15] पर्यव-स्थिता ॥१६॥ [१६
सर्वाः प्रति-ष्ठिताः स्वर्गे राज्ञा दश-रथेन ताः[16] ।
१७] समा-गता महा-भागाः सालोक्यं[17] पतिना सह[17] ॥१७॥ [१७
तासां रामो महा-दानं काले काले प्र-यच्छति[18] ।
१८] मातॄणाम् अ-विशेषेण ब्राह्मणेषु महाऽऽत्मसु[19] ॥१८॥ [१८
पित्र्यांश्[20] च बहु-रत्नौघान्[20] यज्ञांश् च[21] बहु-विस्तरान्[21] ।
१९] चकार रामो धर्माऽऽत्मा पितॄन् देवांश् च तर्पयन् ॥[22]१९॥ [१९

इत्यार्षे रामायण उत्तर-काण्डे यज्ञावसानं
नामैकोत्तरशततमः सर्गः ॥ १०१ ॥

---

१. अ–नास्ति । २. अ $ल_२$ $ल_३$–राज° । च–राजस्य च । $भ_१$ प्र–राज्ञस्तस्य । ३. $भ_१$–अहन्यहनि राघवं । ४. च–शासनेऽस्य स्थितानि वै । $भ_१$–स्थिता वै रामशासने । ५. $भ_१$–विमला दिशः । ६. च $भ_१$–वर्जे–कीर्णाः पुरे जनपदे । ७. च–कश्चिन्नाम्रियताकाले । ८. $भ_१$–क्वचित् । ९. $भ_१$–नाधर्मो विद्यते कश्चिद् । १०. च–यशस्विनी । ११. च $भ_१$ $भ_२$–वर्जे–उपेयिवान् । १२. ब–नास्ति । १३. च–अनंतरं । $भ_१$–अथ पश्चात् । १४. $भ_१$–यशस्विनी । १५. च $भ_१$–°दिवं । १६. च–हि । १७. च–°क्यं चाभिपेदिरे । $भ_१$–सह लोकांश्च भेजिरे । १८. च–ददौ प्रभुः । १९. $भ_१$–महत्सु च । २०. $भ_१$–पैतृकैर्धनरत्नौघैः । २१. च–च बहुदक्षिणान् । $भ_१$–परमदुष्करान् । २२. अतः परमधिकः पाठः—च $भ_१$ प्र–एवं वर्षसहस्राणि सुबहून्यतिचक्रमुः । यज्ञैर्बहुविधैर्धर्मे वर्तमानस्य तस्य ह ॥

कस्य-चित् त्व् अथ कालस्य युधा-जित् केकयाऽधिपः ।
१] स्व-गुरुं[1] प्रेषयामास[1] राघवाय[2] महाऽऽत्मने[2] ॥ १ ॥ [१
गार्ग्यम् अङ्गिरसः पुत्रं ब्रह्मर्षिम्[3] अमित-प्रभम् ।
२] दश चाऽश्व-सहस्राणि प्रीति-दायम् अन्-उत्तमम् ॥ २ ॥ [२
कम्बलाऽजिन-रत्नानि चीन-पट्टांस्[4] तथोत्तमान् ।
३] तथाऽऽभरण-रत्नानि[4] रामाय प्र-ददौ नृ-पः ॥ ३ ॥ [३
श्रुत्वा तु राघवो गार्ग्यं[5] महर्षिं[5] समुप-स्थितम् ।
४] स मातुलस्याऽश्व-पतेः प्रियं दूतम् अन्-उत्तमम् ॥ ४ ॥ [४
प्रत्युद्-गम्याऽथ काकुत्स्थः क्रोश-मानं सहाऽनुगः ।
५] गार्ग्यं[6] सं-पूजयामास[6] यथा शक्रो बृहस्पतिम् ॥ ५ ॥ [५
ततः सं-पूज्य[7] ब्रह्मर्षिं[7] तद्[8] धनं प्रति-गृह्य[8] च । [६पू.
६] महर्षिं तं पुरस्-कृत्य स्व-गृहं[9] प्र-विवेश ह ॥ ६ ॥ [N
पृष्ट्वा च कुशलं पूर्वं[9] प्रीति-मान् मातुलाय[10] ह[10] ।[11]
७] उप-विष्टो महा-तेजा वक्तुं समुप-चक्रमे ॥[12]७॥ [६उ
किम् आह मातुलो वाक्यं यद्-अर्थं भग-वान् इह ।
८] प्राऽऽप्तो वाक्य-विदां श्रेष्ठः साक्षाद् इव बृहस्पतिः ॥ ८ ॥ [७
रामस्य भाषितं श्रुत्वा ब्रह्मर्षिः[13] कार्य-विस्तरम् ।
९] वक्तुम् अद्भुत-वृत्ताऽन्तं[14] राघवायोप-चक्रमे ॥ ९ ॥ [८
मातुलस् ते महा-बाहो वाक्यम्[15] आह नरर्षभः[15] ।
१०] युधा-जित् प्रीति-संयुक्तं श्रूयतां यदि रोचते ॥१०॥ [९

---

१. च भ$_1$-पुरोहितं प्रहितवान् । २. च-राघवस्य महात्मनः । भ$_1$-सकाशं राघवस्य ह । ३. च-महर्षिम् । ४. अ ल$_2$ प्र-नास्ति । ५. च भ$_1$-ब्रह्मर्षिं । ६. भ$_1$-स गार्ग्यं पू° । ७. च भ$_1$-वर्जं-संपूजितमृषिं । ८. भ$_1$-सर्वं तत्परिगृ° । भ$_2$ ब रा$_1$ ल$_1$ ल$_3$-धनं तत्प्र° । ९. च-समेतः । भ$_1$-अयोध्यां । १०. च-मातुलस्य सः । ११. भ$_1$-श्रुत्वा तु प्राणिनः सर्वे कुशलं मातुलस्य तु । १२. च-उपविष्टं प्रहर्षिं तं प्रष्टुं स° । भ$_1$-उपविष्टं महात्मानं राजा प्रष्टुं प्रच° । १३. भ$_1$-महर्षिः । १४. भ$_1$-वर्जं-°विस्तारं । च-°तं सकाशं । १५. च-वर्जं-तव वाक्यं महामते । भ$_1$-°ह महामते ॥

अयं गन्धर्व-चरितः फलमूलोपशोभितः ।
११] सिन्धोर्[1] उभय-तः सर्वो[2] देशः परम-शोभनः[3] ॥[4]११॥ [१०
तं तु रक्षन्ति गन्धर्वाः[5] साऽऽयुधा युद्ध-काङ्क्षिणः ।
१२] शैलूषस्य सुता वीरास् तिस्रः कोट्यो महा-बलाः ॥१२॥ [११
तांस्[6] त्वं[6] निर्-जित्य काकुत्स्थ गन्धर्व-विषयं शुभम् ।
१३] नि-वेशय महा-बाहो द्वे[7] पुरे[7] सु-समाहितः ॥[8]१३॥ [१२
१४पू] नाऽन्यस्याऽत्र गतिर् वीर देशश् चाऽयं सु-शोभनः[9] ।
१५उ] रोचतां ते महा-बाहो[10] नाऽहं त्वाम् अ-हितं वदे[10] ॥१४॥ [१३
तच् छ्रुत्वा राघवो[11] वीरो महर्षेर्[11] मातुलस्य च[12] ।[8]
१६] उवाच बाढम् इत्य् एव भरतं चाऽन्व्-अवेक्षत ॥१५॥ [१४
सोऽब्रवीद् राघवो हृष्टः प्राऽञ्जलि-प्रग्रहो द्वि-जम् ।
१७] इमौ कुमारौ ब्रह्मर्षे तं देशं वि-जयिष्यतः ॥१६॥ [१५
भरतस्याऽऽत्म-जौ वीरौ तक्षः पुष्कर एव च ।
१८] मातुलेन[13] सु-गुप्तौ च[13] धर्मेण सु-समाहितौ ॥१७॥ [१६
भरतस् त्व् अग्र-तः कृत्वा कुमारौ स-बलाऽनुगौ ।
१९] नि-हत्य गन्धर्व-सुतान् स्व-पुरे तु[14] करिष्यति[14] ॥१८॥ [१७
नि-वेश्य ते[15] पुरे रम्ये ह्य् आत्म-जौ विनि-वेश्य[15] च ।
२०] आ-गमिष्यति मे[16] शूरः[16] समीपं[17] भरतः[18] पुनः[18] ॥१९॥ [१८
एवम् उक्त्वा तु काकुत्स्थो भरतं स-बलाऽनुगम्[19] ।
२१] आ-ज्ञापयामास तदा कुमारौ चाऽभ्य्-अषेचयत्[20] ॥२०॥ [१९
नक्षत्रेण च सौम्येन पुरस्-कृत्याऽङ्गिरः-सुतम्[21] ।
२२] भरतं सेनया सार्धं कुमारौ च व्य्-असर्जयत्[22] ॥२१[23]॥ [२०

---

१. रा१ ल१ ल३-सिद्धैः । २. च भ१-पार्श्वे । ३. च भ१-वर्जं-°शोभितः । ४. भ२-नास्ति । ५. च भ१ प्र-वर्जं-वै सिद्धाः । ६. भ१-तं तु । ७. च भ१-वर्जं-पुत्रौ द्वौ । ८. ब-नास्ति । ९. भ१-°शोभितः । १०. च-वर्जं-°हो भगवानेव राघवः । भ१-°हो नहि चासदृशं वदे । ११. च-°वः प्रीतो ब्रह्मर्षेर् । भ१-°वः प्रीतो म° । १२. भ१-वर्जं-ह । च-तु । १३. भ१-युधाजिन्मातुलेनासौ । १४. च-विभजिष्यति । १५. च-च पुरे वीरः सुतोभावभिषिच्य । १६. भ१-ते ब्रह्मन् । १७. च-सकाशं । १८. भ१-इति धार्मिकः । १९. भ१-सपदानु° । २०. च भ१-वर्जं-अभिषेच्य तौ । २१. भ१-वर्जं-नमस्कृत्य द्विजोत्तमान् । २२. भ१-त्रिवर्धितौ । २३. च-नास्ति ॥

सा सेना बल-सम्पन्ना महती[1] निर्-ययाव्[1] अथ ।
२३] रामेणाऽनु-गता दूरं दुरा-धर्षा सुरैर् अपि ॥२२॥ [२१
मांसाऽशनानि सत्त्वानि रक्षांसि सु-महान्ति[2] च ।
२४] अनु-गच्छन्ति भरतं पिपासन्तो[3] ह्य् असृग् बहु[3] ॥२३॥ [२२
भूत-ग्रामाश् च बहवो मांस-भक्षाः[4] सु-दारुणाः[4] ।
२५] गन्धर्वास्[5] तान् समा-साद्य[5] भोक्तु-कामा महा-बलाः[6] ॥२४॥ [२३
सिंह-व्याघ्र-सृगालानां खे-चराणां च पक्षिणाम्[7] ।
२६] सु-बहूनि सहस्राणि सेनाऽग्रे सम्प्र-तस्थिरे ॥२५॥ [२४
अध्य्-अर्द्धं[8] मासम् उषिता पथि सेना निर्-आमया ।
२७] हृष्ट-पुष्ट-जनाऽऽकीर्णा कैकेयान् समुपाऽद्रवत्[9] ॥२६॥ [२५
इत्यार्षे रामायण उत्तर-काण्डे भरत-निर्याणं[10] नाम द्व्युत्तरशततमः सर्गः ॥ १०२ ॥

---

## [ वं-१०८ ]= [ त्र्युत्तरशततमः सर्गः =[ दा-१०१ ]

श्रुत्वा सेना-पतिं प्राऽऽप्तं भरतं कैकयाऽधिपः ।
१] युधा-जिद् गार्ग्य-सहितं परां प्रीतिम् उपाऽगमत् ॥[11]१॥ [१
N] स निर्-ययौ बलौघेन महता कैकयाऽधिपः ।[12]
त्वरमाणोऽभि-चक्राम गन्धर्वान् देव-रूपिणः ॥[13]२॥ [२
२] भरतश् च युधा-जिच् च समेतौ लघु-विक्रमौ । [N
३उ] गन्धर्व-नगरं[14] प्राऽऽप्तौ[14] स-बलौ स-पदाऽनुगौ ॥ ३ ॥ [३उ
श्रुत्वा तु भरतं प्राऽऽप्तं गन्धर्वास्[15] ते समा-गताः[15] ।
४] योद्धु-कामा महा-वीर्या[16] वि-नदन्तः समा-हिताः[16] ॥[17]४॥ [४
ततः सम्-अभवद् युद्धं तुमुलं लोम-हर्षणम् ।
६] सप्त-रात्रं त्व्[18] अ-विरतं[18] न चाऽन्य-तरयोर्[19] जयः[19] ॥ ५ ॥ [५

---

१. च-साकेतात्प्रययाव् । २. च-विविधानि । ३. च-बहुरक्तं पिपासवः । ४. च भ$_1$-वर्जं-रुधिराणि पिपासवः । ५. च भ$_1$-गन्धर्वपुत्रमांसानि । ६. च-महास्वनाः । ७. च-सर्वशः । ८. च भ$_1$-वर्जं-अस्वगर्यं । ९. भ$_1$-सुप्रवेशयन् । १०. च भ$_1$-भरतप्रयाणं । रा$_1$-पितामहदर्शनं । ११. ब ल$_1$ ल$_2$-नास्ति । १२. च भ$_1$ भ$_2$ रा$_1$-वर्जं-नास्ति । १३. भ$_1$ भ$_2$-नास्ति । च-भरतेन समागम्य मंत्रयामास चैव ह । १४. च-गतौ गन्धर्वनगरं । भ$_1$-गन्धर्वविषयं तत्र । १५. भ$_1$-गत्वा रामाऽनुजस्ततः । १६. भ$_1$-स्थिताः सर्वे गर्जंति स्म ततस्ततः । च रा$_1$-°न्तः समंततः । १७. अतः परमधिकः पाठः—च-सम्बद्धा बद्धतूणीरा विविधायुधपाणयः । १८. च-महाघोरं । भ$_1$-तदा सिद्धैर् । १९. च-चाभूद्विजयः क्वचित् ॥

ततो रामाऽनुजः क्रुद्धः कालस्याऽस्त्रं सु-दारुणम् ।
७] सं-वर्तं[1] नाम भरतो गन्धर्वेषु न्य्-अयोजयत्[1] ॥ ६ ॥ [७
ते बद्धाः काल-पाशेन[2] सं-वर्तेन वि-दारिताः ।
८] क्षणे[3] तस्मिन्[3] हतास् तत्र तिस्रः कोटयो महा-बलाः ॥ ७ ॥ [८
तं घोरं घोर-सङ्काशं न स्मरन्ति दिवि[4] स्थिताः[4] ।
९] निमेषाऽन्तर-मात्रेण तादृशानां महाऽऽत्मनाम् ॥[5] ८ ॥ [९
हतेषु तेषु वीरेषु भरतः कैकयी-सुतः ।
१०] नि-वेशयामास ततः सम्-ऋद्धे द्वे पुरोत्तमे ॥ ९ ॥ [१०
पुष्करं पुष्करा-वत्यां तक्षं तक्षशिला-पतिम्[6] ।[7]
११] गन्धर्व-देशे रुचिरं गन्धर्व-विषयोऽभवत् ॥१०॥ [११
N] अ-पूर्णैः[8] पञ्चभिर् वर्षैर् नगरे ते बभूवतुः । [N
धनौघ-रत्न-सम्पूर्णे काननैर् उप-शोभिते ।
१२] अन्योऽन्य-संहर्ष-कृते स्पर्धया भूति-विस्तरे ॥[9]११॥ [१२
पुत्रयोस् ते व्य्-अवर्धा(?र्धे)ताम् उप-हारैर् अ-किल्बिषैः ।[10]
१३] उद्यान-वन-सम्पूर्णे[11] सु-विभक्ताऽन्तर्-आपणे ॥१२॥ [१३
ते[12] वै[12] पुरोत्तमे रम्ये काननोत्तम-भूषिते ।
१४] गृह-मुख्यैः सु-रुचिरैर् विमान-सम-दर्शनैः[13] । [१४
N] शोभिते शोभनीयैश् च देवाऽऽयतन-विस्तरैः[14] ॥[15] १३॥[१५पू
नि-वेश्य पञ्चभिर् वर्षैर् भरतो राघवाऽनुजः ।[16]
१५] पुनर् आऽयान् महा-बाहुर् अयोध्यां कैकयी-सुतः ॥१४॥ [१६
सोऽभि-वाद्य महाऽऽत्मानं साक्षाद् धर्मम् इवाऽपरम् ।
१६] राघवं भरतः श्री-मान् ब्रह्माणम् इव वासवः ॥१५॥ [१७

---

१. भ$_1$-नियुक्तवान् । २. च-कालचक्रेण । ३. च भ$_1$-क्षणेन हि । ४. च भ$_1$-वर्ज-दिवौकसः । ५. च-नास्ति । ६. भ$_1$-शिलाम्प्रति । ७. च-तक्षस्तक्षशिलां चैव पुष्करः पुष्करावतीम् । ८. च भ$_1$-आकीर्णे । ९. च-नास्ति । १०. च-तयोर्विवर्द्धेतां व्यव° । भ$_1$-तयोस्तु पुर्योरुभयोर्व्यवहा° । भ$_2$-नास्ति । ११. च-भ$_1$-उद्यानारामसंपन्नैः । १२. च भ$_1$-उभे । १३. च-°मशोभिते । च-°नशतसंकुलैः । भ$_1$-°नशतवर्णिभिः । १४. भ$_1$-देवतायतनोपमैः । १५. च-नास्ति । १६. भ$_1$-नास्ति ॥

ततोऽशंसद् यथा-वृत्तं गन्धर्व-वधम् उत्-तमम् ।
१७] नि-वेशनं च देशस्य[1] श्रुत्वा प्रीतः स राघवः ॥१६[2]॥ [१८
इत्यार्षे[3] रामायण उत्तर-काण्डे[3] गन्धर्व-वधो[4] नाम त्र्युत्तरशततमः सर्गः ॥ १०३ ॥

---

## [वं-१०६]= [चतुरुत्तरशततमः सर्गः] =[दा-१०२]

तच् छ्रुत्वा हर्षम् आ-पेदे राघवो भ्रातृभिः सह ।
१] वाक्यं चाऽद्भुत-सङ्काशं[5] रामो[6] भ्रातॄन् उवाच ह[6] ॥ १ ॥ [१
इमौ कुमारौ सौमित्रे तव[7] धर्म-विशारदौ[8] ।
२] अंग-दश् चन्द्र-केतुश् च राज्याऽर्हौ[8] दृढ-धन्विनौ ॥ २ ॥ [२
उभौ राज्येऽभि-षेक्ष्यामि देशः साधु वि-धीयताम्[9] ।
३] रम्यश् च जन-संबाधो वसेतां यत्र धार्मिकौ ॥[10]३ ॥ [३
न राज्ञां[11] यत्र पीडा स्यान् नाऽऽश्रमाणां[12] वि-नाशनम्[12] ।
४] स देशो दृश्यतां सौम्य नाऽप-राध्यामहे यथा[13] ॥ ४ ॥ [४
तथोक्तवति रामे तु भरतः प्रत्य्-उवाच ह[14] ।
५] अयं कारपथोद्देशो रमणीयो[15] निर्-आमयः ॥ ५ ॥ [५
अङ्ग-दस्य पुरीं वीर नि-वेशय महाऽऽत्मनः ।[16]
६] चन्द्र-केतोर् अपि पुरं चन्द्र-वक्त्रं निर्-आमयम्[17] ॥ ६ ॥ [६
तद् वाक्यं भरतेनोक्तं प्रति-जग्राह राघवः ।
७] तं च कारपथोद्देशम् अङ्ग-दस्य न्य्-अवेशयत् ॥ ७ ॥ [७
साऽङ्ग-दाऽऽख्या पुरी रम्या अङ्ग-दाय नि-वेशिता ।[18]
८] रमणीया[19] सु-गुप्ता च[19] रामेणाऽक्लिष्ट-कर्मणा ॥ ८ ॥ [८
चन्द्र-केतोः सु-मल्लस्य[20] पुरी भूमौ नि-वेशिता[20] ।
९] चन्द्र-वक्त्रा इति ख्याता दिव्या स्वर्ग-पुरी यथा ॥ ९ ॥ [९

---

१. च-वर्जं-संदिश्य । २. भ$_1$-नास्ति । ३. च-इत्युत्तर° । ४. च-गान्धार-विषयनिवेशः । भ$_1$-गांधारनिवेशो । भ$_2$-°भरतागमनं । ५. भ$_1$-अत्यद्भुततमं । ६. च-भूयो भ्रातॄनभाषत । भ$_1$-रामः प्रोवाच भ्रातृषु । ७. च भ$_1$-वर्जं-नृपध° । भ$_1$-°विदां वरौ । ८ भ$_1$-समर्थौ दृढविक्रमौ । ९. च-निरूप्यतां । १०. च-रमणीयमसंबाधं रमेतां यत्र संस्थितौ । भ$_1$-रम्यश्च वनसंचारो रमेतां यत्र धर्मिणौ । ११. च-राज्ञो । १२. च-न चैवाश्रमवासिनां । १३. भ$_1$-वयं । १४. च-तं । १५. भ$_1$-सुखरम्यो । १६. भ$_1$-निवेश्यतां पुत्र पुरं ह्यंगदं सुमहात्मनं । १७. च-मनोरमम् । १८. भ$_1$-नास्ति । १९. भ$_1$-°णीये वनोद्देशे । २०. च-कुमारस्य मल्ल-भूमिर्निवेशिता । भ$_1$-च बालस्य संप्रस्थाप्यं महाबलं ॥

तती रामः परां प्रीतिं भरतश् च स-लक्ष्मणः ।
१०] ययुर युधि दुरा-धर्षौ कुमारौ चाऽभ्य्-अषेचयन् ||[1]१०|| [१०
अभि-षिच्य कुमारौ तौ[2] प्र-स्थाप्य च महा-बलौ[3] ।
११] अङ्ग-दं पश्चिमां भूमिं चन्द्र-केतुं[4] तथोत्तराम्[4] ||११|| [११
अङ्ग-दं[5] चाऽपि[5] सौमित्रिर् लक्ष्मणोऽनु-जगाम ह ।
१२] चन्द्र-केतोस् तु भरतः पार्ष्णिं[6] जग्राह वीर्य-वान्[6] ||१२|| [१२
लक्ष्मणस्[7] त्व् अङ्गदाऽऽख्यायां[7] संवत्सरम् अथोषितः ।
१३] पुत्रे स्थिते दुरा-धर्षे सोऽयोध्यां[8] पुनर् आऽगमत् ||१३|| [१३
भरतोऽपि तथैवोष्य[9] संवत्सरम् उदार-धीः[10] ।
१४] साकेतं[11] चाऽभिसं-गम्य[11] राम-पादाव् उपाऽऽस्त सः ||१४|| [१४
उभौ सौमित्रि-भरतौ राम-पादाव् अनु-व्रतौ ।[12]
१५] कालं गतम् अति-स्नेहान्[13] न जानीतोऽति-धार्मिकौ[13] ||१५|| [१५
एवं वर्ष-सहस्राणि दश[14] तेषाम् अयुस् तदा[14] ।
१६] धर्मे प्र-यतमानानां पौर-कार्येषु चैव[15] हि[15] ||१६|| [१६
वि-हृत्य कालं परिपूर्ण-मानसाः
श्रिया वृता धर्म-पथि स्थिताः परे[16] ।
ज्वलत्-समिद्धा[17] इव दीप्त-तेजसो
१७] हुताऽग्नयः[18] साधु मता यथाऽम्बरे[18] ||१७|| [१७

इत्यार्षे रामायण उत्तर-काण्डे पुत्राऽभिषेको नाम[19]
चतुरुत्तरशततमः सर्गः ॥ १०४ ॥

---

१. भ$_1$–ययौ युधि दुराधर्षौ अभिषेकं च कारयत् । २. च भ$_1$ भ$_2$–द्वौ । ३. च भ$_1$–वर्जं–महामनाः । ४. च–वर्जं–°केतुरुदङ्मुखः । भ$_1$–°केतोरुदङ्मुखीं । ५. च भ$_1$–°दस्य च । ६. भ$_1$–पृष्ठग्राहो बभूव ह । ७. च–°णश्चांगदीयायां । ८. च–साकेतं । ९. च–तथोषित्वा । भ$_1$–तथा सौम्यः । १०. भ$_1$–अथाधिकं । ११. च भ$_1$–अयोध्यां पुनरागत्य । १२. भ$_1$–नित्यं राममुपासंतौ तदा भरतलक्ष्मणौ । १३. च–अपि स्नेहाद्धार्मिकौ नाध्यगच्छतां । भ$_1$–अपि स्नेहाद्धर्मिणौ नावबुध्यतां । १४. च–दशैषां व्यतिचक्रमुः । भ$_1$–ययुस्तेषां दशस्तथा । १५. भ$_1$–नित्यदा । १६. भ$_2$–च ते । १७. भ$_1$–भृशं स° । १८. च–हुताग्निकल्पाः प्रबभुर्नरोत्तमाः । भ$_1$–त्रयोग्नयः साधु हुता महर्षिभिः । १९. च–लक्ष्मणसुतयोरभिषेकः । भ$_1$–लक्ष्मणसुताभिषेको ॥

कस्य-चित् त्व् अथ कालस्य रामे राज्य-पथि[1] स्थिते[1] ।[2]
१] कालस् तापस-रूपेण रामं[3] द्रष्टुम् उपाऽगमत्[3] ॥ १ ॥ [१
सोऽब्रवील् लक्ष्मणं वाक्यं द्यु ति-मन्तं[4] यशस्विनम्[5] ।
२] भो[6] नि-वेदय रामाय सम्प्राऽऽप्तं[7] कार्य-गौरवात् ॥ २ ॥ [२
दूतो ह्य् अति-बलस्याऽहं महर्षेस्[8] तस्य धी-मतः[8] ।
३] दिदृक्षुर् आ-गतो धी-मांस् त्वरितं[9] मां नि-वेदय ॥ ३[10] ॥ [३
तस्य तद् वचनं श्रुत्वा सौमित्रिस् त्वरयाऽन्व्-इतः[11] ।[10]
४] न्य्-अवेदयत[12] रामाय तापसाऽऽगमनं[13] शुभम्[13] ॥ ४ ॥ [४
जय स्व[14] राज-धर्मेण[15] ह्य् उभौ लोकौ महा-यशः[15] ।[16]
५] दूतस् त्वद्-दर्शनाऽऽकाङ्क्षी तपस्वी[17] द्वारि तिष्ठति[17] ॥ ५ ॥ [५
तद् वाक्यं लक्ष्मणेनोक्तं श्रुत्वा रामोऽब्रवीद् इदम् ।[18]
६] प्र-वेश्यतां मुनेर्[19] दूतो मनु-जः सत्य-वाग् भव[19] ॥ ६ ॥ [६
सौमित्रिस् तु तथेत्य् उक्त्वा मुनिं[20] प्राऽवेशयत् स तम्[20] ।
७] ज्वलन्तम् इव तेजोभिः प्र-हसन्तं महा-बलम् ॥[21] ७ ॥ [७
सोऽभि-गम्य[22] नृप-श्रेष्ठं[23] दीप्यमानं[24] स्व-तेजसा[24] ।
८] ऋषिर् मधुरया वाचा वर्धस्वेत्य्[25] आह राघवम्[25] ॥ ८ ॥ [८
तस्मै रामो महा-बाहुः पूजाम्[26] अर्घ्य-पुरो-गमाम्[27] ।
९] नि-वेद्य[28] कुशलं पश्चात्[28] प्रष्टुम् एवोप-चक्रमे ॥ ९ ॥ [९

---

१ च-धर्ममतिस्थिरे । २. भ$_1$-काले तु कस्मिंश्चिद्रामं धर्मपथि स्थितं । ३. च-राजद्वारमुपा° । भ$_1$-सहसा द्रष्टुमागतः । ४. अ-स्थितिमन्तं । च-श्रुतवंतं । ५. भ$_1$-मनस्विनम् । ६. च भ$_1$-त्वं । ७. च-प्राप्तं मां । ८. च-°र्षेरमितौजसः । ९. भ$_1$ रा$_1$ ल$_1$-त्वरितो । १०. भ$_2$-नास्ति । ११. च-स त्वरान्वितः । १२. च-आचचक्षे स । भ$_1$-आचचक्षेथ । १३. च भ$_1$-संप्राप्तं तपोधनम् । १४. च रा$_1$-वर्ज-प्रायः । १५. च-राम उभौ लोकौ धर्मेण त्वं महामते । १६. भ$_1$-नास्ति । १७. च-द्वारमुपागतः । १८. च भ$_1$-इति ब्रुवाणं सौमित्रिं राघवः प्रत्युवाच ह । १९. च भ$_1$-मुनिस्तात सत्कृतः शीघ्रमेव च । २०. च-प्रावेशयदृषिं ततः । भ$_1$-प्रावेशयत तं मुनिं । २१. च भ$_1$-तेजसा तपसा चैव ज्वलन्तमिव पावकं । २२. च-सोधि° । २३. च भ$_1$-नरश्रे° । २४. च-राघवं रघुनन्दनं । २५. च-°स्वेति ततोब्रवीत् । २६. भ$_1$-धूपं । २७. च-वर्ज-°गतः । भ$_1$-°पुरस्सरं । २८. च भ$_1$-वर्ज-ऋषिं कुशलमव्ययं ॥

पृष्टस्[1] तु[1] कुशलं तेन रामोऽपि[2] वदतां वरः[2] ।
१०] आसने काञ्चने दिव्ये[3] नि-षसाद महा-यशाः[4] ॥[5]१०॥ [१०
तम् उवाच ततो[6] रामः[6] स्व्-आगतं ते महा-मुने[7] ।
११] प्राऽऽपयस्व[8] च वाक्यानि यद्-अर्थं[9] त्वम् इहाऽऽगतः ॥[9]११॥ [११
नोदितो राज-सिंहेन मुनिर् वाक्यम् उद्-ऐरयत्[10] ।
द्वन्द्वम् एतत्[11] प्र-वक्तव्यम् अन्-आलक्ष्य-गतं[11] वचः ॥[12]१२॥ [१२
१२] नाऽन्येन चैव श्रोतव्यं द्रष्टव्यं[13] नैव[13] कस्य-चित् ।[14]
शृणुयाद् यो[15] निर्-ईक्षेद् वा स वध्यस् तव राघव ।
१३] स[16] त्वं हि[16] मुनि-मुख्यस्य वचनं यद्य् अवेक्षसे ॥१३॥ [१३
तथेति तत्[17] प्रति-ज्ञाय रामो लक्ष्मणम् अब्रवीत् ।
१४] द्वारि तिष्ठ महा-बाहो प्रति-हारं[18] वि-सर्जय ॥१४॥ [१४
स मे वध्यः खलु भवेच्[19] छ्रुत्वा[20] द्वन्द्व-समीरितम्[20] ।
१५] ऋषेर् मम च सौमित्रे[21] पश्येद् वा शृणुयाच् च यः[21] ॥१५॥ [१५
तथा नि-क्षिप्य[22] काकुत्स्थो[23] लक्ष्मणं द्वार-संग्रहे ।
१६] तम् उवाच मुनिं[24] वाक्यं[24] कथयस्वेति राघवः ॥१६॥ [१६
यत् ते मनीषितं[25] कार्यं[26] येन चाऽसि समा-गतः ।
१७] कथयस्व[27] वि-शङ्कस् त्वं मम[28] विप्र हितं वचः[28] ॥[29]१७॥ [१७

इत्यार्षे रामायण उत्तर-काण्डे कालाऽभिगमनं[30] नाम
पञ्चोत्तरशततमः सर्गः ॥१०५॥

---

१. च भ$_1$–रामोऽपि । २. च भ$_1$–पृष्टः पृष्टेन धीमता । ३. च–सोऽथ । ४. च–महामुनिः । ५. भ$_1$–निषण्णश्चासने मुख्ये स्वास्तीर्णे चन्द्रसंनिभे । ६. भ$_2$–महातेजाः । ७. च भ$_2$–वर्जं–महामते । भ$_1$–महाबलः । ८. च–मंत्रयस्व । ९. भ$_2$–नास्ति । १०. च–अथाब्रवीत् । ११. भ$_1$–एव प्रयोक्तव्यं मनोलक्ष्मगतं । १२. च–नास्ति । १३. भ$_1$–नाख्यातव्यं च । भ$_2$–°व्यं चैव । १४. च–कथ्यतस्त-न्मम वचो न श्रोतव्यं हि केनचित् । १५. च भ$_1$–वा । १६. च–एतद्धै । भ$_1$–संदेष्टव्यं । १७. च भ$_1$–च । १८. भ$_1$ भ$_2$ रा$_1$–प्रती° । १९. च भ$_1$–सौम्य । २०. च–कथं द्वन्द्व° । भ$_1$–यस्य यत् शृणुयादिदं । २१. भ$_1$–संवादं यो निरीक्षेत वा नरः । २२. भ$_1$–निरीक्ष्य । २३. च भ$_1$–सौमित्रिं । २४. च भ$_1$–महात्मानं । २५. च भ$_1$–वर्जं–समीरितं । २६. अ च भ$_1$ ल$_2$–वाक्यं । २७. च–कथयाशु । २८. च–ममापि हृदि वर्तसे । २९. भ$_1$–तत्सर्वमखिलेनेह श्रोतास्मि कथयस्व च । ३०. भ$_1$–कालस्यागमनो ॥

शृणु राम महा-बाहो यद्-अर्थम् अहम् आ-गतः ।
१] पिता-महेन देवेन प्रेषितोऽस्मि महा-बल[1] ॥ १ ॥ [१
तत्राऽहं पूर्व-के भावे[2] पुत्रः पर-पुरं-जय ।[3]
२] तव[4] सम्भव-जो वीर[4] कालः सर्व-हरः[5] प्र-भुः[5] ॥ २ ॥ [२
पिता-महस् त्वां भग-वान् आह लोक-पतिः[6] प्र-भुः[6] ।
३] समयस् ते महा-बाहो स्वर्-लोकान् परि-सर्पितुम्[7] ॥ ३ ॥ [३
सं-क्षिप्य हि पुरा लोकान् मायया[8] स्वयम् एव हि[8] ।
४] त्वम्[8] एव मायया सार्धम् अपः[9] पूर्वम् अजीजनः ॥ ४ ॥ [४
भग-वन्तं[10] ततो नाम ह्य् अन्-अन्तम् उदके-शयम् ।
५] मायया जनयित्वा त्वं द्वौ च दैत्यौ महा-बलौ ॥ ५ ॥ [५
मधु-कैटभ-विख्यातौ ययोर् भूर् अस्थि-सञ्चयैः ।[11]
६] अभूत्[12] पर्वत-सम्बाधा[12] मेदिनी मेदसा[13] तथा[13] ॥ ६ ॥ [६
पद्म-किञ्जल्क-सङ्काशं[14] नाभ्याम् उत्-पाद्य माम्[15] अपि[15] ।
७] प्रजा-पतिं समुत्-पाद्य[16] मयि सर्वं नि-वेशितम्[17] ॥ ७ ॥ [७
सोऽहं संन्यस्त-भारोऽपि[18] त्वाम् उपाऽऽस्ये(?से)[18] जगत्-पते ।
८] रक्षां वि-धत्स्व[19] भूतेषु[20] मम तेजस्-करो भव[20] ॥ ८ ॥ [८
ततस् त्वम् अपि दुर्-धर्ष तस्माद्[21] भावात् सनातनात्[21] ।
९] रक्षाऽर्थं[22] सर्व-भूतानां विष्णु-त्वम् उप-जग्मिवान्[22] ॥ ९ ॥ [९

---

१. च भ$_1$–तवांतिकं। २. च–देहे। ३. भ$_1$–अहं हि पूर्वजो देव पुत्रस्तव परंतप। ४. च–मायासंभव एषोस्मि। भ$_1$–मायासंभवो वीर। रा$_1$–तव संभोगजो वीर। ५. अ भ$_2$ ल$_2$ प्र–सर्वमनोहरः। भ$_1$–°रः समः। ६. अ ल$_2$–°तिः समः। च भ$_1$–देवर्षिपूजितः। ७. च भ$_1$–परिरक्षितुम्। ८. च–वीरस्त्वं मायया सह। भ$_1$–एकस्त्वं मायया सह। ९. च भ$_1$–भार्यया शुभया देव्या स मां। १०. च–भोगवंतं। भ$_1$–भागवतं। ११. अ–मधुं च कैटभं चैव दैत्यं हत्वा महाबलम्। भ$_1$–°भकौ दैत्यौ हत्वा मेदोस्थिसंचयात्। १२. च भ$_1$–वर्जे–इमां संमतसंबाधां। १३. च–वर्जे–पुरुषर्षभ। १४. च–पद्मदिव्यार्कसंकाशे। भ$_1$–पद्म दिव्यार्कसदृशं। ब ल$_1$ ल$_3$ प्र–°काशां। १५. च–मात्रतः। १६. भ$_1$–च मां कृत्वा। १७. च–न्यवेशयत्। भ$_1$–न्यवेदयत्। १८. भ$_1$–त्यक्तसंभारस्त्वामवोचं। १९. च–विधेहि। २०. भ$_1$–भूतेभ्यो ये मे वीर्यापहारिणः। २१. भ$_1$–स्वस्थो भव सनातन। २२. भ$_1$–हि सनातनः॥

आदित्यो वीर्य-वान् पुत्रो भ्रातॄणां[1] हर्ष-वर्धनः[1] ।
१०] समुत्-पन्नेषु[2] कार्येषु[2] लोकाऽभावाय[3] कल्पसे[3] ॥१०॥ [१०
स त्वम् उत्-साद्यमानासु प्र-जासु जगतां वर ।
११] रावणस्य वधाऽऽकाङ्क्षी मर्त्य-लोकम्[4] उपाऽऽगतः[4] ॥११॥ [११
दश वर्ष-सहस्राणि दश वर्ष-शतानि च ।
१२] कृत्वा वासस्य[5] समयं[6] स्वयम्[7] एवाऽऽत्मनः[7] पुरा ॥१२॥ [१२
स[8] त्वं मनो-मयः पुत्रः[8] पूर्णाऽऽयुर्[9] मानवेष्व् इह[9] ।
१३] कालस् ते देव देवानां समीपे परि-वर्तितुम् ॥[10]१३॥ [१३
यदि[11] भूयो[12] महा-बाहो प्र-जाम् इच्छस्य् उपाऽऽसितुम्[12] ।
१४] उपाऽऽस्व[13] राम[13] भद्रं ते एवम् आह पिता-महः ॥१४॥ [१४
यदि[14] ते गमने बुद्धिः[14] सुर-लोके[15] जितेन्द्रिय ।
१५] स-नाथा विष्णुना देवा[16] भवन्तु विगत-ज्वराः ॥१५॥ [१५
तथा पिता-महेनोक्तं श्रुत्वा काल-समीरितम् ।[17]
१७] राघवः प्र-हसन् वाक्यं सर्व-संहारम् अब्रवीत् ॥१६॥ [१६
श्रुत्वा[18] मे[19] देव-देवस्य वाक्यम् अद्भुत-विक्रमम्[19] ।
१८] प्रीतिर्[20] हि[20] महती[21] जाता[21] तवाऽऽगमन-सम्भवात् ॥१७॥ [१७
भद्रं तेऽस्तु गमिष्येऽहं[22] यत एवाऽहम् आ-गतः । [१८उ
१९] हृद्-गतो ह्य् असि मे प्राऽऽप्तो न मेऽस्त्य् अत्र वि-चारणा ॥[23]१८॥

---

१. च-कश्यपात् समजायत । भ१-भ्रातॄणां वृद्धिकृच्छिवः । २. भ१-°त्पन्नः प्रकृतिषु । ३. च-लोके साह्याय क° । भ१-लोकभावाय वर्तसे । ४. भ१-°लोकं त्वमागतः । ५. म२-देवेषु । ६. च-नियमं । ७. च-°त्मनस्तथा । भ१-त्रिदशेष्वागतः पुरा । ८. च-स ते मनोगतः कालः । ९. च-पूर्णोऽयं मा° । भ१-पूर्णे चायुषि ते नृषु । १०. च-वर्ज-कालो नरवरश्रेष्ठ समीपमुपवर्तसे । भ१-कालस्तापसरूपेण त्वत्समीपमुपागतः । ११. भ१-ततो । १२. च-वा ते प्रजा राम भूयः श्रद्धां प्रशासितुं । भ१-भूयश्च ते बुद्धिर्यदि राज्यमुपा° । १३. च-प्रशाधि नाथ । भ१-तत्तथा भव । १४. च-अथ वा त्वं जिगमिषुः । भ१-°ने बुद्धिर् । १५. भ१-देवलोके । भ२-स्वर्गलोके । १६. च भ१-वर्ज-लोका । १७. च-श्रुत्वा कालस्य वचनं पितामहस° । भ१-श्रुत्वा पितामहस्यैतद्वाक्यं काल° । १८. च भ१-श्रुतं । १९ भ१-देवाधिदेवस्य वाक्यं तव समीप्सितम् । च रा१-°तद्दर्शनम् । २०. च भ१-प्रीतिश्च । २१. च-परमा जाता । भ१-परमोत्पन्ना । २२. च भ१-गमिष्यामि । २३ अ ल२-नास्ति ॥

मया हि सर्व-कार्येषु देवानां वश-वर्त्तिना ।
२०] स्थातव्यं मायया चैव यथा चाऽऽह पिता-महः ॥१९[१]॥ [१९

इत्यार्षे रामायण उत्तर-काण्डे कालाऽभिगमनं[२] नाम
षडुत्तरशततमः सर्गः ॥ १०६ ॥

---

## [वं-१११]= [सप्तोत्तरशततमः सर्गः] =[दा-१०५]

तथा[१] तयोः कथयतोर्[३] दुर्-वासा मुनि-सत्तमः[४] ।
२१] रामस्य दर्शनाऽऽकाङ्क्षी राज-द्वारम् उपाऽऽगतः ॥[५] १ ॥ [१
सोऽभि-गम्य महाऽऽत्मानं[६] सौमित्रिम् इदम् अब्रवीत्[६] ।
२२] रामं दर्शय मे शीघ्रं कार्यम् आत्यन्तिकं[७] हि मे[७] ॥ २ ॥ [२
ऋषेस् तु वचनं श्रुत्वा लक्ष्मणः[८] पर-वीर-हा[८] ।
२३] अभि-वाद्य महाऽऽत्मानं वाक्यम्[९] एतद् उवाच ह[९] ॥ ३ ॥ [३
किं कार्यं ब्रूहि भग-वन् केनाऽर्थः किं करोम्य्[१०] अहम्[१०] ।
२४] व्य्-अग्रो[११] हि[११] राघवो[१२] ब्रह्मन् मुहूर्तं प्रति-पालय[१३] ॥ ४ ॥ [४
तच् छ्रुत्वा ऋषि-शार्दूलः[१४] क्रोधेन कलुषी-कृतः ।
२५] उवाच लक्ष्मणं वाक्यं निर्-दहन्न् इव चक्षुषा[१५] ॥ ५ ॥ [५
२६पू] अस्मिन् क्षणेन सौमित्रे रामाय प्रति-वेदय ।[१६] [६उ
वि-षयं च पुरं चैव शपिष्ये राघवं तथा ।
२७] भरतं च[१७] त्वया सार्धं युष्माकं या च सं-ततिः[१७] ॥ ६ ॥ [७
२८पू] न च शक्ष्याम्य् अहं भूयो मन्युं धारयितुं हृदि । [८पू
N] एतद् वाक्यं च मे श्रुत्वा शीघ्रं दर्शय राघवम् ॥[१८]७॥ [N

---

१. अ ल$_2$–नास्ति । २. भ$_1$ भ$_2$–कालवाक्य । ३. च–कथां कथयतोरेवं । ४. च–सुमहामुनिः । भ$_1$–भगवानृषिः । ५. च–रामदर्शनमाकांक्षन्राजद्वारमुपागमत् । ६. च–तु सौमित्रिमुवाच मुनिसत्तमः । ७. भ$_1$–आत्यायिकं मम । ८. भ$_1$–सौमित्रिर्वाक्यमब्रवीत् । ९. भ$_1$–मुनिं ज्वलनतेजसं । १०. भ$_1$–वदामि ते । ११. च भ$_1$–व्यग्रोऽसौ । १२. भ$_1$–पार्थिवो । १३. च–संप्रतीक्षतां । भ$_1$–च प्रतीक्षतां । १४. भ$_1$–मुनिराविग्नः । १५. च–पावकः । १६. अतः परमधिकः पाठः—च–अन्यथा क्रियमाणे तु वाक्यं वाक्यविदां वर । १७. च–च भवंतं च युष्माकं चैव संततिं । भ$_1$–त्वां च सौमित्रे युष्माकं चैव संततिं । १८. च भ$_1$–नास्ति ॥

२८उ] तच् छ्रुत्वा वज्र-सङ्काशं[1] वाक्यं तस्य[2] महा-मुनेः[2] ।
चिन्तयामास[3] मनसा[3] तस्य[4] वाक्यस्य निश्-चयम्[4] ॥ ८ ॥ [८उ

२९] एकस्य मरणं मेऽस्तु मा भूत् सर्व-विनाशनम् ।
इति बुद्ध्या स निश्-चित्य राघवाय न्य्-अवेदयत् ॥[5] ९ ॥ [९

३०] लक्ष्मणस्य वचः श्रुत्वा रामः कालं वि-सृज्य[6] च[6] ।
निर्-गत्य[7] त्वरितं राजा[7] अत्रेः पुत्रं ददर्श ह ॥१०॥ [१०

३१] सोऽभि-वाद्य महाऽऽत्मानं ज्वलन्तम् इव तेजसा ।
किं कार्यम् इति काकुत्स्थः कृताऽञ्जलिर्[8] अभाषत[8] ॥११॥ [११

३२] तद् वाक्यं राघवेणोक्तं श्रुत्वा मुनि-वरः प्र-भुः ।
प्रत्य्-आह रामं दुर्-वासाः श्रूयतां धर्म-वत्सल ॥१२[9]॥ [१२

३३] अद्य वर्ष-सहस्रस्य सम्-आप्तिर् मम राघव ।[10]

३४उ] सोऽहं[11] भोजनम्[11] इच्छामि यथा-सिद्धं तु[12] वाऽनू-अघ[12] ॥१३॥[१३
तच् छ्रुत्वा वचनं रामो हर्षेणाऽभूत्[13] समन्व्-इतः[13] ।

३५] भोजनं तस्य[14] सं-सिद्धं यथा-सुखम्[14] उपाऽहरत् ॥१४॥ [१४
स भुक्तवान् द्विज-श्रेष्ठस् तद् अन्नम् अमृतोपमम् ।

३६] साधु[15] रामेति सं-भाष्य[15] स्वम् आ-श्रमम् उपाऽगमत् ॥१५॥ [१५
तस्मिन् क्षणे महा-भागे गते[16] ब्रह्मर्षि-सत्तमे[16] ।

३७] सं-स्मरन् काल-वाक्यं[17] तु[17] रामो[18] दुःखं समाऽविशत्[18] ॥१६॥[१६
स दुःखेन तु सं-तप्तस् तत् स्मृत्वा काल-भाषितम् ।[19]

३८] अवाङ्-मुखो दीन-मना व्या-हर्तुं न शशाक ह ॥१७॥ [१७

---

१. च भ$_1$ रा$_1$ ल$_1$–घोरस° । २. च–अद्भुतदर्शनं । भ$_1$ रा$_1$–°हात्मनः । ३. च–चिंतयानः सुम° । भ$_1$–संचिंतयित्वा सौमित्रिस् । ४. च–सहसा व्यथितेंद्रियः । भ$_1$–°स्य निर्णयं । ५. भ$_1$–इत्येवं निश्चयं कृत्वा रामाय प्रत्यवेदयत् । ६. च–व्यसर्जयत् । ७. च–विनिष्पत्यासनात्तूर्णं । ८. भ$_1$–मुनिर्वाक्यमथाब्रवीत् । ९. च भ$_1$–एवमुक्तस्तु रामेण अत्रिपुत्रो महायशाः । दुर्वासाः स मुनिश्रेष्ठो राघवं वाक्यमब्रवीत् । १०. अतः परमधिकः पाठः—च–क्षुधितो भोक्तुमन्विच्छन् त्वामायातो रघूत्तम । ११. च–स चाहं भोक्तुम् । १२. च भ$_1$–वर्जं–तथा तथा । १३. च–हर्षेणाभिपरिप्लुतः । भ$_1$–वर्जं–हर्षमोहसमन्वितं । १४. च–द्विजमुख्याय यथासिद्धं । १५. भ$_1$–सुप्रीतः परितुष्टश्च । १६. च–प्रीतो राघवं ततः । १७. च–वाक्यानि । १८. च भ$_1$–ततो दुःखमुपेयिवान् । १९. च–दुःखेन सुसंतप्तः स्मृत्वा तं नियमं कृतं ॥

ततो बुद्ध्या विनिश्-चित्य काल-वाक्यं[1] महा-मनाः[1] ।
३९] न चैतद् अस्तीऽति चोक्त्वा स तूष्णीम् आसीन् महा-यशाः[2] ॥१८॥ [१८

इत्यार्षे रामायण उत्तर-काण्डे दुर्वाससोऽभिगमनं[3] नाम सप्तोत्तरशततमः सर्गः ॥१०७॥

---

## [वं-११२]= [ अष्टोत्तरशततमः सर्गः ] =[दा-१०६]

अवाङ्-मुखं तथा दीनं दृष्ट्वा सोमम्[4] इवाऽऽप्लुतम्[5] ।
१] राघवं लक्ष्मणो वाक्यं हृष्टो भ्राता[6] तदाऽब्रवीत्[6] ॥ १ ॥ [१

तं तथोद्विग्न-मनसं ध्यान-मूक-त्वम् आ-स्थितम् ।
N] सोच्छ्वास-हृदयं साऽस्रं निन्द्यमानम् अ-चेतसम्[7] ॥ २[7] ॥ [N

न सं-तापं महा-बाहो मद्-अर्थं[8] कर्तुम् अर्हसि ।
२] पूर्व-निर्माण-वद् वा हि कालस्य गतिर् ईदृशी ॥ ३ ॥ [२

जहि सौम्य वि-स्रब्धः प्रति-ज्ञां परि-पालय[9] ।
३] हीन-प्रतिज्ञे काकुत्स्थ त्वय्य्[10] अहं नरकं व्रजे[10] ॥ ४ ॥ [३

यदि राजन् मम प्रीतिर् यद्य् अनु-ग्राह्यता मयि ।
४] जहि मां निर्वि-शङ्कस् त्वं धर्मं[11] वर्धय राघव[11] ॥ ५ ॥ [४

लक्ष्मणेनैव उक्तस् तु रामः प्र-ज्वलितेन्द्रियः[12] ।
५] मन्त्रिणः स्वान् समा-हूय वसिष्ठं च पुरो-धसम् ॥[13] ६ ॥ [५

अब्रवीत् तद् यथा-वृत्तं तेषां मध्ये नराऽधिपः ।
६] दुर्-वाससोऽभि-गमनं प्रति-ज्ञा या च तापसे ॥ ७ ॥ [६

तच् छ्रुत्वा मन्त्रिणः सर्वे सोपाध्यायाः स-नैगमाः ।
७] पुरो-हितो[14] वसिष्ठश् च राघवं वाक्यम्[14] अब्रुवन्[15] ॥ ८ ॥ [७

दृष्टम् एतन् महा-बाहो क्षयं[16] ते लोम-हर्षणम्[16] ? ।
८] लक्ष्मणेनेह काकुत्स्थ विना-भावस् तवाऽन्-अघ ॥[17] ९ ॥ [८

---

१. भ$_1$–स तं लक्ष्मणमेव च । च–°क्यं विर्चिंत्य च । अ–°क्यं महात्मनः । २. अ भ$_2$ ब ल$_2$ ल$_3$ प्र–महामनाः । ३. च–दुर्वासस आगमनं । भ$_1$–दुर्वासावाक्यं । ४. च–शोकपरिप्लुतं । ५. भ$_1$–दीनमथाग्र° । ६. भ$_1$–प्रियाप्रियौ । ७. च–नास्ति । ८. च भ$_1$–मत्कृते । ९. अ ल$_2$–वर्ज-प्रतिपा° । भ$_1$–पालय स्वकां । १०. च–व्रजेद्धि नरकं ध्रुवं । ११. च–सत्यं पालय सुव्रत । १२. च–प्रव्यथिते° । १३. भ$_1$–मंत्रिणश्च समानाय्य वसिष्ठं च पुरोहितं । १४. भ$_1$–वसिष्ठश्च महातेजा वाक्यमेतद् । १५. अ च ल$_2$ प्र–अब्रवीत् । भ$_1$–उवाच ह । १६. च–नाक्षमंस्तेमहर्षयः । १७. च–°णेन विनाभावाद्धि° । भ$_1$–°न वियोगश्च तव राम महायशाः । प्र–°भावस्तु राघव ॥

त्यजैनं[1] बल-वान् कालः प्रति-ज्ञां परि-पालय[2] ।[3]
९] वि-नष्टायां प्रति-ज्ञायां धर्मो हि वि-लयं व्रजेत् ।।[4]१०।। [९
ततो धर्मे प्र-णष्टे[5] तु त्रैलोक्यं स-चराऽचरम् ।
१०] स-देवर्षि-गणं सर्वं वि-नश्येत न सं-शयः ।।११।। [१०
स त्वं पुरुष-शार्दूल त्रैलोक्यस्याऽभि-पालनात् ।
११] लक्ष्मणस्य परि-त्यागात् सर्वं[6] सत्यं कुरुष्व हि[7] ।।१२।। [११
१२पू] जानीमस् त्वां महाऽऽत्मानं भ्रातृषु स्नेह-वत्सलम्[7] ।[8]
१३उ] त्वयि हीन-प्रतिज्ञे तु लक्ष्मणोऽपि[9] निर्-अर्थकः ।।१३।। [N
प्रत्य्-अक्षं ते महा-बाहो प्रति-ज्ञां परि-रक्षता ।
१४] त्यक्तो दश-रथेन त्वं वन-वासाय[10] पार्थिव[10] ।।१४।। [N
त्वत्-कृतेनैव शोकेन स्वर्गं दश-रथो गतः ।[11]
१५] कल्याण-वृत्तः कल्याणः सत्य-वक्ता महा-बलः ।।[12]१५।। [N
तथा त्वम् अपि दुर्-धर्ष प्रति-ज्ञां प्रति-पालय[13] ।[12]
१६] त्रैलोक्यस्य हिताऽर्थाय लक्ष्मणं त्यक्तुम् अर्हसि ।।१६।। [N
तेषां[14] तु समवेतानां[14] वाक्यं धर्माऽर्थ-संहितम् ।
१७] श्रुत्वा तु पर्षदो मध्ये रामो लक्ष्मणम् अब्रवीत् ।। १७ ।। [१२
वि-सर्जये त्वां सौमित्रे मा भूद् धर्म-विपर्ययः[15] ।[16]
१८] परि-त्यागो[17] वधो वेति[17] साधूनाम् उभयं समम् ।।१८।। [१३
राघवस्य वचः श्रुत्वा बाष्प-व्याकुलितेक्षणः ।[18]
१९] लक्ष्मणः सम्प्र-णम्यैनं त्वरितः सरयूं ययौ ।।[19]१९।। [१४

---

१. च-त्यजेमं । २. भ$_1$-मा विचालय । भ$_2$ ल$_2$ ल$_3$ प्र-प्रतिपा° । ३. च-अत आरभ्य १३-शश्लोकपूर्वार्धं यावन्नास्ति । ४. भ$_1$-प्रतिज्ञायां तु मोघायां धर्मस्ते विफलो भवेत् । ५. भ$_1$-विनष्टे । ६. अ-सर्वं त्रातुं कु° । भ$_1$-त्रैलोक्यं त्रातुमर्हसि । ७. भ$_1$-स्नेहवशानुगं । ८. अतः परमधिकः पाठः—च भ$_1$-देववाक्यमिदं चापि ततस्त्वां त्वरयामहे । नास्य दोषेण काकुत्स्थ प्रतिज्ञां हातुमर्हतः ।। ९. च-वर्जे-राघवार्थो । १०. भ$_1$-°वासे च दीक्षितः । ११. अतः परमधिकः पाठः—च-वर्जे-नैव त्वं वर्तसे राम प्रतिज्ञापरिपालने । स त्वं पुरुषशार्दूल मेरुमंदरसारवान् । १२. भ$_1$-नास्ति । १३. रा$_1$ ब ल$_1$ ल$_3$-परिपा° । १४. च-तन्मंत्रिणां समेतानां । १५. भ$_1$-धर्मस्य विप्लवः । १६. अतः परमधिकः पाठः—भ$_1$-गच्छ लक्ष्मण शीघ्रं त्वं मा भूद्धर्मविपर्ययः। १७. भ$_1$-त्यागो वापि वधो वापि । १८. च-रामस्य वचनं श्रुत्वा स तु व्याकुललोचनः । भ$_1$-रामेण व्याहृतं वाक्यं श्रुत्वा व्याकुलितेन्द्रियः । १९. च-लक्ष्मणं त्वरितं प्रायात्स्वगृहं न विवेश ह ।।

स गत्वा त्वरया[1] युक्त[1] उप-स्पृश्य कृताऽञ्जलिः ।
२०] नि-गृह्य सर्व-स्रोतांसि श्वसनं[2] न मुमोच[2] ह ॥२०॥ [१५
यत्[3] तद् अ-क्षरम् अ-व्यक्तं[3] परं ब्रह्म सनातनम् । [१६पू
२१] पदं तद् वासुदेवाऽऽख्यम् आत्मानं सोऽभ्य्-अचिन्तयत् ॥[4]२१॥[N
निरुच्छ्वास-गतं वीरं शक्र-सोमाऽप्सरो-गणाः[5] ।[5]
२२] देवाः सर्षिगणाः सर्वे दिव्यैः पुष्पैर् अवाऽकिरन् ॥[6]२२॥ [१६उ
अ-दृश्यं[7] वि-बुधैश् चैव[8] स-शरीरं स[9] वासवः ।
२३] गृहीत्वा लक्ष्मणं शक्रो[9] नाक-पृष्ठम्[10] उपाऽगमत्[10] ॥२३॥ [१७
ततो विष्णोश् चतुर्-भागम्[11] आ-गतं सुर-सत्तमाः ।
२४] दृष्ट्वा च मुदिताः सर्वे महर्षि-गण-पूजितम् ॥[12]२४॥ [१८

इत्यार्षे रामायण उत्तर-काण्डे लक्ष्मण-परित्यागो[13]
नामाष्टोत्तरशततमः सर्गः ॥ १०८ ॥

---

## [वं-११३ ]= [नवोत्तरशततमः सर्गः] =[दा-१०९

वि-सृज्य लक्ष्मणं रामो दुःख-शोक-समन्वितः ।
१] पुरो-धसं[14] मन्त्रि-गणं[14] नैगमांश् चेदम् अब्रवीत् ॥ १ ॥ [१
अद्य राज्येऽभि-षेक्ष्यामि[15] भरतं भ्रातृ-वत्सलम्[16] ।
२] अयोध्यायाः[17] पतिं शूरं[17] ततो यास्याम्य् अहं वनम् ॥ २ ॥ [२
प्र-वेशयत सं-भारान्[18] न स्यात् कालाऽत्ययो महान्[19] ।
३] अद्यैवाऽहं गमिष्यामि लक्ष्मणस्य पदाऽनुगः ॥ ३ ॥ [३
तच्[20] छ्रुत्वा राघवेणोक्तं[20] सर्वाः[21] प्र-कृतयो भृशम्[21] ।
४] शिरोभिः[22] प्र-णता[22] भूमौ गत-सत्त्वा[23] इवाऽभवन्[23] ॥ ४ ॥ [४

१. च भ$_1$–सरयूतीरं । २. च भ$_1$–नोच्छ्वासं प्रमु° । ३. च–अन्तःश्वसनयुक्तं तु । ४ भ$_1$ प्र–वर्जं–नास्ति । ५ अ–सहस्रशोप्सरोगणाः । भ$_1$–सशक्राप्सरोगणं । ६. च–देवर्षिगणाः सर्वे पुष्पैरभ्यकिरंस्तदा । ७. अ–अदृश्यो विबुधैः कैश्चित् । च–°श्यं मनुजैश्चैव । भ$_1$ भ$_2$ रा$_1$ ल$_1$ प्र–°धैः कैश्चित् । ८. च–च । ९. च–हृष्टो । १०. च–वर्जं–गृहं संप्रविवेश ह । भ$_1$–मेरुपृष्ठमुपागमत् । ११. अ–महाभागम् । १२. च–प्रहृष्टमनसः सर्वे पूजयामासुरंजसा । भ$_1$–महर्षयः सर्वे लक्ष्मणं प्रत्यपूजयन् । १३. भ$_2$–लक्ष्मणविसर्जनं । १४. च–वसिष्ठं मंत्रिणश्चैव । १५. भ$_1$–°षिंचामि । १६. च–धर्मंव° । १७. च–अयोध्यायां महाबाहुं । १८. अ ल$_2$ ल$_3$–संरंभान् । १९. च–यथा । २०. च–एवं ब्रुवति काकुत्स्थे । २१. अ ल$_2$–न स्यात्कालात्ययो महान् । च–°यस्तथा । २२. च–विषण्णाः पतिता । भ$_1$–तदा निपतिता । २३. च भ$_1$–छिन्नमूला इव द्रुमाः ॥

भरतश् च वि-संज्ञोऽभूच्[1] छ्रुत्वा रामस्य भाषितम् ।
५] राज्यं वि-गर्हयामास[2] वचनं चेदम् अब्रवीत् ॥ ५ ॥ [५
सत्येनाऽहं शपे राजन् स्वर्ग-लोकेन[3] चैव हि[3] ।
६] न[4] कामये यथा राज्यं[4] त्वां[5] विना[5] रघु-नन्दन ॥ ६ ॥ [६
इमौ कुश-लवौ राजन्न् अभि-षिञ्चस्व[6] पार्थिव[6] ।
७] कुशं कोसल-राजानम् उत्तरेषु तथा लवम् ॥[7] ७ ॥ [७
शत्रु-घ्नस्य[8] तु गच्छन्तु दूता विस्तर-वादिनः[9] ।
८] इदं गमनम् अस्माकं स्वर्गायाऽऽख्यात[10] मा चिरम्[10] ॥ ८ ॥ [८
भरतस्य[11] वचः श्रुत्वा[11] प्र-कृतीस्[12] ताः सु-दुःखिताः[12] ।
९] दृष्ट्वा[13] चाऽधो-मुखाः सर्वा[13] वसिष्ठो वाक्यम् अब्रवीत् ॥ ९ ॥ [९
सर्वा[14] इमा वत्स राम[14] भूमौ प्र-कृतयो[15] गताः ।
१०] विद्वत्-सुहृद्-गतं कार्यं देव आ-ज्ञापय त्व् इमाः ॥[16] १० ॥ [१०
वसिष्ठस्य तु वाक्येन[17] समुत्थाय जनं ततः[17] ।
११] किं करोमीऽति काकुत्स्थः[18] प्र-जा वचनम्[18] अब्रवीत् ॥ ११ ॥ [११
ततः प्र-कृतयः[19] सर्वा[19] रामम्[20] आहुः सु-दुःखिताः[20] ।[21]
१२] गच्छन्तम् अनु-गच्छामो राम[22] त्वं यत्र गच्छसि[22] ॥ १२ ॥ [१२
एषा नः परमा प्रीतिर् एष धर्मः सनातनः ।
१३] हृद्-गता नः परा बुद्धिस् तवाऽनु-गमने दृढा ॥ १३ ॥ [१५

---

१. च भ$_1$–विषण्णो° । २. च–वर्ज–च ग° । ३. भ$_1$–°के तवानघ । ४. भ$_1$–कामयेहं न राज्यं हि । ५. च–विना हि । ६. च–°ञ्च परंतप । भ$_1$–°स्व राघव । ७. च भ$_1$–कोशलायां कुशं वीरमुत्तरेषु लवं नृपं । अत: परमधिकः पाठः—च भ$_1$–वर्ज–इति तस्य वचः श्रुत्वा रामो वचनमब्रवीत् ॥ ८. च भ$_1$ भ$_2$–वर्ज–भरतस्य । ९. भ$_1$–निष्ठुर° । १०. च–गत्वा शंसंतु मा चिरं । भ$_1$–श्रावयंतु स्वरान्विताः । ११. च भ$_1$–वर्ज–तच्छ्रुत्वा भरतेनोक्ता । १२. च–वर्ज–गताः सर्वाः सु° । भ$_1$–गताश्च दुःखसमन्विताः । १३. च–वर्ज–प्रकृतीर्दुःखभारार्ता । भ$_1$ प्र–प्रकृतीः पतिता दृष्ट्वा । १४. च भ$_1$–वत्स राघव पश्येमा । १५. भ$_1$–हि प्रकृतीर् । १६. च–विद्यासमीप्सितं काममासां मा विप्रियं कृथाः । भ$_1$–सर्वेषामीप्सितं चैव प्रसादं कर्तुमर्हसि । १७. च भ$_1$–तद्वाक्यमुत्थाप्य प्रकृतीजनं । १८. च भ$_1$–सस्नेहो राघवो वाक्यम् । १९. च–प्रणताः प्रत्यूचुः । २०. च–सांजलिप्रग्रहास्तथा । भ$_1$–प्रत्यूचुः प्रांजलि स्थिताः । २१. अत: परमधिकः पाठः—च भ$_1$–वर्ज–गमने कृतसंकल्पं रामं दशरथात्मजं । २२. च भ$_1$–येन गच्छसि राघव ॥

पौरेषु यदि ते स्नेहो यद्य् अनुग्राह्य-ता नृ-प ।
१४] स-पुत्र-दाराः काकुत्स्थ[1] त्वाऽनु-गच्छाम[2] सत्-पथम् ॥१४॥ [१३
तपो-वनं वनं[3] वाऽपि स्वर्गं वा जयतां वर ।
१५] वयं ते यदि न त्याज्याः सर्वान् नयतु[4] नो[4] भवान् ॥१५॥ [१४
१६पू] तेषां स निश्-चयं[5] ज्ञात्वा कृताऽन्तं[6] चाऽन्ववेक्ष्य हि[6] ।
N] पौराणां[7] दृढ-भक्तिं च[7] बाढम् इत्य् आह[8] राघवः[8] ॥१६॥
N] एवं विनिश्-चयं कृत्वा[9] तस्मिन्न् अहनि राघवः[9] । [१६
कौसलेषु कुशं वीरम् उत्-तरेषु तथा लवम् ।[10]
१८] अभ्य्-अषिञ्चन्[11] महाऽऽत्मा ताव् उभाव् एव[11] कुशीलवौ ॥१७॥[१७
१६उ] अष्टौ रथ-सहस्राणि सहस्रं[12] चैव दन्तिनाम् ।
षष्टिम् अश्व-सहस्राणि[12] एकैकाय[13] ददौ[13] बलम् ॥१८॥ [१९
१७] बहु-रत्न-धनौ[14] तौ च[15] हृष्ट-पुष्ट-जनाऽऽकुलौ[15] ।
N] स्व-पुरे प्रेषयामास भ्रातरौ च कुशीलवौ ॥[16]१९॥[२०
अभि-षिच्य तु तौ वीरौ[17] प्र-स्थाप्य च पुरे ततः[17] ।
१९] दूतान् सम्प्रेषयामास शत्रु-घ्नाय[18] महाऽऽत्मने[18] ॥२०[19]॥[२१

इत्यार्षे रामायण उत्तर-काण्डे कुशलवाऽभिषेको[20] नाम
नवोत्तरशततमः सर्गः ॥ १०९[21]॥

---

## [बं-११२]= [ दशोत्तरशततमः सर्गः ] =[दा-१०८]

ते दूता राम-वाक्येन[22] चोदिता लघु-विक्रमाः ।
२०] अभ्य्-अयुर् मथुरां शीघ्रं न[23] च मार्गं तदाऽवसन्[23] ॥ १ ॥ [१

---

१. च–राजंस्त्वां । भ$_1$–°त्स्थम् । २. अ ब ल$_1$ ल$_2$ ल$_3$ प्र–चानु° । च भ$_1$–अनुग° । ३. च रा$_1$ ल$_1$–वर्जे–वरं । ४. अ ल$_2$–राम ततो । अ–नय ततो । ५. रा$_1$ ब ल$_1$ ल$_3$ प्र–निश्चितं । ६. च–कृतांतस्य च तद्बलं । भ$_1$–कृतं तेभ्यश्च तद्वचः । ७. च–भक्तं पौरजनं रामो । भ$_1$–भक्तं पौरजनं सर्वं । ८. च–एव सोऽब्रवीत् । ९. भ$_1$–कृत्वाहनि पार्थिवे वै शुभे । १०. च भ$_1$–कुशं प्रस्थापयद्विंध्यमुत्तरां कोशलां लवं । ११. भ$_1$–अभिवाद्य महात्मनं गतावेवं । १२. च–नास्ति । १३. च–प्रत्येकं दत्तवान् । १४. च भ$_1$–बहुरत्नौ बहुधनौ । १५. च–°नावृतौ । भ$_1$–°जनौ तथा । १६. च भ$_1$ ब ल$_3$ प्र–नास्ति । १७. च भ$_1$–वीरावुभौ प्रस्थाप्य राघवः । १८. भ$_1$–शत्रुघ्नस्य महात्मनः । १९. अतः परमधिकः पाठः—प्र–अन्वयाद्य यथाशीघ्रमन्वयादुच्यतां तथा ॥ २०. भ$_1$–कुमारकुशीलवाभिषेचनं । २१. च–सर्गसमाप्तिर्न दृश्यते । २२. च भ$_1$–कोशलेंद्रेण । २३. अ–वासं दुर्गेषु चाव° ॥

ततस् त्रिभिर् अहो-रात्रैः सम्प्राऽऽप्ता मथुरां पुरीम् ।
२१] शत्रु-घ्नाय[1] यथा-वृत्तम् आ-चख्युः[2] सर्वम् एव तत्[3] ॥ २ ॥ [२
लक्ष्मणस्य परि-त्यागं प्र-याणं[4] राघवस्य च ।
२२] पुत्रयोर् अभि-षेकं च पौराऽभिगमनं तथा ॥[5] ३ ॥ [३
कुशस्य नगरी रम्या विन्ध्य-पर्वत-रोधसि[6] ।
२३] कुशा-वतीऽति[7] सा[8] नाम्ना कृता रामेण धीमता[9] ।
श्राविता[10] तु[11] पुरी रम्या श्रावस्ती[12] तु लवस्य वै[13] ॥ ४ ॥ [४
२४] अयोध्यां चैव वि-जनां भरतं चाऽनु-गामिनम्[10] । [५पू
२५उ] एतत् सर्वं[11] नि-वेद्याऽऽशु शत्रु-घ्नाय महाऽऽत्मने ।[11]
वि-रेमुस् ते ततो दूतास् त्वर वीरेति चाऽब्रुवन् ॥[12] ५ ॥ [६
२६] तच्छ्रुत्वा घोर-सङ्काशं कुल-क्षयम् उप-स्थितम् ।
प्र-कृतीस् तु समा-नीय काञ्चनं च पुरो-धसम्[13] ॥[14] ६ ॥ [७
२७] तेषां[15] सर्वं यथा-तत्त्वम् आ-ख्याय[15] रघु-नन्दनः ।
आत्मनश् च विपर्य्-आसं भविष्यं भ्रातृभिः सह ॥ ७ ॥ [८
२८] ततः पुत्र-द्वयं वीरः सोऽभ्य्-अषिञ्चन्[16] नराऽधिपः ।
सु-बाहुर् मथुरां लेभे शत्रु-घाती च वैदिशम् ॥ ८ ॥ [९
२९] द्वि-धा कृत्वा तु तां सेनां माथुरीं पुत्रयोर् द्वयोः ।
३०पू] धन-धान्य-समायुक्तौ स्थापयामास पार्थिवौ[17] ॥ ९ ॥ [१०
N] ततो[18] वि-सृज्य[18] राजानं वैदिशे शत्रु-घातिनम् ।
३०उ] जगाम[19] त्वरितोऽयोध्यां[19] रथेनैकेन राघवः ॥१०॥ [११
स ददर्श महाऽऽत्मानं[20] ज्वलन्तम् इव तेजसा[21] ।
३१] क्षौम-शुक्लाऽम्बर-धरं मुनिभिः सार्धम् अ-क्षयैः ॥ ११ ॥ [१२

---

१. भ$_1$–अभिप्रायं । २. च भ$_1$–सर्वं तस्याचचक्षिरे । ३. च भ$_1$–प्रतिज्ञां । ४ च भ$_1$–अनुरागं च पौराणामभिषेकं च पुत्रयोः । ५ च–°तसानुषु । भ$_1$–विंध्यशैलस्य सानुषु । ६. च–°ती च । भ$_2$–°ती तु । ७. च–या नाम्ना विख्याता सर्वतो दिशं । भ$_1$–विख्याता नाम्ना तद्वैदिकं महत् । ८. च भ$_1$–लवस्य च । ९. च भ$_1$–श्रावती लोकविश्रुता । १०. च भ$_1$–च सहानुगं । ११. अतः परमधिकः पाठः—भ$_1$–वर्जं–शत्रुघ्नमब्रुवन्भूयस्त्वरयस्व महारथं । १२. च ल$_1$–नास्ति । १३. च–पुरोहितं । १४. भ$_1$–नास्ति । १५. भ$_1$–यथातत्त्वमिदं तेषामाख्याति । १६. भ$_1$–अभिषिच्य । १७. भ$_1$–तौ सुतौ । १८. भ$_1$–ततः प्रस्थाप्य । १९. भ$_1$–अयोध्यां प्रययौ शीघ्रं । २०. च–ततो रामं । २१. च–पावकं ॥

सोऽभि-वाद्य ततो रामं प्राऽञ्जलिः संयतेन्द्रियः[1] ।
३२] उवाच वाक्यं धर्म-ज्ञो धर्मम् एवाऽनु-चिन्तयन्[2] ॥१२॥ [१३
अभि-षिच्य सुतौ वीरौ यथाऽऽज्ञप्तं तथा वि-भो ।[3]
३३] तवाऽनु-गमने राजन् विद्धि मां कृत-निश्चयम् ॥१३॥ [१४
न चाऽहम्[4] अस्मिन् वक्तव्यः[4] कर्तव्यं तव शासनम् ।
३४] त्यक्तुं[5] नाऽर्हसि मां वीर भक्ति-मन्तं[5] विशेष-तः ॥१४॥ [१५
तस्य तां बुद्धिम् अ-क्लीबां वि-ज्ञाय रघु-नन्दनः ।
३५] बाढम् इत्य् एव शत्रु-घ्नं रामो[6] वाक्यम् उवाच ह[6] ॥१५॥ [१६
तच्[7] छ्रुत्वा तादृशं सर्वे[7] वानराः काम-रूपिणः ।
३६] ऋक्ष-राक्षस-सङ्घाश् च[8] समा-पेतुः[9] सहस्र-शः[9] ॥१६॥ [१७
देव-पुत्रा नाग-सुता गन्धर्वाणां च ये सुताः ।[10]
३७] राम-क्षयं विदित्वा ते सर्व[11] एव समा-गताः[11] ॥[12]१७॥ [१९
ते रामम् अभि-वाद्योचुः[13] सर्व एव समा-गताः[13] ।
३८] तवाऽनु-गमने राजन् सम्प्राऽऽप्ताः स्म इहाऽन्-अघ[14] ॥१८॥ [२०
यदि राम विनाऽस्माभिर् गच्छेथाः पुरुषर्षभ ।
३९] सर्वे[15] दण्डम् इवोद्-यम्य[15] त्वया स्युर् विनि-पातिताः ॥[16]१९॥ [२१
श्रुत्वा तु वचनं तेषाम् ऋक्ष-वानर-रक्षसाम् । [N
४०] वि-भीषणम् अथोवाच मधुरं[17] श्लक्ष्णया गिरा ॥२०॥
४१पू] यावत् प्रजा धरिष्यन्ति तावद् राजा वि-भीषणः ।
N] राक्षसानां महा-वीर्यो भविष्यति वि-भीषणः ॥[18]२१॥ [२७

---

१. भ$_1$–पुरुषस्ततः । २. भ$_1$–°नुपालय । ३. च–कृतांजलिकं पुत्राभ्यां राजन्राघवनंदनः । भ$_1$–श्रुत्वाभिषेकं नृपयोर्हृष्टो राघववर्धनः । ४. भ$_1$–च वारयितव्योऽस्मिन् । ५. च–विहन्यमानं नेच्छामि मद्विधानां । ६. च–राघवो वाक्यमब्रवीत् । भ$_1$–रामो वै वाक्यमब्रवीत । ७. च–तस्य वाक्यस्य गाथांते । भ$_1$–अथ वाक्यस्य तस्यांते । ८. भ$_1$–ऋक्षा गोपुररक्षांसि । ९. च भ$_1$–समुत्पेतुरनेकशः । १०. च–°पुत्रा मुनिसुता ये तदर्थं तु जज्ञिरे । भ$_1$–देवगंधर्वपुत्राश्च ऋषिपुत्राश्च वानराः । ११. रा$_1$ ल$_1$–ततो राममुपागमन् । १२. अ भ$_2$ ब ल$_2$ ल$_3$ प्र–नास्ति । १३. च भ$_2$ ल$_1$–वर्जं–अनुसृत्योचुः सर्वे वानरयूथपाः । १४. च–महौजसः । १५. च–मम दंडं समुद्यम्य । १६. भ$_1$–सर्वे खलु हताः सौम्य दंडेन महता नृप । १७. च भ$_1$–राघवः । १८. च भ$_1$–नास्ति ॥

४१उ] कारयन्[1] सु-महद्[1] राज्यं लङ्कां त्वं पालयिष्यसि ।[2] [N
४२उ] प्र-जाः[3] संरक्ष[3] धर्मेण नोत्-तरं वक्तुम्[4] अर्हसि ॥२२॥ [२९उ
तम् एवम् उक्त्वा काकुत्स्थो हनू-मन्तम् अथाऽब्रवीत् ।
४३] वायु-पुत्र चिरं जीव मा प्रति-ज्ञां वि-लोपय[5] ॥२३॥ [३३
यावल् लोका धरिष्यन्ति मत्-कथा वा नरर्षभ ।
४४] तावत् त्वं धारयन् प्राणान् प्रति-ज्ञां परि-पालय ॥२४[6]॥ [३४
मैन्दश् च द्वि-विदश् चैव ह्य् अमृत-प्राऽऽशिनाव् उभौ ।[7]
४५] यावल् लोका धरिष्यन्ति तावद् एतौ धरिष्यतः ॥२५॥ [N
पुत्राः पौत्राश् च येऽस्माकं तान्[8] रक्षन्त्व् इह[8] वानराः ।
४६] अतस् ते व्या-हरिष्यन्ति न चोर्ध्वं मानुषीं गिरम् ॥[9]२६॥ [N
एवम् उक्त्वा तु काकुत्स्थः सर्वांस् तान् ऋक्ष-राक्षसान् ।
४७] मया सार्धं प्र-यातेति वानरान् राघवोऽब्रवीत् ॥[9]२७॥ [३८

इत्यार्षे रामायण उत्तर-काण्डे विभीषण-निवर्तनं[10] नाम
दशोत्तरशततमः सर्गः ॥ ११० ॥

---

## [वं-११४] = [एकादशोत्तरशततमः सर्गः] = [दा-१०६]

प्र-भातायां तु शर्वर्यां पृथु-वक्षा महा-यशाः ।
१] रामः कमल-पत्राऽक्षः पुरो-धसम् अथाऽब्रवीत् ॥ १ ॥ [१
अग्नयो[11] मे व्रजन्त्व्[11] अग्रे दीप्यमानाः[12] समन्त-तः[12] ।
२] वाजपेयानि पात्राणि शोभयन्तु[13] महा-पथम्[13] ॥[14]२ ॥ [२
ततो वसिष्ठो नृ-पतेः सर्वं तद्[15] अ-विशेषतः[15] ।
३] चकार विधि-वद् धोमं ततः प्रास्थानिकं वि-धिम् ॥ ३ ॥ [३

---

१. च—राक्षसेषु म° । भ$_1$—कुर्वन्सुविमलं । २. अतः परमधिकः पाठः—च भ$_1$ प्र-शापितस्त्वं सखित्वेन न चेत्कुर्याद्वचो मम । ३. च—राक्षसान्रक्ष । ४. च भ$_1$ भ$_2$—वर्ण-कर्तुम् । ५. च भ$_1$—वृथा कृथाः । ६. अ ब ल$_2$ ल$_3$ प्र—नास्ति । ७. च—धर्मं प्राप्स्यथ । ८. च—वर्जं—नास्ति । ९. च—बाढमित्येव गच्छध्वं मया सार्धमिति ब्रुवन् । १०. च—शत्रुघ्नपुत्रयोरभिषेकः । भ$_1$—वानरानुशासनो । ११. भ$_1$—अग्निहोत्राणि यान्त्व् । १२. च—°मानसहद्विजाः । भ$_1$—°मानानि सर्वशः । ल$_1$—नास्सहर्त्विजाः । १३. भ$_1$—निर्यान्तु मम चाग्रतः । १४. च—नास्ति । १५. च रा$_1$ ल$_1$—निरवशे° ॥

क्षौमाऽम्बर-धरो रामो ब्रह्म ह्य्[1] आऽवर्तयन्[1] परम् ।[2]
४] कुशान् गृहीत्वा पाणिभ्यां सं-जपन्[3] ऋचया यथा[3] ॥ ४ ॥ [४
अ-व्याहरन् क्व-चित् किं-चिन् निश्-चेष्टो[4] निर्-ममः[4] पथि ।
५] निर्-अगान्[5] नगरात्[5] तस्माद् दीप्यमानो यथांऽशु-मान्[11] ॥५॥ [५
रामस्य[6] सव्ये पार्श्वे तु[6] स-पद्मा श्रीः समाहिता[7] ।
६] दक्षिणे ह्रीर् विशालाऽक्षी व्यव-सायस् तथाऽग्र-तः ॥ ६ ॥ [६
शरा नाना-विधास् तत्र धनुश् चाऽऽयत-विक्रमम्[8] ।
७] अन्वाऽव्रजंस् तं काकुत्स्थं सर्वे पुरुष-विग्रहाः ॥ ७ ॥ [७
वेदा ब्राह्मण-रूपेण[10] सावित्री स्त्री-स्वरूपिणी[11] ।
८] ओं-कारोऽ वषट्-कारः सर्वे राघवम्[12] अन्व्-अयुः[12] ॥ ८ ॥ [८
ऋषयश् च महाऽऽत्मानः सर्व एव मही-धराः[13] ।
९] अन्व्-अगच्छन्त[14] काकुत्स्थं[14] स्वर्ग-द्वारम् उप-स्थितम्[15] ॥९[15]॥ [९
तं यान्तम् अगच्छद् वै तथैवाऽन्तः-पुरं महत् ।[17]
१०] स-वृद्ध-बाल-दासीकं स-वर्ष-वर-रक्षकम्[18] ॥१०॥ [१०
साऽन्तः-पुरश् च भरतः शत्रुघ्न-सहितो[19] ययौ[19] ।
११] राम-व्रतम् उपा-गम्य राघवं समनु-व्रताः ॥[20]११[20]॥ [११
त्रिप्राश्[21] चैव[21] महाऽऽत्मानः साऽग्नि-होत्राः समा-हिताः[22] ।
१२] स-पुत्र-दाराः काकुत्स्थम् अनु-जग्मुस्[23] तदा नृ-पम्[23] ॥१२॥ [१२
स-भृत्य-मात्र(?त्राः) स-स्त्रीकाः स-पुत्राश् च स-बान्धवाः ।[24]
१३] सर्वे सहाऽनुगाश् चैव अनु-गच्छन्ति राघवम् ॥[25]१३॥ [१३

---

१. अ—प्राव° । २. च—ततः क्षौमांबरधरो ब्राह्मणः सुमहात्मनः । भ१—ततः क्षौमांबरधरो ब्रह्मचारी समाहितः । ३. च—असंगः प्रययावथ । भ१—महाप्रस्थान उद्यतः । ४. च—निःशब्दो निःसुखः । ५. च भ१—वर्जं—निर्गत्य नगरात् । च—निर्जगाम गृहात् । भ१—निःकामभग° । ११. च—महायशाः । ६. च भ१—वर्जं—सव्ये पार्श्वे राघवस्य । ७. च—वर्जं—ह्वाभवत् । भ१—ह्वापरा । ८. च—चापि प्रतिग्रहं । भ१—च ज्यासमन्वितं । ९. च भ१—ब्रह्मर्षिरू° । १०. च—ब्रह्मरूपिणी । भ१—सव्य दक्षिणे । ल१—वर्जं—स्त्री सरस्वती । १२. भ१—रामं तदाव्रजन् । १३. च—समागताः । १४. च—रामं तान्यनुगच्छन्ति । १५. च—उपागमत् । १६. प्र—नास्ति । १७. च—अनुगच्छन्ति ताः सर्वाश्चान्तःपुरवरस्त्रियः । भ१—तथानुयांति काकुत्स्थमन्तःपुरगताः स्त्रियः । १८. च भ१—वर्जं—सषण्डवर° । १९. च—शत्रुघ्नः शत्रुतापनः । २०. च भ१—वर्जं—नास्ति । २१. प्र—ऋषयश्च । २२. भ१—समन्ततः । २३. च—अनुगच्छन्ति राघवं । भ१—अनुगच्छन्ति सर्वशः । २४. च—ततः सस्त्रीगणं सर्वे सपुत्रपशुबान्धवं । भ१—मंत्रिणो भृत्यवर्गाश्च सपुत्राश्च सवाहनाः । २५. च ब ल३ प्र—नास्ति ॥

स्थावरा जङ्गमाश् चैव ह्य् अयोध्या-वासिनस् तदा ।[1]
N] स्वर्ग-बुद्धिं तदा यान्तम् अनु-जग्मुः प्रहृष्ट-वत् ॥[2]१४[3]॥ [N
ततः सर्वाः प्र-कृतयो हृष्ट-पुष्ट-जनाऽऽवृताः ।
१४] गच्छन्तम् अनु-गच्छन्ति राघवं[4] गुण-रञ्जिताः[4] ॥१५॥ [१४
विशुद्ध-हृदयाः सर्वे प्रहृष्ट-मनसो जनाः ।[5]
१५] हृष्टाः किलकिला-शब्दैः सर्वे रामम् अन्व्-अव्रजन् ॥[6]१६॥ [१६
न तत्र दीनः[7] कश्-चिद् धि दुःखितो वा न दृश्यते[7] ।
१६] हृष्टं प्र-मुदितं सर्वं[8] गन्ध-वत् परमाऽद्भुतम् ॥[8]१७॥ [१७
तं द्रष्टु-कामा निर्-याणं राज्ञो जनपदाऽऽश्रितम्[9] । [१८पू
१७] सम्प्राऽऽप्तास् ते महाऽऽत्मान ऋषयश् च तपो-धनाः ॥१८॥ [N
ऋक्ष-वानर-रक्षांसि जनाश् च पुर-वासिनः ।
१८] आऽगच्छन्[10] परया[10] लक्ष्म्या[11] दीप्यमानाः समा-हिताः[12] ।१९[13]। [१९

इत्यार्षे रामायण उत्तर-काण्डे महाप्रस्थ-गमनो[14]
नामैकादशोत्तरशततमः सर्गः ॥ १११ ॥

---

## [वं-११५]= [द्वादशोत्तरशततमः सर्गः] =[दा-११०]

अध्य्-अर्धं योजनं गत्वा रामः[15] प्रत्यङ्-मुखो नदीम्[15] ।
१] सरयूं पुण्य-सलिलां ववन्दे[16] रघु-नन्दनः ॥ १ ॥ [१

---

१. च–यानि पश्यन्ति काकुत्स्थं स्थावराणि चराणि च । भ$_2$–°सिनो जनाः । २. च–सर्वे ते स्वर्गगमने अनुगच्छन्ति तान्यपि । भ$_1$–खगाणि स्वर्गगमने मतिं कुर्वंति तान्यपि । ३. ब ल$_3$ प्र–नास्ति । ४. भ$_1$–वर्जं–येन गच्छति राघवः । च–अनुरागेण रंजिता । ५. च भ$_1$–स्नाताः शुक्लाम्बरधराः सर्वे प्रयतमानसः । च–नास्ति । अतः परमधिकः पाठः—च भ$_1$–वर्जं–यदुत्सुकमिवाचिंत्यम्पौरजानपदं तथा । च–वर्जं–तं सस्त्रीपुरुषं सर्वं हृष्टपुष्टतनूरुहं । ६. च–स्नाताः प्रमुदिताः सर्वे सर्वे वासमनुव्रजन् । ७. च–तद्दिने कश्चिद्दीनो नापि दुःखितः । भ$_1$–कश्चिद्दीनोभूत्क्लीबो नातिदुःखितः । ८. च–हृष्टाः प्रमुदिताः सर्वे गन्धमाल्योपशोभिताः । भ$_1$–नास्ति । ९. च–जानपदो जनः । १०. च–जग्मुः परमया । ११. भ$_1$–भक्त्या । १२. च भ$_1$–पृष्ठतः सुस° । १३. अतः परमधिकः पाठः—च भ$_1$–नासीत्सत्त्वमयोध्यायां सुसूक्ष्ममपि दृश्यते । च–राममेवानुयातेषु तिर्यग्योनिगतेष्वपि । उत्सवः सुमहांस्तत्र हर्षाच्छोकप्रणोदनः । सततं राजसिंहेन पुत्रवत्पालिते जने । ल$_1$–यानि भूतानि नगरे ह्यन्तरा न गतान्यपि । १४. अ भ$_1$ भ$_2$ ल$_2$–महाप्रास्थानिकं । च–भयोपरिगमनं । ब ल$_3$ प्र–मणिप्रदानिकं । ल$_1$–महाप्रस्थागमनं । १५. च–नदीं पश्चान्मुखीं श्रितां । भ$_1$–नदीं पश्चान्मुखो ययौ । १६. च भ$_1$–ददर्श ॥

तां नदीम् अनु-कूलाच् च सर्व-त्राऽनु-सरन् नृ-पः ।[1] [२पू

२] अहो-रात्रैस् त्रिभिर् गत्वा हिम-वन्तं ददर्श ह[2] ॥२[3]॥ [N

अथ तस्मिन् मुहूर्ते तु ब्रह्मा[4] लोक-पितामहः[4] ।

३] सर्वैः[6] परि-वृतो[6] देवैः सिद्धैश्[6] च सु-महात्मभिः[6] ॥ ३ ॥ [३

आऽगच्छद्[7] यत्र काकुत्स्थः स्वर्-गाय[8] समुप-स्थितः[8] ।

४] विमान-शत-कोटीभिर् दिव्यैर्[9] अनु-गतस् ततः[9] ॥ ४ २ [४

दीप्यते सर्वम् आ-काशं ज्योतिर्-भूतम् अन्-उत्तमम् ।

५] आ-गतैस् तैः स्व-तेजोभिः सु-कृतैः पुण्य-कीर्तिभिः ॥[10]५[11]॥ [५

पुण्या वाता ववुस् तत्र गन्ध-वन्तः सुख-प्रदाः ।[11]

६] अपतत्[12] पुष्प-वृष्टिश्[12] च वायु-मुक्ता समन्ततः[13] ॥ ६ ॥ [६

गन्धर्वैर् अप्सरोभिश् च नृत्यत्-पौरैश्[14] च सं-कुलम्[14] ।

७] सरयू-सलिलं पुण्यं[15] स पद्भ्याम् उप-चक्रमे[15] ॥ ७ ॥ [७

ततः[16] पिता-महो वाणीम्[16] अन्तरिक्षेऽभ्य्-अभाषत[17] ।

८] आ-गच्छ विष्णो भद्रं ते दिष्ट्या प्राप्तोऽसि मानद ॥ ८ ॥ [८

भ्रातृभिः सहितः[18] श्री-मान्[18] प्र-विशस्व स्व-कां तनुम् ।

९] वैष्णवीं त्वं महा-बाहो[19] प्रजाऽऽकाशं सनातनम्[19] ॥ ९ ॥ [९

त्वं हि लोक-गुरुर्[20] देव न त्वां(?तु) जानाति कश्-चन ।

१०] ऋते मत्-तो[21] विशालाऽक्ष तव[22] पूर्व-परिग्रहम्[22] ॥१०॥

N] त्वम् अ-चिन्त्यं महद्-भूतम् अ-क्षयं लोक-संग्रहम्[23] ।[24] [१०

याम् इच्छसि महा-वीर्य[25] तां[26] तनुं प्र-विश[27] स्वयम्[27] ॥११॥ [११

---

१. च-तां नदीमेककूलेन विसर्जति शरान्नृप । २. च-सः । ३. भ१-नास्ति । ४. च-ब्राह्मलो° । भ१-ब्राह्मलोकात्पि° । ५. च-आजगाम तदा । ६. च भ१-ऋषिभिश्च म° । ७. च-आययौ । भ१-प्रययौ । ८. भ१-स्वर्गद्वारमुप° । च-°य सुसमाहितः । ९. भ१-याभिः सर्वतो वृतः । १०. भ१-स्वयम्प्रभश्च तेजोभिर्महद्भिः पुण्यकर्मभिः । ११. च भ१-वर्ज-नास्ति । १२. च-पपात पु° । भ१-सपुष्पवृष्टिवर्षे । १३. च भ१-महौघवत् । १४. च-तस्मिंस्तूर्यसमाकुलैः । भ१-तस्मिन्सूर्य उपस्थिते । ल२-°कुलैः । १५. च भ१-रामः पद्भ्यां समुप° । १६. भ१-पितामहस्तथा वाक्यं । १७. च-अन्तरिक्षामभा° । भ१-°रिक्षादभा° । भ२ रा१ ल१ ल२-ह्यन्त° । १८. च-सह चैकेन । भ१-सह देवेश । १९. भ१-महत्तेऽजायद्धै धामगुणान्वितं । २०. च भ१-°पतिर् । २१. च-मां हि । २२. भ१-भूतपू° । २३. च ल२ प्र-°ग्रहे । २४. च-नास्ति । २५. च-महाकीर्ते । २६. च भ१-वर्ज-सा । ल१-स्वां । २७. च-वर्ज-प्रविश्यतां । भ१-प्रविशस्व च ॥

११] पिता-महस्य[1] तच् छ्रुत्वा[1] विनिश्-चित्य[2] महा-मतिः[2] ।
वैष्णवं प्राऽविशत्[3] तेजः स-शरीरः सहाऽनुजः[4] ॥१२॥ [१२

१२] ततो विष्णु-गतं[5] रामं पूजयां-चक्रिरे[6] सुराः[6] ।
साध्या मरुद्-गणाश् चैव सेन्द्राः सोम-पुरो-गमाः १३॥ [१३

१३] ये च दिव्या मुनि-गणा[7] नारदाऽऽद्या[8] महर्षयः[8] ।
सुपर्ण-नाग-यक्षाश् च दैत्य-दानव-राक्षसाः ॥१४॥ [१४

१४] सर्वे परं च मुदिताः सर्वे पूर्ण-मनो-रथाः । [१५पू
N] पूजयां-चक्रिरे तत्र देव-देवं जनाऽर्दनम् ।[9] [N
साधु साध्व् इति सर्वे[10] ते[10] त्रिदिव-स्था[11] बभाषिरे[11] ॥१५॥ [१५उ

१५] अथ विष्णुर् महा-तेजाः पिता-महम् उवाच[12] ह[12] ।
एषां लोकं जनौघानां दातुम् अर्हसि सु-व्रत ॥१६॥ [१६

१६] इमे हि सर्वे मत्-स्नेहाद् अनु-यान्ति मनस्विनः ।
भक्ताश् च भजितव्याश् च त्यक्ताऽऽत्मानश् च मत्-कृते ॥१७[13]॥ [१७

१७] तच् छ्रुत्वा विष्णु-वचनं ब्रह्मा लोक-पितामहः ।
लोकान् सन्तानकान् नाम यास्यन्तीऽमे समा-हिताः ॥१८[14]॥ [१८

१८] यश्[15] च तिर्यग्-गतोऽप्य्[15] अत्र रामम् एवाऽनु-चिन्तयेत्[16] ।
प्राणांस् त्यक्ष्यति भक्त्या वै स संतानेषु[17] वत्स्यति[17] ॥१९॥ [१९

१९] सर्वे सन्तानका[18] नाम[18] ब्रह्म-लोकाद् अन्-अन्तरम् । [२०
N] नि-वत्स्यन्ति महाऽऽत्मानो ये त्वां भक्ता जनाऽर्दन ॥[19]२०॥ [N
२०उ] वानराश् च स्व-का[20] येऽपि[20] राक्षसाश्[21] चाऽपि सं-युगे[21] ।
२२पू] ये स्म विनि-हतास् ते[22] वै[22] सुराऽसुर-समुद्भवाः ॥२१॥ [२१

---

१. च-°द्वचः श्रुत्वा । भ$_{1}$-°स्य वचनात् । २. भ$_{1}$-इति संप्रविवेश ह । ३. च-विवेश । भ$_{1}$-तद्दिव्यं । ४. च-महायशाः । ५. भ$_{1}$-विष्णुतनुं । ६. च-पूजयंतः सुरेश्वरं । भ$_{1}$-पूजयंति सुरोत्तमाः । ७. भ$_{1}$-ऋषिगणाः । ८. च भ$_{1}$-गंधर्वाप्सरसस्तथा । ९. च भ$_{1}$-नास्ति । १०. च-तत्सर्वं । ११. च-त्रिदिवं गतकल्मषं । १२. अ ल$_{2}$-उपस्थितः । १३. अ ल$_{1}$ ल$_{2}$-नास्ति । १४. रा$_{1}$ ल$_{3}$ प्र-तच्छ्रुत्वा विष्णुगदितं ब्रह्मा वचनमब्रवीत् । एवमेतन्महाबाहो यथा वदसि सुव्रत ॥ अ ल$_{1}$ ल$_{2}$-नास्ति । १५. च-तिर्यग्योनिग° । १६. भ$_{1}$-वर्ज-°नुजग्मिवान् । १७. च-°ने निवत्स्यति । भ$_{1}$-सन्तानफलं लभेत् । १८. भ$_{1}$-°नकं याता । च-°नके वासं । १९. च भ$_{1}$-नास्ति । २०. च भ$_{1}$-स्वकां योनिं । २१. च-सहिता ऋक्षराक्षसैः । २२. च-सर्वे ॥

N] आदित्य-तनयश् चैव सु-ग्रीवः सूर्य-मण्डलम् ।[1]
२२उ] ऋषीन् नागांश् च यक्षांश् च तांस् तांस् ते प्र-पेदिरे ॥[2]२२॥ [२२
तथोक्तवति देवेशे गो-प्रतारम् उपाऽगमत् ।
२३] स[3] सर्वः[3] सरयूं भेजे हर्ष-विस्फुरितेक्षणः[4] ॥२३॥ [२३
अव-गाह्य ततः[5] पूतः प्राणांस् त्यक्त्वाऽति-हृष्टवत्[5] ।
२४] मानुषं देहम् उत्-सृज्य वि-मानम् अधि-रोहति[6] ॥२४॥ [२४
तिर्यग्-योनि-गताश्[7] चैव ये सत्त्वाः सरयू-जले[7] ।
२५] दिव्येन वपुषा तत्र भास्-करस्योद्-अयं प्रति ॥[8]२५॥ [२५
जङ्गमानि च सत्त्वानि स्थावराणि चराणि च ।[9]
२६] प्राऽऽप्य तत्[10] तोय-विक्षेपं[10] देव-लोकम् उपाऽगमन् ॥२६॥ [२६
सुराणां समयं कृत्वा ऋक्ष-वानर-रक्षसाम् ।
२७] तेऽपि प्र-विविशुः सर्वे भक्त्या रामस्य तज् जलम् ॥२७[11]॥ [२७
ततः स्वर्गं गताः सर्वे स्मृत्वा लोक-गुरुं वि-भुम् ।[12]
२८] जगाम त्रि-दशैः सार्द्धं हृष्टैर्[13] हृष्टो महा-यशाः[13] ॥[14]२८॥ [२८
एतद् एव[15] तद् आ-ख्यानं[15] सोत्-तरं ब्रह्म-पूजितम् ।[16] [दा-१११
रामाऽयणं तथा श्लोकं पादं चाऽर्धं च यः पठेत् ।[17] [१
N] पापान्य् अपि सदा कुर्वन् न स पापेन लिप्यते ॥[18]२९॥ [६उ

---

१. च—नास्ति । २. च—ऋषिभ्यो नागयक्षेभ्यः स्थानं ते च प्रपेदिरे । भ१—ऋषींश्च नागयक्षांश्च तान्सर्वान्प्रतिपेदिरे । ३. च—तत्सर्वं । भ१—स जनः । ४. च—हृष्टपूर्णमविक्लवं । भ१—वारिपूर्णमविक्लवः । ५. च—ततो यो यो जले मज्जति हृ° । ६. च—नोधि° । भ—नान्यथारुहन् । ७. च—वर्जं—°तानां च सत्वानां सरयूजलं । भ१—°गता ये वै प्रविश्य सरयूं तथा । ८. च—नास्ति । भ१—देहत्यागाद्दिवं जग्मुः प्रभासु च वपूंषि च । ९. च—नास्ति । १०. च—°यविक्लेदं । भ१—तत्तो तनुं चैव । ११. च—असुरा यातुधानाश्च वानरा राक्षसैः सह । स्वयमेव विविशुः सर्वे देहान्निक्षिप्य चाम्भसि । भ१—तस्मिंस्तत्र तु संनादे वानराः सर्वराक्षसाः । तेपि प्रविविशुः सर्वे देहान्निक्षिप्य वै तदा । १२. च—तथा स्वर्गगतं सर्वं कृत्वा लोकगुरुर्जनं । अतः परमधिकः पाठः—भ१—एवं रामो महाभागो भ्रातृभिः सह राघवः । १३. भ१—हृष्टपुष्टो महामतिः । १४. च भ१—वर्जं—नास्ति । १५. च—वै सर्वमाख्यानं । १६. भ१—एतावदेवमाख्यानं प्रोक्तं ब्रह्मर्षिपूजितम् । अतः परमधिकः पाठः—च—यश्चैनं शृणुयान्नित्यं सर्वपापैः प्रमुच्यते । पठत्यर्धमपि श्लोकं सर्वपापैः प्रमुच्यते ॥ यश्चैनं शृणुयान्नित्यं शुचिर्धर्मसमाहितः । विष्णुना चरितं लोके श्रुत्वा पापात्प्रमुच्यते ॥ १७. च—य इदं लिखितं सर्वं धर्माख्यानं सदा पठेत् । अतः परमधिकः पाठः—च—श्रूयात्सर्वविशुद्धात्मा पुत्रवान् पशुमान्भवेत् । शृणुयाद्दे कश्चित्तो वा नारायणपरायणः ॥ १८. च—स हि रोगैर्महाघोरैः प्रमुच्येत सुदारुणैः ॥

अयोध्या-नगरी रम्या शून्या[1] वर्ष-गणानि तु[1] ।
N] भविता तु कुशं प्राऽऽप्य नि-वेशम् उप-लप्स्यते[2] ॥[3]३०॥ [१०
इदम् आ-ख्यानम् आयुष्यं रामाऽऽख्यं सोत्तरं स्मृतम् ।
N] कृतवान् भार्गवो(?) धी-मान् ब्रह्म चैवाऽभ्य्-अपद्यत ॥३१[4]॥ [११

इत्यार्षे रामायण उत्तर-काण्डे वाल्मीकि-विरचिते स्वर्गाऽऽरोहणं नाम
द्वादशोत्तरशततमः सर्गः ॥ ११२[5] ॥[6]

॥ समाप्तश्चाऽयमुत्तर-काण्डः ॥

१. च-सवशून्याभवत्तदा । ब-°नि च । २. अ ल$_2$-°लभ्य वै । भ$_2$ ब ल$_3$ प्र-°लभ्यते । ३. च-ऋषभं प्राप्य राजानमावासमुपयास्यति । ४. च-एतदाख्यानम-व्यग्रं सभविष्योत्तरं द्विजः । वाल्मीकिः कृतवान्सम्यक् ब्राह्मणोनुमते प्रभुः ॥ भ$_1$-इदमायुष्यमाख्यानं शुभा वा चोत्तरं शुभं । कृतवान्भार्गवो धीमान्ब्रह्मा तच्चान्वमन्यत ॥ अतः परमधिकः पाठः—भ$_1$-पठेदेकं च श्लोकं वा सर्वपापात्प्रमुच्यते । सर्वदा पठते यस्तु ब्रह्मलोकं स गच्छति ॥ एतदाख्यानमव्यग्रं समभिष्योत्तरं द्विजः । कृतवान्स्वर्गतो धीमान्ब्रह्म चैवावपद्यते । ५. च-इति श्रीवाल्मीकीये उत्तरकाण्डे भविष्योत्तरवर्णनम् । भ$_1$-इति श्रीरामायणे वाल्मीकीये चतुर्विंशतिसाहस्र्यां संहितायां उत्तरखंडे स्वर्गारोहणकम् ॥ ६. अतः परमादर्शग्रन्थानामुपसंहारा एवं भवन्ति—अ ल$_2$-सर्गानुक्रमानन्तरम्—रामायणं महापुण्यं श्रोतव्यं चानसूयया । प्रात-रुत्थाय सततं मध्याह्नेऽह्नः क्षये तथा ॥ रामायणमिदं श्रुत्वा धर्मज्ञो धर्मवान् नरः । धर्मार्जितधने धर्मं नियोज्य त्रिदिवं व्रजेत् ॥ आनृशंस्यं श्रियं शौर्यमृजुतां मार्दवं गतिम् । प्राप्नोति हि नरः सम्यग् रामस्य चरिते श्रुते ॥ रामायणविनिष्पत्तौ कुर्याद् ब्राह्मणतर्पणम् । गोभूरत्नादिकं धान्यं दानं देयं च भक्तितः ॥ गन्धैरर्घ्यैस्तथा माल्यैः सद्वासोभूषणैस्तथा । व्यासकल्पमुपा-ध्यायं पूजयेद् भक्तिपूर्वकम् ॥ श्रुत्वा रामायणं सम्यग् ध्यात्वा जप्त्वा हरिं परम् । भोगी रत्नैः सुवर्णेन पूजयेत् पाठकं द्विजम् ॥ पाठके पूजिते चैव हरिर्भवति पूजितः । दद्याद् वस्त्राणि सूक्ष्माणि गृहं चैव सुसंवृतम् ॥ त्रीणि श्लोकसहस्राणि नव श्लोकशतानि च । षष्टिः श्लोकास्तथा ज्ञेयाः काण्डेऽस्मिन् परिसंख्यया ॥ अ-इत्युत्तरकांडं समाप्तम् । शुभं भूयात् सर्वत्र सुखीभवन्तु लोकाः । आदर्शदोषाद्यत् किञ्चिच् चित्रितं मतिभ्रमेण । क्षन्तव्यं तद्विपश्चिद्भिर्लेखकः को न मुह्यति ॥ इदं काण्डं लिखितं नीलकण्ठपण्डित काश्मीरी अमृतसरमध्ये पौषवदी अमा-वास्यां शुक्रवासरे संपूर्णम् । ल$_2$-नमो भगवत्यै । लिखितं देवीचन्द अमगोत्रा जसरोटे राजविषौ सल्हणी पुर मंडलवासी······। देवीचन्द अमगोत्रेण कन्यायाः करपीडने । वाल्मीकेः पुस्तकं दत्तं देविकायास्तटे शुभे ॥ सं० १९१७ आषाढ १६ शु० ९ वार बुध । भ$_2$-संवत् १८२५ ज्येष्ठवदि १३ शनौ लिपीकृतं व्रजवासिमिश्रैः स्वार्थम् । रा$_1$-इदं पुस्तकं भास्करभावेयस्य रामस्य दत्तं पञ्चवट्याम् । ब-अथ शुभ संवत् १९४३ मिति ज्येष्ठ मासे पुस्तक श्रीरामायण वाल्मीकिसंपूर्ण···। प्र-समाप्तमिदं वाल्मीकिकाव्यं रामा-यणम् । संवत् १८८० पौषवदितृतीयायां शनिवासरे । चतुर्विंशतिसहस्राणां श्लोकानां संख्यया युतम् । दयारामेण लिखितं काव्यं वाल्मीकिना कृतम् ॥···शुभं भूयात्···। च-यदक्षरं पदं भ्रष्टं मात्राहीनं च यद् भवेत् । यदि शुद्धमशुद्धं वा मम दोषो न दीयताम् ॥